आश्चो(श्च्यो)तन त्रि० आ+श्चु(श्च्यु)त–ल्युट् । १ईषत्क्षरणयोग्ये भावे ल्युट् । २ईषत्क्षरणे न० । "तर्पणैः पुटपाकैश्च धूमै-राश्च्योतनैस्तथा" । "हितमश्च्योतनं शीते तथाश्च्योतनमेव च" । "शोथावद्धं पक्ष्मणाश्च्योतने वा वर्त्मकर्द्दमं पटि-कामुं स्नेहम्" इति च सुश्रु० ।

आश्म पु० अश्मनोविकारः अण् वा टिलोपः । प्रस्तरविकारे

आश्मक पु० अश्मना कायति कै–क । वाल्हीकवासि ग्रामभेदे "शाल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ्" पा० । तत्र भवः इञ् । आश्मकिः तद्ग्रामभवे त्रि० ।

आश्मन पु० अश्मनोविकारः अण् वा टिलोपाभावः । पाषाण विकारे "यथाश्मनाश्मनमृत्स्नं लेष्टुं भस्तेऽन्यदुर्ग्रहम्" भट्टिः । अश्मनः सूर्य्यसारथेरपत्यम् अण् तदपत्ये पुंस्त्री

आश्मन्य त्रि० अश्मन्+चतुरर्थ्याम् संकाश्या० ण्यः । प्रस्तरबहुलदेशादौ ।

आश्मभारक त्रि० अश्मभारं हरति वहति आवहति वा वंशा० ठक् । प्रस्तरस्य १हारके २वाहके ३तदावाहके च ।

आश्मरथ्य पु० अश्मरथस्य मुनेरपत्यम् गर्गा० यञ् । अश्मरथर्षेरपत्ये "अभिव्यक्तेरित्याश्मरथ्यः" शा० सू० । गोत्रापत्ये तु कण्वा० अण् । आश्मरथ इत्येव स्त्रियां ङीप् ।

आश्मरिक पु० अश्मर्य्येव स्वार्थे वा० ठञ् । अश्मरीरोगे "भिषक्शिराश्मरिको न विध्यति" सुश्रुतः ।

आश्मायन पुंस्त्री अश्मनोगोत्रापत्यम् अश्वा० फञ् । अश्मना-मर्षेर्गोत्रापत्ये स्त्रियां ङीप् ।

आश्मिक त्रि० भारभूतमश्मानं हरति वहति आवहति वा वंशा० ठञ् । भारभूतप्रस्तरस्य १हारके २वाहके ३आवाहके च ।

आश्मेय पुंस्त्री अश्मन्+शुभ्रा० ढक् । अश्मनामकर्षेरपत्ये ।

आश्यान त्रि० आ+श्यै–क्त । घनीभूते शुष्कप्राये "पयसाश्याना-नकर्दमान्" रघुः । "अमरोरगनाश्यानहरिचरधिर-बिन्दुना" काद० ।

आश्र त्रि० अस्रमेव स्वार्थेऽण् । चक्षुर्जले ।

आश्रपण न० आ+श्रा–णिच् पुक् ह्रस्वः ल्युट् । पाके ।

आश्रम पुं न० आ+श्रम–आधारे घञ् अवृद्धिः । ब्रह्मचर्य्या-दिके शास्त्रोक्ते १धर्मभेदे, "विनाश्रमं न तिष्ठेत्तु दिन-मेकमपि द्विजः । आश्रमेण विना तिष्ठन् प्रायश्चित्तीयते द्विजः" दक्षः । अत्र द्विजपदस्योपलक्षणपरता यत् रघु-नन्दनेन स्थापितं तदाश्रुतपदे निराकृतम् ७५२ पृष्ठे द्रष्टव्यम् । मुनीनां २वासस्थाने, ३मठे ४तपोवने "मनुष्याणा-माश्रममवसन्नेव" "तौ दम्पती वशिष्ठस्य गुरोर्जग्मतु-राश्रमम्" । "स किलाश्रममन्त्यमाश्रितः" "स दुष्प्रा-पयशाः प्रापदाश्रमं श्रान्तवाहनः" "अभ्युत्थिताग्नि-पिशुनैः–रतिथीनाश्रमोन्मुखान्" इति च रघुः । "समवासमनिवाश्रममगुरुम्" इति काद० । "गत्वा देवं तव सहचरो रामगिर्य्याश्रमस्थः" मेघदू० । सर्व्वकर्मस्थानेन विश्रामस्थाने ५परमेश्वरे च । "आश्रमः श्रमणः क्षामः सुपर्णो वायुवाहनः" विष्णुस० "आश्रमवत् सर्वेषां संसारारण्ये भ्रमतां विश्रामस्थानत्वादाश्रमः" इति भा० तत्र आश्रमेषु कुत्र कस्याधिकार इति तावन्निर्णीयते । "चत्वार आ-श्रमाश्चैव ब्राह्मणस्य प्रकीर्त्तिताः । गार्हस्थ्यं ब्रह्म-चर्य्यञ्च वानप्रस्थं च भिक्षुकम् । क्षत्रियेणापि कर्त्तव्या आश्रमास्त्रयएव हि । ब्रह्मचर्य्यञ्च गार्हस्थ्यमाश्रमद्वितयं विशः । गार्हस्थ्यमुचितं त्वेकं शूद्रस्य क्षणमाचरेत्" माध० धृतवामनपु० । "चत्वारो ब्राह्मणस्योक्ता आश्रमाः श्रुति-नोदिताः । क्षत्रियस्य त्रयः प्रोक्ता द्वावेकोवैश्यशूद्रयोः" नि० सि० कूर्मपु० यथाक्रमेण चातुराश्रम्यादयः इति । तत्र कलौ दीर्घकालब्रह्मचर्य्यवानप्रस्थाश्रमौ न स्तः गृहस्थभिक्षु-काश्रमावेव । "गृहस्थो भिक्षुकश्चैव आश्रमौ द्वौ कलौ युगे" इति स्मरणात् । तत्र संन्यासे विप्रस्यैवाधिकारः ब्राह्मणाः प्रव्रजन्तीति जावालश्रुतेः "आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेत् गृहादिति" वा० स्मृतेरिति" बहवः । "ब्राह्मणः क्षत्रि-योवाथ वैश्यो वा प्रव्रजेद्गृहादिति" कौर्मवाक्यात् क्षत्रि-यादीनामपि तत्राधिकारः पूर्व्ववचनन्तु यमावादिचिह्न-त्रिदण्डधारणविषयम् "मुखजानामयं धर्म्मो यद्विष्णोर्लिङ्ग-धारणम् राजन्यवैश्ययोर्नैव इत्यात्रेयमुनेर्मतम्" बौधा० स्मृतेः । अयमेव पक्षो मल्लिनाथेन समर्थितः यथा "तत्र यद्यपि "ब्राह्मणाः प्रव्रजन्ति" इति श्रुतेः "आत्मन्यग्नीन् समारोप्य ब्राह्मणाः प्रव्रजेद्गृहात्" इति मनुस्मरणात् "मुखजानामयं धर्म्मो यद्विष्णोर्लिङ्गधारणम् । बाहु-जातोरुजातानामयं धर्म्मो न विद्यते" इति निषेधाच्च ब्राह्मणस्यैव प्रव्रज्या न क्षत्रियादेरिति तथापि "यद-हरेव विरजेत् तदहरेव प्रव्रजेत्" इत्यादिश्रुतेस्त्रैवर्णिक-साधारण्यात् "त्रयाणां वर्णानां वेदमधीत्य चत्वार आ-श्रमाः" इति सूत्रकारवचनात् "ब्राह्मणः क्षत्रियो वापि वैश्यो वा प्रव्रजेद् गृहात्" इति स्मरणात् "मुखजानामयं धर्म्मो वैष्णवं लिङ्गधारणम् । बाहुजातोरुजातानां त्रि-दण्डं न विधीयते" इति निषेधस्य त्रिदण्डविषयत्व-दर्शनाच्च कुत्रचित् ब्राह्मणपदस्योपलक्षणमाचक्षाणाः केचित्

त्त्रैवर्णिकाधिकारं प्रपेदिरे । तथा च “स विष्णुराश्रम-
मन्त्यमाश्रितः” इति अत्रापि क्षत्रियस्यैव यतो विव-
क्षित इति प्रतीमः । अन्यथा वानप्रस्थाश्रमतया व्या-
ख्याने “विदधे विधिवत्तस्य नैष्ठिकं यतिभिः सार्द्धमनग्नि-
मग्निचित्” इति वचनमात्रेणानग्निसंस्कारेण विरोधः
स्यात् अग्निसंस्काररहितस्य वानप्रस्थस्यैवाभावात्” ।
अतएव मनुना “अनेन क्रमयोगेन परिव्रजति यो द्विजः
इति द्विजमात्रस्य परिव्रज्याधिकार उक्तः । एवञ्च महता
प्रयत्नेन शङ्कराचार्य्येण ब्राह्मणस्यैव संन्यासेऽधिकारस्य
समर्थनं शिरश्छिन्नमिति । एतेषु आश्रमेषु ब्रह्म-
चर्य्यस्य नित्यत्वम् इतराश्रमाणां “यमिच्छेत्तु तमावसेत्”
इति मिता० धृतवचनात् इच्छाधीनतया काम्यत्वम् ।
तत्राश्रमाणां समुच्चयपक्षः कामनावतएव, विकल्पस्तु अका-
मनावतो विरक्तस्य । अधिकारिभेदाच्च आश्रम समुच्चय-
विकल्पपक्षौ मिता०समर्थितौ यथा
“प्राजापत्यां निरूप्येष्टिं सार्ववेदसदक्षिणाम् । प्राजा-
पत्यान्तदन्ते तानग्नीनारोप्य चात्मनि । अधीतवेदो जपकृत्
पुत्रवानन्नदोऽग्निमान् । शक्त्या च यज्ञकृन्मोक्षे मनः कुर्य्यात्तु
नान्यथा” या० । यावता कालेन तीव्रतपःशोषितवपुषोविषय
कषायपरिपाको भवति । पुनश्च मदोद्भवाशङ्कानोन्नाव्यते ।
तावत्कालं वनवासं कृत्वा तदनन्तरं मोक्षे मनः कुर्य्यात् ।
वनगृहपञ्चाभ्यान्तत्सम्बन्ध्याश्रमोलक्ष्यते । मोक्षशब्देन च
मोक्षैकफलकचतुर्थाश्रमः । अथ वा गृहात् गार्हस्थ्या-
दनन्तरं मोक्षे मनः कुर्य्यादनेन च पूर्वोक्तसमुच्चयपक्ष-
स्तूपपक्षःपाक्षिक इति द्योतयति । तथा च विकल्पो
जावालश्रुतौ श्रूयते । “ब्रह्मचर्य्यम्परिसमाप्य गृही भवेत्
गृही भूत्वा वनी भवेत् वनी भूत्वा प्रव्रजेत् यदि वेतरथा
ब्रह्मचर्य्यादेव प्रव्रजेद्गृहाद्वा वनाद्वेति”। तथा गार्हस्थ्ये-
तराश्रमबाधश्च गौतमेन दर्शितः । “एकाश्रमन्त्वाचार्य्याः
प्रत्यक्षविधानात् गार्हस्थ्यस्येति” । एषाञ्च समुच्चयवि-
कल्पबाधपक्षाणां सर्वेषां श्रुतिमूलत्वादिच्छया विकल्पः ।
अतो यदुपैचित् पक्षिलतमन्य्यैरुक्तम् । आर्त्तत्वादेवि-
कल्पादीनामगार्हस्थ्येन गौतेन बाधः । गार्हस्थ्यानधि-
कृतान्धपङ्ग्वादिविषयता वेति । तत्राध्यायाध्ययनवैधुर्य्य-
निबन्धनत्वापेक्षणीयम् । किञ्च । यथा विष्णुक्रमणा-
ज्याबेक्षणाद्यक्षमत्वात् पङ्ग्वादीनां श्रौतेष्वनधिकारस्तथा
स्मार्त्तेष्वपि घटकुम्भाहरणभिक्षाचर्य्याद्यक्षमत्वात् कथं पङ्ग्वादेर्नि-
यततया नैष्ठिकत्वाद्याश्रमनिर्वाहः । अधिकंसंन्यासाश्रमे ब्राह्म-
णस्यैवाधिकारः । “आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्र-
व्रजेद्गृहात्” । तथा “एष वोऽभिहितो धर्मो ब्राह्मणस्य
चतुर्विधः” इत्युपक्रमोपसंहाराभ्यां मनुना ब्राह्मणस्याधि-
कारप्रतिपादनात् । “ब्राह्मणाः प्रव्रजन्तीति” श्रुतेश्चाप-
जन्मन एवाधिकारो न द्विजातिमात्रस्य । अन्ये तु
त्त्रैवर्णिकानाम् प्रकृतत्वात् “त्रयाणाम् वर्णानाम् वेदमधीत्य
चत्वार आश्रमा” इति सूत्रकारवचनाच्च द्विजातिमात्र-
स्याधिकारमाहुः । यदा वनात् गृहाद्वा प्रव्रजति तदा
सार्ववेदसदक्षिणाम् सार्ववेदसी सर्वधनसम्बन्धिनी दक्षिणा
यस्याः सा तथोक्ता ताम् प्राजापत्यदेवताकामिष्टिं कृत्वा
तदन्ते तान् वैतानानग्नीन् आत्मनि श्रुत्युक्तविधानेन समा-
रोप्य प्रव्रजेत् “उदगयने पौर्णमास्याम् पुरश्चरणादौ
कृत्वा शुद्धेन कायेन अष्टौ श्राद्धानि निर्वपेत् द्वादश वा” इति
बौधायनाद्युक्तं पुरश्चरणादिकञ्च कृत्वा । तथाऽधीतवेदो
जपपरायणोजातपुत्रोऽन्नदोऽन्नाद्यक्षयपर्य्याधिशायीव यथाशक्त्या
यदश्च भूत्वा अनाहिताग्निर्ज्जैवत्यादिना प्रतिबन्धाभावे
कृतयागो नित्यनैमित्तिकान् यागान् कृत्वा मोक्षे मनः
कुर्य्यात् चतुर्थाश्रमं प्रविशेत नान्यथा । अनेनाप्य
पाकृतर्णत्रयस्य गृहस्थस्य प्रव्रज्यायामनधिकारन्दर्शयति ।
तथाह मनुः । “ऋणानि त्रीण्यपाकृत्य मनोमोक्षे निवेशयेत् ।
अनपाकृत्य मोक्षन्तु सेवमानो व्रजत्यधः इति” । यदा तु
ब्रह्मचर्य्यात् प्रव्रजति तदा न प्रजोत्पादनादिनियमः ।
अकृतदारपरिग्रहस्य तत्रानधिकारादरागप्रयुक्तत्वाच्च विवा-
हस्य । न च ऋणत्रयापाकरणविधिरेव दाराक्षिपतीति
शङ्कनीयम् । विद्याधनार्जननियमवदन्यप्रयुक्तदारसम्भवे-
तस्यानाक्षेपकत्वात् । ननु “जायमानोवै ब्राह्मणस्त्रिभि-
र्ऋणवान् जायते ब्रह्मचर्य्येण ऋषिभ्यो, यज्ञेन देवेभ्यः,
प्रजया पितृभ्यः” इति जातमात्रस्यैव प्रजोत्पादनादी-
न्यावश्यकानीति दर्शयति, नैवम् न हि जातमात्रो-
ऽकृतदाराग्निपरिग्रहो यज्ञादिष्वधिक्रियते । तस्मादधि-
कारी जायमानो ब्राह्मणादिर्यज्ञादीनकुर्वन् हि
तत्रार्थः । ततश्चोपनीतस्य वेदाध्ययनमेवावश्यकम् । कृत
दारपरिग्रहस्य प्रजोत्पादनमपीति” ततश्च ब्रह्मचर्य्या-
श्रमस्यैव नित्यत्वमितरेषां तु “यमिच्छेत्तु तमावसेत्” इति
मिताक्षराधृतवचनात् काम्यत्वमेव । ऋणत्रयापाकरणावश्य-
कता तु कृतविवाहस्यैवेति विवृतम् ।
आश्रमाश्च चतुर्विधाः । ब्रह्मचर्य्यगार्हस्थ्यवानप्रस्थ-
भिक्षुकभेदात् । “ब्रह्मचारी गृहस्थश्च वानप्रस्थोय-

तिक्तया। एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः" मनूक्तेः तत्र ब्रह्मचारी द्विविधः। नैष्ठिक उपकुर्व्वाणश्च मरणान्तं गुरुकुलवासितया व्रतब्रह्मचर्य्यः नैष्ठिकः। षट्त्रिंशदब्दादिकं गुरौ वसित्वा गार्हस्थ्यार्थं कृतसमावर्त्तन उपकुर्व्वाणः। गृहस्थोऽपि द्विविधः। अकृतदारः स्नातकः कृतदारश्च। तत्र कृतसमावर्त्तनोऽपि कन्यालाभात् पूर्व्वं व्रतचार्य्यधर्म्मभेदः स्नातकः। तद्धर्म्माश्च आत्मतत्त्वशब्दे ७५२ पृष्ठेऽभिहिताः। कृतदारोऽपि द्विविधः साग्निर्निरग्निश्च साग्निरपि द्विविधः श्रौताग्नियुक्तः स्मार्त्ताग्नियुक्तश्च। वानप्रस्थोऽपि द्विविधः सदारोऽदारश्च "पुत्रेषु दारान् निक्षिप्य वनं गच्छेत् सहैव वा" मनूक्तेः सदारादारत्वपक्षयोः समधिगमात्। तत्र अदारस्य अपचमानाश्मकुट्टकदन्तोलूखलादिसंज्ञा। सदारस्य पचमानसंज्ञा। भिक्षुरपि चतुर्विधः कुटीचक बहूदक हंस-परहंसेतिभेदात्। भिक्षुकोऽपि प्रकारान्तरेण द्विविधः विविदिषासन्यासी विद्वत्संन्यासी च तदेतत् जीवन्मुक्तौ विद्यारण्येन निरूपितं यथा "सन्न्यासो विविदिषान्यास विद्वन्न्यासश्च भेदतः। हेतू विदेहमुक्तेश्च जीवन्मुक्तेश्च तौ क्रमात्॥ संन्यासहेतुर्वैराग्यं यदहर्विरजेत्तदा। प्रव्रजेदिति वेदोक्तेस्तद्भेदस्तु पुराणतः। विरक्तिर्द्विविधा प्रोक्ता तीव्रतीव्रतरेति च। सत्यामेव तु तीव्रायां न्यसेद्योगी कुटीचके॥ शक्तो बहूदके तीव्रतरायां हंससंज्ञिते। मुमुक्षुः परमे हंसे साक्षाद्विज्ञानसाधने। पुत्रदारधनादीनां नाशे तात्कालिकी मतिः। धिक् संसारमितीदृक् स्याद्विरक्तेर्मन्दता हि सा॥ अस्मिन् जन्मनि मा भूवन् पुत्रदारादयो मम। इति या सुस्थिरा बुद्धिः सा वैराग्यस्य तीव्रता॥ पुनरावृत्तिसहितो लोको मे मास्तु कश्चन। इति तीव्रतरत्वं स्यान्मन्दे न्यासो न कोऽपि हि॥ यात्राद्यशक्तिशक्तिभ्यां तीव्रे न्यासद्वयं भवेत्। कुटीचको बहूदकश्च तावेतौ त्रिदण्डिनौ। हंसः तीव्रतरे ब्रह्मलोकमोक्षविभेदतः। तत्रोक्ते तत्त्वविद्वंशोलोकेऽस्मिन् परहंसकः॥ एतेषान्तु समाचाराः प्रोक्ताः पाराशरस्मृतेः। आख्याने त्वाभिरताय परहंसो विविच्यते। जिज्ञासुर्ज्ञानवांश्चेति परहंसो द्विधा मतः। प्राकृज्ञानाय जिज्ञासोर्न्यासं वाजसनेयिनः। "प्रव्राजिनो लोकमेतमिच्छन्तः प्रव्रजन्ति हि"। एतस्यार्थन्तु गद्येन वक्ष्येऽन्यद्विवक्षये॥ लोको हि द्विविधः आत्मलोकोऽनात्मलोकश्चेति। तत्रानात्मलोकस्य त्रैविध्यं वृहदारण्यके

तृतीयाध्याये श्रूयते। "अथ त्रयोवाव लोकाः मनुष्यलोक पितृलोको देवलोक" इति। सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्म्मणा। कर्म्मणा पितृलोको विद्यया देवलोक" इति। आत्मलोकश्च तत्रैव श्रूयते। "योह वा अस्माल्लोकात् स्वं लोकमदृष्ट्वा प्रैति स एनमविदितो न भुनक्तीति"। "आत्मानमेव लोकमुपासीत" "मय आत्मा मे [illegible] स्य कर्म्म क्षीयत" इति च। षष्ठाध्यायेऽपि "किं प्रजया करिष्यामो येषां नोऽयमात्माऽयञ्च लोक" इति। एवञ्च सति एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" इत्यत्रात्मलोको विवक्षित इति गम्यते "स वा एष महानज आत्मेति" प्रक्रान्तस्यात्मन एव एतच्छब्देन परामृष्टत्वात्। लोक्यते अनुभूयत इति लोकः। तथा चात्मानुभवमिच्छन्तः प्रव्रजन्तीति श्रुतेस्तात्पर्य्यार्थः सम्पद्यते। स्मृतिश्च "ब्रह्मविज्ञानलाभाय परहंससमाह्वयः। शान्तिदान्त्यादिभिः सर्व्वैः साधनैः सहितो भवेदिति"। इह जन्मनि जन्मान्तरे वा सम्यगनुष्ठितैर्वेदानुवचनादिभिरुत्पन्नया विविदिषया सम्पादितत्वादयं विविदिषासन्न्यासो द्विविधः जन्मापादककर्म्मादित्यागमात्रात्मकः प्रैषोच्चारणपूर्व्वकदण्डधारणाद्याश्रमरूपश्चेति। त्यागश्च तैत्तिरीयादौ श्रूयते "न कर्म्मणा न प्रजया न धनेन; त्यागेनैके अमृतत्वमानशुरिति"। अस्मिंश्च त्यागे स्त्रियोऽप्यधिक्रियन्ते। अतएव मैत्रेयीवाक्यमाम्नायते "येनाहं नामृता स्यां किमहं तेन कुर्य्याम् यदेव भगवन्! वेद तदेव मे ब्रूहीति"। ब्रह्मचारिगृहस्थवानप्रस्थानां येनकेनचिन्निमित्तेन चतुर्थाश्रमस्वीकारे प्रतिबद्धे सति स्वाश्रमधर्म्मेष्वनुष्ठीयमानेष्वपि वेदनार्थो मानसकर्म्मादित्यागो न विरुध्यते श्रुतिस्मृतीतिहासपुराणेषु लोके च तादृशानां तत्त्वविदां बहूनामुपलम्भात्। यस्तु दण्डधारणादिरूपो वेदनहेतुः परमहंसाश्रमः स पूर्व्वैराचार्य्यैर्बहुधा प्रपञ्चित इत्यस्माभिरुपरम्यते। इति विविदिषासंन्यासः।

"अथ विद्वत्संन्यासं निरूपयामः। सम्यगनुष्ठितैः श्रवणमनननिदिध्यासनैः परतत्त्वं विदितवद्भिः सम्पाद्यमानो विद्वत्संन्यासः। तञ्च याज्ञवल्क्यः सम्पादयामास। तथाहि विद्वच्छिरोमणिर्भगवान् याज्ञवल्क्यो विजिगीषुकथायां बहुविधेन तत्त्वनिरूपणेनाश्वलायनप्रभृतीन् मुनीन् विजित्य वीतराग कथायां संक्षेपविस्ताराभ्यामनेकधा जनकं बोधयित्वा मैत्रेयीं बुबोधयिषुस्तस्यास्त्वरया तत्त्वाभिमुख्याय स्वकर्त्तव्यं सन्न्यासं प्रतिजज्ञे ततस्तां बोधयित्वा संन्यासञ्चकार। तदुभयं मैत्रेयीब्राह्मणस्याद्यन्तयोराम्नायते" "अथ ह

याज्ञवल्क्योऽन्यद्वृत्तमुपाकरिष्यन् मैत्रेयीति होवाच याज्ञवल्क्यः, प्रव्रजिष्यन् वा अरे अहमस्मात् स्थानादस्मीति, एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यः प्रवव्राजेति"॥ कहोले ब्राह्मणेऽपि विद्वत्संन्यास आम्नायते "एतं वैतमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्य्यञ्चरन्तीति"। नचैतद्वाक्यं विविदिषासंन्यासपरमिति शङ्कनीयं" पूर्व्वकालवाचिनो विदित्वेति क्त्वाप्रत्ययस्य ब्राह्मणशब्दस्य च बाधप्रसङ्गात्। नचात्र ब्राह्मणशब्दो जातिवाचकः वाक्यशेषे पाण्डित्यबाल्यमौनशब्दाभिधेयैः श्रवणमननिदिध्यासनैः साध्यं ब्रह्मसाक्षात्कारमभिप्रेत्याथ ब्राह्मण इत्यभिहितत्वात्। ननु तत्र विविदिषासंन्यासोपेतः पाण्डित्यादौ प्रवर्त्तमानोऽपि ब्राह्मणशब्देन परामृष्टः तस्मात् ब्राह्मणः पाण्डित्यं निर्व्विद्य बाल्येन तिष्ठासेदिति" नैवं भाविनीं वृत्तिमाश्रित्य तत्र ब्राह्मणशब्दस्य प्रयुक्तत्वात्। अन्यथा अथ च ब्राह्मण इति साधनानुष्ठानोत्तरकालवाचिनमथशब्दं प्रयुञ्जीत। शारीरब्राह्मणेऽपि विद्वत्संन्यासविविदिषासंन्यासौ स्पष्टं निर्द्दिष्टौ "एतमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्तीति"। मुनित्वं मननशीलत्वम्। तच्च सति सर्व्वव्यापारे न सम्भवतीत्यर्थात् संन्यास एवाभिधीयते। एतच्च वाक्यशेषे स्पष्टीकृतम् "एतद्ध स्म वै तत् पूर्व्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोक इति" "ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्य्यं चरन्तीति"। अयं लोक इत्यापरोक्ष्येणानुभूयत इत्यर्थः। अत्र मुनित्वेन फलेन प्रलोभ्य विविदिषासंन्यासं विधाय वाक्यशेषे स एव प्रपञ्चितः अतोन संन्यासान्तरं कल्पनीयं नैवं वेदनस्यैव विविदिषासंन्यासफलत्वात्। न च वेदनमुनित्वयोरेकत्वं शङ्कनीयं विदित्वा मुनिर्भवतीति पूर्व्वोत्तरकालीनयोस्तयोः साध्यसाधनत्वप्रतीतेः। ननु वेदनस्यैव परिपाकातिशयरूपमवस्थान्तरम् मुनित्वम् अतो वेदनद्वारा पूर्व्वं संन्यासस्यैवैतत् फलमिति चेत् बाढम् अतएव साधनरूपात् संन्यासादन्यं फलरूपमेनं संन्यासं ब्रूमः। यथा विविदिषासंन्यासिना तत्त्वज्ञानाय श्रवणादीनि सम्पादनीयानि तथा विद्वत्संन्यासिनापि जीवन्मुक्तये मनोनाशवासनाक्षयौ सम्पादनीयौ। एतच्चोपरिष्टात् प्रपञ्चयिष्यामः। सत्यमनयोः संन्यासयोरवान्तरभेदे परमहंसत्वाकारेणैकीकृत्य चतुर्व्विधा भिक्षव इति स्मृतिषु चतुःसंख्योक्ता। पूर्व्वोक्तयोः संन्यासयोः परमहंसत्वं जाबालश्रुतावगम्यते। तत्र हि जनकेन संन्यासे पृष्टे सति याज्ञवल्क्योऽधिकारिविशेषविधानेनोत्तरकालानुष्ठेयेन च सहितं विविदिषासंन्यासमभिधाय पश्चादत्रिणा यज्ञोपवीतरहितस्याक्षिप्तेऽब्राह्मण्ये पश्चादात्मज्ञानमेव यज्ञोपवीतमिति समादधौ अतो बाह्ययज्ञोपवीताभावात् परमहंसत्वं निश्चीयते। तथान्यस्यां कण्डिकायां तत्र परमहंसो नामेत्युपक्रम्य संवर्त्तकादीन् बहुविधान् ब्रह्मविदो जीवन्मुक्तानुदाहृत्य "अव्यक्तलिङ्गा अव्यक्ताचारा अनुन्मत्ता उन्मत्तवदाचरन्तः" इति विद्वत्संन्यासिनो दर्शिताः। तथा "त्रिदण्डं कमण्डलुं शिक्यं पात्रं जलपवित्रं शिखां यज्ञोपवीतञ्चेत्येतत्सर्व्वं भूःस्वाहेत्यप्सु परित्यज्यात्मानमन्विच्छेदिति" त्रिदण्डिनः यत एकदण्डग्रहणं विविदिषासंन्यासं विधाय तत्फलरूपं विद्वत्संन्यासमेवमुदाजहार। "यथा जातरूपधरो निर्द्वन्द्वो निष्परिग्रहस्तत्त्वब्रह्ममार्गे सम्यक् सम्पन्नः शुद्धमानसः प्राणसन्धारणार्थं यथोक्तकाले विमुक्तो भैक्षमाचरन्नुदरपात्रेण लाभालाभौ समौ कृत्वा शून्यागारदेवगृहतृणकूटवल्मीकवृक्षमूलकुलालशालाग्निहोत्रगृहनदीपुलिनगिरिकुहरकन्दरकोटरनिर्झरस्थण्डिलेष्वनिकेतवास्यप्रयत्नो निर्म्ममः शुक्लध्यानपरायणोऽध्यात्मनिष्ठः शुभाशुभकर्म्मनिर्मूलनपरः संन्यासेन देहत्यागं करोति स परमहंसो नामेति"। तस्मादनयोरुभयोः परमहंसत्वं सिद्धम्। समानेऽपि परमहंसत्वे सिद्धे विरुद्धधर्म्माक्रान्तत्वादवान्तरभेदोऽप्यभ्युपगन्तव्यः। विरुद्धधर्म्मत्वञ्चारुण्युपनिषत्परमहंसोपनिषदोः पर्य्यालोचनायामवगम्यते। "केन भगवन्! कर्म्माण्यशेषतो विसृजामीति" शिखायज्ञोपवीतस्वाध्यायगायत्रीजपाद्यशेषकर्म्मत्यागरूपे विविदिषासंन्यासे शिष्येणारुणिना पृष्टे सति गुरुः प्रजापतिः "शिखां यज्ञोपवीतम्" इत्यादिना सर्व्वत्यागमभिधाय "दण्डमाच्छादनं कौपीनञ्च परिग्रहेदिति" दण्डादिस्वीकारं विधाय "त्रिसन्ध्यादौ स्नानमाचरेत्। सन्धिं समाधावात्मन्याचरेदिति" "सर्व्वेषु वेदेष्वारण्यकमावर्त्तयेदुपनिषदमावर्त्तयेदुपनिषदमावर्त्तयेदिति" वेदनहेतूनाश्रमधर्म्माननुष्ठेयतया विधत्ते। "अथ योगिनां परमहंसानां कोऽयं मार्गः" इति विद्वत्संन्यासे नारदेन पृष्टे सति गुरुर्भगवान् सपुत्रमित्रेत्यादिना पूर्व्ववत् संन्यासमभिधाय "कौपीनं दण्डमा-

च्छादनञ्च स्वशरीरोपभोगार्थाय लोकस्योपकारार्थाय च परिग्रहेदिति" इत्यादिस्तोत्रस्य लौकिकत्वमभिधाय "तन्न सुखं नास्तीति" शास्त्रीयत्वं प्रतिषिध्य "कोऽयं मुख्य इति चेदयं मुख्योन दण्डं न शिखां न यज्ञोपवीत नाच्छादनं चरति परमहंसः" इति दण्डादिलिङ्गराहित्यस्य शास्त्रीयतामुक्त्वा 'न शीतं न चोष्णं' इत्यादिना वाक्येन "आशाम्बरो निर्नमस्कार" इत्यादिवाक्येन च लोकव्यवहारातीतत्वमभिधायान्ते "यत्पूर्णानन्दैकबोधस्तद्ब्रह्माहमस्मीति कृतकृत्यो भवति" इत्यन्तेन ग्रन्थेन ब्रह्मानुभवमात्रपर्य्यवसानमाचष्टे । अतोविरुद्धधर्म्मोपेतत्वादस्त्येवानयोर्महान् भेदः । स्मृतिष्वप्ययं भेद उक्तदिशा द्रष्टव्यः । "संसारमेवं निःसारं दृष्ट्वा सारदिदृक्षया । प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः । प्रवृत्तिलक्षणो योगो ज्ञानं संन्यासलक्षणम् । तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमान्" इत्यादिविविदिषासंन्यासः । "यदा तु विदितं तत्स्यात् परं ब्रह्म सनातनम् । तदैकदण्डं संगृह्य सोपवीतां शिखां त्यजेत् । ज्ञात्वा सम्यक्परं ब्रह्म सर्व्वं त्यक्त्वा परिव्रजेदिति" विद्वत्संन्यासः । ननु कथाविद्यादाविव कदाचिदौत्सुक्यमात्रेणापि वेदितुमिच्छा सम्भवत्येव विद्वत्तायामापातदर्शिनः पण्डितं मन्यमानस्याप्यवलोक्यते । न च तौ प्रव्रजन्तौ दृष्टौ अतोविविदिषाविद्वत्ते कीदृश्यौ विवक्षिते इति चेदुच्यते । यथा तीव्रायां बुभुक्षायामुत्पन्नायां भोजनादन्यो व्यापारो न रोचते । भोजने च विलम्बोन सोढु शक्यते । तथा यदा जन्महेतुषु कर्म्मस्वत्यन्तमरुचिः वेदनसाधनश्रवणादिषु च त्वरा महती सम्पद्यते तादृशी विविदिषा संन्यासहेतुः । विद्वत्ताया अवधिरुपदेशसाहस्र्यामभिहितः । "देहात्मज्ञानवज्ज्ञानं देहात्मज्ञानबाधकम् । आत्मन्येव भवेद्यस्य स नेच्छन्नपि मुच्यते" इति । श्रुतावपि "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व्वसंशयाः । क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे इति" । परमपि हैरण्यगर्भादिपदमवरं यस्मादसौ परावरः । हृदये बुद्धौ साक्षिणस्तादात्म्याध्यासोऽनाद्यविद्यानिमित्तत्वेन घनिबद्धसंश्लेषरूपत्वाद्ग्रन्थिरित्युच्यते । आत्मा साक्षी कर्त्ता वा, साक्षित्वेऽप्यस्य ब्रह्मत्वमस्ति न वा, ब्रह्मत्वेऽपि तद्बुद्ध्या वेदितुं शक्यते न वा, शक्यत्वेऽपि तद्वेदनमात्रेण मुक्तिरस्ति नवेत्यादयः संशयाः । कर्म्माण्यनारब्धानि आगामिजन्मकारणानि । तदेतत् ग्रन्थ्यादित्रयमविद्यानिमित्तत्वादात्मदर्शनेन निवर्त्तते । स्मृतावप्ययमर्थ उपलभ्यते "यस्य नाहंकृतोभावोबुद्धिर्यस्य न लिप्यते । हत्वापि स इमाँल्लोकान् हन्ति न निबध्यत" इति । यस्य ब्रह्मविदो,भावः सत्ता स्वभाव आत्मा, नाहंकृतोनाहङ्कारेण तादात्म्याध्यासादाविर्भावितः, बुद्धिलेपः संशयः । तदभावे स लोकत्रयवधेनापि न निबध्यते किमुतान्येन कर्म्मणेत्यर्थः । नन्वेवं सति विविदिषाफलेन तत्त्वज्ञानेनैवागामिजन्मनां निवारितत्वाद्वर्त्तमानजन्मयोग्यस्य भोगमन्तरेण निवारयितुमशक्यत्वादलमनेन विद्वत्संन्यासप्रयासेनेति चेन्मैवं विद्वत्संन्यासस्य जीवन्मुक्तिहेतुत्वात् । तथाहेदनाय यथा विविदिषासंन्यासः एवं जीवन्मुक्तये विद्वत्संन्यासः सम्पादनीयः इति विद्वत्संन्यासः" ।

"दीर्घकालं ब्रह्मचर्य्यम् इत्यादिस्मृतिपुराणे यद्य कलिवर्ज्ज्यतया दीर्घकालब्रह्मचर्य्यसंन्यासाश्रमयोरुत्कीर्त्तनम् तत् नैष्ठिकब्रह्मचर्य्यषट्त्रिंशदब्दादिब्रह्मचर्य्ययोर्निषेधपरम् न पुनर्यावज्ज्ञानान्तिकब्रह्मचर्य्यमात्रस्य निषेधः दीर्घकालेतिविशेषणसामर्थ्यात् तेन "षट्त्रिंशदाब्दिकं चर्य्यं गुरौ त्रैवेदिकं व्रतम् । तदर्द्धिकं पादिकं वा ग्रहणान्तिकमेव वा" इति मनूक्तपक्षचतुष्टयमध्ये अल्पकालिकस्यैव कलौ कर्त्तव्यता । "तथाऽग्निहोत्रं गवालम्भं संन्यासं पलपैतृकमिति" निगमवाक्यमपि त्रिदण्डविषयम् "यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्त्तते । संन्यासञ्चाग्निहोत्रञ्च तावत् कुर्य्यात् कलौ युगे" देवलस्मरणात् । "चत्वार्य्यब्दसहस्राणि चत्वार्य्यब्दशतानि च । कलेर्यदा गमिष्यन्ति तदा त्रेतापरिग्रहः । संन्यासश्च न कर्त्तव्यो ब्राह्मणेन विजानता" इति व्यासवचनन्तु त्रिदण्डविषयम् । महानिर्वाणतन्त्रे तु । "पुरैव कथितं तावत् कलिधर्म्मविचेष्टितम् । तपःस्वाध्यायहीनानां स्वभावस्यायुषामपि । क्लेशप्रयासाशक्तानां कुतोदेहपरिश्रमः । ब्रह्मचर्य्याश्रमोनास्ति वानप्रस्थोऽपि न प्रिये । गार्हस्थ्यो भैक्षुकश्चैव आश्रमौ द्वौ कलौ युगे । गृहस्थस्य क्रियाः सर्व्वा आगमोक्ताः कलौ प्रिये । नान्यमार्गैः क्रियासिद्धिः कदापि गृहमेधिनाम् । भैक्षुकेऽप्याश्रमे चापि वेदोक्तं दण्डधारणम् । कलौ नास्त्येव तत्त्वज्ञे ! यतस्तच्छ्रौतसंस्कृतिः । शैवसंस्कारविधिनाऽवधूताश्रमधारणम् । तदेव कथितं भद्रे ! संन्यासग्रहणं कलौ । विप्राद्यामितरेषाञ्च वर्णानां प्रबले कलौ । उभये आश्रमे देवि ! सर्व्वेषामधिकारिता । सर्व्वेषामेव संस्कारलक्षणी शैववर्त्मना । विप्राणामितरेषाञ्च

कर्म्म भिन्नं पृथक् पृथक्"। उभावेताश्रमौ विहितौ एत-न्मागमाधिकारिणः पतितब्राह्मणादेरुक्तप्रायश्चित्तस्यैव बोध्यम्। आगमविधावधिकारित्वेन आगमपत्रे ६।४ पुरे उक्ताः इतरेषान्तु न श्रौतस्मार्त्तादिशास्त्रनिषेधः तेषां श्रौत एवाधिकारात्। वस्तुतः आगमवाक्येऽपि प्रबले कलाविति विशेषोक्तेः प्रबले कलौ सर्व्वेषामेव पतित प्रायत्वस्यावश्यम्भावादागमधर्म्मस्यैवावलम्बनीयतया तेषामेव तदानीमागमोक्ताश्रमद्वयेऽधिकार इति भेद इति दिक्।

**आश्रमगुरु** पु० आश्रमाणां ब्रह्मचर्य्यादीनां गुरुर्नियन्ता। आश्रमनियन्तरि कर्वे। "वर्त्तुमाश्रमगुरुः स नाश-कत्" माघः।

**आश्रमधर्म्म** पु० आश्रमविहितोधर्म्मः। ब्रह्मचर्य्यादि-विहिते धर्म्मे धर्म्मो हि षड्विधः वर्णधर्म्म आश्रमधर्म्मो वर्णाश्रमधर्म्मो गुणधर्म्मो निमित्तधर्म्मः साधारणधर्म्मश्चेति। तत्र वर्णधर्म्मो ब्राह्मणो नित्यं मद्यं वर्ज्जयेदित्यादिः। आश्रमधर्म्मोऽग्नीन्धनभैक्ष्यब्रह्मचर्य्यादिः वर्णाश्रमधर्म्मो ब्रा-ह्मणस्यादि क्रमेण पालाशादिदण्डधारणादि"नैमित्तिकधर्म्मो विहिताकरणनिषिद्धसेवननिमित्तं प्रायश्चित्तम्, साधारण-धर्म्मोऽहिंसादि मा हिंस्यात् सर्व्वाभूतानीत्याचाण्डालं साधारणधर्म्मः प्रयुक्तः इति" मिता०। अन्यत्र चान्ये आश्रमधर्म्माः दर्शिताः। "ब्रह्मचारिणः स्वाध्यायः, गृह-स्थस्य दानं दमो यज्ञश्च, वानप्रस्थस्य तपः, भिक्षुकस्य "अभयं सत्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः" इत्यादिकः तथा च "वर्णाश्रमं समाश्रित्य अधिकारः प्रवर्त्तते। स चाश्र-मधर्म्मस्तु भिक्षादण्डादिकं यथा। यतीनां तु शमो धर्म्मोनियमोवनवासिनाम्। दानमेव गृहस्थानां शुश्रूषा ब्रह्मचारिणामिति"स्मृतौ उक्ता च ये ये धर्म्मा यत्र यत्राश्रमे विहितास्ते ते आश्रमधर्म्मशब्देनोच्यन्ते ते च धर्म्मशास्त्रग्रन्थेषु प्रपञ्चेन वक्ष्यन्ते। [वनादौ आश्रमस्थानादयोऽप्यत्र।

**आश्रमपद** न० आश्रमस्य पदम्। ऋष्यादेर्निवासस्थाने तपो-

**आश्रमवास** पु० आश्रमे वासः। ऋष्यादीनां १तपोवनादौ वासे आश्रमवासमधिकृत्य कृतोग्रन्थः अण्। धृतराष्ट्रा-दीनामाश्रमवासाधिकारेण कृते निर्मिते भारतान्तर्गते २पर्व्वभेदे। "एतदाश्रमवासाख्यम्" भा०आ० १अ०।

**आश्रमवासिक** न० आश्रमवासः प्रतिपाद्यतयाऽस्त्यस्य ठन्। भारतान्तर्गते धृतराष्ट्रादेराश्रमवासप्रतिपादके पर्व्वभेदे।

**आश्रमसद्** त्रि० आश्रमे सीदति सद–क्विप्। आश्रम-वासिनि तपोवनवासनिरते वानप्रस्थादौ।

**आश्रमिक** त्रि० आश्रमोऽस्त्यस्य ठन्। आश्रमयुक्ते।

**आश्रमिन्** त्रि० आश्रमोऽस्त्यस्य इनि। आश्रमयुक्ते स्त्रियां ङीप्। "तथैवाश्रमिणः सर्व्वे गृहस्थे यान्ति संस्थितिम्" "चतु-र्भिरपि चैवैतैर्नित्यमाश्रमिभिर्द्विजैः" मनुः।

**आश्रय** न० आश्रीयतेऽसौ आ+श्रि–कर्म्मणि अच्। १आश्र-यणीये "सर्व्वेषामाश्रयमनागतमभ्युपैति" "द्रुमाश्रये-ऽपि कुसुमे रराज भीरुः" माघः। "चित्रं यथाश्रय-मृते स्तम्भादिभ्यो विना यथाच्छाया। तद्वद्विना विशेषै-र्न तिष्ठति निराश्रयं लिङ्गम्" सां०का० २आधारे "आसत्तिराश्रयाणान्तु सामान्यज्ञानमिष्यते" "हेतोरे-काश्रये येषां स्वसाध्याव्यभिचारिता" "जन्यानां जनकः कालो जगतामाश्रयो मतः" भाषा० "तमाश्रयं दुष्प्रसहस्य तेजसः" रघुः ३गृहे। "पितृमात्राश्रये गच्छ" ४अवलम्बने "विनाश्रयं न तिष्ठन्ति पण्डिता वनिता लताः" उद्भटः "निराश्रयं मां जगदीश! रक्ष" पुरा० ५विषये "बभूव यत् प्रेमपरस्पराश्रयम्" रघुः ६अरिभिः-पीड्यमानेन बलवदाश्रयणरूपे षड्गुणान्तर्गते राज्ञां गुणभेदे यथाश्रयः कर्त्तव्यस्तथोक्तमग्निपुराणे "बलिनो-र्द्विषतोर्मध्ये वाचात्मानं समर्पयन्। द्वैधीभावेन तिष्ठेत काकाक्षिवदलक्षितः। उभयोरपि संपाते सेवेत बलव-त्तरम्। यदा द्वावपि नेच्छेतां संश्लेषं जातसंविदौ। तदोपसर्पेत्तच्छत्रुमधिकं वा स्वयं व्रजेत्। उच्छिद्यमानो बलिना निरुपायप्रतिक्रियः। कुलोद्गतं सत्यमार्य-मासेवेत बलोत्कटम्। तद्दर्शनोपास्तिकता नित्यं तद्भाव-भाविता। तत्कारितप्रश्रयिता वृत्तं संश्रयिणः स्मृतम्"। भावे अच्। ७अवलम्बने। "योऽवलम्बेत तौ पूर्वे शेष-यासाश्रयेण च" मनुः। ८आश्रयणे "गुणवदाश्रयलब्ध-गुणोदये" माघः। त्व। आश्रयत्वम् आधारत्वे न०। "आश्रयत्वविषयत्वभागिनी" सं०या० तल्। आश्रयता। तदर्थे स्त्री आधारशब्दे विवृतिः।

**आश्रयण** न० आ+श्रि–ल्युट्। १आसेवायाम् २अवलम्बने च। कर्त्तरि ल्युट्। ३आश्रयकर्त्तरि त्रि० स्त्रियां ङीप्। "अहमेत्य पतङ्गवर्त्मना पुनरङ्काश्रयणी भवामि ते" कुमा०।

**आश्रयणीय** त्रि० आ+श्रि–कर्म्मणि अनीयर्। यस्याश्रयः क्रियते १तस्मिन् २अवलम्ब्ये च।

**आश्रयवत्** त्रि० आश्रयोऽस्त्यस्य मतुप् मस्य वः स्त्रियां ङीप्। आश्रययुक्ते सावलम्बे साधारे पदार्थे।

**आश्रयाश** पु० आश्रयमश्नाति अश–अण् उप०स०।

१वह्नौ तस्य आश्रयस्य काष्ठादेर्दाहकत्वात्तथात्वम् । "दुर्वृत्तः क्रियते धूर्त्तैः श्रीमानात्मविवृद्धये । किं नाम खलसंसर्गः कुरुते नाश्रयाशवत्" उद्भटः २चित्रकवृक्षे ३भल्लातकवृक्षे च । ४आश्रयनाशके त्रि० ।

**आश्रयासिद्ध** पु० आश्रयोऽसिद्धोऽस्य । न्यायोक्ते हेत्वाभासभेदे यथा गगनपद्मं सुरभि पद्मत्वात् सरोजपद्मवदित्यादौ गगनपद्मरूपस्य हेतोराश्रयस्याप्रसिद्धत्वात् हेतोर्दुष्टत्वम् ।

**आश्रयासिद्धि** स्त्री आश्रयस्य सिद्धिः अप्रसिद्धिः न्यायोक्ते हेतोर्दोषभेदे असिद्धिशब्दे ५५४पृष्ठे विवृतिः ।

**आश्रयिन्** त्रि० आश्रयति आ+श्रि-इनि । आश्रयकारके आश्रिते । "मयूरपृष्ठाश्रयिणा गुहेन" रघुः "पर्य्यन्ताश्रयिभि निजस्य सदृशं नाम्नः किरातैः कृतम्" रत्ना० ।

**आश्रव** त्रि० आशृणोति वाक्यम् आ+श्रु-अच् । वाक्यस्थिते वाचि प्रवणे वाक्यं श्रुत्वा तदर्थानुष्ठायिनि । "संगतस्तु भिषजामनाश्रवः" रघुः । भावे+अप् । १अङ्गीकारे २क्लेशे च ।

**आश्राव** त्रि० आ+श्रु-णिच्-अच् । १श्रावणे २अङ्गीकारणे च

**आश्रि** स्त्री सम्यक् अश्रिः प्रा० स० । सम्यक्कोणे शब्दच०

**आश्रित** त्रि० आ+श्रि-क्त । आश्रयप्राप्ते, शरणागते, आधेये "प्रायशत्वं गौरवमाश्रितेषु" कुमा० "अथ द्रव्याश्रिता गुणाः" । "अन्यत्र नित्यद्रव्येभ्य आश्रितत्वमिहेष्यते इति" च भाषा० ।

**आश्रित्य** अव्य० आ+श्रि-ल्यप् । अवलम्ब्येत्यर्थे ।

**आश्रिन्** त्रि० आश्रं चक्षुर्जलमस्त्यस्य ब्रीह्या० इनि । चक्षुर्जलयुक्ते स्त्रियां ङीप् । [ क्विप् । २अङ्गीकर्त्तरि त्रि० ।

**आश्रुत्** स्त्री आ+श्रु-भावे क्विप् । १अङ्गीकारे । कर्त्तरि

**आश्रुत** त्रि० आ+श्रु-क्त । १अङ्गीकृते, २आकर्णिते च । "एवं सर्व्वत्राश्रुतेषु" कात्या० २,२.६ ।

**आश्रुति** स्त्री आ+श्रु-क्तिन् । १अङ्गीकारे २श्रवणे च ।

**आश्रेय** त्रि० आ+श्रि-यत् । १आश्रयणीये २अवलम्ब्ये च ।

**आश्लिष्ट** त्रि० आ+श्लिष-क्त । १आलिङ्गिते २संबद्धे "शिलाभिराश्लिष्टइवाम्बुसांनिधिः" "आश्लिष्टभूमिं रसितारमुच्चैः" इति च माघः ।

**आश्लेष** पु० ईषदेकदेशेन श्लेषः संबन्धः आ+श्लिष-घञ् । १एकदेशसंबन्धे । "सामीप्याश्लेषविषयैर्व्याप्त्याधारश्चतुर्विधः" मुग्धबो० । २आलिङ्गने च । "आश्लेषलोलुपवधूस्तनकार्कश्यसाक्षिणीम्" माघः वेदे नि० क्वचित् लस्य रः ।

आश्रेषोऽप्युक्तार्थे पु० अश्लेषैव स्वार्थे अण् । अश्लेषानक्षत्रे स्त्री । "आश्लेषा नक्षत्रं सर्पा देवताः" तैत्ति०

**आश्व** न० अश्वानां समूहः अण् । १अश्वसमूहे अश्वैरुह्यते शंधिकः अण् अश्वस्येदं वाह्यम् अञ् वा । २अश्ववाह्ये त्रि० सि० कौ० । अश्वस्य भावः कर्म्म वा प्राणभृज्जातित्वात् अञ् । ३अश्वभावे ४तत्कर्म्मणि च न० । अश्वस्येदम् अण् । ५अश्वसंबन्धिनि त्रि० । "आश्वं कफहरं मूलं सपिद्रुपु गस्यते" सुश्रुतः ।

**आश्वतरायणि** पु० अश्वतरायणस्यापत्यम् इञ् । बुद्धिशक्ती ।

**आश्वत्थ** न० अश्वत्थस्य फलमण् प्लक्षा० तस्य न लुक् । १अश्वत्थफले । अश्वत्थस्येदम् अण् । २अश्वत्थसम्बन्धिनि त्रि० स्त्रियां गौ० ङीष् । आश्वत्थी शाखा समिद्वा । "सपिंरासिच्याश्वत्थीस्तिस्रः समिधः" शत० ब्रा० । तस्मादाश्वत्थे कतुपात्रे स्याताम्" शत० ब्रा० अश्वत्थेन युक्ता अण् । अश्वत्थनक्षत्रयुक्तायां २रात्रौ स्त्री । नक्षा० छ । आश्वत्थीयः आश्वत्थसम्बन्धिनि त्रि० ।

**आश्वत्थिक** त्रि० अश्वत्थशब्दे ५०७ पृष्ठे विवृत्याद । चान्द्राश्विने मासि । [सम्बन्धिनि ।

**आश्वपत** त्रि० अश्वपतेरिदम् अश्वपत्या० अण् । अश्वपति

**आश्वपस्** त्रि० आशु आप्नोति असुन् ह्रस्वः । शीघ्रप्रापरि ।

**आश्वपालिक** पुंस्त्री अश्वपाल्याः अपत्यं रेवत्या० ठक् । अश्वपाल्या अपत्ये । [षिणि । अश्वपेजर्षिप्रोक्ताध्यायिषु ।

**आश्वपेजिन्** त्रि० ब० व० । अश्वपेजेन प्रोक्तमधीयते शौनका०

**आश्ववाल** त्रि० अश्ववालाया ओषधेरवयम् अण् । अश्ववालौषधेः संबन्धिनि । "आश्ववालः प्रस्तरः, यज्ञो ह देवेभ्योऽपचक्राम सोऽश्वो भूत्वा पराङावर्त्त तस्य देवा अनुहाय वालानभिपेदुस्तानालुलुपुस्तानालुप्य सार्द्धं संन्यासुस्तत एता ओषधयः समभवन् यदश्ववालाः शिरो वै यज्ञस्यातिथ्यं जघनार्द्धौ वाला उभयत एवैतद्यज्ञं परिगृह्णाति यदाश्ववालः प्रस्तरो भवति" शत० ब्रा० ।

**आश्वभारिक** त्रि० अश्वबाह्य भारमश्वभूतं भारं वा हरति वहति आवहति वा वंशा० ठञ् । अश्वबाह्यस्य अश्वभूतस्य वा भारस्य १हारके २वाहके ३आवाहके च ।

**आश्वमेधिक** त्रि० अश्वमेधाय हितं ठञ् । अश्वमेधसाधने द्रव्यादौ अश्वमेधद्रव्याणि च अश्वमेधशब्दे ५११ पृष्ठे उक्तानि अश्वमेधमधिकृत्य कृतः ग्रन्थः ठण् । शतपथब्राह्मणान्तर्गते १३ प्रपाठके पञ्चाध्यायीरूपे ग्रन्थभेदे तत्र पञ्चस्वध्यायेषु अश्वमेधस्योत्पत्तिः कथ्यते । तस्य धर्मविधयः आध्वर्य्यवौद्गात्रब्राह्मत्वयाजमानविषयाः तत्र प्रथमाध्यायत्रयेण मन्त्रव्याख्यानेन सह विशेषधर्म्मा

वान्तवर्णापादनम् । १७ प्रणवान्तमकारेण सवस्रान्तस्थानां परान्तस्थानामनुनासिकत्वापादनम् । १८ रेफोष्मसु परेषु प्रणवान्तमकारस्यानुस्वारत्वापत्तिः । १९ प्रथमोत्तमे ऋचौ त्रिरभ्यर्धीत्य तयोरनुवचनम् । २० अध्यर्धयो र्ऋचोर्वचनावसानेऽध्यर्धचतुष्कात्मिकयोर्द्वयोर्ऋचोर्वचनम् । २१ उत्तमायामपि आदौ द्वे पश्चात् अध्यर्धा । २२ एकादशानामृचां द्वयोस्त्रिरभ्यासयोगेन पञ्चदशसंख्यापूरणनिदर्शनम् । २३ पशुयाज्यादिषु सामिधेनीनां कतिपयधर्मातिदेशः । २४ सामिधेनीभ्योऽन्यत्राध्यर्धकरणप्रतिषेधादयः २५ विहितेऽवसानेऽभिहिङ्काराभ्यासनिषेधः । २६ प्रत्येव होतृकाणामभिहिङ्कारविधानात् आवस्तुतस्मिषेधबाधनम् । २७ प्रणवेन निगदस्याग्नानन्तरं तेनैव तदवसानविधानम् ।२७सू० १अ० २क०। १यजमानस्यार्षेयप्रवरणम् । २ अन्यकुलजातब्राह्मणस्यायस्यार्षेयप्रवरणप्रकारः । ३ राजन्यविशां सर्वर्षिकानुलोमस्त्रीजातानाञ्च पुरोहितार्षेयभागित्वम् ।४राज्ञां राजर्षिप्रवरणं पौरोहित्यप्रवरणं वा ५ प्रवराज्ञाने तत्संशये च सर्वेषामस्य मानवप्रवरः । ६अष्टदशनिवितृपदकथनम् आवाहननिगदकथनं, सामिधेन्यादीनां आवाहनीयाभिधायित्वम् । ७अग्निरूपप्रथमदेवतावाहनम् । ८ अग्नीषोमदैवताज्यभागयागयोराख्या । ९ अग्नेरग्नीषोमयोश्च पौर्णमास्यां प्रधानदेवतात्वम् । १०अमावास्यायां दधिपयोभ्यां यागमकुर्वतोऽग्नीषोमयोः स्थाने इन्द्राग्न्योः प्रधानदेवतात्वम् । ११तद्दिने उक्तयागरूपसन्नयनकारिणोऽग्नीषोमस्थाने इन्द्रमहेन्द्रयोरन्यतरावाहनम् ।१२उभयोरपि पर्वणोरैतरेयिणाम् विष्णुदेवताकोपांशुयागकरणम् । १३ शाखान्तरीयाणाम् उभयोरपि पक्षयोरुपांशुयागभिन्नयागाभावः।१४पित्र्याद्युक्तोपांशुयागानाम् आवाहनादिनिगदचतुष्टये आवाहनादीनां पञ्चां पदानाम् उच्चैरितिसंज्ञाविधानम् । १५उपांशुयाजगतनामान्येषाम् परोक्षाणाम् उपांशुत्वानुवादः, विकल्पेनोच्चैः संज्ञाविधानं च । १६विहितदेवतानामरूपस्य मन्त्रस्योपांशुत्वम् । १७ प्रतिनोदितदेवतमावाहनभेदः । १८ एकपदानानां सर्वासां देवतानामावाहने एकदेवावहमन्त्रप्रयोगः । १९ उत्तरनिगमेषु एकदेवतात्वेन संस्तवः । २० एकप्रयोजनार्थाया देवतायाः कारणवशात् एकवचनेनैव समागता । २१अपराव्यवहितायाः देवताया निगमेषु एकदेववचनभाक्त्वम् ।२२ आवापोद्धारयोर्न्यासु प्रधानदेवतासु तथावाहनासु देवाज्यपाख्यदेवतामावाहनप्रक्रिया ।

२३ आश्रावयिष्यतेऽध्वर्यवेऽनुमन्त्रणं तदनन्तरकरणीयञ्च । २४ उत्थानपूर्वकं पद्दिवेतिमन्त्रपाठः । २५ अंसे पार्श्वस्थेन पाणिनाध्वर्युन्वारम्भणम् । २६ सव्येन पाणिनाङ्गेनैष्ठया वाऽऽग्नीध्रकर्ह कमन्वारम्भणम् । २७ उक्तोभयान्वारम्भणे साधारणमन्त्रः । २८ इध्मसन्नहनरूपैस्तृणैरान्ततुषसंमार्जनम् । २९ संस्कारकर्मावृत्तिमात्रे तत्तन्त्रेण द्विस्तृणैः संस्करणम् । ३० उदकस्पर्शानन्तरं होतृषदनाभिमन्त्रणम् । ३१ दक्षिणोत्तरयोपस्थेनोपवेशनं होतृषदनात् तृणनिरसनञ्च । ३२ उक्तयोरेतयोर्निरसनोपवेशनयोः सर्वासनेषु प्रथमप्रयोग एव समानत्वम् । ३३ गौतमाचार्यमते द्वितीयेऽपि प्रयोगे तादृशनिरसनोपवेशनयोः सद्भावः । ३३सू० १अ० ३क० । १अग्न्याधेये ब्रह्मौदनप्राशनकाले ब्रह्मणो द्विर्निरसनोपवेशनकरणम् । २ सर्वेषु सोमेषु अहिष्मत्त्वागात् प्रत्येक ब्रह्मणः पूर्वासने पुनः करणम् । ३ आसने पत्न्यंशमुपविष्टस्य होतुः सदःप्रसर्पणानन्तरं तत्रैव पुनः करणम् । ४ पश्चौ स्वाहाकृत्यर्थयोः स्रुगवदापनयोः पुनः करणम् । ५ पत्नीसंयाजार्थोपवेशनाकरणम् । ६ कौत्समते होतृभिन्नानामेतयोर्निरसनोपवेशनयोरकरणम् । ७उपविष्टानन्तरं देवेत्यादिमन्त्रपाठः । ८ जान्वपेक्ष्य मर्हिषपस्य अभिद्धिपेत्यादिमन्त्रजपः । ९ इध्मप्रदीप्ते उक्तजपानन्तरं भूपतये नम इति निगदेनाध्वर्यवे स्रुगावदापनम् । १० अग्निर्होतेति निगदश्रवणाय होतारमवृथा इति मन्त्रजपः ११ अग्निर्होतेत्यादिना सह इतवतीत्यादिकमेकनिगदं विधाय तत्समापनम् । १२ उक्तनिगदे समाप्तेऽध्वर्युकर्हकमाज्ञाश्रवणम् । १३ उत्करदेशे तिष्ठत आग्नीध्रं प्रत्याश्रावणप्रकारः । १३सू० १अ० ४क०। १ याज्यप्रयाजैर्यजनम् । २ तनूनपान्नराशंसयोरन्यतरेण प्रयाजानां पञ्चसहस्राकत्वम् । ३ प्रकृत्प्रेषितस्य न सर्वयजनम् । ४ अनानुयाजानां सर्वाषां याज्यानामादिरागूर्भवतीति । ५ये यजामहे इति आगूः स्वरूपं, वषट्काररूपञ्च । ६ याज्याया एव उच्चैस्तरावस्थानीयस्योभयधर्मवत्त्वम् । ७ आगूर्वषट्कारयोराद्योः प्लुतिकरणम् । ८ याज्यान्तस्य श्रावणम् । ९ विविक्तयोः सन्धिजातयोरेकारैकारयोरोकारौकारयो वा इ, इति आउ इत्येवं, व्यञ्जनान्तानां सन्ध्यक्षराणां सर्वदा स्वरूपेणैव च श्रावण । १० अनवर्णोपधस्य विसर्जनीयस्य रेफिभावः । ११ रेफिसंज्ञिनोऽवर्णोपधस्य विसर्जनीयस्य रेफिभावः । १२ वषट्-

कारसन्धौ अरेफसंज्ञस्यावर्णोपधस्य विसर्जनीयस्य लोपः । १३ वर्गाणां प्रथमस्य स्ववर्गीयतृतीयवर्णापादनम् । १४मकारे सानुनासिकभावस्य नित्यत्वम् । १५ वौषट्शब्दस्य वषट्कारस्वरूपत्वम् । १६इत्येवंरूपः प्रथमप्रयाजः । १७ वषट्कारोच्चारणपूर्व्वकोऽनुमन्त्रणप्रकारः । १८वषट्कारस्य द्विवाकीर्त्तनीयत्वम् । १९ अनुमन्त्रणस्यापि द्विवाकीर्त्तनीयत्वम् । २० इत्येवं याज्यास्वरूपम् । २१वसिष्ठादिभिन्नानां तनूनपादित्यादिः द्वितीयप्रयाजः।२२वसिष्ठादीनां नराशंस इत्यादिः द्वितीयप्रयाजः ।२३इडो अग्न इत्यादिः सर्व्वेषां तृतीयप्रयाजः।२४बर्हिरग्ने इत्यादिः चतुर्थः स्वाहाग्निमित्यादि पञ्चमप्रयाजः ।२५अग्निमन्थनादौ मन्द्रस्वरप्रयोगः।२६शंयुवाकादूर्द्ध्वं मन्द्रस्वरेण प्रयोगः।२७प्रयाजेभ्य ऊर्द्ध्वमासिष्टकृतो मध्यमेन प्रयोगः । २८ इडादिशंयुवाकान्तरूपस्य शेषस्योत्तमेन प्रयोगः। २९ पूर्व्वोत्तरयोराज्यभागनामकयागयोरागोरणदेवतादेशयाज्यासन्धानपूर्व्वको यागः । ३० अनुवाक्यावतीनामप्रैषाणां चान्यायात्वाभ्योऽन्यासां देवतानाम् आदेशपूर्व्वकयागः । ३१ अङ्गप्रधानरूपे सोमकर्म्मणि वैश्वानरीयपत्नीसंयाजशब्दबोधितयोः पदार्थयोर्मध्ये तत्रोत्पन्नाभ्यां देवताभ्योऽन्यासाम् आदेशपूर्व्वको यागः । ३२ पौर्णमास्यामाज्यभागयोः सन्निमित्ता वार्त्रघ्नसंज्ञा । ३३ अनुवाक्यातएवविचारावगमादि । ३४याज्ययोरानुवाक्यादेवतानन्यत्वम् । ३५ आदित आरभ्याज्यभागपर्य्यन्तं वाग्यमनम् ।३६याज्यादिभ्योऽन्यदारभ्यासमाप्तेर्वाग्यमनम् । ३७ वचनबाधनवचसोऽन्यत्र वाग्यमननियमः । ३८ वाग्यमननियमातिक्रमे अतो देवा अवन्तु न इति वैष्णव्या ऋचो जपः । ३९उक्तातिक्रमेऽन्यस्या अपि वैष्णव्या ऋचो जपविधानम् ।३९ख०१अ०५क०।१विधिक्रमप्राप्तानां देवतानां वक्ष्यमाणलिङ्गक्रमाभ्यां याज्यानुवाक्यायोजना । २प्रधानानन्तरं स्विष्टकृतो यागः सर्व्वत्र च पूर्व्वमनुवाक्यायाः पश्चाद्याज्याया प्रयोगः । ३ ये यजामहे इत्युक्त्वा पञ्चम्या विभक्त्या देवतायादिश्य प्रिया धामान्ययाडिति मन्त्रपाठः । ४प्रथमदेवतायाः पुरस्तादयाडग्निरितिशब्दस्त्यक्त्वा उत्तरासामयाट्शब्दस्यैव सर्व्वासामुपरिष्टात् प्रिया धामानिशब्दस्य च सन्ततप्रयोगः । ५ याज्याविशेषेऽनुष्ठानस्य कर्त्तव्यत्वम् । ६याज्यापाठे अर्धर्चे शोन्त्रस्य कर्त्तव्यता ।६ख०१अ०६क० १ अध्वर्युणा प्रदेशिन्योपर्य्यञ्जनपूर्व्वकोडापर्व्वशोधने । २ ओष्ठाधरयोधनस्य मन्त्रविशेषः । ३ अध्वर्युणा इडाग्रहणपूर्व्वकावान्तरेडावदापनप्रकारः । ४ स्वयं यजमानेन इडाया अवान्तरेडाग्रहणप्रकारः । ५ अध्वर्युकर्त्तृकं वा तद्ग्रहणम् । ६ इडोपह्वानप्रकारः । ७ वाक् दिवेत्यादिना तस्मिन्नुपहूत इत्यन्तेन मन्त्रेण इडोपह्वानम् । ८होतृयजमानपञ्चमानां वा सर्व्वेषामवान्तरेडाभक्षणपूर्व्वकेडाभक्षणम् । ८ख०अ०७क० । १इडाभोक्तृमार्जनपूर्व्वकमनुयाजचरणम् । २मार्जनप्रकारः । ३अनुयाजलक्षणम् । ४ प्रयाजानुयाजयोर्गुणकथनम् । ५अनुयाजानां त्रित्वव्यवस्थापनम् । ६ एकैकं प्रैषितस्य यजनविधानम् । ७ अनुयाजमन्त्राणां स्थलविशेषे कश्चिदवसानपूर्व्वकं कश्चिद्वानवसानपूर्व्वकं यजनविधानम् । ७ख०अ०८क०।१सूक्तवाकाय सम्प्रेषितस्य देवतादेशानन्तरम् इदं हविरित्युपसन्ननम् । २उत्तरा अपि देवता आदिश्येदं हविरित्येवमुपसन्ननम् । ३ द्विदैवतबहुदैवतयोरर्थवशेनाक्षतेत्यस्य स्थाने अक्रातामक्रतेत्यूहस्य कर्त्तव्यता । ४आवह स्वाहेतिनिगदस्य पशुयागेऽपि प्रयोगः ।५आवापिकदेवताक्रमप्राप्त्यर्थम् आवापिकान्तमित्येतदादिकथनम् । ५ख०१अ०९क० । १शंयुवाकाय प्रैषितस्य तच्छंयोरिति मन्त्रपाठे प्रणवनिषेधः । २ तादृशप्रैषिताया अध्वर्युणा वेददानम् । ३ वेदग्रहणे वेदोऽसीति मन्त्रपाठः । ४प्रकृतिविकारभावेऽपि तत्तन्मन्त्रप्राप्तिः, आद्येन सोमयाग एव याज्यानुवाक्याव्यत्यापनं यागएव केवलं देवताविशेषाणामनुद्दिष्टिकथनं च । ५मन्त्रभेदानां पत्नीसंयाजसंज्ञाविधानम् । ६ प्रजाकामस्य यजमानस्य यागभेदः । ७यजमाने सन्निहितेऽपि होत्रैव कर्त्तृत्वं याज्यानुवाक्ययोर्होतृकर्त्तृत्वस्यात्यन्तः प्रसिद्धिः, कुहूमहमिति मन्त्रपाठे यजमानस्य स्वयंकर्त्तृत्वं च । ८पाणितलस्थाज्यरूपेडोपह्वानानन्तरं तद्भक्षणविधिः । ९ आज्येडाया ऊर्द्ध्वं शंयुवाको भवति न वेति संशये इतिकर्त्तव्यताविधानम् । ९ख०१अ०१०क०। १होत्राऽध्वर्युणा वा पत्न्यै वेदं प्रदाय वेदोऽसीत्यादि-कामायेत्येवमन्तमन्त्रवाचनम् । २प्रजाकामायाः पत्न्या वेदशिरसा स्तनाभ्यामर्शनम् । ३वाचनाभावे वाचनानन्तरं योक्त्रविमोकः । ४ द्विगुणितं योक्त्रं निधाय तस्योपरिष्टात् वेदतृणानां निधानम् । ५एतेभ्यः पुरस्तात् वेदतृणसंश्लिष्टस्य पूर्णपात्रस्य निधानम् । ६आत्मानमभिमृशन्तीं पत्नीमभिमृशतः पूर्णमसीति मन्त्रवाचनम् । ७पूर्णपात्रादुदकं गृहीत्वा तदुत्पन्नं तां चैवं कुर्वतीं वाचयतीत्युक्तिः । ८योक्त्रस्याधस्तात् पत्न्यञ्जलिस्थानमात्मनः सव्यं पाणिमुत्तानं निधाय पूर्णपात्रं निनयन् माहं प्रजा-

मिति तां वाचयतीत्युक्तिः ।९वेदतृणानि स्तृहीत्वा गार्हपत्या-
दारभ्य तन्तुं तन्वन्नित्यादिना सन्ततं स्तृणन् आहवनीयं
गच्छतीत्युक्तिः । १०सर्व्वाणि वेदतृणानि न स्तरितव्यानि
नियमेन शेषितव्यान्युत्तरक्रियार्थमित्युक्तिः । ११ श्रौता-
तिरिक्तेषु गार्ह्येष्वपि मन्त्रसाध्येषु कर्म्मसु स्वाहाकारस्यैव
कर्त्तव्यत्वं न वषट्कारस्येत्युक्तिः । १२ अविहितविशेषाणां
होमाज्याधानोपस्थानानां, तत्तदितिकर्त्तव्यताप्रकारस्य च
विधानम् । १३ एकमन्त्राणि कर्म्माणीति न्यायेन व्याहृ-
तिभिरिति बहुवचननिर्देशात् चतुर्णां कर्म्मणां क्रमेणैव
करणम् । १४ प्रयोगमध्ये यागान्तरेण निष्पन्नस्यापि
नियमा भवन्त्येवेत्यस्य व्यतिरेकमुखेन व्यवस्थापनम् । १५
संस्थाजपः तस्य च सोमेष्टिषु निषेधः ।१६होतुरेव वेदस-
मेतावत्त्वम् अग्नीध्रस्याप्यदपीत्युक्तिः ।१६सू०१अ०११क०।
१ ब्रह्माधिकारे विषयः । २ व्याख्यातानां होत्राचमन-
यज्ञोपवीतशौचानां ब्रह्माधिकारेऽतिदेशनम् ।३तत्र कर्म्मसु
कश्चिद्गच्छति कश्चित्तिष्ठति तत्र भूयसामेव धर्म्म आचरणं
ब्रह्मणः इति व्यवस्थापनम् ।४वर्हिर्वेदि ऋत्विजामभिमुखा-
यादिशः प्राचीत्युक्तिः ।५एकस्मिन्नपि प्रयोगे कश्चिदासनस्य
कश्चित् स्थानस्य च लाभोक्तिः । ६ तिष्ठतां होमेषु वष-
ट्कारेषु च स्थानासनयोर्विकल्पः ।७अनन्तरश्लोकद्वयविष-
यादन्यत्रासनकथनम् । ८ समस्तपाण्यङ्गुष्ठस्यापेनाहवनीयं
परीत्य तस्य दक्षिणतः कुशेषूपवेशनम् । ९ उक्तोपवेशना-
नन्तरं मन्त्रभेदजपः । उक्तजपस्य ब्रह्मजपत्वम् । ११अध्व-
र्य्युकर्त्तृकम् उपविशातिसर्ज्जनम् । १२ ओं प्रणयेत्येता-
दृशातिसर्ज्जनरूपानुज्ञाप्रकारः । १३ कर्म्मानुरूपाणाम्
आदेशानां कर्त्तव्यतोक्तिः । १४ उत्तरविवक्षार्थम् उच्चैः
प्रणवादिकथनम् । १५ प्रणवादूर्द्ध्वं वा उच्चैर्भावोक्तिः ।
१६ प्रणीताप्रणयनकालादूर्द्ध्वं हविष्कृन्मन्त्रोच्चारणपर्य्यन्तं
वाग्यमनपूर्व्वं समासनम् । १७ पशुयागे चात्वालमार्ज्जन-
पर्य्यन्तं वाक्संयमः । १८ सर्व्वसोमेषु सर्व्वाभिप्रचा-
रम्भपूर्व्वकं सुब्रह्मण्यापर्य्यन्तं वाङ्नियमः । १९ प्रात-
रनुवाककालात् परम् अन्तर्यामग्रहयागपर्य्यन्तं वाग्य-
मनोक्तिः । २०सवनत्रयेऽपि पुरोडाशप्रचारादि, तदिडा-
पर्य्यन्तं वाग्यमनोक्तिश्च । २१होत्रादौ स्रुचमित्यादि-
यज्ञयाज्यावषट्कारपर्य्यन्तं वाग्यमनोक्तिः । २२ पव-
मानस्तोत्रेषु उपाकरणादि समाप्तिपर्य्यन्तं वाग्यमनोक्तिः
२३ सर्व्वत्र मन्त्रवति कर्म्मणि वाग्यमनोक्तिः ।
२४ उक्तादन्यत्रादि विषये होतृत्वस्य वाग्यमनभावः ।
२५ वाग्यमनभ्रंशे प्रायश्चित्तविधानम् । २६ अग्नीषो-
मीयप्रणयनावधिवाग्यमनम् । २७ दक्षिणतो व्रजत
एतासुः पिबान इति सूक्तजपः । २८गमनादरिष्टस्याप्रावपि
उपवेशनादिकरणं, ब्रह्मजपविधानञ्च । २९ सोमयागे
अग्निप्रणयनान्ते ब्रह्मजपनिषेधः । ३० विसृष्टवाक्यस्यापि
यज्ञमनस्त्वोक्तिः । ३१ विपर्य्यासान्तरितयोः प्रायश्चित्त-
विशेषोक्तिः । ३२ वेदभेदेन भेदेऽग्निभेदे प्रायश्चित्तभेदः ।
३३ सर्व्वेभ्यो वेदेभ्यो युगपद्भ्रंशपाते समस्ताभि-
र्व्याहृतिरेकाहुतिरूपप्रायश्चित्तम् । ३४ सुगन्दापनात्
प्रागङ्गारस्य बहिःपरिधि पाते कर्म्मभेदः । ३५ तत्र
दिग्भेदेन निर्गतौ होमभेदः कर्म्माणि स्वाहाकारान्तत्व-
भावः । ३६ अध्वर्य्युप्रहरणोक्तिः ३७ । सहस्रशृङ्ग
इत्यादिना प्रकृताङ्गारहोमोक्तिः । ३७ सू० १अ०
१२ क० । १प्राशित्रहरणविधानपूर्व्वकं तत्प्राशनम् ।
२ इडाभक्षणमार्ज्जनपूर्व्वकं चतुर्धाकरणे कृते प्राशित्र-
हरणे ब्रह्मण आनीतब्रह्मभागस्य निधानम् । ३ प्राशित्र
हरणदेशस्य पश्चात् कुशेषु यजमानभागनिधानम् ।
४ प्रजापतेरित्यादि मन्त्रेणान्वाहार्य्यावेक्षणम् । ५अन्वे-
नाह्नेनान्वाहार्य्यविशाखविधानं ब्रह्मभागे शिष्टभागविधा-
नञ्च । ६ मस्मासाम इति अध्वर्य्युमन्त्रपाठानन्तरं प्रति-
ष्ठेत्येवानुज्ञोक्तिः । ७ समिदनुयाजं, अग्रन्थीभवतः
सर्व्वप्रायश्चित्तहोमः, आग्नीध्रस्य ब्रह्मान्वारम्भणं च ।
८ इतरेषां होत्रारम्भणविधिः । ९ उक्तयोरेतयोर्होम
एव कार्य्ये अन्वारम्भस्य परस्परभावः । १० सर्व्वेषां होम-
कर्त्तॄणामन्वारम्भकर्त्तॄणां च संस्थाजपेन उपासनविधा-
नम् । १०सू० १ अध्याये १३ क० ।

१ पौर्णमासेनेष्टिपशुसोमानामुपदिष्टत्वम् । २ उप-
दिष्टैरिष्टिपशुसोमैरमावास्यायां पौर्णमास्यां वा यागस्य
कर्त्तव्यत्वोक्तिः । ३ क्षत्रियवैश्ययोः पर्व्वणोरेवाग्नि-
होत्रहोमकर्त्तव्यताविधानम् । ४ राजन्यवैश्ययोः
पर्व्वेतरेषु कालेषु तपस्विब्राह्मणायौदनदानम् । ५कृत-
सत्यस्वभावस्य सोमयाजिनश्च क्षत्रियस्य वैश्यस्य वा सदा
होमविधानं न केवलं पर्व्वणोरित्युक्तिः । ६बहूनां
यजमानानां पृथग्विधाने सति क्रमेण सर्व्वस्योक्तिः ।
७ एकस्या एकस्या देवताया द्वे द्वे ऋचौ याज्यानु-
वाक्ये । ८ देवताविशेषस्य तल्लिङ्गयाज्यानुवाक्याभावेऽपि
नित्ययोस्तयोर्होतव्यत्वोक्तिः । ९ कर्म्माङ्गभूता-
नामन्वाधेयप्रभृतीनां मध्ये गार्हपत्याद्यन्यतमस्यर्त्तमङ्गार-

३ अग्निकार्य्यसमापनम् । ४कर्त्तुरदकाबाधः । ५ पितृक्रिया । ६ नवश्राद्धानि । ७ सञ्चयनम् । ८ दशाहकृत्यम् ९ एकोद्दिष्टम् । १० एकोद्दिष्टविधिः । ११ सपिण्डीकरणम् । १२आमश्राद्धम् । १३ अतीतसंस्कारः । १४पाषाणविधिः । १५ नारायणबलिः । १६ नागबलिः । १७ पुराणमेकोद्दिष्टम् । १८वृषोत्सर्गः । २अ० पदार्थाः ।
४अध्याये १पूर्त्तकर्म्मादीनि अग्निकार्य्यान्तानि कर्म्माणि । १पूर्त्तानि । २ मण्डपादिविधिः । ३प्रतिमाद्रव्याणि । ४ प्रासादप्रतिमादि । ५तदनुष्ठानादि । ६अग्निस्थापनादि । ७देवाभिषेकादि । ८शान्तिप्रतिष्ठादि । ९ शय्यादिविधिः १०आरामादिविधिः । ११ होमविशेषः । १२प्राचीं दिशमन्वावर्त्तते । १३ दक्षिणां दिशमन्वावर्त्तते । १४ प्रतीचीं दिशमन्वावर्त्तते । १५ उदीचीं दिशमन्वावर्त्तते १६ पृथिवीमन्वावर्त्तते । १७ अन्तरिक्षमन्वावर्त्तते १८ दिवसमन्वावर्त्तते । १९ रात्रिमन्वावर्त्तते । २० परमन्वावर्त्तते । २१ सर्व्वा दिशोऽन्वावर्त्तते । २२ अग्निकार्य्यफलम् । ४अ० गताः एते पदार्थाः ।

**आश्वायन** पुंस्त्री अश्व+गोत्रे अश्वा० फञ् । अश्वर्षेर्गोत्रापत्ये स्त्रियां ङीप् । [अश्वावतानर्षेरपत्ये स्त्रियां ङीप् ।

**आश्वावतान** पुंस्त्री० अश्वावताननामर्षेरपत्यम् विदा० अञ् ।

**आश्वास** पु० आ+श्वस--घञ् ।१निर्वृतौ २आश्रयदाने ३भीतस्य भयनिवारणार्थे व्यापारे ४सान्त्वने च "धारणमाश्वाससजननं श्वसनश्च" सुश्रु० । [ २सान्त्वनासम्पादके ।

**आश्वासक** त्रि० आ+श्वस-णिच्-ण्वुल् । १आश्वासकारके

**आश्वासन** न० आ-श्वस-णिच्-ल्युट् । १सान्त्वने ।"आश्वासनस्य कष्टेन दुःखार्त्तायाः प्रकीर्त्तितम्" भा०आ० १अ० कर्त्तरि ल्यु । २आश्वासकारके "तदिदं द्वितीयं हृदयाश्वासनम्" शकु० । [ तत्सावदर्शनाश्वासि" शकु० ।

**आश्वासिन्** त्रि० आ+श्वस-णिनि । प्रत्याशायुक्ते । "मनस्तु

**आश्वास्य** त्रि० आ+श्वस-णिच्-यत् । १सान्त्वनीये । ल्यप् । २सान्त्वयित्वेत्यर्थे अव्य० ।

**आश्विक** त्रि० अश्वान् भारभूतान् हरति वहति आवहति वा ठञ् । भारभूतस्याश्वस्य १हारके २वाहके ३आवाहके च । अश्वस्य निमित्तं संयोग उत्पातो वा ठञ् । अश्वलाभहेतुके ४संयोगे ५उत्पाते ६निमित्ते च ।

**आश्विन** पु० आश्विनी पूर्णिमा यस्मिन् मासे अण् । स्वनामख्याते चान्द्रे मासभेदे "अहमप्याश्विने तद्वत् सायाह्ने बोधकारकम्" दुर्गाबोधनमन्त्रः । १अश्विनादुपधान आधानमिष्टकानाम् अण् मतोर्लुक् । २इष्टकाभेदे स्त्री ङीप् । "ये वैता आश्विनीरुपदधाति" शत० ब्रा० ८,२,१,११। आश्विनौ देवते अस्य अण् ।३चितिभेदे च "प्रत आश्विनीः पवमान" ऋ० ९,८६,४, पञ्चाश्विन्योऽत्र कर्त्तव्ये पञ्च वैश्वदेव्यः पञ्च प्राणभृतः पञ्चापस्या एकया न विंशतिर्व्वयस्यास्ता एकचत्वारिंशदुद्वितीया चितिः" शत० ब्रा० । ४यज्ञियकपालभेदे पु० "सौम्येन सहाश्विनो द्विकपालः सर्व्वत्र" कात्या० १२,६,२, "मैत्रावरुणश्च म आश्विनश्च मे इति" यजु० १८,१९, अश्विन्यां भवः अण् ।५अश्विनीकुमारयोः हि० च० । अश्विनौ देवते अस्य अण् । अश्विनीकुमारदेवताके ६ यज्ञे ७यज्ञे च । आश्वलायनसूत्रे उदा० ।

**आश्विनी** स्त्री अश्विना अश्वाकारवता नक्षत्रेण युक्ता पूर्णिमा नक्षत्राण् ।१आश्विनपौर्णमास्याम् २आश्विनयज्ञोक्तार्थे च ।

**आश्विनेय** पु० द्विव० अश्विन्याः घोटकाकारवत्याः संज्ञायाः अपत्यं ढक् । १अश्विनीकुमारयोः तयोः तस्या उत्पत्तिकथा अश्वाननशब्दे २२९पृष्ठे दृश्या । तस्यापत्यं विदा० अञ् ।२नकुले ३सहदेवे च पु० तयोर्माद्र्यामश्विनीकुमाराभ्यामुत्पादितत्वात् तथात्वम् । "जिगाय समरे वीरानाश्विनेयः प्रतापवान्" भा० स० प० २अ० । अश्वस्यैकाहगमः पन्थाः ढक् । ३अश्वस्यैकाहगम्ये अध्वनि ।

**आश्वीन** पु० अश्वस्यैकाहगमः पन्थाः वा खञ् । अश्वस्यैकाहगम्ये देशे "सहस्राश्वीने वा इतः स्वर्गो लोकः" ऐत० ब्रा० । "चतुश्चत्वारिंशदाश्वीनानि" श्रुतिः ।

**आश्वेय** त्रि० अश्वा देवता अस्य ढक् । १ तद्देवताके हविरादौ अश्वाया अपत्यम् शुभ्रा० ढक् । २अश्वाभवे ।

**आषाढ** पु० आषाढी पूर्णिमाऽस्मिन् मासेऽण् । स्वनामख्याते चान्द्रे १मासभेदे "आषाढस्य प्रथमदिवसे" मेघदू० "शेते विष्णुः सदाषाढे कार्त्तिके प्रतिबुध्यते" इति पुरा० । आषाढी पूर्णिमा प्रयोजनमस्य अण् । व्रतिनां धार्य्ये पालाशे २दण्डे "उपहितापाढम्" काद० "तत्पुत्रेण च ग्रहीतव्रतेनाषाढिना" काद० । "अथाजिनाषाढधरः प्रगल्भवाक्" कुमा० । ३मलयपर्व्वते पु० मेदि० पृ० ढस्य षः । आषाढोऽप्युक्तार्थेषु । स्वार्थे कन् आषाढकोऽप्युक्तार्थेषु ।

**आषाढा** स्त्री आ+सह-क्त "अवषाषाढेति" पा० निर्द्देशात् नि० षत्वमोत्त्वाभावश्च । राशिचक्रस्थे १विंशतितमे २एकविंशे च नक्षत्रे "मूलं पूर्व्वाषाढा प्रथमश्चाप्युत्तराशकोऽन्यो । मकरस्तत्परिशेषं श्रवणा चार्द्धं धनिष्ठायाः" ज्यो० त० । सा च पूर्व्वा उत्तरा च । तत्र पूर्व्वस्याः प्रथमपादस्य

लोहितं भवति कृत्यासक्तिर्व्यज्यते" ऋ०१०,८५,२८ ।

**आसङ्ग** पु० आ+सन्ज–घञ् । १अभिनिवेशे, प्राप्तस्योपस्थितस्य वा नष्टतो वस्तुनः २रक्षणाभिलाषे, ३भोगाभिलाषे, ४कर्त्तृत्वाभिमाने ५विषयान्तरपरिहारेण चेतस एकत्राभिनिवेशे च । "नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ सङ्कल्पः" धा०द० । "तेऽसुररक्षसेभ्य आसङ्गाद्विभयाञ्चक्रुः" शत०ब्रा०१,१,२,१ "तयोर्हैव आसङ्गो न विन्दति" शत०ब्रा०५,२,२,५, "त्यक्त्वा कर्म्मफलासङ्गम्" गीता । ६सम्यक् सम्बन्धे "सर्वैवासङ्गमपि प्रयाते" कुमा० । आसज्यते कर्म्मणि घञ् । ७आसञ्जनीये उत्तरासङ्गः "त्वगुत्तरासङ्गवतीं निवीतिनीम्" कुमा० । ८सौराष्ट्रमृत्तिकायां राजनि० ९अनवरते न०१० तद्वति त्रि० शब्दा० । सौराष्ट्रमृत्तिकाया गात्रे आसञ्जनीयत्वात्तथात्वम् । अनवरतस्य च सततसम्बन्धात् आसङ्गत्वम् ।

**आसाङ्गत्य** न० न सङ्गतः तस्य भावः ष्यञ् चतुरादिषु पर्युदासात् नोत्तरपदवृद्धिः । सङ्गत्याभावे असम्बन्धे ।

**आसङ्गिनी** स्त्री आसङ्गः सातत्यमस्त्यस्य इनि ङीप् । १वात्यायां त्रिकाण्ड० । २आसङ्गयुक्ते त्रि० स्त्रियां ङीप् ।

**आसङ्गिम** पु० आसङ्गे भवः डिमच् । सुश्रुतोक्ते वर्त्मनेत्राङ्गवर्त्मसम्बन्धागतिभेदे । "तत्र समासेन पञ्चदश वर्त्मवर्त्मना गतयो भवन्ति यत्र च सम्यूक्त आसङ्गिम" इत्यादिना विभज्य "अभ्यन्तरदोषैरपाचिरासङ्गिमः" इति सुश्रुते वर्णितः ।

**आसञ्जन** न० आ+सन्ज–ल्युट् । १आसङ्गे २सम्यक्सम्बन्धे "व्रतनियमासञ्जनात्" मनु० । णिच्–ल्युट् । ३योजने

**आसञ्जित** त्रि० आ+सन्ज–णिच्–क्त । संयोजिते

**आसत्ति** स्त्री आ+सद–क्तिन् । १नैकट्यसम्बन्धे २प्राप्तौ आयत्ते ३प्रत्यक्षजनकसन्निकर्षे "आसत्तिराश्रयाणां तु सामान्यज्ञानमिष्यते" भाषा० । ४शाब्दबोधोपयोगिन्यामव्यवधानेन पदजन्यपदार्थोपस्थितौ । "आसत्तियोग्यताकाङ्क्षातात्पर्यज्ञानमिष्यते । कारणं सन्निधानन्तु पदस्यासत्तिरुच्यते, भाषा० "यत्पदार्थस्य यत्पदार्थेनान्वयोऽपेक्षितस्तयोरव्यवधानेनोपस्थितिः कारणम् । तेन गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यादौ न शाब्दबोधः । नीलो घटो द्रव्यं पट इत्यादावासत्तिभ्रमाच्छाब्दबोधः । आसत्तिभ्रमाच्छाब्दभ्रमाभावेऽपि न क्षतिः । ननु यत्र सती कुण्डली वासस्वी देवदत्त इत्युक्तं तत्रोत्तरपदस्मरणकाले पूर्वपदस्मरणस्य नाशात् अव्यवधानेन उत्तरपदस्मरणासम्भव इति चेन्न प्रत्येकपदसंस्कारे चरमतावद्विषयकस्मरणस्याव्यवधानेनोत्पत्तेः नानाविषयकैरेकप्रत्ययस्येव नानासंस्कारैरेकस्मरणोत्पत्तेरपि सम्भवात् । तावत्पदसंस्कारसहितचरमवर्णज्ञानस्योद्बोधकत्वात् । कथमन्यथा नानावर्णकपदस्मरणम् । परन्तु तावत्पदार्थानां स्मरणादेकदैव खलेकपोतन्यायात् तावत्पदार्थानां क्रियाकर्म्मभावेनान्वयबोधरूपः शाब्दबोधो भवतीति केचित्" मुक्ता० ।

शाब्दबोधहेतोः आसत्तेश्च शब्दचिन्तामणौ निरूपिता यथा । "आसत्तिश्चाव्यवधानेनान्वयप्रतियोग्युपस्थितिः सा च स्मृतिर्नानुभवोऽतीतान्योन्याभावः अथ नानाविशेषणकर्म्मकर्त्तृकरणाधिकरणक्रियादिपदज्ञानजन्यक्रमिकपदार्थस्मृतीनां न यौगपद्यं सम्भवति आशुतरविनाशिनां क्रमिकाणां मेलकानुपपत्तेरिति कथन्तावत्पदार्थान्वयबोधः विशेषणज्ञानसाध्यत्वाद्विशिष्टज्ञानस्येति चेत् चरमपदवर्णानुभवजन्यसंस्कारमेलकादेव तावत्पदस्मृतिः तत एकदैव तावत्पदार्थस्मृतौ सत्यां वाक्यार्थानुभवः न चान्यविषयसंस्कारेणान्यस्य न स्मरणमिति वाच्यं वाक्यार्थानुभवानुपपत्त्या फलबलेन संस्काराणां परस्परसहकारेण तत्तत्स्मरणकल्पनात् प्रत्येकवर्णसंस्काराणामिवानन्यगतिकतया सहकारत्वे । अत "यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते । तेन तेनान्वितः स्वार्थः पदैरेवावगम्यते" अथैवमन्वयान्तराभिधानं न स्यात् विरम्य व्यापाराभावादिति वाच्यं एवमपि प्रथमान्वये चेत्यनुपपन्नत्वात् उत्तरस्य चेदं सामग्रीवैकल्यं न पूर्वस्येति चेत् अस्तु तावदेवं तथापि चरमतावत्पदार्थघटितवाक्यार्थानुभवे तस्यैव गतिरनन्यगतिकत्वात् । अत्र वदन्ति । सन्निधानं पदजन्यस्वान्वयबोधहेतुः द्वारमित्यादावध्याहृतेनापि पिधानादिनान्वयबोधदर्शनात् न च द्वारं पिधेहीतिशब्द एवाध्याह्रियते अनुपयोगात् अर्थस्यैवान्वयप्रतियोगित्वाच्छब्दकत्वाच्च अर्थापत्तेरुपपादकविषयकत्वात् न च शब्दमात्रमुपपादकमपि तु तदर्थः । अपरञ्च वस्त्रार्थपाचनार्थे च देवदत्तसम्बन्धस्य शब्दस्मृतेरन्यथासिद्धेः अन्यथा पदबोधितस्यैवार्थस्यान्वयबोधकत्वमिति नियमकल्पनापत्तिः स्वार्थान्वयपरत्वाच्छब्दानां द्वारमिति न पिधानान्वयबोधकमिति तदन्वयबोधार्थमवश्यं शब्दकल्पनमिति चेत् कल्पनायां व्यभिचारात् तत्राक्षेपाविशेषेण कर्त्रन्वयबोधाच्च अथ द्वारपदस्वभावमात्रं पिधेहि शब्दस्य स्मरते ज्ञापकात् न च पिधानाभिप्रायकालेन शब्दोपस्थितौ विनिगमकाविरहः संस्कारतारतम्यात्-

पस्थितेरव्यवधानेन तत्पदार्थोपस्थितिस्तत्पदद्वयजन्यतत्पदार्थयोरन्वयबोधे आसत्तिरिति विवक्षितत्वात् । एवञ्च यत्र पदोपस्थितिरव्यवधानेन, पदार्थोपस्थितिश्च व्यवधानेन, यत्र वा पदार्थोपस्थितिरव्यवधानेन, पदोपस्थितिश्च व्यवधानेन, तत्रोभयत्रापि नासत्तिः किन्त्वेकपदोपस्थितिजन्यपदार्थोपस्थितिरपरपदोपस्थितिश्च समूहालम्बनरूपा ततोऽपरपदार्थोपस्थितिः पदान्तरोपस्थितिश्च समूहालम्बनरूपेत्यादिक्रमेण पदार्थोपस्थितिस्तत्रैवासत्तिः पदोपस्थितेरव्यवधानमपि पूर्वोत्तरक्षणसाधारणं प्रकृतान्वयबोधानुगुणक्षणघटितं बोध्यम् नन्वासत्तिभ्रमादन्वयबोध इति सर्वैर्गीयते स कुत्रेति वाच्यं यत्र व्यवहितपदोपस्थितावव्यवहितत्वधीर्व्यवहितायां पदार्थोपस्थितौ अव्यवहितत्वधीर्वा तत्र तत्सम्भवात् । अथैवमासत्तिज्ञानस्य शाब्दबोधहेतुत्वे स्वरूपसत्याः पदजन्यपदार्थोपस्थितेः पृथक्कारणत्वे किं मानं, न च विशेषणज्ञानसाध्यं विशिष्टज्ञानमिति विशेषणज्ञानत्वेन कारणमिति वाच्यम् आसत्तिज्ञानस्यैव पदार्थविषयकत्वेन विशेषणज्ञानत्वादिति चेन्न तद्विरहेणापि शाब्दधीविरहात् तस्यापि पृथक्कारणत्वात् न च तद्व्यतिरेकस्थले आसत्तिविरहादेव शाब्दधीविरह इति वाच्यं नह्यासत्तिः स्वरूपसती हेतुः किन्तु तज्ज्ञानमेव तद्व्यतिरेकस्थलेऽपि सम्भवादिति निर्णयकृतस्तदसत् एकतदुपस्थाप्यतिवर्तमानत्वयोरन्वयबोधस्थलेऽव्याप्तेर्वैमातुरमित्यादिना एकदैव पदजातमनुमितं स्मृतं वा तत्र समूहालम्बनपदार्थस्मरणं जातं तत्राव्याप्तेश्च तत्र प्रत्येकपदार्थोपस्थितेरभावात् न च तत्रापि क्रमिकप्रत्येकपदार्थोपस्थितिः कल्पनीयेति वाच्यम् अनुभवविरोधात् प्रत्येकपदार्थोपस्थित्यन्तरेणापि तत्र शाब्दबोधस्यानुभविकत्वात् किञ्च तस्याः स्वरूपसत्त्वं स्वयमेव निराकृतं क्रमिकप्रत्येकपदार्थोपस्थितेः शाब्दबोधात् पूर्वं विनष्टत्वात् नाप्येतज्ज्ञानं कारणं मानाभावात् तद्ध्युपस्थितिज्ञानविरहात् शाब्दबोधविरहस्याननुभविकः न च दैवाद्दृष्टादिना पदार्थोपस्थितौ पदजन्यत्वभ्रमेण शाब्दबोधानुदयात् तज्ज्ञानस्यापि हेतुत्वमिति वाच्यं तथा पदजन्यपदार्थोपस्थितेः स्वरूपतो हेतुत्वानङ्गीकारे शाब्दबोधाभावात् अव्यवधानांशवैयर्थ्याच्च न चैतद्भ्रमानन्तरं शाब्दानुभवदर्शनादेतज्ज्ञानं हेतुरिति वाच्यं यद्धि यत्सत्त्वे यदुत्पद्यते तदेव तत्कारणं, घटाव्यवहितपूर्ववर्तिसावत्पदार्थानामेव घटहेतुत्वापत्तेः

न च पदजन्यपदार्थोपस्थितौ अव्यवहितत्वाव्यवहितपदजन्यत्वयोः संशये व्यवहितत्वव्यवहितपदजन्यत्वनिश्चये च शाब्दबोधानुत्पत्तेस्तन्निश्चययोर्हेतुः तयोः प्रतिबन्धकत्वकल्पने गौरवादिति वाच्यं तात्पर्यज्ञानसत्त्वे व्यवहितत्वव्यवहितपदजन्यत्वग्रहेऽपि शाब्दबोधदर्शनादनुत्पत्तेरेवासिद्धेः नचैवं व्यवहितपदकदम्बात्मकश्लोकादौ योजनायामकारितायामेवान्वयबोधोऽन्यथा तत्र किं बीजमिति वाच्यं योजनाया तात्पर्यग्राहकत्वात् । अतएव यस्य योजनां विनैव तात्पर्यग्रहस्तस्य न योजनापेक्षा । एतेन अन्वयप्रतियोगिपदं तदुपस्थापकपरं तथा च तदुपस्थापकपदोपस्थित्यव्यवधानेन तदुपस्थापकपदोपस्थितिरासत्तिः न तु पदार्थोपस्थितीनामव्यवधानमपेक्षितमिति केषाञ्चिन्मतमप्यपास्तं वक्ष्यमाणान्योन्याश्रयग्रासेऽस्थितेः समूहालम्बनोपस्थितिमादाय सर्वत्रासत्तेः सत्त्वेन आसत्त्यनासत्तिविभागव्याघातापत्तेः । न च भेदगर्भमव्यवधानं विवक्षणीयं पूर्वोक्तदोषाभावादपि इतेः । एतज्ज्ञानस्य कारणत्वे उक्तरूपेण मानाभावाच्च । केचित्तु अव्यवधानेनेति विशेषणे तृतीया अन्वयप्रतियोगिपदस्य अन्वयप्रतियोगिन उपस्थितिर्यस्मात् इति व्युत्पत्त्या अन्वयप्रतियोग्युपस्थापकपरं तथा च तत्पदार्थान्विततत्पदार्थशाब्दबुद्धौ तत्पदे तत्पदाव्यवधानमासत्तिः नतूपस्थितीनामव्यवधानं विवक्षितं गौतिश्लोकादौ विभक्तिरूपदोषविशेषात् अव्यवधानभ्रमेणान्वयबोधः । न चैवं श्लोकादौ योजनायामन्वयबोधो न स्यात् यत्नेनेदं व्यवधानेनोच्चारितमिति विशेषदर्शनेन भ्रमासम्भवात् इति वाच्यं योजनयोपस्थितवाक्यान्तरादेव तत्रान्वयबोधात् न तु श्लोकादितः । अव्यवधानज्ञानानुगुणक्षणभेदाभेदसाधारणं सपरसाधारणञ्च वाच्यं तेनैकपदाद्युपस्थितयोः तिवर्तमानत्वयोरन्वयबोधेऽपि नाव्याप्त्यनुपपत्तिरित्याहुः तदप्यसत् वक्ष्यमाणान्योन्याश्रयग्रस्तत्वात् पद्यादिज्ञानसत्त्वे अव्यवधानज्ञानाभावेऽपि शाब्दबुद्धेरानुभविकत्वाच्च नव्यास्तु उक्ता पदधीजन्यपदार्थोपस्थितिरासत्तिरियञ्च स्वरूपसत्येव हेतुः अतएव [illegible] आसत्तिस्तु यद्यपि स्वरूपसत्येव प्रयोजिका इत्यादिप्रभाकरोपाध्यायेनोक्तं न च एतज्ज्ञानमपि कारणत्वेऽनाभाव इति वाच्यं तथासति आनयेति वाक्यमाकर्णयतः प्रत्यक्षेण घटं पश्यतोऽपि घटस्य शाब्दबोधापत्तेः घटमानयेति वाक्यमाकर्णयतः कारणतया घटपदकारणा

दिमध्यम्” कुमा० “शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः” गीता “स्थापयेदासने तस्मिन् खिन्नः कार्य्यवशे नृणाम्” मनुः । “स वासवेनासनसन्निकृष्टम्” “प्राञ्जलिर्जवजासनम्” कुमा० । ५ देवतापूजाङ्गे उपचारभेदे तन्त्रे दादि कालि० पु०। “आसनं प्रथमं दद्यात् पौष्पं दारुजमेव वा । वास्त्रं वा चार्म्मणं कौषं मण्डलस्योत्तरे सृजेत् । पौष्पासनं वहि-र्हितं यस्य तद्वयदि गर्भकम् । निवेदयेत्तदा मध्ये त्रिपुवं हारि चोत्सृजेत् । पौष्पं पुष्पौघरचितं कुशस्थलादिसंयुतम् । अतिप्रीतिकरं देव्या समाप्यन्यस्य भैरव ! । यज्ञदारुसमुद्भूतमासनं सकलं शुभम् । नोच्छ्रायं नातिविस्तीर्णमासनं विनियोजयेत् । अन्यदारुभवञ्चापि दद्यादासनमुत्तमम् । सकण्टकं चीरयुक्तं दारु सारविवर्जितम् । चैत्यश्मशानसंभूतं वर्जयित्वा विभीतकम् । वास्त्रवं कोषजं कार्पासं वस्त्रमेतत्त्रयं मतम् । रोमजं कम्बलञ्चैव तदनेन चतुष्टयम् । अनेन रचितं दद्यादासनं चेष्टभूतये । सिंहव्याघ्रतरक्षूणां छागस्य महिषस्य च । गजानां तुरगाणाञ्च कृष्णसारस्य चर्म्मणा । चमरस्याथ रामस्य मृगाणां नवभेदिनाम् । चर्मभिः सर्व्वदेवानामासनं प्रीतिदं स्मृतम् । वास्त्रेण कम्बलमासनं देवतुष्टये । राङ्कवं चार्म्मणं श्रेष्ठं दारवं चन्दनोद्भवम् । यज्ञासनं कुशमयं तदासनमनुत्तमम् । सर्वेषामपि देवानां पौष्णाञ्च महात्मनाम् । योगपीठस्य सदृशमासनं स्थानमुच्यते । आसनस्य प्रदानेन सौभाग्यं भुक्तिमाप्नुयात् । चमरो रोहितो न्यङ्कुः शंबरो बभ्रुणो रुरुः । गोकर्णहरिणावेति मृगा नवविधा मताः । हरिणस्यापि विशेषः पञ्चभेदोऽत्र भैरव ! । कृष्णः खड्गो रुरुश्चैव पृषतश्च मृगस्तथा । एते बलिप्रदानेषु चर्म्मदाने च कीर्त्तिताः । सर्व्वेषां तैजसानाञ्च आसनं श्रेष्ठमुच्यते । आयसं वर्ज्जयित्वा तु कांस्यं सीसकमेव च । शिलामयं मणिमयं तथा रत्नमयं मतम् । आसनं देवताभ्यस्तु भक्त्या शक्त्या समुत्सृजेत् । अतएव साधकानाञ्च आसनं शृणु भैरव ! । यथासनेन पूजकस्तु सर्व्वसिद्धिमवाप्नुयात् । रैवञ्च चार्म्मणं वास्त्रं तैजसञ्च चतुष्टयम् । आसनं साधकानाञ्च सततं परिकीर्त्तितम् । पूर्व्वोक्तं यच्च देवेभ्य आसनं परिकीर्त्तितम् । तत् सर्व्वमासनं शस्तं पूजाकर्म्मणि साधके । न वस्त्रासनगो भूयात् पूजाकर्म्मणि साधकः । काष्ठादिकासनं कुर्य्यात् मितमेवं सदा बुधः । चतुर्विंशत्यङ्गुलेन दीर्घं काष्ठासनं मतम् । षोडशाङ्गुलविस्तीर्णमुत्सेधे चतुरङ्गुलम् । पञ्चाङ्गुलं वा कुर्य्यात्तु नोच्छ्रितं चाल कारयेत् । पूर्व्वोक्तं वर्ज्जयेद्वस्त्रमासनं पूजनेष्वपि । वास्त्रं द्विहस्तायो दीर्घं सार्द्धहस्तञ्च विस्तृतम् । तत्रस्थास्तु तयोच्छ्रायं पूजाकर्म्मणि संश्रयेत् । यथेष्टं चार्म्मणं कुर्य्यात् पूर्व्वोक्तं सिद्धिदायकम् । षडङ्गुलाधिकं कुर्य्यान्नोच्छ्रये तु कदाचन । काम्बलं चार्म्मणं चैवं महामायाप्रपूजने । प्रशस्तमासनं प्रोक्तं कामाख्यायास्तथैव च । त्रिपुरायाश्च सततं विष्णोश्चापि कुशासनम् । बहूच्छ्रायं न चैव स्यात् तथैव बहुविस्तृतम् । दारु भूमिसनं प्रोक्तमश्मापि सर्व्वकर्म्मणि । पृथक् पृथक् कल्पयेत्तु शोभनं ताडयासनम् । न पत्रमासनं कुर्य्यात् कदाचिदपि पूजने । न प्राण्यङ्गं न मृद्भूतमस्थिजं द्विरदाहते । मातङ्गदन्तसञ्जातमासनं कामिके चरेत् । चर्म्म पूर्व्वोदितं प्राह्यं तथा गव्यमृगस्य च । सलिले यदि कुर्व्वीत देवतानां प्रपूजनम् । तत्राप्यासनमासीनो नोत्थितस्तु समाचरेत् । तोये शिलामयं कुर्य्यादासनं कौषमेव वा । दारवं तैजसं वापि नान्यदासनमाचरेत् । आसनारोपसंस्थानस्थानाभावे तु पूजकः । आसनं कल्पयित्वा तु मनसा पूजयेज्जले । यद्यासनस्य संस्थानं तोयमध्ये न विद्यते । अन्यत्र वा तदा स्थित्वा देवपूजां समाचरेत् । इत्येतत् कथितं पुत्र ! पूज्यपूजकसङ्गतम्” । आस्यतेऽनेन करणे ल्युट् । ६ देहस्थैर्यसाधने करचरणादिबन्धभेदरूपे योगाङ्गभेदे “यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाधयोऽष्टावङ्गानि” विभज्य “स्थिरसुखमासनम्” पात०सू० लक्षितं तस्य वृत्तिः यथा “निश्चलं सुखावहं च यदासनं तद्योगाङ्गम् । आस्यतेऽनेनेत्यासनं तच्च द्विविधम् बाह्यं शारीरं च तत्र चैलाजिनकुशोत्तरं बाह्यं, शारीरं पद्मस्वस्तिकादि । तत्र पद्मासनं प्रसिद्धम् । सव्यमाकुञ्चितचरणम् दक्षिणजङ्घोर्वन्तरे, दक्षिणं च सव्यजङ्घोर्वन्तरे, निक्षिपेदिति स्वस्तिकासनम् । द्वे पादतले वृषणसमीपे संपुटीकृत्य संपुटोपरिपाणिकच्छपिकां कुर्य्यादिति भद्रासनम् । योगपट्टेन सोपाश्रयासनम् । जानुप्रसारितबाहोः शयनं पर्य्यङ्कासनं क्रौञ्चोष्ट्रगजादिनिषदनदर्शनात् क्रौञ्चाद्यासनं द्रष्टव्यम् । आसनस्यैर्योपायमाह । “प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम्” पात०सू० । “स्वाभाविकः प्रयत्नः शरीरधारकः न योगाङ्गस्योपदेष्टव्यासनस्य कारणं तस्मादुपदेष्टव्यासनस्यायमसाधकः विरोधी च स्वाभाविकादासनविघातकः तस्योपरमेणासनं सिध्यति अनन्ते नागनायके स्थिरतरफणासहस्रविधृतविश्वम्भरामण्डले चित्तस्य समापत्त्या देहाभिमानाभावेनासनदुःखासक्तेरासनं सिध्यति । तत्सिद्धिविक्रमाह । “ततो द्वन्द्वानभिघातः” पात०सू० । “आसन-

जयाच्छीतोष्णादिभिरनभिघातो बाधाभावो भवति" इति॥ एतच्च राजयोगाङ्गं हठयोगाङ्गानि पुनरन्येऽपि बन्धाः-कायी० उक्ताः यथा "महामुद्रां नभोमुद्रामुड्डीयानं जलन्धरम्। मूलबन्धन्तु यो वेत्ति स योगी योगसिद्धिभाक्। शोधनं नाड़िजालस्य चालनञ्चन्द्रसूर्य्ययोः। रसानां शोषणं सम्यङ् महामुद्राभिधीयते। योनिं वामाङ्घ्रिणापीड्य कृत्वा वक्षःस्थले हनुम्। हस्ताभ्यां प्रसृतं पादं धारयेद्दक्षिणाह्वयम्। प्राणान् कुम्भे समापूर्य्य चिरं सञ्चारयेच्छनैः। एषा प्रोक्ता महामुद्रा महारोगविनाशिनी। चन्द्राङ्गे तु समभ्यस्य सूर्य्याङ्गे पुनरभ्यसेत्। या तुल्या भवेत् संख्या ततो मुद्रां विसर्ज्जयेत्। न हि पथ्यमपथ्यं वा रसाः सर्व्वेऽपि नीरसाः। अपि घोरं विषं पीतं पीयूषमिव जीर्य्यति। क्षयकुष्ठगुदावर्त्तगुल्माजीर्णपुरोगमाः। तस्य दोषाः क्षयं यान्ति महामुद्रान्तु योऽभ्यसेत्। कपालकुहरे जिह्वा प्रविष्टा विपरीतगा। भ्रुवोरन्तर्गता दृष्टिर्मुद्रा भवति खेचरी। न पीड्यते स रोगेण न च लिप्येत कर्म्मणा। बाध्यते न स कालेन यो मुद्रां वेत्ति खेचरीम्। चित्तञ्चरति खे यस्माज्जिह्वा चरति खेगता। तेनैषा खेचरी नाम मुद्रा सिद्धैर्निषेविता। यावद्बिन्दुः स्थितो देहे तावन्मृत्युभयं कुतः। यावद्बद्धा नभोमुद्रा तावद्बिन्दुर्न गच्छति। उड्डीनं कुरुते यस्मादविश्रान्तं महाखगः। उड्डीयानं ततः प्रोक्तं तत्र बन्धोऽभिधीयते। जठरे पश्चिमं ताणं नाभेरूर्द्ध्वञ्च धारयेत्। उड्डीयानं ह्ययं बन्धो मृत्योरपि भयं जयेत्। बध्नाति हि शिराजालमधोगामि न भोजनम्। एष जलन्धरो बन्धः कण्ठे दुःखौघनाशनः। जलन्धरे कृते बन्धे कण्ठसङ्कोचलक्षणे। न पीयूषं पतत्यग्नौ न च वायुः प्रधावति। पार्ष्णिभागेन संपीड्य योनिमाकुञ्चयेद्गुदम्। अपानमूर्द्ध्वमाकृष्य मूलबन्धोऽभिधीयते। अपानप्राणयोरैक्यं क्षयं मूत्रपुरीषयोः। युवा भवति वृद्धोऽपि सततं मूलबन्धनात्"॥

रुद्रयामलेऽनेकविधान्यासनानि दर्शितानि यथा। "अथासनभेदञ्च शृणु सिद्धिकाङ्क्षिणाम्। यत्र तत्र पूजकानां सिद्धिरत्र महोत्सवे। अधोमुखासनं नाथ! सर्वेषां प्राणिनां सुखम्। ऊर्द्ध्वमार्गेण देवेश! धारयेत् मारुतं सुधीः। सर्व्वासनानां श्रेष्ठं हि ऊर्द्ध्वपादो हि यश्चरेत्। तदैव महतीं सिद्धिं ददाति वायवी कला। पद्मासनं तथा कुर्य्यात् प्राणवायुप्रसिद्धये। शुभासनं यदा ध्यायेत् पूरयित्वा पुनःपुनः। ऊरुमूले वामपादं पुनर्दक्षिणं पदम्। वामोरौ स्थापयित्वा च पद्मासनमिति स्मृतम्। सव्यापसव्ययोगेन आसनं परिकल्पयेत्। तदैकासनकाले तु द्वितीयासनमारभेत्। पृष्ठे पादद्वयं दीर्घं हस्ताङ्गुष्ठद्वयं सुधीः। कायसङ्कोचमाकृष्य कृत्वा भद्रासनं भवेत्। इति भद्रासनं बद्ध्वा वायुबद्धः पुनःपुनः। चिबुके स्थापयेद्यावद्धृदि तेजस भास्करे। स्वस्त्यासनं हि सर्व्वेषां प्राणिनां सिद्धिकारणम्। वायुं वशे तु कुर्य्याद्यः स योगी नात्र संशयः। भावसिद्धिकरं नाथ! सर्वेषां हृष्टिकारणम्। वामपादतले कुर्य्यात् पादं दक्षिणमेव तत्। सव्यापसव्ययोगेन आसनद्वयमेव च। सर्व्वत्रैवंप्रकारञ्च कृत्वा नातीव साधयेत्। स्वस्थान्यान्यासनानि हानि षट्संख्यकानि च। सव्यापसव्ययोगेन द्विगुणं प्रभवेदिह। चतुःषष्ठ्यासनानीह वदामि वायुशोधनात्। द्वात्रिंशद्युग्मविभेदेन कल्पयेत् वायुवश्ये। कार्म्मुकासनमाक्रम्य उदरे पूरयेत् सुखम्। तदा वायुर्वशं याति कायेन सूक्ष्मवायुना। बद्धपद्मासनं मन्त्री वेष्टयित्वा प्रधारयेत्। करेण दक्षिणेनैव वामपादाङ्गुलीतटम्। सव्यापसव्यद्विगुणं कार्म्मुकासनमेव च। कार्म्मुकद्वययोगेन शरवद्वायुना भवेत्। कुक्कुटासनमाबध्य नाड़ीनिर्म्मलहेतुतः। सत्कुलागममार्गेण कुर्य्यात् वायुनिवेशनम्। निजहस्तद्वयं भूमौ पातयित्वा जितेन्द्रियः। पद्मस्थं बद्धा करौ देव! कर्परद्वयमध्यतः। सव्यापसव्ययुगलं कुक्कुटं प्रप्रकाशितम्। बद्धं कृत्वा अधःशीर्षं यः करोति खगासनम्। खगासनप्रसादेन श्रमदोषो भवेद्द्रुतम्। पुनःपुनः श्रमादेव विषयभ्रमलोपकृत्। लोलासनं सदा कुर्य्यात् वायुलौल्यापघातनात्। स्थिरवायुप्रसादेन स्थिरचेता भवेद्द्रुतम्। पद्मासनं समाकृत्य पादयोः सन्धिगह्वरे। हस्तद्वयमधोदेशे नियोज्य कुक्कुटाकृति। निजहस्तद्वयं सम्यं निपात्य हस्तनिर्भरम्। तस्मात् शरीरमुत्थाप्य स्थिरपावनेऽनिलम्। स्थित्वैतदासने मन्त्री अधःशीर्षं करोति चेत्। उत्तमं त्वासनं ज्ञेयं योगिनामतिदुर्लभम्। एतद्योगमात्रेण शरीरं शीतलं भवेत्। पुनःपुनः शोधनेन चेतना कुण्डली भवेत्। सव्यापसव्ययोगेन यः करोति पुनःपुनः। पूरयित्वा मूलपद्मे सुषुम्णावायुं निकुम्भयेत्। तथा कुम्भकमेवं हि सुषुम्णावायौ वशद्विधौ। मूलादिब्रह्मरन्ध्रान्ते स्थापयेत् गगने परे। एतत् शुभासनं कृत्वा सुषुम्णारन्ध्रप्रवेशतः। कूपोरन्ध्रे यथा जलं पूरयेत् सूक्ष्मवायुना। एवं क्रमेण मन्त्रासनात् पूरकस्यापि

लक्षणम् । महासुखं समाप्नोति योगाष्टाङ्गनिषेवणात् । अथ वक्ष्ये महादेव ! पर्व्वतासनमुत्तमम् । यत् कृत्वा स्थिररूपः स्यात् षट्चक्रादिविलोड़नः । योन्यासनं सर्व्वयोगे योगिनामवलम्बनम् । तत्कालं सकलं तावत् खेचरोयावदेव हि । पादगोष्ठेन चाक्रम्य लिङ्गाग्रं योनियोजयेत् । अन्यं पादतरौ दत्त्वा तत्र योन्यासनं भुवि । एतन्मध्ये महादेव ! बद्धयोन्यासनं शृणु । यत् कृत्वा विचरेत् योगी पृथिव्यामीश्वरो यथा । कृत्वा योन्यासनं नाथ ! लिङ्गगुह्यादिबन्धनम् । मुखनासानेत्रकर्णं कनिष्ठाङ्गुलिभिस्तथा । ओष्ठाधरं कनिष्ठाभ्यामनामाभ्याञ्च नासिके । मध्यमाभ्यां नेत्रयुग्मं तर्जनीभ्यामथ श्रुती । एतत् सिद्धासनं नाम योगिनामतिदुर्लभम् । कृत्वा वायुस्तम्भनं च मूलमारभ्य स्तम्भयेत् । सव्यापसव्ययोगेन सिद्धो भवति साधकः । शनैः शनैः समारभ्य कुम्भयेच्च प्रपूरयेत् । अरुणोदयकालाच्च प्रचण्डेन भैरव ! । सव्यापसव्ययोगेन गृहीत्वा वाह्यगानिलम् । द्वितीयप्रहरे कुर्य्यात् वाह्यपूजां मनोरमाम् । एतदासनमाकृत्य सिद्धो भवति साधकः । अथान्यदासनं वक्ष्ये यत् कृत्वा चामरो भवेत् । सत्साधकः शुचिः श्रीमान् कुर्य्यान्नावाभिभावितः । भेकनामासनं योग्यं नाथ ! वक्ष्यामि तद्गुणम् । निधाय पादयुग्मं स्कन्धे वाहौ पदोपरि । ध्यायेदिष्टपदं श्रीमान् आसनस्थः सुखाय च । यदि सर्व्वाङ्गसुस्तोल्य गगने खेचरासनम् । महाभेकासनं प्रोक्तं सर्व्वसिद्धिप्रदायकम् । महाविद्या—महामन्त्रं प्राप्नोति जपतीह यः । एतत् प्रभेदं वक्ष्यामि यः करोति सदाऽमरः । एकं पादतरौ बद्धा स्कन्धेऽन्यपादरक्षणम् । एतत् प्रभासनं नाम सर्व्वसिद्धिप्रदायकम् । वायुं मूले समारोप्य प्रज्ञाकुम्भत्र प्रधारयेत् । केवलं पादमेकञ्च स्कन्धे चारोप्य यत्नतः । एकपादेन गगने तिष्ठेत् स दण्डवत् प्रभो ! । अपानासनमेतद्धि सर्व्वेषां पूरकाश्रयम् । कृत्वा सूक्ष्मशीर्षपद्मे समारोप्य च वायुभिः । तदा शिवो भवेन्मर्त्त्यो नात्र कार्य्या विचारणा । प्राणापानासने कृत्वा मन्त्री योगेश्वरो भुवि । समानासनमावक्ष्ये सिद्धिमन्त्रादिसाधनम् । एकं पादतरौ दत्त्वा गुह्येऽन्यं लिङ्गचक्रके । एतद्वीरासनं नाथ ! समानासनसंज्ञकम् । कृत्वाकृत्य जपेन्मन्त्रं धृत्वा वायुं चतुर्दले । कुण्डलीं भावयेन्मन्त्री कोटिविद्युल्लताकृतिम् । आत्मचन्द्रामृतरसैराप्लुतां योगिनीं सदा । वीरासनं तु वीराणां योगवायुप्रसाधनम् । योजानाति महावीरः स योगी भवति ध्रुवम् । अथ वक्ष्ये महाकाल ! समानासनसाधनम् । भेदक्रमेण यज्ज्ञात्वा वीराणामधिपोभवेत् । समानासनमाकृत्य बद्धाङ्गुष्ठं करेण च । एतेन साधुकारी स्यात् सर्व्वयोगादिसाधने । आसनं यो हि जानाति वायुना स्वरणं तथा । कालादीनां निर्णयन्तु स कदाचित् न नश्यति । कालेन लभ्यते सिद्धिः कालरूपो महोज्ज्वलः । साधकैर्योगिभिर्ध्येयः सिद्धवीरासनात्मना । अथ वक्ष्ये नीलकण्ठ ! ग्रन्थिभद्रासनं शुभम् । ज्ञात्वा रुद्रो भवेत् क्षिप्रं सूक्ष्मवायुनिषेवणात् । कृत्वा पद्मासनं मन्त्री जङ्घायाः कुहरे करौ । कर्परस्थलपर्य्यन्तं विभिद्य स्कन्धधारणम् । भित्त्वा पद्मासनं मन्त्री हस्ताद्धेन विघाटयन् । येन शीर्षं भवेत्तच्च सर्वाङ्गुलिभिराश्रितम् । ग्रन्थिभेदासनं कुर्य्यात् खेचरादिप्रदर्शनम् । कृत्वा सूक्ष्मवायुलयं परमात्मनि कारयेत् । अथान्यासनमाख्ये योगपूर्वकरक्षणात् । कृत्वा पद्मासनं पादाङ्गुष्ठं जङ्घां हि संस्थितम् । हस्तमेकन्तु जङ्घायां कार्म्मुकं कर्परोर्द्ध्वकम् । पद्मासने समाधाय अङ्गुष्ठं परिधारयेत् । कार्म्मुकासनमेतद्धि सव्यापसव्ययोगतः । पद्मासनं वेष्टयित्वा अङ्गुष्ठं च प्रधारयेत् । यः करोति सदा नाथ ! कार्म्मुकासनमुत्तमम् । रोगादिनाशं सम्पूर्णं जयं नीत्वा सुखी भवेत् । अथ वक्ष्येऽत्र संक्षेपात् सर्व्वाङ्गासनमुत्तमम् । यत् कृत्वा निपुणो योगी विद्याभिः पण्डितो भवेत् । अधो निधाय शीर्षञ्च ऊर्द्ध्वपादद्वयञ्चरेत् । पद्मासनं तु तत्रैव भूमौ कर्परयुग्मकम् । दण्डे दण्डे तु यः कुर्य्यात् चासमान्तिपरः सुधीः ! नित्यं सर्वासनं हित्वा न कुर्य्याद्वायुधारणम् । नासेन तस्य सिद्धिः स्यात् सर्व्वरोगविनाशनम्" । अन्यान्यप्यासनानि तन्त्रोक्तानि विस्तराद्दर्शितानि ।

निर्व्वाणतन्त्रे जन्तुसंख्यया चतुरशीतिलक्षसंख्यकान्यासनान्युक्तानि किन्तु तेषां लक्षणविशेषास्तत्र नोक्ताः तेषां मध्ये द्वयोरेव प्राधान्यमित्यपि तत्रैवोक्तम् । यथा "आसनानि कुलेशानि ! यावन्तोजीवजन्तवः । चतुरशीतिलक्षाणि चैकैकं समुदाहृतम् । आसनेभ्यः समस्तेभ्यः साम्प्रतं द्वयमुच्यते । एकं सिद्धासनं नाम द्वितीयं कमलासनम्" । एषां बहुविधानामासनानां मध्ये "सुखेनैव भवेद्यस्मिन्नासने ब्रह्मचिन्तनम् । आसनं तद्विजानीयादितरत् सुखनाशनम्" इत्यभियुक्तोक्तेः पातञ्जलोक्तस्य स्थिरसुखस्यैवासनस्य ब्रह्मचिन्तने प्राशस्त्यमवसेयम् । तन्त्रसारे योगाङ्गासनानि पञ्च लक्षणान्यु-

क्तानि यथा "पद्मासनं स्वस्तिकाख्यं भद्रं वज्रासनन्तथा । वीरासनमिति प्रोक्तं क्रमादासनपञ्चकम् । ऊर्वोरुपरि विन्यस्य सम्यक् पादतले उभे । अङ्गुष्ठौ च निबध्नीयाद्धस्ताभ्यां व्युत्क्रमात्ततः । पद्मासनमिदं प्रोक्तं योगिनां हृदयङ्गमम् । जानूर्वोरन्तरे सम्यक् कृत्वा पादतले उभे । ऋजुकायो विशेद्योगी स्वस्तिकन्तत् प्रचक्षते । सीमनि पार्श्वयोर्न्यस्य गुल्फयुग्मं सुनिश्चलम् । वृषणाधः पार्श्वपादौ पाणिभ्यां परिबन्धयेत् । भद्रासनं समुद्दिष्टं योगिभिः परिकल्पितम् । ऊर्वोः पादौ क्रमान्न्यस्य जान्वोः प्रत्यङ्मुखाङ्गुली । करौ निदध्यादाख्यातं वज्रासनमनुत्तमम् । एकं पादमधः कृत्वा विन्यस्योरौ तथेतरम् । ऋजुकायो विशेन्मन्त्री वीरासनमितीरितम्" यत्र महाबलोऽवसति तस्मिन् ६गजस्कन्धदेशे आस्यतेऽनेन आ+अस–करणे ल्युट् । ७आस्यन् विशेषवाधके । असनएव अण् । ८असनवृक्षे पु० ९जीवकवृक्षे पु० । आसनशब्दस्थाने यणादौ तद्धितयाजादौ च परे आसन्नादेशः इति काशिकादयः तयोरभावात्तु तत् दूषयित्वा आस्यशब्दस्थाने एव तदादेश इत्युक्तं यथा "यत्तु आसनशब्दस्य आसन्नादेश इति काशिकायामुक्तन्तत् प्रामादिकम् "आसोदकस्य वर्त्ति कामभीके" इति मन्त्रे सुपादिलक्षणौचित्यात् "इकस्य चित् वर्त्ति कामन्तरांशादिति" मन्त्रान्तरसंवादाच्च व्याख्यातञ्च तत्रैव वेदभाष्ये इति । ["निषेदुषीमासनबन्धधीरः" रघुः।

आसनबन्ध पु० आसनार्थो बन्धः । करचरणादीनामन्योन्यबन्धे

आसनमन्त्र पु० आसनस्य शुद्ध्यर्थो दानार्थो वा मन्त्रः । तन्त्रोक्ते "आधारशक्तिकमलासनाय नमः" इत्यादिके तत्तत्करणोक्ते १मन्त्रभेदे २देवेभ्य आसनदानार्थे मन्त्रभेदे च । स च मन्त्रः 'पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम् । उतामृतत्वस्येशानो यदन्नेनातिरोहति" श्रौतः । 'शेषभद्रं महादिव्यं फणामणिसहस्रकम् । कोटिसूर्य्यप्रतीकाशं त्वदासनमीश्वर !" इति पौराणिकश्च । एवमन्योऽपि तत्तत्कल्पोक्तो ज्ञेयः । आसनपरिग्रहार्थे ३मन्त्रे च "आसनमन्त्रस्य मेरुपृष्ठ ऋषिः सुतलं छन्दः कूर्म्मो देवता आसनपरिग्रहे विनियोगः" तन्त्रसा०।

आसना स्त्री आस–युच् ।१स्थितौ २उपवेशने ।

आसनादि पु० आसनमादिर्यस्य । तन्त्रोक्ते पूजाङ्गे आसनप्रभृतौ उपचारगणे "आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम्" उपचारशब्दे विवृतिः ।

आसनी स्त्री आस–आधारे ल्युट् ङीप् । १ विपणौ २मर्य्यादायाञ्च मेदि० । [ नि० । वासुदेवे मेदि० ।

आसन्द पु० आसीदत्यस्मिन् प्रलयकाले आ+सद्–अन्दादि०

आसन्दी स्त्री आसद्यतेऽस्याम् आ+सद–अन्दादि०नि०गौरा० ङीप् । १ उपवेशनयोग्ये आसनयन्त्रे (केदारा) २ क्षुद्रखट्वायाम् (कोँच)। ३सभामध्यवेदिकायाम् "औदुम्बरीमासन्दीं नाभिदघ्नामरत्निमात्रासुताहरन्ति" कात्या०७,२७। ४उक्तलक्षणायां पीठिकायाञ्च । आसन्दीशब्दस्य निरुक्तिरपि शत० ब्रा० दर्शिता । "इयं वा आसन्दी अस्यां हीदं सर्वमासन्नम् तस्मादस्या आसन्दीमाहरन्ति" इति । स्वार्थे कन् । क्षुद्रासनभेदे स्त्री । "जाम्बूनदमयीमासन्दिकाम्" काद० । आसन्दी+अस्त्यर्थे मतुप् मस्य वः । आसन्दीयुक्ते त्रि० स्त्रियां ङीप् । "आसन्दीवान् ग्रामभेदः" सि०कौ०।

आसन्न त्रि० आ+सद–क्त । १निकटस्थे, २उपस्थिते च । "आसन्नपतने कूले कूलं निपतिष्यतीति" सा० भा० । ३सन्निधानयुक्ते ४सम्यगुपस्थिते च "सर्वमासन्नमिति" शत०ब्रा०। ६याथाबोधसाधनासत्तियुक्ते वाक्ये "आसत्तानाख्यविभागव्याघातः" शब्दचिन्ता० । ५समूर्वौ च ।

आसन्नकाल पु० आसीदत्यस्मिन् काले आ+सद–आधारे क्त कर्म्म० । मृत्युकाले ।

आसन्य पु० आस्ये भवः यत् आसन्नादेशः । मुखभवे मुखान्तर्विलस्थे मुख्ये प्राणे "अथ हेममासन्यं प्राणमूचुः" शत०ब्रा० ।

आसन्वत् त्रि० आस्यसमानार्थकः आसन्शब्दोऽस्ति ततः अस्त्यर्थे मतुप् । आस्ययुक्ते मनुष्ये । "यद्भूतं यच्च भाव्यमासन्वन्तेन ते याचे विषम्" अथ० ६,१२,२ ।

आसमञ्ज पु० असमञ्ज एव स्वार्थे अण् । सूर्य्यवंश्ये सगरपुत्रे क्षत्रियभेदे ।

आसम्बाध त्रि० समन्तात् संबाधा यत्र । सङ्कीर्णस्थाने परस्परसंघर्षणेन क्लिष्टे । "आसम्बाधा भविष्यन्ति पन्थानः शरदादिभिः" रामा० ।

आसव पु० आसूयते आ+सु–कर्म्मणि अप् । १ अभिषवजाते मद्ये (चोयानमद) तल्लक्षणादि भावप्र० । "यत्र पक्कौषधाम्बुभ्यां सिद्धं मद्यं स आसवः । आसवस्य शीतद्रव्यगुणैर्न्नगुणाः समाः" नवपुराणमद्ययोर्गुणास्तत्रैव । "मद्यं नवमभिष्यन्दि त्रिदोषजनकं सरम् । अहृद्यं बृंहणं दाहि दुर्गन्धं विशदं गुरु । जीर्णं तदेव रोचिष्णु क्रमिश्लेष्मानिलापहम् । हृद्यं सुगन्धि गुणवल्लघु स्रो-

विशोधनम्”। सात्त्विकादिपानकर्त्तृभेदेन चेष्टाविशेषाश्च तत्रोक्ताः “सात्त्विको गीतहास्यादि राजसो साहसादिकम्। तामसो निन्द्यकर्म्माणि निद्रां च मदिरां चरन्”। चरन् पिबन् कुर्य्यादिति शेषः। “विधिना मात्रया काले हितैरन्नैर्यथाबलम्। प्रहृष्टो यः पिबेन्मद्यं तस्य स्यादमृतं यथा। किन्तु मद्यं स्वभावेन यथैवान्नं तथा स्मृतम्”

सुश्रुते तु मद्यभेदेन गुणविशेषादिकमुक्तं यथा

“सर्व्वं पित्तकरं मद्यमम्लं दीपनरोचनम्। भेदनं कफवातघ्नं हृद्यं वस्तिविशोधनम्। पाके लघु विदाह्युष्णं तीक्ष्णमिन्द्रियबोधनम्। विकाशि सृष्टविण्मूत्रं वक्ष्ये तस्य विशेषणम्। मार्द्वीकमविदाहित्वान्मधुरान्वयतस्तथा। रक्तपित्तेऽपि सततं बुधैर्न प्रतिषिध्यते। मधुरं तद्धि रूक्षञ्च कषायानुरसं लघु। लघुपाकि सरं शोषविषमज्वरनाशनम्। मार्द्वीकात्स्वल्पान्तरं किञ्चित् खार्ज्जूरं वातकोपनम्। तदेव विशदं रुच्यं कफघ्नं कर्षणं लघु। कषायमधुरं हृद्यं सुगन्धीन्द्रियबोधनम्। काशार्शोग्रहणीदोषमूत्राघातानिलापहा। स्तन्यरक्तक्षयहिता सुरा बृंहणदीपनी। काशार्शोग्रहणीश्वासप्रतिश्यायविनाशिनी। श्वेता मूत्रकफस्तन्यरक्तमांसकरी सुरा। छर्द्यरोचकहृत्कुक्षितोदशूलप्रमर्द्दनी। प्रसन्ना कफवातार्शोविबन्धानाहनाशिनी। पित्तलाल्पकफा रूक्षा यवैर्व्वातप्रकोपणी। विष्टम्भिनी सुरा गुर्व्वी श्लेष्मला तु मधूलिका। रूक्षा नातिकफा हृद्या पाचनी चाक्षिकी स्मृता। त्रिदोषो भेदकस्तत्र कोहलो वदनप्रियः। पाण्डुघ्नो-ऽजगलः पक्वः शकृच्छूलकफशोफहृत्। हृद्यः प्रवाहिकाटोपदुर्नामानिलशोषहृत्। बक्कसो हृतसारत्वाद्विष्टम्भी वातकोपनः। दीपनः सृष्टविण्मूत्रो विशदोऽल्पमदो गुरुः। कषायो मधुरः शीधुर्गौडः पाचनदीपनः। शार्कंरो मधुरो रुच्यो दीपनो वस्तिशोधनः। वातघ्नो मधुरः पाके हृद्य इन्द्रियबोधनः। तद्वत् पक्वरसः शीधुर्बलवर्णकरः सरः। शोफघ्नो दीपनो हृद्यो रुच्यः श्लेष्मार्शसां हितः। कर्षणः शीतरसिकः श्वयथूदरनाशनः। वर्णकृज्जरणः स्वर्य्यो विबन्धघ्नोऽर्शसां हितः। आक्षिकः पाण्डुरोगघ्नो व्रणः संग्राहको लघुः। कषायमधुरः शीधुः पित्तघ्नोऽसृक्प्रसादनः। जाम्बवो बद्धनिस्यन्दस्तुवरो वातकोपनः। तीक्ष्णः सुरासवो हृद्यो मूत्रलः कफवातनुत्। मुखप्रियः स्थिरमदो विज्ञेयोऽनिलनाशनः। लघुर्मध्वासवश्छेदी मेहकुष्ठविषापहः।

तिक्तः कषायः शोफघ्नस्तीक्ष्णः स्वादुरवातकृत्। तीक्ष्णः कषायो मदकृद्दुर्नामकफगुल्महृत्। कृमिमेदोऽनिलहरो मैरेयो मधुरो गुरुः। बल्यः पित्तहरो वर्ण्यो मार्द्वीकेक्षुरसासवः। शीधुर्मधूकपुष्पोत्थो विदाह्यग्निबलप्रदः। रूक्षः कषायकफहृद्वातपित्तप्रकोपणः। निर्द्दिशेद्रसतश्चान्यान् कन्दमूलफलासवान्। नवं मद्यमभिष्यन्दि गुरु वातादिकोपनम्। अनिष्टगन्धं विरसमहृद्यञ्च विदाहि च। सुगन्धि दीपनं हृद्यं रोचिष्णु कृमिनाशनम्। स्फुटस्रोतस्करं जीर्णं लघु वातकफापहम्। अरिष्टो द्रव्यसंयोगसंस्कारादधिको गुणैः। बहुदोषहरश्चैव दोषाणां शमनश्च सः। दीपनः कफवातघ्नः सरः पित्तविशोधनः। शूलाध्मानोदरप्लीहज्वराजीर्णार्शसां हितः। पिप्पल्यादिकृतो गुल्मकफरोगहरः स्मृतः। चिकित्सितेषु वक्ष्यन्तेऽरिष्टा रोगहराः पृथक्। अरिष्टासवशीधूनां गुणान् कर्म्माणि चादिशेत्। बुद्धा यथास्वं संस्कारमवेक्ष्य कुशलो भिषक्। सान्द्रं विदाहि दुर्गन्धं विरसं कृमिलं गुरु। अहृद्यं तरुणं तीक्ष्णमुष्णं दुर्भाजनस्थितम्। अल्पौषधं पर्य्युषितमत्यच्छं पिच्छिलञ्च यत्। तद्वर्ज्यं सर्व्वदा मद्यं किञ्चिच्छेषन्तु यद्भवेत्। तत्र यत् स्तोकसम्भारं तरुणं पिच्छिलं गुरु। कफप्रकोपि तन्मद्यं दुर्जरञ्च विशेषतः। पित्तप्रकोपि बहुलं तीक्ष्णमुष्णं विदाहि च। अहृद्यं फेनिलं पूति कृमिलं विरसं गुरु। तथा पर्य्युषितञ्चापि विद्यादनिलकोपनम्। सर्व्वदोषैरुपेतन्तु सर्व्वदोषप्रकोपणम्। चिरस्थितं जातरसं दीपनं कफवातजित्। रुच्यं प्रसन्नं सुरभि मद्यं सेव्यं मदावहम्। तस्यानेकप्रकारस्य मद्यस्य रसयोगतः। सौक्ष्म्यादौष्ण्याच्च तैक्ष्ण्याच्च विकाशित्वाच्च वह्निना। समेत्य हृदयं प्राप्य धमनीरूर्द्ध्वमागतम्। विक्षोभ्येन्द्रियचेतांसि वीर्य्यं मदयतेऽचिरात्। चिरेण श्लैष्मिके पुंसि पानतो जायते मदः। अचिराद्वातिके दृष्टः पैत्तिके शीघ्रमेव तु। सात्त्विके शौचदाक्षिण्यहर्षमण्डनलालसः। गीताध्ययनसौभाग्यसुरतोत्साहकृन्मदः। राजसे दुःखशीलत्वमात्मत्यागं ससाहसम्। कलहं सानुबन्धन्तु करोति पुरुषे मदः। अशौचनिद्रामात्सर्य्यागम्यागमनलोलताः। असत्यभाषणञ्चापि कुर्य्याद्धि तामसे मदः। रक्तपित्तकरं शुक्तं छेदि भुक्तविपाचनम्। वैस्वर्य्यं जरणं श्लेष्मपाण्डुक्रिमिहरं लघु। तीक्ष्णोष्णं मूत्रलं हृद्यं कफघ्नं कटुपाकि च। तद्वत्तदासुतं सर्व्वं रोचनञ्च विशेषतः। गौड़ानि

इक्षोः रसे पु० । तस्य गुणादिकमिक्षुशब्दे उक्तम् ।

इक्षुरसक्काथ पु० इक्षुरसस्य क्काथः पाकभेदः । फाणितादौ ।

इक्षुवल्ली(ल्लरी) स्त्री इक्षुरिव सुस्वादा वल्ली वल्लरी वा लता । क्षीरविदार्य्याम् । (क्षीरकन्द) । राजनि०

इक्षुवालिका स्त्री इक्षुरिव वलति वल–ण्वुल् । (तालमाखना) इतिख्याते १क्षुपे २काशे च ।

इक्षुवाटी स्त्री इक्षोर्वाटीव । पुण्ड्रके इक्षौ राजनि० । ६त० । २इक्षूत्पादकक्षेत्रे । स्वार्थे कन् । उभयत्र ।

इक्षुविकार पु० ६त० । इक्षुजशब्ददर्शिते षड्विधे गुडादौ

इक्षुवेष्टन पु० इक्षोरिव वेष्टनमस्य । भद्रमुञ्जे । "भद्रमुञ्जः शरो-बाणस्तेजनश्चेक्षुवेष्टनः । मुञ्जद्वयं तु मधुरं तुवरं शिशिरं तथा । दाहतृष्णाविसर्पास्रमूत्रवस्त्यक्षिरोगहृत् । दोषत्रयहरं वृष्यं मेखलासूपयुज्यते" भावप्र० ।

इक्षुशर पु० इक्षुरिव शृणाति शॄ–अच् । ४काशभेदे तद्वने हि गन्तुर्गात्रक्षतेर्दृष्टत्वात् तस्येक्षुवत् हिंसकत्वम् ।

इक्षुशाकट न० इक्षूणां भवनं क्षेत्रम् इक्षु+शाकटच् । (दोकला) इति ख्याते इक्षुभवनयोग्ये क्षेत्रे । तदर्थे शाकिनच् । इक्षुशाकिनशब्दोऽप्यत्रार्थे न० ।

इक्षुसमुद्र पु० इक्षुरसस्वादूदकः समुद्रः । समुद्रभेदे । "लवणेक्षुसुरासर्पिर्दधिदुग्धजलान्तकाः" पुरा० तत्स्थानम् सि०शि० उक्तम् । "भूमेरर्द्धं क्षारसिन्धोरुदक्स्थं जम्बुद्वीपं प्राहुराचार्य्यवर्य्याः । अर्द्धेऽन्यस्मिन् द्वीपषट्कस्य याम्ये, क्षारक्षीराद्यम्बुधीनां निवेशः" "द्वीपोदस्येक्षुरसस्य तस्मान्मद्यस्य च स्वादुजलस्य चान्ते" ।

इक्षुसार पु० ६त० । फाणितादौ ।

इक्ष्वाकु पु० इक्षुमिच्छामाकरोति इक्षु+आ+कृ–डु । १कटुतुम्ब्याम् २सूर्य्यवंश्ये आदिराजे च । "यस्येक्ष्वाकुरुपव्रते" ऋ०१०,६०,४ । स च वैवस्वतमनोः पुत्रः । "मनोर्वैवस्वतस्यासन् पुत्रा वै नव तत्समाः । इक्ष्वाकुश्चैव नाभागो धृष्णुः शर्यातिरेव च । नरिष्यः प्रांशुषष्ठास्ते नाभागारिष्टसप्तमाः करूषश्च पृषध्रश्च नवैते भरतर्षभ" ।। "इक्ष्वाकुश्चैव दायादो मध्यदेशमवाप्तवान्" हरिवं०१०अ० "तस्योत्पत्तिप्रकारश्चैवोक्तः क्षुवतस्तु मनोः पुत्रइक्ष्वाकुरभवत्ततः" । "तस्य पुत्रशतं त्वासीदिक्ष्वाकोर्भूरिदक्षिणम् । तेषां ज्येष्ठो विकुक्षिस्तु विकुक्षित्वादयोधिनाम्" "इक्ष्वाकुस्तु विकुक्षिं वै अष्टकायामथादिशत्" हरि० । इक्ष्वाकोरपत्यम् । अण् दक्षि०नि० । ऐक्ष्वाकस्तदपत्ये बहुषु तस्य लुक् इक्ष्वाकवः– "इक्ष्वाकूणां दुरापेऽर्थे" "गर्हितपयसामिक्ष्वाकूणामिदं हि कुलव्रतम्" "इक्ष्वाकुभिः पुण्यतरीकृतानि" इति च रघुः ।

इक्ष्वारि पु० इक्षुरिव समन्तादृच्छति आ+ऋ–इन् । काशतृणे । [इक्षुरिवाकलति अल–ण्वुल् वा । काशतृणे भावप्र०

इक्ष्वालिका स्त्री इक्षूणामालिरिव कायति प्रकाशते कै क–

इख गतौ भ्वादि० पर० सक० सेट् । एखति ऐखीत् । इयेख ईखतुः । एखिता एखिष्यति ऐखिष्यत् ।

इखि गतौ इदित् भ्वादि० पर०सक० सेट् । इङ्खति ऐङ्खीत् । इङ्खाम्–बभूव–आस–चकार । इङ्खिष्यति । इङ्खिता ऐङ्खिष्यत् । प्रेङ्खन् प्रेङ्खितम् प्रेङ्खणम् ।

इगि गतौ इदित् भ्वादि०पर०सक० सेट् । इङ्गति ऐङ्गीत् । ऐङ्गिष्यत् । इङ्गितम् । "त्वया व्याप्तमिदं विश्वं यत्रेङ्गं यत्र नेङ्गति" भा०व०४२अ० । तस्यात्मनेपदित्वमपि "योऽवतिष्ठति नेङ्गते" यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता" गीता । अत्र छान्दसमात्मनेपदताया अकर्म्मकत्वम् । णिच्–इङ्गयति चालयतीति प्रेरयतीति चार्थः । उद्–प्रेरणे "शुनमष्ट्राव्यङ्गय" ऋ०४,–५७ ५७, । सम्+सम्यक् चालने । "पुष्करिणीं समिङ्गयति सर्वतः" ऋ०४,७,७,

इङ् अध्ययने अधिपूर्व्व एव ङित् अदा०आत्म०सक०अनिट् । अधीते अधीयीत अध्यैष्ट–अध्यगीष्ट । "अधिजगे, अध्यैष्यत–अध्यगीष्यत "योऽधीते शक्तितोऽन्वहम्" स्मृतिः । "नाधीयीत कदाचन" मनुः । "अध्यैष्ट वेदांस्त्रिदशानयष्ट" भट्टिः शानच् अधीयानः । अकर्म्मकत्वे कर्त्तरि शतृ अधीयन् "अधीयन्नात्मविद्यां धारयन् मस्करिव्रतम्" भट्टिः अध्येतव्यम् "श्रोतव्यमिह शूद्रेण नाध्येतव्यं कदाचन" । "स्वाध्यायोऽध्येतव्यः" श्रुतिः । अध्ययनीयम् । अध्येयः "वेद एव सदाऽध्येयः" स्मृतिः । अध्येता । अधीतः "अधीतवेदवेदाङ्गत्वेन" वेदान्त सा० । ज्ञानार्थत्वात् कर्त्तरि क्त अधीतः "अधीते शतसाहस्रम्" स्मृतिः "अधीतिः "अधीतिबोधाचरणप्रचारणैः" नैष० । अध्येष्यमाणः । "पीत्वापोऽध्येष्यमाणस्तु आचमेत् प्रयतोऽपि सन्" मनुः भावे अधीतम् । अधीतमनेन इनि अधीती । "स्वगुरागकृतामधीतिनोम्" कुमा० अधीत्य "अनधीत्य द्विजोवेदान् योऽन्यत्र कुरुते श्रमम्" स्मृतिः । "अधीत्य चतुरोवेदान्" पुरा० । अध्ययनम् । "अध्ययनेनात्रिप्रकृष्टः" पा० । "सत्त्वाद्यैरध्ययनं विनापि" मधु रा० अध्यायः "स्वाध्यायोऽध्येतव्यः" श्रुतिः णिच् अध्यापयति "अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत" श्रुतिः अध्यापिपत् अध्यजिगपत्

"अध्यापयामास पितॄन्" मनुः णिच्–सन् । अध्यापिपयिषति–ते अधिजिगापयिषति–ते वेत्यस्मात् सन्। अधिजिगांसते । अध्यापकः अध्यापकशब्दे उदा०अध्यापितः "अध्यापितस्योशनसापि नीतिम्" कुमा० । "भृतकाध्यापको यश्च भृतकाध्यापितस्तथा" मनुः ।

**इङ्ग** पु० इगि भावे घञ् । १चलने कम्पने २इङ्गिते च । कर्त्तरि अच् । ३जङ्गमे "त्वया सृष्टमिदं सर्व्वं यच्चेङ्गं यच्च नेङ्गति" भा०व०४२अ० । ४अद्भुते च त्रि० मेदि० ।

**इङ्गन** न०इगि भावे ल्युट् । १इङ्गिते २चलने ३ज्ञाने च । णिच्–ल्युट् । ४चालने । "उपांशुसवनस्यानिङ्गनश्रुतेः" कात्या० १०'१,६, यतउपांशुसवनस्यानिङ्गनमचालनम् श्रूयते "अनिङ्ग्यमानानि दूरे आहतीयसवनात्" श्रुतिः । कर्क० । युच् इङ्गना अत्र स्त्री ।

**इङ्गि(ड)ल** पु०इगि–इलच् वा लस्य डः । इङ्गुदवृक्षे । "वीरणतूलमिश्रमिङ्गिड़मपुटेन जुहोति" श्रुतिः ।

**इङ्गित** न० इगि–भावे क्त । १चलने २हृद्गतभावावेदके चेष्टाविशेषे "इङ्गितं हृद्गतो भावः इति" सज्जनोक्ते ३हृदयस्थे भावे । "अगूढ़सद्भावमितीङ्गितज्ञया" कुमा० "बाह्यैर्विभावयेल्लिङ्गैर्भावमन्तर्गतं नृणाम् । स्वरवर्णेङ्गिताकारैश्चक्षुषा चेष्टितेन च" मनुना तस्य अन्तर्गतभावावेदकत्वमुक्तम् । "तत्र स्वरो गद्गदादिः, वर्णोऽस्वाभाविकः इङ्गितं स्वेदवेपथुरोमाञ्चादि" व्य०त० रघु० । "स विद्यादस्य कृत्यानि निगूढेङ्गितचेष्टितैः" आकारमिङ्गितं चेष्टां भृत्येषु च चिकीर्षितम्" "इङ्गिताकारचेष्टाज्ञं शुचिं दक्षं कुलोद्भवम्" मनुः । "तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च" रघुः। कर्त्तरि क्त ४चलिते त्रि०।

**इङ्गु** पु० इङ्गति चलत्यनेन इगि–उन् । रोगे ।

**इङ्गुद** पु० इङ्गुः रोगस्तम् द्यति दो-क । १तापसतरौ "इङ्गुदः कुष्ठभूतादिग्रहव्रणविषक्रमीन् । हन्त्युष्णः श्वित्रशूलघ्नस्तिक्तकः कटुपाकवान्" भाव०प्र०। गौरा० ङीष् इङ्गुदीत्यप्यत्र स्त्री । "तामिङ्गुदीस्नेहकृतप्रदीपम्" रघुः तस्याःफलम् अण् प्लक्षादि०न लुक् । ऐङ्गुदं तत्फले न०। अस्याः पर्य्यायद्वारा लक्षणं दृश्यते । हिङ्गुपत्रता विषहारिता वातनाशकता तैलफलत्वम् तीक्ष्णकण्टकता पूतिगन्धिता क्रोष्टुफलत्वम् । २ज्योतिष्मतीवृक्षे पु०रत्नमा०।

**इङ्गुज** पु० इङ्गरते भोगार्थम् इगि–रन् इङ्गुः लवणदेशस्तत्र जायते जन–ड अलुक् समा०। लवणस्यजने । "पूर्व्वाम्नाये भवगतं भङ्गीतिः प्रकीर्त्तिताः । फिरङ्गभाषया मन्त्रास्तेषां संसाधनात् कलौ । अधिपामण्डलानाञ्च संग्रामेष्वपराजिताः । इङ्गुजाः नवषट्पञ्च लवणजाश्चापि भाविनः" मेरुत० २३प्रकाशे ।

**इच्छक** पु० इच्छा+अस्त्यर्थे अच् इच्छकमिव रसोऽस्य अच् । (टावालेबु) इति ख्याते १वृक्षे । अस्त्यर्थे अच् स्वार्थे कन् । २इच्छायुक्ते त्रि० ।

**इच्छा** स्त्री इष-भावे श । इदं मे भूयादिति वेदान्तादिमते मनोधर्मभेदे सुखतत्साधनविषयचित्तवृत्तौ न्यायमते, सुखादिज्ञानेन तत्साधनत्वज्ञानेन च जायमाने इदं मे भूयादित्येवंरूपे आत्मधर्म्मे २अभिलाषे च । "आत्मजन्या भवेदिच्छा इच्छाजन्या भवेत् कृतिः । कृतिजन्या भवेच्चेष्टा चेष्टाजन्या भवेत् क्रिया" न्यायसिद्धान्तः। "कामः संकल्पोविचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्व्वं मन एवेति" श्रुतेः मनोधर्म्मत्वमिति सांख्यवेदान्तिनः । "विगतेच्छाभयक्रोधाः" गीता "जन्मनि क्लेशबहुले किं न दुःखमतः परम् इच्छासम्पद्यतो नास्ति यत्रेच्छा न निवर्त्तते" हिता०। "नीतो रात्रिः क्षणइव मया सार्द्धमिच्छारतैर्या" मेघ० । "भर्त्ती भर्त्तेच्छः परिक्रीय स्रुनौ" "विषमप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छया" रघुः ।"योऽहिंसकानि भूतानि हिनस्त्यात्मसुखेच्छया" "देवदत्तां पतिर्भार्य्यां विन्दते नेच्छयात्मनः" "सत्यं यज्ञभृतां वाचाहिदुषामिच्छयात्मनः" इति च मनुः। "स्वेच्छया विभजेत् सुतान्" दायभा०स्मृतिः। सा च द्विविधा फलोपायरूपविषयभेदात् यथाह भाषा० "सुखन्तु जगतामेव काम्यं धर्म्मेण जन्यते । अधर्म्मजन्यं दुःखं स्यात् प्रतिकूलं सचेतसाम् । निर्दुःखत्वे सुखे चेच्छा तज्ज्ञानादेव जायते । इच्छा तु तदुपाये स्यादिष्टोपायत्वधीर्यदि । चिकीर्षा कृतिसाध्यत्वप्रकारेच्छा च या भवेत् । तद्धेतुः कृतिसाध्येष्टसाधनत्वमतिर्भवेत् । बलवद्द्विष्टहेतुत्वमतिः स्यात् प्रतिबन्धिका। तदहेतुत्वबुद्धेस्तु हेतुत्वं कस्यचिन्मते" । व्याख्यातं च मुक्ता० । 'इच्छा हि फलविषयिणी उपायविषयिणी च । फलन्तु सुखं दुःखाभावश्च । तत्र फलेच्छां प्रति फलज्ञानं कारणम् । अतएव स्वतः पुरुषार्थः सम्भवति । यज्ज्ञातं सत् स्ववृत्तितयेष्यते स स्वतः पुरुषार्थ इति तल्लक्षणात् । इतरेच्छानधीनेच्छाविषयत्वं फलितोऽर्थः । उपायेच्छां प्रतीष्टसाधनताज्ञानं कारणम् । कृतिसाध्यत्वप्रकारिका कृतिसाध्यक्रियाविषयिणीच्छा चिकीर्षा पाकं कृत्या साधयामीति तदनुभवात् ।

चिकीर्षां प्रति कृतिसाध्यताज्ञानमिष्टसाधनताज्ञानञ्च कारणम्। अतएव इच्छां कृतिसाध्यताज्ञानाभावान्न चिकीर्षा। बलवदिति बलवद्द्विष्टसाधनताज्ञानं तत्र प्रतिबन्धकम्। अतो मधुविषसंपृक्तान्नभोजने न चिकीर्षा। बलवद्द्वेषः प्रतिबन्धक इत्यन्ये। कस्यचिन्मत इति। बलवदनिष्टाजनकत्वज्ञानं कारणमित्यर्थः। कृतिसाध्यताज्ञानादिमतो बलवदनिष्टसाधनताज्ञानशून्यस्य बलवदनिष्टजनकत्वज्ञानं विनापि चिकीर्षायां विलम्बाभावात् कस्यचिन्मत इत्यस्वरसो दर्शितः"।

विवृतमेतत् दिनक० यथा "तत्र तयोर्मध्ये। अतएव फलज्ञानस्य फलेच्छां प्रति हेतुत्वादेव पुरुषार्थः संभवतीति सुखं दुःखाभावश्च पुरुषार्थः संभवतीत्यर्थः। ननु यज्ज्ञातं सदित्यादेः स्वविषयज्ञानजन्येच्छाविषयत्वमर्थस्तथा चोपायेऽतिव्याप्तिः तस्यापि स्वविषयकेष्टसाधनताज्ञानजन्येच्छाविषयत्वात् अत आह। इतरेच्छेति"।

अत्र ईश्वरेच्छामादायातिव्याप्तिवारणार्थं द्वितीयेच्छायां जन्यत्वं विशेषणीयम्। असम्भववारणाय आद्येच्छायामपि जन्यत्वं विशेषणीयम्। भवति च सुखेच्छायाः इतरविषयकेच्छानधीनत्वम् उपायेच्छायाश्च फलेच्छाधीनत्वञ्च। इष्टसाधनस्य फलेच्छाधीनेच्छाविषयित्वात् न तत्र लक्षणप्रसरः। पुरुषान्तरीयेच्छामादायातिव्याप्तिवारणाय समवायद्वयघटितसामानाधिकरण्यं निवेशनीयम् वस्तुतः स्वसमवायिसमवेतत्वप्रयोज्यत्वोभयसम्बन्धेन स्ववत्त्वाऽसम्भिन्नाया जन्येच्छाया विषयत्वं तत्त्वम् अपरमिच्छापरम् इत्यन्यत्र विस्तरः। तत्रेदं बोध्यं फलेच्छायां कारणं यत् सुखज्ञानमुक्तं तत् स्मरणानुमित्यादिसाधारणम्। प्रत्यक्षत्वे प्रत्यक्षं प्रतिविषयस्य हेतुतया विषयज्ञानजन्यसुखादेर्वर्त्तमानत्वे एव तत्प्रत्यक्षेण वर्त्तमानस्य सुखस्य सिद्धत्वात् सिद्धे च इच्छाविरहात् न तद्विषयकेच्छासम्भव इति सर्वमिदं चैतत् कणादसूत्रोपस्कारयोः" यथा। "इच्छाद्रागः" का० सू०। "स्रक्चन्दनवनितासेवनजन्मनः सुखादुत्तरोत्तरं तज्जातीये सुखे तत्साधने वा राग इच्छा जायते" उप० "तन्मयत्वाच्च" सू० विषयासक्तिजनितो दृढतरः संस्कारविशेषस्तन्मयत्वम् तद्वशात् कामातुरस्य कामिनीमलभमानस्य सर्वत्र कामिनीदर्शनम्" उप०। "तन्मयत्वे तत्प्रकाशो याज्ञाध्यन्तरतश्चेदा" इत्यन्यत्राप्युक्तम्। अत्र संस्कारादेव इच्छा जायते इत्युक्तेः संस्कारसाध्यस्मृतिद्वारैव संस्कारस्य हेतुत्वमवगीयते। क्वचिददृष्टवशात् क्वचित् जातिभेदवशाच्च इच्छासम्भवः तदप्युक्तम् तत्रैव "अदृष्टाच्च" "जातिविशेषाच्च" सू०। यद्यप्यदृष्टं साधारणं कारणं तथापि क्वचिदसाधारणकारणतामनुभवति शैशवे तज्जन्मान्यनुभूतकामिनीसेवनसुखस्यापि यौवनोद्भेदे कामिनीरागः" उप०। न च तत्रापि अद्यप्रसूतबालकस्य स्तन्यपानरागवत् जन्मान्तरीयतत्संस्कारजज्ञानस्यैव हेतुत्वमस्तु किमदृष्टस्य साधारणकारणस्यासाधारणकारणताकल्पने नेति चेत् तत्कल्पनेऽपि तत्र जीवनादृष्टस्यैव अत्रापि अदृष्टविशेषस्योद्बोधकस्यानीयतया अवश्यकल्पनीयत्वे तस्यैव हेतुत्वौचित्यात्। पदार्थभेदे जातिभेदकृत एव रागः। यथा मनुष्यजातीनामन्नादौ रागः मृगजातीयानां तृणादौ, करभजातीयानां कण्टकादौ, शूकरादेर्विष्ठादौ रागोत्पत्तिः। तथा च विषयविशेषरागं प्रति जातिविशेष एव कारणतया कल्पनीयः। तत्रापि जातिविशेषोत्पादकतयाऽदृष्टस्य कारणत्वेऽपि जातिविशेषस्य कारणत्वमस्त्येव तमनुत्पाद्याऽदृष्टस्याकारणत्वादिति बोध्यम् सुखं मे भूयादिति दुःखं मे मा भूयादित्येवं रूपः सुखदुःखाभिलापः।

उपायेच्छां प्रति तु इष्टसाधनताज्ञानं हेतुः। भवति च पाके भोजनसाधनतया, भोजने च क्षुन्निवृत्तिसाधनतया ज्ञानात् इच्छा। तदुल्लेखिवाक्यन्तु पाको जायताम् इत्येवं रूपम्। सेयमिच्छा ज्ञानकृत्यादिवत् सविषया तद्विषयश्च द्विविधः बाधिताबाधितभेदात्। यत्र इष्टसाधने वस्तुनि इष्टसाधनत्वज्ञानादिच्छा सा सद्विषयिणी यत्र तु अनिष्टसाधने वस्तुनि इष्टसाधनत्वभ्रमजा असद्विषयिणी। सा च प्राणिमात्रसाधारणी ईश्वरेच्छा तु सदा सद्विषयिणी तस्या बाधितपदार्थविषयकत्वाभावादेव तथात्वम् तेन तस्या नित्यत्वेन इष्टसाधनत्वज्ञानाधीनत्वाभावेऽपि न क्षतिः। योगिनां तु प्राकाम्यकामावसायितारूपैश्वर्ययोगात् कामानुसारिण एव विषया भवन्तीति नासद्विषयिणीति भेदः यथोक्तं शां० कौ०। "प्राकाम्यमिच्छानभिघातः यतो भूमावुन्मज्जति निमज्जति यथोदके। कामावसायित्वं सा सत्यसङ्कल्पता। यथाऽस्य सङ्कल्पो भवति भूतेषु, तथैव भूतानि भवन्ति। अन्येषां निश्चया निश्चेतव्यमनुविधीयन्ते योगिनान्तु निश्चेतव्याः पदार्थाः निश्चयम्"। निश्चेतव्यनिश्चयशब्दौ काम्यकामावुपलक्षयतः तथा च यथाकामं तेषां विषया भवन्तीति न असद्विषयकत्वं तेषां कामानामिति विवेच्यम्। इयमिच्छा

प्रवृत्तौ हेतुः इच्छाया बाधितविषयकत्वे प्रवृत्तिविसं-वादित्वं तदुत्तरं फललाभाभावेन तस्याः विसंवादित्वात् । सद्विषयकत्वे संवादित्वमेवेति भेदः तथा च प्राणि-मात्राणां प्रवृत्तौ इच्छा हेतुरीश्वरस्य प्रवृत्तौ तस्या नित्यत्वात् । गवादीनामपि हरिततृणदर्शनादिना जाय-मानायाः प्रवृत्तेरुपलम्भात् तत्कारणमिच्छास्तीत्यनुमीयते इयांस्तु भेदः तेषां वस्तुनः सदसद्विवेकशून्यतया-ऽसद्विषयेऽपीच्छा जायते । सेयमिच्छा सुवर्णोत्सरविहित काम्यचक्यजादिना, चाक्षुरविहितस्नानादिना च साध्या । तत्र सुरतकाम्या, अभिलाषा, छन्दा इत्यादौ काम्य-आदिशब्दाः, पिपासा बुभुक्षा लिप्सा इत्यादौ सन्-शब्दाः । सर्वत्र च इष्टसाधनताज्ञानादेव तत्तद्विषयेषु इच्छा जायते सन्प्रत्ययशब्दवाच्यायां चिकीर्षायां तु नैव किन्तु तत्र मतभेदे कारणान्तरमप्यस्ति तथा हि कृतिसाध्यत्वप्रकारकेच्छा चिकीर्षा पाकः कृत्या साध्यता-मित्याकारिका । तत्र च कृतिसाध्यत्वज्ञानं कारणमिति गुरवः तेन वृष्टिजलादौ कृतिसाध्यत्वाभावेन न तत्र चिकीर्षा । कृतिसाध्येष्टसाधनत्वज्ञानं बलवदनिष्टाननुबन्धि-त्वज्ञानं च हेतुरिति नैयायिकाः । तेन तृप्तजनताक-भादौ कृतिसाध्यत्वग्रहेऽपि न चिकीर्षा तत्र इष्टसाधनत्व-ग्रहाभावात् । विषमिश्रितान्नादेरिष्टसाधनत्वग्रहेऽपि बल-वदनिष्टसाधनत्वग्रहान्न चिकीर्षा । तदेतत् मुक्ता० मुक्ता तत्र प्राक् दर्शितं तत्रत्यदिनकरीये यथा ।

“ननु कृतिसाध्यताज्ञानस्य स्वातन्त्र्येण चिकीर्षां प्रति हेतुत्वे मानाभावः । तद्धर्मावच्छिन्नविशेष्यकेष्टसाधनताज्ञानस्य तद्धर्मप्रकारकेच्छां प्रति हेतुतायाः क्लृप्तत्वात् कृतिसाध्यपा-कत्वावच्छिन्नविशेष्यकेष्टसाधनताज्ञानादेव चिकीर्षायाः सम्भवादिति चेन्न यत्र कृतिसाध्यपाकत्वेनेष्टसाधनत्वं न गृहीतमपि तु सुखपाकत्वेन कृतिसाध्यत्वं सुखपाकत्वेने-ष्टसाधनत्वं च गृहीतं तत्रापि पाकगोचरप्रवृत्तेरानुभविक-तया तदनुरोधेन चिकीर्षाया अप्यावश्यकत्वेन तन्निर्वाहाय कृतिसाध्यताज्ञानस्य स्वातन्त्र्येण हेतुताया आवश्यकत्वात् । अथ कृतिसाध्यताज्ञानस्य प्रतिबन्धकत्वादेव वृष्ट्यादौ चिकीर्षानुत्पादात् कृतिसाध्यताज्ञानस्य चिकीर्षां प्रति-हेतुत्वे मानाभाव इति चेन्न कृतिसाध्यत्वाभाव तद्व्याप्य-तदवच्छेदकधर्मज्ञानानां प्रतिबन्धकत्वकल्पनापेक्षया कृ-तिसाध्यताज्ञानस्य हेतुत्वे लाघवात् । इष्टसाधनताज्ञान-मिति । अन्यथा निष्फलत्वज्ञानेऽपि चैत्यवन्दनादौ चिकीर्षापत्तिरिति भावः । अत्रेदमवधेयम् । पाकविशेष्य-केष्टसाधनताज्ञानस्य कार्यतावच्छेदकं न कृतिसाध्यपाक-गोचरचिकीर्षात्वम् कृतिसाध्यत्वप्रकारकत्वनिवेशे प्रयोजनवि-रहात् पाको जायतामितीच्छाया असंग्रहापत्तेश्च किन्तु पाकत्वावच्छिन्नमुख्यविशेष्यकेच्छात्वम् पाकसाध्यं सुखं जायतामितीच्छायां व्यभिचारवारणाय मुख्येति । इष्टसाधनतेत्यत्रेच्छा स्वरूपतो विशेषणम् । तेनेच्छा-ज्ञानशून्यकालेऽपि चिकीर्षानिर्वाह इति । अत एव कृतिसा-ध्यताज्ञानस्य हेतुत्वादेव । बलवद्द्वेषेति । स्वेष्ट द्वेषविष-यीभूतं द्वेषश्च दुःखे तादृश्येव ज्ञानात्, सर्पादौ तत्साधनता-ज्ञानात् । द्वेषे बलवत्त्वं च जातिविशेषः । प्रतिबन्धकमिति । ननु बलवद्द्वेषविषयसाधनत्वज्ञानस्य प्रतिबन्धकत्वे चै-त्रस्यागम्यागमनजन्यनरके यदा बलवान् द्वेषस्तदा मैत्रस्य तादृशद्वेषशून्यस्यागम्यागमने तादृशनरकसाधनत्वज्ञान-वत इच्छाप्रवृत्त्योरनुपपत्तिः एवं चैत्रस्यैव कालान्तरे तादृशद्वेषसत्त्वेऽपि । न च तत्कालीनतत्पुरुषीयेच्छां प्रति प्रवृत्तिं प्रति च तत्कालीनतत्पुरुषीयबलवद्द्विष्टजनकत्व-ज्ञानस्य प्रतिबन्धकत्वं कल्प्यते । तत्पुरुषस्य यदा न कापि द्वेषस्तत्कालतत्पुरुषान्तर्भावेन तादृशप्रतिबन्धकत्वस्याक-ल्पनात् तत्र तादृशप्रतिबन्धकाप्रसिद्धिरतस्तदभावकूटका-रणस्याभावात् प्रवृत्त्यनुपपत्तिरिति वाच्यम् तत्पुरु-षस्य यदाऽगम्यागमनजन्यनरके बलवद्द्वेषस्तदा तत्पुरु-षस्य तत्रेच्छानुत्पादादगम्यागमनगोचरतत्पुरुषीयतत्का-लीनेच्छाया अप्रसिद्ध्या तत्पुरुषतत्कालान्तर्भावेन तादृशकार्यकारणभावस्याभावेन तत्र तत्पुरुषीयागम-म्यागमनगोचरेच्छानुत्पादप्रयोजकस्य दुर्भिक्षापत्तेरिति चेन्न तद्धर्मप्रकारकद्वेषविशिष्टस्य तद्धर्मावच्छिन्नजनक-त्वज्ञानस्य तत्र प्रतिबन्धकत्वकल्पनेनोक्तापत्त्यभावात् । तद्धर्मप्रकारकद्वेषानुत्तरतादृशेच्छायां तादृशद्वेषाभावः, ता-दृशद्वेषोत्तरतज्जातीयेच्छायां तद्धर्मावच्छिन्नजनकत्वज्ञानाभावः कारणम् । बलवद्द्वेष इति । पाकादिगोचरेच्छायां बलवद्द्वेषविषयसाधनत्वज्ञानजन्यः पाकगोचरो द्वेषः प्रतिबन्धकः पूर्वोक्तप्रतिबन्धकत्वद्वयकल्पनापेक्षया लाघ-वादिति भावः यत्र चोत्कटसुखोत्कटदुःखजनकमेकमनु कर्मैव गृहीतं तत्र बलातिपतनस्य इच्छाद्वेषयोरनु-त्पत्तेरनुभूयते तत्र कार्यकाले द्वेषाभावस्य सत्त्वेनेच्छो-त्पादापत्तिः । न च यत्र बलवद्द्विष्टसाधनत्वज्ञानेन सं-जातद्वेषे द्वेषोऽजनित इष्टसाधने इच्छोत्पादापत्तिकत्वा-

तस्य विषभक्षणादौ चिकीर्षाप्रसङ्गात् । अथोपायचि-
कीर्षायां तत्कारणेच्छाकारणसुखत्वज्ञाने कृतिसा-
ध्यत्वं यदा विषयस्तदा सुखे चिकीर्षा नो चेदिच्छामात्र-
मिति इयमेव चिकीर्षाहेतुरिति चेत् तर्हीच्छाहेतु-
ज्ञाने यदा कृतिसाध्यत्वं भासते तदा चिकीर्षा नो चेदिच्छा-
मात्रमित्येव सुखतदुपायचिकीर्षाकारणमस्तु लाघवात्
सुखत्वज्ञानवदिष्टसाधनताज्ञानस्यापीच्छाकारणत्वात् । अ-
तएव पाके इष्टसाधनताज्ञाने कृतिसाध्यत्वं विषय इति
चिकीर्षा न तु इच्छादिज्ञाने तद्विषयत्वमितीच्छामात्रं सुख-
चिकीर्षायामिच्छाकारणज्ञाने कृतिसाध्यताविषयके
चिकीर्षाजनकत्वावधारणात् अन्यथा तत्र चिकीर्षा-
नुत्पत्तेः । वस्तुतस्तु उपायचिकीर्षा इष्टसाधनताज्ञान-
साध्या उपायेच्छात्वात् इतीच्छावत् न च भोगचिकीर्षावत्
तेन विनापि सुखादिप्रयोजकत्वात् उपायेच्छायास्तदन्वय-
व्यतिरेकानुविधानात् इष्टे च स्वतोऽसुकरत्वेन इच्छानुत्-
पत्तेः । अनुगतोपायेच्छायामनुगतस्य प्रयोजकत्वे सम्भवति
बाधकं विना त्यागायोगाच्च । न च चिकीर्षान्यत्वे सति उपा-
येच्छात्वमिच्छात्वं वा तज्जन्यत्वे प्रयोजकं गौरवात् सुखेच्छा-
यां तदभावाच्च । एवञ्चोपायचिकीर्षायामिष्टसाधन-
ताज्ञाने भुजेऽतिप्रसङ्गवारणार्थं कृतिसाध्यत्वप्रकारकत्वमिवो-
पायेच्छाकृतिसाध्यत्वमपि विषयतयावच्छेदकमस्तु न तु
तद्विनाप्रतिबन्धस्य प्रकारत्वं विना कार्य्यानुत्पत्तेः । अत
एव स्तनपानप्रवृत्तावप्युपायेच्छाकारणत्वेन गृहीतस्येष्ट-
साधनताज्ञानस्यापि कल्पनं इष्टानुरोधित्वात् कारणतायाः ।
ननु साधनत्वमिच्छाविरोधि तस्य सिद्धधर्म्मत्वात् इच्छादौ
तत्साध्येष्टज्ञानादिच्छेति चेत् न निर्विशेषितयोः सिद्धत्वा-
सिद्धत्वयोरविरोधेनेच्छासाधनत्वयोरविरोधात् तदा असि-
द्धत्वं सिद्धत्वञ्च नेच्छासाधनत्वयोः प्रयोजकमिति
मया न ज्ञायत एव । ननु तत्साध्येष्टज्ञानात् इच्छादावि-
च्छेति तन्नुक्तं असिद्धावस्थायामिच्छादेरिष्टानुत्पत्तेरवश्य
सिद्धत्वमवगन्तव्यमिच्छाविरोधित्वाच्चासिद्धत्वमिति तत्रापि
विरोधएव इष्टो दृश्यामिदं तथा विना नेच्छान्वयव्यतिरेक
पक्षस्य इष्टसिद्धत्वमादाय इष्टमिच्छसितेषु साध्यत्व-
व्यापकत्वात् । किञ्च चिकीर्षाजन्यकृतिसाध्यं अवच्छो-
रणमिष्टप्रतिपादकं यद्यत्कुर्य्यादिति वाक्यं प्र-
माणं स्यात् विषयाबाधात् । एतेन नवीनमतमपास्तं प-
रस्य हि कृतिसाध्यत्वोद्दनकामनापत्ते इष्टसाधनताज्ञानाभा-
ज्ञानं तथान्यथा कोद्दनकामनापत्ते इष्टसाधनताज्ञानस्य
ज्ञानं न प्रवृत्तिकारणं गौरवात् किन्तु मत्कृतिसाध्य-
त्वे सति मदिष्टसाधनताज्ञानमेव लाघवात् तथा च साध्य-
साधनत्वयोर्न विरोधोऽनागतस्य पाकादेः कृतिसाध्यताज्ञा-
नस्य यथा, तथोपपादितं पुरस्तात् । किञ्च स्वकृतिसाध्यत्वम-
न्तरेणापि स्वकृतिसाध्येष्टसाधनताज्ञानात् स्वकल्पितेच्छादौ,
यौवने कामोद्रेकात् संभोगादौ प्रवृत्तेश्च अदृष्टं प्रव-
र्त्तकम् । वस्तुतस्तु सिद्धविषयककृतिसाध्यताज्ञानात् कथं
"कार्य्यं कृत्वा साधयामीतीच्छा"? सिद्धे इच्छाविरहात् अ-
सिद्धज्ञानाभावात् अथ सिद्धविषयादेव कृतिसाध्यताज्ञाना-
दसिद्धविषया कृतिसाध्यत्वेनेच्छा जायते इच्छाया अ-
सिद्धविषयत्वस्वभावत्वात् । एकप्रकारकत्वेन ज्ञानचिकीर्षयोः
कार्य्यकारणभावोनत्वेकविषयत्वे सति गौरवात् इच्छाया
अनागतविषयत्वात्तस्य ज्ञानानात्तथा कल्पनात् सु-
खादीच्छायामप्येवमिति चेत् न असिद्धविषयेच्छानु-
रोधेनानागतोपायज्ञानस्य दर्शितत्वात् । अस्तु चैवं
तथापि कृतिसाध्यताज्ञाने इष्टसाधनत्वमेव व्यावर्त्तक-
मस्तु स्वपरकीयेष्टसाधनताज्ञानस्य फलकामनाज्ञाना-
पेक्षया लघुत्वात् ज्ञानज्ञानस्य फलकामनाज्ञानस्य हेतुत्वे
मानाभावाच्च"।

सेयमिच्छा अन्तःकरणधर्म्मो नात्मधर्म्मः इति वेदान्तिनः
प्रतिपेदिरे । आत्मनो निर्गुणत्वात् प्रागुक्तया "कामः
सङ्कल्पः इत्यादि श्रुत्या मनोधर्म्मत्वावगमाच्च तथात्वम् ।
यथा च कामादीनां नात्मधर्म्मत्वं तथा शङ्कापूर्व्वकं ह० उ०
भाष्ये वर्णितम् । यथा

"सुखित्वदुःखित्वादिदर्शनादिति चेत् न "न लिप्यते लोक-
दुःखेन बाह्य" इति श्रुतेः । प्रत्यक्षादिविरोधादयुक्तमिति
चेत् न उपाध्यात्मयजनितविशेषविषयत्वात्प्रत्यक्षा-
देः "न दृष्टेर्द्रष्टारं पश्येर्न विज्ञातारमरे केन विजानीया-
दविज्ञातं विज्ञातृ" इत्यादिश्रुतिभ्यो नात्मविषयं विज्ञानम्,
किन्तर्हि बुद्ध्याद्युपाध्यात्मप्रतिच्छायाविषयमेव सुखितो
दुःखितोऽहमित्येवमादिप्रत्यक्षविज्ञानमयमहमिति विषयेण
विषयिणः सामानाधिकरण्योपचारात् "नान्यदतोऽस्ति द्रष्टृ"
इत्यन्यात्मप्रतिषेधाच्च । देहावयवविशेष्यत्वाच्च सुखदुःखयो-
र्विषयधर्म्मत्वम् "आत्मनस्तु कामाय" इत्यात्मार्थत्वश्रुतेरयुक्त-
मिति चेन्न । "यत्र वा अन्यदिव स्यात्" इत्यविद्याविषया-
त्मार्थत्वाभ्युपगमात् "तत्केन कं पश्येत्" "नेह नानास्ति कि-
ञ्चन" "तत्र को मोहः कः शोक" इत्यादि विद्याविषये
तत्प्रतिषेधाच्च नात्मधर्म्मत्वम् । तार्किकसमयविरोधादयुक्तमिति

चैव सुखाद्याश्रयात्मनो दुःखित्वानुपपत्तेः। न हि दुःखेन प्रत्यक्षविषयेणात्मनो विशेष्यत्वं,प्रत्यक्षाविषयत्वात्। आकाशस्य शब्दगुणवत्त्ववदात्मनो दुःखित्वमिति चेन्न एकप्रत्ययविषयत्वानुपपत्तेः। न हि सुखग्राह्येण प्रत्यक्षविषयेण प्रत्ययेन नित्यानुमेयस्यात्मनो विषयीकरणमुपपद्यते। तस्य च विषयीकरणे आत्मन एकत्वाद्विषयाभावप्रसङ्गः। एकस्यैव विषयविषयित्वं दीपवदिति चेन्न युगपदसम्भवादात्मन्यंशानुपपत्तेश्च। एतेन विज्ञानस्य ग्राह्यग्राहकत्वं प्रत्युक्तम्। प्रत्यक्षानुमानविषययोश्च दुःखात्मनोर्गुणगुणित्वेनानुमानम् दुःखस्य नित्यमेव प्रत्यक्षविषयत्वाद्रूपादिसामानाधिकरण्याच्च मनःसंयोगजत्वेऽप्यात्मनि दुःखस्य, सावयवत्वविक्रियावत्त्वानित्यत्वप्रसङ्गात्। न ह्यविकृत्य संयोगि द्रव्यं गुणः कश्चिदुपयन्नपयन् वा दृष्टः क्वचित्। न च निरवयवं विक्रियमाणं दृष्टं क्वचिद् अनित्यगुणाश्रयं वा नित्यम्। न चाकाश आगमवादिभिर्नित्यतयावगम्यते। न चान्यो दृष्टान्तोऽस्ति विक्रियमाणमपि तत्प्रत्ययानिवृत्तेर्नित्यमेवेति चेन्न द्रव्यस्यावयवान्यथात्वव्यतिरेकेण विक्रियानुपपत्तेः। सावयवत्वेऽपि नित्यत्वमिति चेन्न सावयवस्यावयवसंयोगपूर्वकत्वे सति विभागोपपत्तेः। वज्रादिष्वदर्शनान्नेति चेन्नानुमेयत्वात्संयोगपूर्वत्वस्य। तस्मान्नात्मनो दुःखाद्यनित्यगुणाश्रयत्वोपपत्तिः। परस्यादुःखित्वेऽन्यस्य च दुःखिनोऽभावे दुःखोपशमनाय शास्त्रारम्भानर्थक्यमिति चेन्नाविद्याऽध्यारोपितदुःखित्वभ्रमापोहार्थत्वात्"।

यथा च कामस्य बुद्धिधर्मत्वं तथाऽध्यात्मशब्दे ७१८पृष्ठे दर्शिते छ०भा०वाक्ये प्रपञ्चितम्। एवमेव सांख्याःपातञ्जलाश्च ज्ञानादिवत् सुखदुःखेच्छाद्वेषप्रयत्न धर्मा धर्मा अपि बुद्धेरेव धर्मा इत्याहुः।ईश्वरेच्छा तु सत्यसङ्कल्पात्मिका सर्वं जगत् सृष्ट्यादिव्यापारिका।"सोऽकामयत बहु स्यां प्रजायेयेत्यादि" श्रुतिः।"सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः"इति स्मृतिश्च तस्य तत्त्वे प्रमाणम्। सा च नित्येति नैयायिकादयः नित्यत्वाङ्गं न तत्र कारणापेक्षा। व्योमादिवदनित्येति वेदान्तिनः। नित्यत्ववादिमतेऽपि स्वव्यामालोचाद्दृष्टरूपसहकारेणैव तत्तत्कार्य्योत्पत्तिरिति ईश्वर शब्दे वक्ष्यते। मनोधर्मत्ववादिमते मनसस्त्रिगुणात्मकत्वेऽपि रजसएव तत्कारणत्वम्। "काम एष क्रोध एष रजोगुणसमुद्भवः" गीतायां कामस्य रजोगुणकार्य्यत्वोक्तेः। तस्य बुद्धेस्त्रिगुणात्मकत्वेन — रजःकार्य्यकामस्य तत्कार्य्यत्वमेवौचितम्। अतएव इच्छाशक्तिः क्रियाशक्तिज्ञानशक्तिस्वरूपिण्येत्यादौ प्रकृतेरिच्छाशक्त्यादिरूपत्वकथनमपि सङ्गच्छते शक्तिशक्तिमतोरभेदात् प्रकृतिशक्त्याश्च तस्या बुद्धिगुणत्वमवगम्यते। अतएव "या देवी सर्व्वभूतेषु इच्छारूपेण संस्थिता" देवीमा०सर्व्वभूतेषु इच्छारूपेण प्रकृतिस्थितिरुक्ता

ईश्वरोपाधिमायाया इच्छादिमत्त्वेनैवेश्वरस्य सङ्गत्वं मन्तव्यपरोक्षायामुक्तं यथा "नित्यं निर्दोषगन्धं निरतिशय सुखं ब्रह्म चैतन्यमेकं धर्म्मो धर्म्मीति भेदद्वितयमपि पृथग्भूय मायावशेन। धर्म्मस्तत्रानुभूतिः सकलविषयिणी सर्वकार्य्यानुकूला शक्तिरिच्छादिरूपा भवति गुणगुणस्याश्रयत्वेन एव। कर्त्तृत्वं तत्र धर्म्मी कलयति जगतां पञ्चकृत्यादिकत्वं धर्म्मः पुंरूपमाप्ता सकलजगदुपादानभावं बिभर्त्ति। स्त्रीरूपं प्राप्य दिव्या भवति च गृहिणी स्वाश्रयस्यादिकर्त्तुः, प्रोक्तौ धर्म्मप्रभेदावपि निगमविदा धर्म्मिवत् ब्रह्मकोटी" इति तथा च एकमेव ब्रह्मानादिसिद्धया मायया धर्म्मी धर्म्मश्चेति द्विविधमभूदित्यर्थः। तन्त्रोक्ते कामिकायाः २पीठशक्तिभेदे। "इच्छाज्ञानक्रियाश्चैव कामिनी कामदायिनी। रतीरतिप्रिया नन्दा मध्ये चैव मनोन्मनी" तन्त्रसा०कामिकापीठशक्तिकथने।

इच्छाकृत त्रि० इच्छया कृतः। "कामकृते।१ऽधीतिभागी वृद्धिः स्यात्" इत्युक्तातिक्रमेण अधमर्णेन यथेष्टं कृतायां २वृद्धौ स्त्री "वृद्धेर्द्विगुणकृद्धिः प्रतिमासन्तु कालिकी। इच्छाकृता कामकृता कायिका कायकर्म्मणा" व्याख्या० त० कात्यायनवचनेन स्मृतम्। मिताक्षरायां तु नैतद्वचनं दृश्यते। तत्र कारिता इद्धिर्नारदवचनेन दर्शिता "वृद्धिः सा कारिता नाम अधमर्णेन स्वयंकृतेति"

इच्छानिवृत्ति स्त्री ६त०। पित्रादीनां धनादिभोगस्पृहायां परमे। "पितर्य्युपरतस्पृहे इत्यादि" स्मृतेः तादृशस्पृहानिवृत्तौ पित्रादेः स्वत्वहानिः, पुत्रादेः स्वत्वोत्पत्तिश्च। तेन पुत्रादीनां तत्र पैत्रादिधनविभागः।

इच्छावत् त्रि० इच्छाऽस्त्यस्य मतुप् मस्य वः। यवादित्वात् पुंयुक्ते स्त्रियां ङीप्। सा च यवादित्वात्पुंयुक्तायां कामुकायाम् स्त्रियां रमणेच्छायुक्तायां तु कामुकीति भेदः।

इच्छावसु पु० इच्छयैव वसु यस्य। कुबेरे जटा०

इच्छित पु० इच्छा जाताऽस्य तारका० इतच्। इच्छायुक्ते

इच्छु त्रि०इषकति इष—उ नि० इच्छादेशः। इच्छायामित्यर्थे "अस्मैश्चर्म्मणि सुशीतच्छः" "इच्छायामुभयोः" काशिका०१८,५,१९,१९

इज्जल पु० ईज्यते कर्म्मणि–क्विप् इज् अतिशुष्कतया गतं जलमनेन । (हिज्जल) वृक्षे तस्य जलपार्श्वसृष्टदेशजातत्वात् तथात्वम् ।

इज्य पु० इज्याऽस्त्यस्य अर्श० अच् । १वृहस्पतौ "जीवाङ्गिरःसुरेज्यानां चेतायि सुरजादयः" ज्यो०त० "वित्सितेज्यादिवसे" मु० चि० । जीवदेवताके २पुष्यनक्षत्रे च "त्वष्टा वसूज्येन्दुनराज्यमैत्रेत्यादि दीपि० ३गुरौ ४परमेश्वरे ५विष्णौ च । "यज्ञकृज्यो महेज्यश्च" विष्णु०स० । "यष्टव्योऽप्ययमेवेतोज्यः" ये यजन्ति च सर्वाणि दैवतानि पितॄनपि । आत्मानमात्मना नित्यं विष्णुमेव यजन्ति ते ४हरिवंशोक्तेः" भा० ६पूज्यमाने त्रि० । सुरेज्यः

इज्या स्त्री यज–भावे क्यप् स्त्रीत्वात् टाप् । १यज्ञे "सोऽहमिज्याविशुद्धात्मा" । "जगत्प्रकाशं तदशेषमिज्यया" रघुः यजेर्दानाद्यर्थत्वात् २दाने, ३सङ्गमे च । कर्म्मणि क्यप् । ४प्रतिमायाम् ५कुट्टिन्याञ्च । [जूके अमरः ।

इज्याशील पु० इज्या शीलमस्य । सततयजनशीले याय-

इज्वाक पु० अत्रा दीर्घोऽस्यास्य आकम् पृ० । (चिञ्चिड़ि) मत्स्यभेदे त्रिका० २जलदृश्चिके इति केचित् ।

इट गतौ भ्वादि०पर०सक०सेट् । एटति ऐटीत् । इयेट ईटतुः "त्वं तमिटतो रथमिन्द्र प्रावः सुतावतः" ऋ०१०,१७१,१।

इटसून न० इट–क इटं सूनं स्यूनं चि–क्त पृ०यस्य षः । शाखामये कटे । "वैतसे इटसून उत्तरतोऽश्वस्यावद्यन्ति" शत०ब्रा० १२,२,२,१९, "इटसूने शाखामये कटे" भा०

इट्चर पु० इष–संपदा०भावे क्विप् इषा कामेन चरति चर–अच् । गोपतौ (षाँड़) वृषभे

इड् (ल) स्त्री इल–क्विप् वा लस्य डः । १हविषि अन्ने "होता इळितः प्रथमं यतध्यै" ऋ०२,४,२, "इड़ो हवींष्यन्नानि" भा० "इड़स्पतिर्मघवा दस्मवर्चाः" ऋ०६,५८,४, "इड़ः अन्नस्य पतिः" भा० २भूमौ "इन्द्रपानमूर्मिमकृण्वतेड़ः" ऋ०७,४७,१, "इड़इड़ाया भूमेः" भा० ईड्यते ईड–क्विप् इ०। ३स्तवे ४धेन्वां ५प्रजासु दर्शपौर्णमासाङ्गेषु पञ्चसु प्रयाजेषु तृतीये ६प्रयाजे च । प्रयाजाश्च "समिधो यजति तनूनपातं यजति इड़ो यजति बर्हिर्यजति स्वाहाकारं यजतीति" श्रुत्युक्ताः पञ्च । तेषां प्रयाजत्वनिर्वचनपूर्वकं पञ्चानामृतुरूपत्वमुक्तम् यथा "ऋतवो वै प्रयाजाः तस्मात् पञ्च भवन्ति पञ्च ऋतवः" इत्युपक्रम्य "ततो देवा अर्चन्तः श्राम्यन्तश्चेरुस्त एतान् प्रयाजान् ददृशुस्तैरयजन्त ते ऋतून् संवत्सरं प्राजयन्नृतुभ्यः संवत्सरात् सपत्नानन्तरायंस्तस्मात् प्रजया प्रजया ह वै नामैतद् यत् प्रयाजा इति तथो एवैष एतैर्ऋतून् संवत्सरं प्रजयत्यृतुभ्यः संवत्सरात् सपत्नानन्तरेति तस्मात् प्रयाजैर्यजते" इति प्रयाजनिर्वचनेन ऋतुरूपत्वमेषामभिधाय समिदादीनां वसन्तादिरूपत्वमुक्तं तत्रैव यथा "समिधो यजति वसन्तं, समिन्धे स वसन्तः समिद्धोऽन्यानृतून् समिन्धे ऋतवः समिद्धाः प्रजाश्च प्रजनयन्त्योषधीश्च पचन्ति तद्वैव खलु सर्वानृतूनिराहाऽथ वाजयजेत्येवोत्तरान्माहाऽजामितायैजामि ह कुर्याद्यत्तनूनपातं यजेड़ो यजेति ब्रूयात्तस्मादु यज यजेत्येवोत्तरानाह, स वै समिधो यजति । वसन्तो वै समिद्वसन्तमेव तद्देवा अवृञ्जत वसन्तात् सपत्नानन्तरायन् वसन्तं वेव एतद्वृङ्क्ते वसन्तात् सपत्नानन्तरेति तस्मात् समिधो यजति । अथ तनूनपातं यजति । ग्रीष्मो वै तनूनपाद्ग्रीष्मो ह्यासां प्रजानां तनूस्तपति ग्रीष्ममेव तद्देवा अवृञ्जत ग्रीष्मात् सपत्नानन्तरायन् ग्रीष्मं वेव एतद्वृङ्क्ते ग्रीष्मात् सपत्नानन्तरेति तस्मात्तनूनपातं यजति । अथेड़ो यजति । वर्षा वा इड़ इति हि वर्षा इड़ो यदिदं क्षुद्रं सरीसृपं ग्रीष्महेमन्ताभ्यां नित्यक्तं भवति तद्वर्षा ईड़ितमिवान्नमिच्छमानं चरति तस्माद्वर्षा इड़ो, वर्षा एव तद्देवा अवृञ्जत वर्षाभ्यः सपत्नानन्तरायन् वर्षा उ एवैष एतद्वृङ्क्ते वर्षाभ्यः सपत्नानन्तरेति तस्मादिड़ो यजति । अथ बर्हिर्यजति । शरद्वै बर्हिरिति हि शरद्बर्हिर्या इमा ओषधयो ग्रीष्महेमन्ताभ्यां नित्यक्ता भवन्ति ता वर्षा वर्धन्ते ताः शरदि बर्हिषो रूपं प्रस्तीर्णाः शेरे तस्माच्छरद्बर्हिः शरदमेव तद्देवा अवृञ्जत शरदः सपत्नानन्तरायञ्छरदं वेव एतद्वृङ्क्ते शरदः सपत्नानन्तरेति तस्माद्बर्हिर्यजति । अथ स्वाहास्वाहेति यजति । अन्तो वा एष यज्ञस्य यत् स्वाहाकारोऽन्त ऋतूनां हेमन्तो वसन्ताद्धि परार्ध्योऽन्तेनैव तदन्तं देवा अवृञ्जतान्तेनान्तात् सपत्नानन्तरायन्नन्तेनो एवैष एतदन्तं वृङ्क्तेऽन्तेनान्तात् सपत्नानन्तरेति तस्मात् स्वाहास्वाहेति यजति" शत०ब्रा०१,५,२,११। समिदादीनां निरुक्तान्तरं प्रदर्श्य प्राणरूपत्वमिड़ादीनामुक्तं यथा "स वै समिधो यजति । प्राणा वै समिधः प्राणानेवैतत् समिन्धे प्राणैर्ह्ययं पुरुषः समिद्धस्तस्मादभिमृशेति ब्रूयाद्यद्युपतापी स्यात् यद्युष्णः स्यादेव तावच्छंसेत समिद्धो हि स तावद्भवति यद्यु शीतः स्यान्नाशंसेत । तत्प्राणानेवास्मिन्नेतद्दधाति तस्मात् समिधो यजति । अथ तनूनपातं यजति । रेतो वै तनूनपाद्रेत एवैतत्सिञ्चति

"अतीतकालसक्रमभ्युपेतः" रघुः "यद्वेतदा न गणितं तदिहाभ्युपैति" उद्भटः स्वीकारे "अभ्युपेत्य पतत्रूपाम्" स्मृतिः
अव—अवगमे,ज्ञाने, सक० "अवैमि ते सारमतः खलु त्वाम्" कुमा०।अधोगतौ अक०। अनु+अव+सन्ततसम्बन्धे । अन्ववायः । वि+अव+व्यवधाने "गार्हपत्याहवनीयौ न व्यवेयात्" कात्या० १,८,२२ । "नान्तरा यज्ञाङ्गानि व्यवेयात्" श्रुतिः "अनुमत्या व्यवेयात्" स्मृतिः स्त्रीपुंसयोः संभोगार्थव्यापारे व्यवायः। सम्+अव+सम्यक्सम्बन्धे अयुतसिद्धरूपसम्बन्धे । स चावयवावयविनोः, गुणगुणिनोः, क्रियाक्रियावतोः जातिव्यक्त्योश्च सम्बन्धः । समवेतः समवायः । "संयुक्तसमवायतः तत्रापि समवेतानाम्" भाषा० । सम्बन्धमात्रे च "एते ह वै रात्री सर्वा रात्रयः समवयन्ति" शत०ब्रा०११,१,७,४,सांहत्ये,"सेनायां समवेतायां सैन्यासे" अमरः "धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः" गीता ।
आ—आगमने सक० । "पश्चात्तमां समितिमेयाय" "शाश्वयाय" तस्माल्लोकात् पुनरैत्यस्मै लोकाय" बृ० उ० "युनः स्थविर आयाति" मनुः अनु+आ+सम्यग्गमने सक० । अभि+आ+अभ्यागमने आभिमुख्येनागतौ "गङ्गामध्ये हि पतत प्राप्नुयां चिरजीवितम्" भा०अनु० २६अ०। उद्+आ+उद्गमने । उप+आ । समीपागमने । प्रति+आ+प्रत्यागमने "प्रत्यायत्यां रात्रौ" शत०ब्रा०२, २,४,२ । "नेममेते राजनः प्रत्यायन्ति" शत०ब्रा०१४, ८,६,२ ।
उद्—उद्गतौ अक० । "उदेति सविता ताम्रस्ताम्र एवास्तमेति च" सा०द० । उदयः । उत्क्रमणे सक० । उदेति ह वै सर्वेभ्यः पाप्मभ्योय एवं वेद" छा०उ० । अभि+उद्+आभिमुख्येनोद्गतौ "किञ्चिदभ्युदिते रवौ" म०त०घृ०। प्रति+उद् प्रत्युद्यानेन गतौ "प्रत्युदियाय पार्थिवो" कुमा० सम्+उद् सम्यगुदये "यथादित्यः समुद्यन् वै तमः पूर्वं व्यपोहति" भा०व० २०६अ० । "एककार्यं समुद्यन्तौ कृष्णौ युद्धेऽपराजितौ" भा०सभा०१अ० । सांहत्ये च समुदयः
उप+समीपगमने प्राप्तौ च "उपेयुषां मोक्षपथं मनीषिणाम्" माघः "योगी परं स्थानमुपैति दिव्यम्" गीता उपायः
दुर्+दुर्गमे । [ "व्यत्यक्त त्वम्" भट्टिः
निर्—निर्गमने ।"निर्यदन्यविभूषितम्" दुर्गाध्यानम् । निरगा-
परा—प्रेतत्वावप्राप्तौ परेतः । पलायने च "यः परैति स जीवति" प्रतिपत्तौ "नैव श्रेयो धार्तराष्ट्रः परैति" भा०वन० ५अ० ।

परि—व्याप्तौ सक० परीतः "पवित्रं पर्येषि विश्वतः" ऋ० ७, १०६,१४, परिक्रमणे "प्रदक्षिणमग्निं परीत्य" स्मृ० । परिपाट्याम् पर्यायः "जिह्वा पर्येति मे मुखम्" भा० आदि० १५२ अ०। [यन्ति" अथ०१५,१०,८ ।
अनु+परि+परिपाट्या अनुगमने "संवत्सर एतद्दतमोऽनुपरि-
आ+परि अभिमुख्येन व्याप्तौ वि+परि+व्युत्क्रमप्राप्तौ विपर्ययः "विपर्ययन्तौ वा एतावग्निं भवतः" शत० ७,२,१,१५ ।"विपरीतमतोऽन्यथा" ज्योति०। "निमित्तानि च पश्यामि विपरीतानि केशव !" गीता
प्र+परलोकगतौ अक० प्रेतः "प्रेत्य संयान्ति" कठो० अपगतौ च "तस्मात्तदात्मनात् प्रैति रसः" बृ०उ० । प्रकर्षेण गतौ सक० "प्रयान्ति सर्वलोकानि रोमकूपाणि चैव ह" भा०व० १९१ अ०।
अभि+प्र+अभिप्राये "कर्मणा यमभिप्रैति स सम्प्रदानम्" पा०अभिप्रायः "अभिप्रेतार्थसिद्धिमङ्गलम्" रघु० ।
प्रति+प्रतिगमने "शरक्षतोद्वैतवनं प्रतीयुः" "राज्ञः प्रतीयाय गुरोः सकाशम्" रघुः प्रतीयुषा पूर्दहने जनेन" भट्टिः । ज्ञाने प्रत्ययः प्रतीतिः । "उच्चावचा जानपदधर्मा ग्रामधर्माश्च तान् विवाहे प्रतीयात्" आश्व० ग० "सर्वोऽह्मात्मास्मीति प्रत्येति न नाहमस्मीति" "सर्वोलोको नाहमस्मीति प्रतीयात्" शा०भा० "कलहंसमालाः प्रतीयिरे श्रोत्रसुखैर्निनादैः" भट्टिः । विख्यातौ "सोऽयं वटः श्याम इति प्रतीतः" रघुः "तं प्रतीतं स्वधर्मेण" मनुः "चतुर्वर्गफलप्राप्तिर्हि काव्यतः—प्रतीतैव" सा०द० विश्वासे "पतिः प्रतीतः प्रययौ स्वपुरीं प्रियाम्" रघुः "बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः" "बलवदपि दूयमानं प्रत्यापयतीव मां हृदयम्" शकु० "ताः स्वचारित्रमुद्दिश्य प्रत्यायय मैथिली" रघुः।
सम्+प्रति+सम्यग्ज्ञाने निश्चये सम्यग्विश्वासे च। "किं तत्कृतं वेलुपलक्ष्यसंसर्गविकल्पयन्तोऽपि न संप्रतीयुः" भट्टिः ।
वि+विगमे वारणे "पितरः काम" "व्येतु शोकानलोज्वरः" भा० आ०९६अ० "अनुमानं द्विविधं वीतमवीतञ्च" सा०कौ० "वीतशोकभयो विप्रो ब्रह्मलोके महीयते" "नियतो वीतमत्सरः" मनुः । "वीतशोकभयक्रोधः" गीता ।
सम्+सङ्गमे मेलने अक० "आप्यायस्व समेतु ते विश्वतः सोम ! वृष्ण्यम्" ऋ०१,९१,१६,"पार्थिवाः सर्वे समीयुस्तत्र भारत !" भा०आ०१८०अ० "राक्षसौ हरियुग्माभ्यां समराय समीयतुः" "क्रमशो रावसैन्येन समीयुर्भीतुर्वैः सह" रामा०

अभि+वस् आभिमुख्येन सम्यग्गतौ सक० "तं जातमभिव-सन्ति देवाः" ऋच ११,५,२, णिचि अबोधने गमादेशः । अगमयति ते अजीगमत् त बोधने तु प्रत्या(य)यति ते प्रत्यायिपत् त-प्रत्यायियत् त । सनि अबोधने गमादेशः जिगमिषति बोधे तु प्रतीषिषिषति । उपसर्गस्यावर्णात् परस्य गुण-भावेन एत्वं प्राप्तौ वृद्धिरेकादेशः । अवैति अवैमि उपैति ।

इण्ड पुं०न० इदि-रक् पृ० । उखाकर्षणे संदंशाकारे पदार्थे "अथैनमिण्ड्राभ्यां परिगृह्णाति असौ वा आदित्य एषोऽग्निरहोरात्रे इण्डे अमुं तदादित्यमहोरात्राभ्यां परिगृह्णाति तस्मादेषोऽहोरात्राभ्यां परिगृहीतः यद्वे-वैनमिण्ड्राभ्यां परिगृह्णाति असौ वा आदित्य एषो अग्निरिमा उभयलोकाविण्डे अमुं तदादित्यमाभ्यां लोकाभ्यां परिगृह्णाति तस्मादेष आभ्यां लोकाभ्यां परि-गृहीतः परिमण्डले भवतः परिमण्डलौ हीमौ लोकौ मौञ्जे लिष्टतो तस्मो एवोक्तोऽयो अनतिदाहाय" शत० ब्रा० ६,७,१,२५,२६, "परिमण्डलाभ्यामिण्ड्राभ्यामुखां परिगृह्णाति" कात्या० १६, ५,२,२, "उखा याभ्यां गृह्यते तौ इण्ड्रौ" कर्क० ।

इत् त्रि० एति गच्छति इ-क्विप् ।१मत्वरे व्याकरणोक्ते प्रक्रिया-कालोच्चारिते प्रयोगकालेऽस्थायिनि वर्णे वेदे यथा तिप् सिप् इत्यादौ पकारादि ते च "उपदेशेऽजनुनासिक इत्" "हलन्त्यम्" "न विभक्तौ तुस्माः" "आदिर्ञिटुडवः" "षः प्रत्ययस्य" "चुटू" "लशकतद्धिते" पा०सूत्रेण साप-वाद दर्शिताः तस्य लोप" इत्यनेन तस्य प्रयोगेऽदर्शनञ्च विहितम् "आदिरन्त्येन सहेता" पा० २ अनन्तरार्थे ३अवधारणार्थे च अव्य० "यदेदन्ता अदडहन्त पूर्व आदिद्" यजु०१७,२५, "आत् इत् इति च्छेदः इत् एवार्थे" वेददी० "उपोपेन्नु मघवन्! भूय इन्नु" यजु० २,२४, इत् एवार्थे" वेददी० ५इत्थमित्यर्थे च "अस्माद्धिन्वेतानि गहनस्य मतानि" यजु० ३,२०, इदित्यव्ययमि-त्थमित्यर्थे" वेददी०

इत त्रि० इ-क्त ।१गते "वनितानितवा रजनीवधूः" रघुः भावे क्त । २गतौ "तद्दितादितमादयो पदः" शत० ब्रा० ६,२,१,१२ । ३ज्ञाने च न० । "वीतमवीतश्चेति" सां० कौ० ।

इतर त्रि० इना कामेन तीर्यते तॄ-अप् तरति पचाद्यच् वा । १नीचे पामरे "इतरदिव परिभूय ज्ञानसु, अविगणय्य नयःप्रभावम्, उन्मूल्य गाम्भीर्य्यम्, मन्मथेन जङ्गोतत:" काद० । ईयतेऽनेन इतः विशेषस्तं राति रा क । २भेदाश्रये । "इतरतापशतानि यथेच्छया वितर तानि सहे चतुरानन!" उद्भटः । "यत्र हि द्वैतमिव भवति तदितर इतरम् पश्यति" श्रुतिः । "ते यतध्वं परं गत्वा विजयायेतराय वा" भा० आ० १० अ० । वर्णा-श्रमेतराणां नो ब्रूहि धर्मानशेषतः" या० स्मृ० "इतराणि च रत्नानि पेतुर्वानरकोटिषु" "इतरोदहने स्वकर्म्मणाम्" रघुः "तमिमं कुरु दक्षिणेतरम्" कुमा० । अस्य सर्वनाम कार्य्यम् । इतरे इतरस्मै इतरस्मात् इत्यादि । "विजयायेतराय वै इत्यादि छान्दसम् न तत्-कार्य्यम् । वर्णाश्रमेतराणामित्यत्र बहुव्रीहिः तेन न सर्वनामकार्य्यम् । एवं "शरं सव्येतरे भुजे" रघुश्लोकेऽपि बहुव्रीहिः । तसिल् इतरतः । "जन्माद्यस्य यतोऽन्वया दितरतश्चार्थेष्वभिज्ञः स्वराट्" भाग० । थाल् इतरथा "एवं देवलेतरथा मानुषे" शत० ब्रा० ६'८'१,८, इतरेण निर्वृत्तम् संकाशादि० अण् । ऐतरः । इतरनिर्वृत्ते त्रि० इतरस्या अपत्यम् शुभ्रा० ढक् । ऐतरेयः तदपत्ये पुंस्त्री ।

इतरेतर त्रि० इतर+द्वित्वं समासवद्भावश्च । अन्योन्यशब्दार्थे । "स्त्रीनपुंसकयोरुत्तरपदस्याचाविभक्तेराम्भावो वा वक्तव्यः" वार्त्ति० इतरेतराम् इतरेतरं वा इमे ब्राह्मण्यौ कुले वा भोजयतः" सि० कौ० । समासवद्भावात् सर्वनाम्नो पुंभावः इतरेतरेण "द्वन्द्वे टाबभावः क्लीबे चाडिवरुत्स्त्रमोः । समासे चोत्तरपदेऽलुक् चेति सिद्धं बाहुलकान्नयमिलुक्तं वार्त्ते तेन क्लीबे इतरेतरमित्येव । "इतरेषां तु वर्णानामित रेतरकाम्यया" मनुः । "यथा नाभिचरेतां तौ वियुक्ता वितरेतरम्" मनुः । परमतरादिवत् सर्वनामकार्य्यम् । किन्तु नाडुक इति भेदः "व्यूहावुभौ तावितरेतरस्मात्" रघुः

इतरेतरयोगः पु० इतरेतरस्य योगः१ अन्वयः । प्रत्येकप्राधा-न्येन सर्वपामन्वये । तदर्थे हि द्वन्द्वसमास इष्यते धवखदि-रवत् प्रत्येकप्राधान्यात् । धवश्च खदिरश्च इति वाक्ये हि धरखदिरौ इत्यत्र भिनत्तीत्यादि क्रियायां प्रत्येकस्य प्राधा-न्येनैवान्वयः तथा च एकजातीयक्रियान्वयितावच्छेदक विशिष्टे प्रत्येकान्वयबोधकत्वे इतरेतर योगाख्यः द्वन्द्वः संहति-प्राधान्ये तु समाहारद्वन्द्वः इति भेदः । २परस्परसम्बन्धे च ।

इतरेतराश्रय पु० इतरेतरमाश्रयति आ+श्रि-अच् । अन्यो-न्याश्रये तर्कदोषभेदे अन्योन्याश्रय शब्दे २१७पृष्ठे विवृतिः ।

इतरेद्युस् अव्य० इतरस्मिन्नह्नि इतर+एद्युस् । इतर-दिवसे इत्यर्थे

इतश्चेतश्च अव्य० । इतश्च इतश्च इत्यर्थः । अनियतदिग्भागादौ ।

स्नातमात्रे तु ब्राह्मणानपि भोजयेत्। एवं प्रपूजयेन्नित्य सप्तरात्रं दिने दिने। त्रातारमिति मन्त्रोऽयं वासवस्य परः प्रियः। एवं कृत्वा दिशाभागे शक्रोत्थापनमादितः। श्रवणर्क्षयुतायाञ्च द्वादश्यां पार्थिवः स्वयम्। अन्त्यपादे भरण्यास्तु निशि शक्रं विसर्जयेत्। सुप्तेषु सर्वलोकेषु यथा राजा न पश्यति। "साकं सुरासुरगणैः पुरन्दर! शतक्रतो!। उपहारं गृहीत्वेमं महेन्द्रध्वज गम्यताम्" उत्पाते सप्तरात्राणि तथोपप्लवदर्शने। व्यतीते शनिभौमौ च अन्यर्क्षेऽपि विसर्जयेत्। यस्मिन्कस्मिन् दिने चैव सूतकान्ते विसर्जयेत्। तथा रक्षेन्नृपः केतुं न पतेत् स्वकुनिर्यथा। शनैः शनैः पातयेत्तं यथोत्थापनमादितः। विसृष्टं शक्रकेतुं तं बाह्यद्वार तथा निशि। क्षिपेदनेन मन्त्रेण अगाधे सलिले नृपः। "तिष्ठ केतो! महाभाग! यावत्संवत्सरं सखे। भवाय सर्वलोकानामन्तराय-विनाशक!"। उत्थापनेस्तूर्य्यरवैः सर्वलोकस्य वै पुरः। एवं यः कुरुते पूजां वासवस्य महात्मनः। न तस्य राज्ये दुर्भिक्षं मतयो नाप्यधर्मकृत्"। "इन्द्रध्वजसमुत्थानं प्रमादाद्य कृतं यदि। तदा द्वादशमे वर्षे कर्त्तव्यं नान्तरा पुनः" ति०त० भविष्य०। पञ्चमाष्टमदिनयोर्विसर्जने शक्त्यपेक्षया व्यवस्था। इन्द्रकेतुशक्रध्वजादयोऽप्यत्र।

**इन्द्रनक्षत्र** न०। इन्द्रस्वामिकं नक्षत्रम्। १ज्येष्ठानक्षत्रे तस्य तत्स्वामिकत्वात् तथात्वम्। अस्य भागस्य ४९९पृष्ठे नक्षत्रे-श्वरा उक्ताः। इन्द्रनामकं नक्षत्रम्। २फल्गुनीनक्षत्रे च। फल्गुनीनक्षत्रस्य इन्द्रनामकत्वमाह शत०ब्रा० २,१, २,११। यथा "फल्गुनीष्वग्नी आदधीत। एता वा इन्द्र-नक्षत्रं यत्फल्गुन्योऽप्यस्य प्रतिनाम्न्योऽर्जुनोह वै नामेन्द्रो-यदस्य गुह्यं नामार्जुन्यो वै नामैतास्ता एतत् परोक्षमाच-क्षते फल्गुन्य इति कोऽह्येतस्य गुह्यं नाम ग्रहीतुम् इन्द्रो वै यजमानस्तस्य एवैतन्नक्षत्रे अग्नी आधत्ते"

**इन्द्रनेत्र** न० ६त०। १शक्रनेत्रे २सहस्रसंख्यायाञ्च।

**इन्द्रनील** पु० इन्द्र इव नीलः श्यामः। (पाला) इति ख्याते मरकतमणौ" तल्लक्षणञ्च रत्नपरीक्षायाम् "क्षीरमध्ये क्षिपेन्नीलं क्षीरञ्चेन्नीलतां व्रजेत्। इन्द्रनील इति ख्यातः सर्वरत्नोत्तमोत्तमः"। अस्य नीलवर्णत्वं च रघौ गङ्गायमुनासङ्गमे यमुनाप्रवाहस्थाय वर्णितम् यथा "क्वचित् प्रभालेपिभिरिन्द्रनीलैर्मुक्तामयी यष्टिरिवानुविद्धा अन्यत्र माला सितपङ्कजानामिन्दीवरैरुत्खचितान्तरेव" "प्रायेन्द्रनीलं किमुतोन्मयूखम्" रघुः। "एकं मुक्तागुण-मिव भुवः स्थूलमध्येन्द्रनीलम्" "शेषैरिन्द्रनीलैः" मेघदू०। अस्य सिंहलद्वीपसम्भवत्वे महानीलसंज्ञा यथा हि "महा-महानीलशिलारुचः पुरः" माघव्याख्यायां मल्लिनाथेन "सिंहलस्थाकरोद्भूता महानीलास्तु ते स्मृताः" इति अगस्त्यवाक्यं प्रमाणतयोपन्यस्तम्। "वापीष्वन्तर्महानीलवद्-वासु" माघः व्याख्याने तेन तथैवोक्तम्।

**इन्द्रपत्नी** स्त्री ६त०। १पुलोमजायां शच्याम्। "उताहमस्मि-वीरिणीन्द्रपत्नी मरुत् सखा विश्वस्मादिन्द्र उत्तरः" ऋ० १०,८६,९। इन्द्रस्य पतिः पालयित्री 'सपूर्व्वाञ्चेति' पा० ङीप् नुक् च। २इन्द्रपालयित्रीषु इडादिषु तिसृषु देवीषु च "होता यक्षत्तिस्रो देवीर्न भेषजं त्रयस्त्रिधातवोऽपस इडासरस्वती भारती महीः। इन्द्रपत्नीर्हविष्मतीः" यजु० २८,८। "इन्द्रपत्नीः इन्द्रस्य पालयित्र्यः", वेददी० शची तु शुक्लपक्षस्य प्रत्यधिदेवता "शची प्रत्यधिदैवतमिति शुक्ल-ध्यानम्। विवाहादौ पूजनीयषोडशमातृकान्तर्गता च।

**इन्द्रपर्णी** स्त्री इन्द्र इव नीलं पर्णमस्याः जातित्वात् ङीष्। ओषधिभेदे। "काकानुमार्य्यगुरुकोवल्लशारास्वायोत शिवेन्द्रपर्ण्यः" सुश्रु०।

**इन्द्रपर्व्वत** पु० इन्द्रनामकः पर्व्वतः। १महेन्द्रपर्व्वते इन्द्रवर्णः पर्व्वतः। २नीलवर्णे गिरिभेदे "वैदेहस्थस्तु कौन्तेय इन्द्र-पर्व्वतवासिनः। किरातानामधिपतीनजयत् सप्त पाण्डवः" भा०स० २८ अ०।

**इन्द्रपुत्रा** स्त्री इन्द्रः पुत्रो यस्याः। अदित्याम्। तस्या इन्द्र-जननीत्वात् तथात्वम्।

**इन्द्रपुष्पी** स्त्री इन्द्र इव नीलं पुष्पमस्याः जातित्वात् ङीप्। (विषलाङ्गला) लाङ्गलीवृक्षे। "अर्कालर्ककरञ्जद्वयनागदन्ती-मयूरकभार्गीरास्नेन्द्रपुष्पीक्षुद्रश्वेतेत्यादि" सुश्रुतः। वा कपि अतइत्त्वे इन्द्रपुष्पिकाप्यत्र

**इन्द्रपुरोहित** पु० ६त०। सुराचार्य्ये वृहस्पतौ

**इन्द्रप्रमति** पु० ऋग्वेदाध्ययनार्थं व्यासेन शिष्यत्वेन गृहीतस्य पैलस्य ऋषेः शिष्यभेदे। "प्रथमं व्यासशिष्यस्तु पैल ऋग्-वेदपादपम्। इन्द्रप्रमतये प्रादात् विभज्य पञ्च संहिताः" अग्नि पु०। "एकैकां संहितां ब्रह्मन् एकैकस्मै ददौ विभुः। पैलाय संहितामाद्यां बह्वृचाख्यामुवाच ह"। इत्युपक्रम्य "पैलः स्वसंहितामूचे इन्द्रप्रमतये मुनिः" भाग०१२ स्क०६ अ०।

**इन्द्रप्रस्थ** न० इन्द्रस्य इन्द्रस्थानमेरोः प्रस्थ इव (दिल्ली इति) ख्याते पुरे। "इन्द्रप्रस्थगमस्तावत् कारि मा सन्तु चेदयः" माघः। "इन्द्रप्रस्थं वृकप्रस्थं माकन्दं वारणावतम्। इति

मे चतुरोप्यासानृक्सहितेकस्य पञ्चमम्" नैषो० खाण्डव-प्रस्थे युधिष्ठिरेण यदभिनवपुरं निर्म्मितं तदिन्द्रप्रस्थतया विख्यातम्। तदेतत् भारते आ०२०६अ० वर्णितम्। 'प्रतिष्ठध्वं तु तस्मात्त्वं खाण्डवप्रस्थमेव च। प्रतस्थिरे ततो घोरं वनं तन्मनुजर्षभाः। अर्द्धं राज्यस्य सम्प्राप्य खाण्डव-प्रस्थमाविशन्। ततस्ते पाण्डवास्तत्र गत्वा कृष्णपुरो-गमाः। मण्डयाञ्चक्रिरे तद्वै पुरं स्वर्गवदच्युताः। ततः पुण्ये शिवे देशे शान्तिं कृत्वा महारथाः। नगरं माप-यामासुर्द्वैपायनपुरोगमाः। सागरप्रतिरूपाभिः परिखाभिर-लङ्कृतम्। प्राकारेण च सम्पन्नं दिवमावृत्य तिष्ठता। पाण्डुराभ्रप्रकाशेन हिमराशिनिभेन च। शुशुभे तत्पुर-श्रेष्ठं नागैर्भोगवती यथा। द्विपक्षगरुडप्रख्यैर्द्वारैः सौधैश्च शोभितम्। गुप्तमभ्रचयप्रख्यैर्गोपुरैर्मन्दरोपमैः। विविधैरपि निर्विद्धं शस्त्रोपेतैः सुसंवृतैः। शक्तिभिश्चावृतं तद्धि द्विजिह्वैरिव पन्नगैः। तल्पैश्चाभ्यासिकैर्युक्तं शुशुभे योधरक्षितम्। तीक्ष्णाङ्कुशशतघ्नीभिर्यन्त्रजालैश्च शोभि-तम्। विरोचमानं विविधैः पाण्डुरैर्भवनोत्तमैः। तन्नि-पिष्टपसङ्काशमिन्द्रप्रस्थं व्यरोचत। मेघवृन्दमिवाकाशे विद्धं विद्युत्समावृतम्। तत्र रम्ये शिवे देशे कौरवस्य निवेशनम्। शुशुभे धनसम्पूर्णं धनाध्यक्षक्षयोपमम्" "एवं सम्प्राप्य राज्यार्द्धमिन्द्रप्रस्थं तपोधन!" तत्र२०७अ०।

**इन्द्रप्रहरण** न० ६त०। वज्रास्त्रे तच्च दधीचोमुनेरस्थि-निर्म्मितं तत्कथा अशनि शब्दे ४६४पृ० उक्ता।

**इन्द्रभूति** पु० हेमचन्द्रोक्ते गौतमगोत्रजे जिनभेदे।

**इन्द्रभेषज** न० इन्द्रेण प्रकाशितं भेषजम्। शुण्ठ्यां शब्दरत्ना०।

**इन्द्रमख** पु० इन्द्रस्य तत्पूजार्थो मखः। वर्षादौ शक्रतोषार्थे मखभेदे। स च मखः नन्दादिभिः प्रवर्त्तितः कृष्णेन निवर्त्तितश्च तत्र तत्कारणे नन्देन प्रोक्तास्तः भा० १० स्क०२४अ० "पर्जन्यो भगवानिन्द्रो मेघास्तस्यात्ममूर्त्तयः। तेऽभिवर्षन्ति भूतानां प्रीणनं जीवनं पयः। तं तात! वयमन्ये च वार्मुचां पतिमीश्वरम्। द्रव्यैस्तद्रेतसा-सिद्धैर्यजन्ते क्रतुभिर्नराः। तच्छेषेणोपजीवन्ति त्रिवर्गफल-हेतवे। पुंसां पुरुषकाराणां पर्जन्यः फलभावनः" इति नन्देनोक्ते कृष्णेन तन्मखनिवारणेन गोवर्द्धनमखस्य प्रवर्त्तनं कृतम् तदपि तत्रैवोक्तं यथा 'सत्त्वं रजस्तम इति स्थित्युत्पत्त्यन्तहेतवः। रजसोत्पद्यते विश्वमन्योन्यं विविधं जगत्। रजसा चोदिता मेघा वर्षन्त्यम्बूनि सर्वतः प्रजास्तैरेव सिद्ध्यन्ति किं महेन्द्रः करिष्यति न नः पुरो जनपदा न ग्रामा न गृहा वयम्। वनौकसस्तात! नित्यं वनशैलनिवासिनः। तस्माद्गवां ब्राह्मणानामद्रेश्चार-भ्यतां मखः। य इन्द्रयागसम्भारास्तैरयं साध्यतां मखः"। भाग० १०स्क० २४अ०। अधिकं गोवर्द्धनधरशब्दे वक्ष्यते। "मया तेऽकारि मघवन्! मखभङ्गोऽनुगृह्णता। मदनुस्मृतये नित्यं मत्तस्येन्द्रश्रिया भृशमिति" २७अ०।

**इन्द्रमह** पु० इन्द्रस्य सन्तोषार्थो महः। इन्द्रसन्तोषार्थे वर्षादौ कर्त्तव्ये उत्सवभेदे। इन्द्रस्य महोऽत्र। वर्षाशरत्कालयोः। इन्द्रोत्सव शक्रोत्सवादयोऽप्यत्र।

**इन्द्रमहकामुक** पु० इन्द्रमहे वर्षादिकाले कामुकः काम-यिता। कुक्कुरे वर्षादावेव तेषां व्यवायधर्म्मो लोकप्रसिद्धः।

**इन्द्रमार्ग** पु० इन्द्रलोकप्राप्त्यर्थो मार्गः। बदरीपाचनसन्नि-कृष्टस्थे तीर्थभेदे। "बदरीपाचनं गच्छेद्वशिष्ठस्याश्रमं गतः" इत्युपक्रम्य "इन्द्रमार्गं समासाद्य तीर्थसेवी नराधिप!। अहोरात्रोपवासेन शक्रलोके महीयते" भा० व० ८३अ०। तच्च जलमयं तीर्थम् "देविकामिन्द्रमार्गञ्च स्वर्णबिन्दुं विगाह्य च। प्रयागे नैमिषे च इन्द्रमार्गे च तर्पयन्" भा०व०२५अ० तत्र अवगाहनतर्पणोक्तेः।

**इन्द्रयव** न० पु० इन्द्रस्य कुटजवृक्षस्य यवाकृतिबीजत्वात् यव इव बीजम्। कुटजवृक्षस्य यवाकारे तिक्तरसे बीजे स्वनाम-ख्याते। 'ऐन्द्रो यवस्त्रिदोषघ्नः संग्राही कटुशीतलः। ज्वरातिसाररक्तार्शःकृमिवीसर्पकुष्ठहृत्। दीपनो गुद-कीलास्रवातास्रश्लेष्मशूलजित्" भावप्र०।

**इन्द्रलाजी** स्त्री इन्द्रस्य कुटजस्य लाजा इव लाजा यस्या जातत्वात् ङीप्। ओषधिभेदे ततः कुर्वा०ण्य। ऐन्द्रलाज्यस्तदपत्ये त्रि०

**इन्द्रलुप्त** न० इन्द्र इन्द्रवर्णौ लोमः केशो लुप्तोयस्मात्। केश-नाशके (टाक) ख्याते रोगभेदे। तन्निदानादि "रोम-कूपानुगं रक्तं पित्तेन सह मूर्च्छितम्। प्रच्यावयति रोमाणि ततः श्लेष्मा समारुतः। रुणद्धि रोमकूपांस्तु ततोऽन्येषा-मसम्भवः। तदिन्द्रलुप्तं खालित्यं रुह्येति च विभाव्यते" निदा० उक्तम्। निदानटीकाकृता तु इन्द्रलुप्तं श्मश्रुणि भवति। खालित्यं शिरोरुहेष्वेव रुह्या सर्वदेहेति तेषां भेद उक्तः। वा कप्। इन्द्रलुप्तकं तत्रैवार्थे।

**इन्द्रलोक** पु० इन्द्रस्य लोकः भोगभूमिः। अमरावती-नामपुरीयुक्ते स्वर्गस्थानभेदे तत्स्थानममरावतीशब्दे ३२० पृष्ठे उक्तं तत्स्वरूपप्राप्तिकारणादिकमुक्तं काशी०। "लोके-ऽत्र रमते विप्र! शक्रस्याऽस्य पुरी त्वियम्। तपोबलेन महता विहिता विश्वकर्मणा। दिवापि कौमुदी यस्यां

चौषध्यो चोच्चियम् भवेत् । यदा कलानिधिः क्वापि दर्शेऽ-
दृश्यत्वमावहेत् । तदा सर्वे यमी ज्योत्स्नां सौधेष्वेषु
निगूहयेत् । यदच्छभित्तौ चीयन्ते सम्यग्योषिदिहाद्भुता ।
मुग्धा नाशु विवेचितुमपि स्वां चित्रशालिकाम् । हर्म्येषु
नीलमणिभित्तिषु सितेष्वपि निर्भयम् । स्वर्णोद्यानमधाय
तमोऽहःस्वपि तिष्ठति । चन्द्रकान्तशिलाजालस्रुतमाला-
भवं जलम् । तत्र चादाय वधैर्नैकल्पान्यब्जानि जनाः ।
कुविन्दा न च सन्त्यत्र न चात्र पट्टतोहराः । चेलान्यलङ्-
काराश्च यतः कल्पद्रुमार्पणात् । गणका नात्र विद्यन्ते
चिन्ताविद्याविशारदाः । यतश्चिन्तयन्ति सर्वेषां चिन्तां चिन्ता-
मणिद्रुतम् । सूपकारा न सन्त्यत्र रसपाकविचक्षणाः ।
दुग्धे सर्वरसानेका कामधेनुरतोऽनिशम् । कीर्त्तिरत्नैःश्रवा-
यस्य सर्वतो वाजिराजिषु । रत्नभूतैःश्रवाः सोऽत्र ह-
यानां गौरवाधिकः । ऐरावतो दन्तिवरश्चतुर्दन्तोऽत्र
राजते । द्वितीय इव कैलासो जङ्गमः स्फटिकोज्ज्वलः ।
तरुरत्नं पारिजातः स्त्रीरत्नं चोर्वशी त्विह । नन्दनं वन-
रत्नं च रत्नं मन्दाकिनी ह्यपाम् । त्रयस्त्रिंशत् सुराणां या
कोटिः श्रुतिसमीरिता । प्रतीक्षते वासवं सेवार्थं प्रत्यह-
मिह । स्वर्गेष्विन्द्रपदादन्यत्र विशिष्येत किञ्चन । यद्यस्ति
लोक्यामैश्वर्यं न च तुल्यमनेन हि । अश्वमेधशतस्य
मध्ये विनिमयेन यत् । किन्तेन तुल्यमन्यत् स्यात् पवित्र-
मथवा महत् । अर्च्चिष्मती संयमनी पुण्यवत्यलिकावती ।
गन्धवत्यलकैशी च नैतत्तुल्या महर्द्धिभिः । अयमेव मह-
त्त्वाच्चस्त्वयमेव दिवस्पतिः । यतमन्त्वयं देवोनानाम्बे-
ऽमपि नामतः । सर्वापि लोकपाला ये तमेनं समुपासते ।
नारदाद्यैश्च निवरैरयमाशीर्भिरिज्यते । एतदैश्वर्यं च
सर्वेषां लोकानां स्वैर्क्षमिष्यते । पराजयान्महेन्द्रस्य त्रै-
लोक्यं स्यात् पराजितम् । दनुजा मनुजा दैत्यास्तपस्यन्त्य-
नवंशकाः ! गन्धर्वयक्षरक्षांसि ह्याहेन्द्रपदलिप्सवः ।
सगराद्या महीपाला वाजिमेधविधायकाः । शतयज्ञो महा-
बलं यज्ञैश्चर्यं जिहासवः । निष्प्रत्यूहं शतमखं यः
कश्चित् कुरुतेऽवनौ । जितेन्द्रियोऽमरावत्यां स प्राप्नोति
सुखोपजाम् । वाजभाक्शतयता वसन्त्यत्र महीभुजः ।
ज्योतिष्टोमादिभिर्यागैर्यजन्त्यपि ते द्विजाः । तुलापुरु-
षदानादि महादानानि षोडश । ये ददत्यमलात्मा-
नस्ते लभन्तेऽमरावतीम् । अक्लीबवादिनो वीराः संग्रामेऽप-
लायिनः । निष्काम्य वीरशयने तेऽत्र तिष्ठन्ति भूभुजः
लब्धेन्द्रपदा समाख्याता महेन्द्रनगरीस्थितिः । यायजू-
कावधन्यत्र यज्ञविद्याविशारदाः" १० अ० । "अतिथि-
स्त्विन्द्रलोकेशः" इति मनुना अतिथिपरिचर्याभिरपि
तत्प्राप्तिरुक्ता । एवं राजसूययज्ञेनापि तत्प्राप्तिः
भा० स० उक्ता । शक्रलोकादयोऽप्यत्र

**इन्द्रवंशा** स्त्री "स्यादिन्द्रवंशा ततजैरसंयुतैः" वृत्त० र०
उक्ते द्वादशाक्षरपादके वर्णवृत्तभेदे ।

**इन्द्रवज्रा** स्त्री "स्यादिन्द्रवज्रा यदि तौ जगौ गः" वृत्त० र०
उक्ते एकादशाक्षरपादके वर्णवृत्तभेदे ।

**इन्द्रवल्ली** स्त्री इन्द्रप्रिया वल्ली शाक० त० । १ पारिजातलतायाम्
"सोमवल्लीमिन्द्रवल्लीं शमीं विश्वस्य कण्टकान्" सुश्रु० ।
(राखालशसा) २ इन्द्रवारुण्यां लतायाम् इन्द्रवल्लर्यादयोऽत्र ।

**इन्द्रवस्ति** पु० इन्द्रस्यात्मनो वस्तिरिव । २ जङ्घामध्यभागे । "इन्द्र-
वस्तिपरिमाणं पीठकूर्परान्तरायाम [illegible] षोडशाङ्गुलः"
सक्थिमर्माणि । ... कूर्चशिरोगुल्फेन्द्रवस्ति-
जान्वुर्वीलोहिताक्षाणि विटपञ्चेति" विभज्य "पार्ष्णिं
प्रति जङ्घामध्ये इन्द्रवस्तिर्नाम तत्र शोणितक्षयेण मरणम्"
इति च सुश्रु० । अतोऽस्य जीववस्तितुल्यत्वात्तथात्वम् ।

**इन्द्रवारुणी** स्त्री इन्द्रस्यात्मनो वारुणीव प्रिया (राखालशसा)
तिक्तरसायां श्वेतमूलायां पीतपुष्पायां लतायाम् । स्वार्थे
कन् । इन्द्रवारुणिकापि अत्रैवार्थे ।

**इन्द्रवीज** न० इन्द्रस्य कुटजस्य बीजम् । इन्द्रयवे । "बल्ये-
न्द्रबीजं त्रिफलासर्पिर्मांसरसाम्बुभिः" सुश्रु० ।

**इन्द्रवृक्ष** पु० ६त० देवदारुवृक्षे जटाधरः । तस्य इन्द्रध्वजहेतु-
त्वात्तथात्वम् । तस्येन्द्रध्वजसाधनत्वमिन्द्रध्वजशब्दे उक्तम् ।

**इन्द्रवृद्धा** स्त्री "अथातः क्षुद्ररोगान् व्याख्यास्याम इत्यु-
पक्रम्य । "अलजीमिन्द्रवृद्धां चादि विभज्य" । "पद्मप-
कर्णमध्ये पिडकाभिः समाचिताम् । इन्द्रवृद्धां तु तां
विद्याद्वातपित्तोत्थितां भिषक्" सुश्रुतोक्तलक्षणे क्षुद्ररो-
गभेदे । "विद्रधामिन्द्रवृद्धाञ्च गर्दभीं जालगर्दभम् ।
इरिवेल्लिं गन्धनाम्नीं कक्षां विस्फोटकांस्तथा । पित्तजस्य
विसर्पस्य क्रियया साधयेद् भिषक्" इति सुश्रु०

**इन्द्रव्रत** न० इन्द्रस्येव वर्षणे व्रतम् । "वार्षिकांश्चतुरो मासान्
यथेन्द्रोऽप्यभिवर्षति । तथाभिवर्षेत् स्वं राष्ट्रं कामैरिन्द्र-
व्रतं चरन्" इति मनूक्ते प्रजापालने राजोव्रतभेदे ।

**इन्द्रशत्रु** पु० इन्द्रः शत्रुः शातयिता यस्य । वृत्रासुरे । इन्द्रा-
सुरस्य तथात्वमुक्तम् यथा "स त्वष्टा चुक्रोध । कुविन्मेऽनुप-
हूतः सोममभक्षदिति स स्वयमेव यज्ञवेशसं चक्रे स ओदीच-
कलशे शुक्रः परिशिष्ट यो यद् प्रजन्तता यज्ञारेन्द्रशत्रु-

वर्धस्वेति सोऽग्निरेव प्राप्य सम्बभूवान्तरेव सम्बभूवेत्युहैके प्राहुः अग्नीषोमावेवाभि सम्बभूव सर्वाविद्याः सर्वं यशः सर्वमन्नाद्यं सर्वां श्रीम् । स यद्वर्तमानः समभवत् । तस्माद्वृत्रोऽथ यदपात् समभवत् तस्मादहिस्तं दनुश्च दनायुश्च । मातेव च पितेव च परिजगृहतुस्तस्माद्दानव इत्याहुः अथ यदब्रवीदिन्द्रशत्रुर्वर्धस्वेति तस्मादु हैनमिन्द्र एव जघान । अथ यद्ध शश्वदवक्ष्यदिन्द्रस्य शत्रुर्वर्धस्वेति शश्वदु ह स एवेन्द्रमहनिष्यत्" शत० ब्रा० १,६,३,८,९,१०, "इन्द्रशत्रुरित्यत्र पूर्वपदोदात्ततयेन्द्रः शत्रुर्यस्येति बहुव्रीहिसमासं ज्ञात्वा तन्त्रं प्रयुक्तवन्तस्तमिन्द्रो जघान । यद्यसौ अन्त्योदात्तत्वात् तत्पुरुषसमासेन, इन्द्रस्य शत्रुरिति षष्ठीनिर्देशेन वा ब्रूयात्तदा निश्चितमेव स इन्द्रं हन्यात्" इति भा० भा० तथा च षष्ठीतत्पुरुषेऽन्त्योदात्तः स्वरः तथात्वे इन्द्रस्य शत्रुरित्यर्थके भवेत् बहुव्रीहौ तु पूर्वपदस्वरतेति तथा तेन प्रयोगात् तमेव इन्द्रो जघान" अतएव वेदे स्वरहीनतयोच्चारणे तु समानस्यानिष्टं फलं भा० भा० यथोक्तं शिक्षायाम् । "मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्" । तत्कथान्तरानुसारिणी कथा भाग० यथा त्वष्टुः पुत्रस्य विश्वरूपस्य पौरोहित्यकथनपूर्वकं "तस्यासन् विश्वरूपस्य शिरांसि त्रीणि भारत । सोमपीथं सुरापीथमन्नादमिति शुश्रुम । स वै बर्हिषि देवेभ्यो भागं प्रत्यक्षमुच्चकैः । अवदद्यस्य पितरो देवाः सप्रश्रयं नृप ! । स एव हि ददौ भागं परोक्षमसुरान् प्रति । यजमानोऽवहद्भागं मातृस्नेहवशानुगः । तद्देवहेलनं तस्य धर्मालीकं सुरेश्वरः । आलक्ष्य तरसा भीतस्तच्छीर्षाण्यच्छिनद्रुषा । सोमपीथं तु यत्तस्य शिर आसीत् कपिञ्जलः । कलविङ्कः सुरापीथमन्नादं यत् स तित्तिरिः । ब्रह्महत्यामञ्जलिना जग्राह यदपीश्वरः । संवत्सरान्ते तदघं भूतानां स विशुद्धये । भूम्यम्बुद्रुमयोषिद्भ्यश्चतुर्धा व्यभजद्धरिः । भूमिस्तुरीयं जग्राह खातपूरवरेण वै । ईरिणं ब्रह्महत्याया रूपं भूमौ प्रदृश्यते । तुर्यं छेदविरोहेण वरेण जगृहुर्द्रुमाः । तेषां निर्यासरूपेण ब्रह्महत्या प्रदृश्यते । शश्वत्कामवरेणांहस्तुरीयं जगृहुः स्त्रियः । रजोरूपेण तास्वंहो मासि मासि प्रदृश्यते । द्रव्यभूयोवरेणापस्तुरीयं जगृहुर्मलम् । तासु बुद्बुदफेनाभ्यां दृष्टं तद्धरति क्षिपन् । हतपुत्रस्ततस्त्वष्टा जुहावेन्द्राय शत्रवे । इन्द्रशत्रो विवर्धस्व मा चिरं जहि विद्विषम् । अथान्वाहार्यपचनादुत्थितो घोरदर्शनः । कृतान्त इव लोकानां युगान्तसमये यथा । विष्वग्विवर्धमानं तमिषुमात्रं दिने दिने । दग्धशैलप्रतीकाशं सन्ध्याभ्रानीकवर्चसम् । तप्तताम्रशिखाश्मश्रुं मध्याह्नार्कोग्रलोचनम् । देदीप्यमाने त्रिशिखे शूल आरोप्य रोदसी । नृत्यन्तमुन्नदन्तं च चालयन्तं पदा महीम् । दरीगम्भीरवक्त्रेण पिबता च नभस्तलम् । लिहता जिह्वयर्क्षाणि ग्रसता भुवनत्रयम् । महता रौद्रदंष्ट्रेण जृम्भमाणं मुहुर्मुहुः । वित्रस्ता दुद्रुवुर्लोका वीक्ष्य सर्वे दिशो दश । येनावृता इमे लोकास्तपसा त्वाष्ट्रमूर्त्तिना । स वै वृत्र इति प्रोक्तः पापः परमदारुणः भा० ६स्क० ९अ०। ततः "स इन्द्रशत्रुः कुपितो भृशं तदा महेन्द्रवाहं गदयोपविक्ष्य" इति" तयोर्युद्धमभिधाय "भित्त्वा वज्रेण तत्कुक्षिं निष्क्रम्य बलभिद्विभुः । उच्चकर्त्त शिरः शत्रोर्गिरिशृङ्गमिवौजसा" भाग० ६ स्क० १०अ० इन्द्रेण तस्य हननं वर्णितम् ।

**इन्द्रशलभ** पु० इन्द्रजातः वर्षाकालजातः शलभः । इन्द्रगोपे ।

**इन्द्रसारथि** पु० ६त० । इन्द्रस्य सारथौ मातलौ ।

**इन्द्रसावर्णि** पु० चतुर्दशे मनौ । "मनुर्वा इन्द्रसावर्णिश्चतुर्दश एष्यति । उरुगम्भीरबुद्ध्याद्या इन्द्रसावर्णिवीर्यजाः । पवित्राश्चाक्षुषा देवाः शुचिरिन्द्रो भविष्यति । अग्निर्बाहुः शुचिः शुक्रो मागधाद्यास्तपस्विनः । सत्रायणस्य तनयो बृहद्भानुस्तदा हरिः । वितानयिता महाराज ! क्रियातन्तून् वितायिता" भा० ८स्क० १३अ०। हरिवंशे तु "भूत्यां त्वोत्पादितो देव्यां भौत्यो नाम रुचेः सुतः" इति भौत्योत्पत्तिमुक्त्वा "चतुर्दशेऽथ पर्याये भौत्यस्यैवान्तरे मनोः । अग्नीध्रः काश्यपश्चैव पौलस्त्यो मागधस्तथा । भार्गवो ह्यतिबाहुश्च शुचिराङ्गिरसस्तथा । युक्तश्चैव तथात्रेयः शुक्रो वासिष्ठ एव च । अजितः पौलहश्चैव सप्ताः सप्तर्षयश्च ते इति" चोक्ता "देवतानां गणाः प्रोक्ताः पञ्च वै भरतर्षभ । तरङ्गभीरुर्वप्रश्च तरस्वानुग्र एव च । अभिमानी प्रवीणश्च जिष्णुः संक्रन्दनस्तथा । तेजस्वी सबलश्चैव भौत्यस्यैते मनोः सुताः । भौत्यस्यैवाधिकारे तु पूर्णं कल्पस्तु पूर्यते" । अग्निपु० च "मनुश्चतुर्दशो भौत्यः शुचिरिन्द्रो भविष्यति । चाक्षुषाद्याः सुरगणा अग्निबाह्वादयो द्विजाः । चतुर्दशस्य भौत्यस्य पुत्रा उरुमुखा मनोः" इत्युक्तं तेन नामभेदविरोधः कल्पभेदात् समाधेयः ।

**इन्द्रसुत** पु० ६त० । १जयन्ते, २मध्यमपाण्डवे पार्थे, ३अर्जुनवृक्षे, ४वालिनामके वानरे च । इन्द्रसुतादयोऽप्यत्र

**इन्द्रसुरस** पु० इन्द्रः कुटजस्तस्य इव सुरसः पत्ररसः । (निसिन्दा)

सिद्धवारे। अमरे इन्द्रसुरिसेति पाठान्तरे पु०। तत्रैव

**इन्द्रसुरा** स्त्री इन्द्रसालनः सुरेव प्रिया। (राखालसशा) इन्द्र-वारुण्याम् राजनि०"वार्त्ताकुमिन्द्रसुरापटोलेत्यादि" सुश्रु०। "गुडूचीन्द्रसुरा लष्णा कुष्ठवर्गपनागरैः। तैलमेभिः पर्यैः पक्वं सुराज्ञादिरुपाद्‌ तत्" सुश्रु०।

**इन्द्रसूक्त** न० इन्द्रदेवताकं सूक्तम्। ऋग्वेदान्तर्गते सूक्त-भेदे तच्च "इन्द्रं विश्वा अवीवृधन्" इत्यादि एकादशर्चम्। ऋ०१म०११सूक्तम् एतच्च तत्तत्कर्मणि इन्द्रस्तुत्यर्थं प-ठनीयं तथा हारपाठेन तुलादानादौ मण्डपस्य पूर्व दिशि पाठ्यं "शौक्तं पावमानञ्च सोमसूक्तं सुमङ्गलम्। यान्त्व-ध्यायञ्चेन्द्रसूक्तं रक्षोघ्नं चेति बह्वृचौ। पूर्वं द्वारं समा-श्रित्य पठेतामिति निश्चयः" विधानपारि०पु०; तच्च सूक्तं तुलादानादिपद्धतौ ९२१ पृष्ठे ऽस्माभिः प्रदर्शितम्।

**इन्द्रसेन** पु०इन्द्रस्य सेना इव सेना यस्य।१ नृपभेदे स च परि-क्षितः पुत्रभेदः"परिक्षितोऽभवत् पुत्राः सर्वे धर्मार्थकोविदाः। कक्षसेनोग्रसेनौ च चित्रसेनश्च वीर्यवान्। इन्द्रसेनः सुषेणश्च भीमसेनश्च नामतः" भा०आ०९४अ० अयञ्च भविष्यात् परिक्षितः प्राचीनः कुरुवंश्यएव इन्द्राभयन्दे विहृतिः। युधिष्ठिरस्य २ भृत्यभेदे।"इन्द्रसेनादयश्चैव भृत्याः परि चतुर्दश। रथैरनुययुः पौरैः क्षिप्रं आदाय सर्वशः" भा०व०१अ०"इन्द्रसेनो विशोकश्च पुरुर्वाक्र्जुनसारथिः। अद्यादाप्रभृति युक्ताः सन्तु मत्प्रियकारिणः"भा०व०१२अ०

**इन्द्रसेना** स्त्री ६त०। इन्द्रस्य १सेनायाम्। २बल्मलमातरि मौद्गल्यस्य ज्येष्ठपुत्रपत्न्याम्। "मौद्गल्यस्य सुतो ज्येष्ठो ब्रह्मर्षिः सुमहायशाः। इन्द्रसेना यतोगर्भं बध्यश्वं प्रत्य-पद्यत" हरि०३२अ० "नारायणीन्द्रसेना बभूव वध्रा श्विनं सकलसाजमीढ" भा०व०११३अ०।

**इन्द्रसेनानी** पु० इन्द्रसेनां नयति नी-क्विप् ६त०। शक्रस्य सेनापतौ कार्त्तिकेये तत्कथा। कार्त्तिकेन पराजितेनेन्द्रेण कार्त्तिकाय इन्द्रत्वपदं दातुमीहमानेन सह तस्य उक्तिप्रत्युक्ति वर्णनेन तेन तत्सेनापत्यमङ्गीकृतमेतत् भा०व०२२८अ० वर्णितं यथा "शक्रउवाच भवस्वेन्द्रो महाबाहो! सर्वेषां नः सुखावहः। अभिषिच्यस्व चैवाद्य प्राप्तरूपोऽसि सत्तम!। त्वांद्य त्वमेव त्रैलोक्यमव्ययोविजये रतः। अहन्ते किङ्करः शक्रोन ममेन्द्रत्वमीप्सितम्। बलं तवाद्य तं वीर! त्वं देवा-नामरीन् जहि। अवज्ञास्यन्ति मां लोका वीर्येण तव विस्मिताः। इन्द्रत्वं हि स्थितं वीरे! बलहीनं पराजितम्। आवयोश्च मिथोभेदं प्रयतिष्यन्त्यतन्द्रिताः। भेदिते च त्वयि विभो! लोकोद्वैधमुपैष्यति। द्विधाभूतेषु लोकेषु निश्चितेषु वयोस्तदा। विग्रहः संप्रवर्त्तेत भूतभेदान्महाबल!। तत्र त्वं मां रणे तात! यथाश्रद्धं विजेष्यसि। तस्मादिन्द्रो भवानेव भविता मा विचारय। स्कन्द उवाच। त्वमेव राजा भद्रन्ते त्रैलोक्यस्य ममैव च। करोमि किञ्च ते शक्र! शासनं तद्ब्रवीहि मे। इन्द्र उवाच। अहमिन्द्रो भविष्यामि तव वाक्यान्महाबल!। यदि सत्यमिदं वाक्यं निश्चयाद्भाषितं त्वया। यदि वा शासनं स्कन्द! कर्त्तुमि-च्छसि मे शृणु। अभिषिच्यस्व देवानां सेनापत्ये महाबल!। स्कन्द उवाच। दानवानां विनाशाय देवानामर्थसिद्धये। सेनापत्ये ऽभिषिञ्च माम्"। भा०व०२२८अ० शक्रसेनापतिशक्रसेनाधि-पादयोऽप्यत्र। "शक्रसेनापतिः स्कन्दः" पु०

**इन्द्रस्तुत्** पु० इन्द्रः स्तूयते ऽत्र। इन्द्रस्तुत्यधिकरणे उक्थ्य यज्ञे द्वितीयाहे "इन्द्रस्तुदुक्थ्यो द्वितीयमहर्भवति। इन्द्रोवै सर्वे देवाः सर्वेषां देवानामाप्त्यै तत्सैन्द्रायङ्गा भवन्त्यैन्द्र्यः पुरोरुचः सर्वमैन्द्रमसदिति" शत०,१२,७, १,४, अयमुक्थ्यसाध्यः तदुपक्रमएव कात्या०२१,१,४,। "अथ उक्थ्या ग्निष्टुदिन्द्रस्तुत् सूर्य्य स्तुत्" इत्यभिधानात्।

**इन्द्रस्तोम** पु० अतिरात्राङ्गे यागभेदे स च कात्या० २४ ४,६,। अतिरात्रोपक्रमेषु "इन्द्रस्तोमो विश्वजिता" विश्वजितः स्थाने इन्द्रस्तोमः कार्य्यः" कर्क० । पूर्वोक्तसूत्रपक्रम्य तत्प्रकारादि तत्र दर्शितम्। अयञ्च राज्ञा कार्य्यः"इन्द्रस्तोमो राजयज्ञः" "सहस्रं दक्षिणा"कात्या० २२,११,१५,१६, स च उक्थ्यसाध्यः "उक्थ्यः" कात्या० १२,११,१७ उक्तेः।

**इन्द्रह्** स्त्री इन्द्रः हूयतेऽनया ह्वे-क्विप् ६त०। यज्ञाङ्गाम साधने ऋग्भेदे। कर्त्तरि क्विप्। २तदाह्वानकर्त्तरि ऋषिभेदे च। ततो गर्गा० अपत्ये यञ्। ऐन्द्रह्व्यस्तदपत्ये पुंस्त्री।

**इन्द्रा** स्त्री इदि-रन्। १फणिज्झकवृक्षे (काठाजमीर) मेदिनिः (राखालशसा) २इन्द्रवारुण्याम्। राजनि० ३भव्याम् शब्दर०।

**इन्द्राग्नि** पु० द्वि०व०। इन्द्रश्चाग्निश्च देवताद्व०। यज्ञाम्बौ-भिलितयोर्देवयोः। "इन्द्राग्नी यत्र हूयेते" म०त० स्मृतिः "पुरोहितकामस्येन्द्राग्नोः स्तोमः" कात्या०२२, ११,२०,२१ उक्तः। तत्र स्तोमे पुरोहितस्य राज्ञो वा सह वाऽधिकारः तत्र ब्राह्मणस्य दक्षिणा चतुर्विंशतर्गावः राज्ञः अष्टचत्वारिंशद्गावः" कर्क० तौ देवते अस्य अण्। ऐन्द्राग्नं तद्देवताके हविषि यज्ञे च। इन्द्रस्य पर्जन्य-

स्याग्निः। मेघभवे विद्युदग्न्यादौ पु०। २इन्द्राग्निधूमः।

**इन्द्राग्निधूम** पु० इन्द्राग्नेः पर्ज्जन्याग्नेर्धूम इव। हिमे धूमस्य यथाऽग्निप्रभवत्वम् तथा अधस्तनहिमस्य पर्ज्जन्याग्निसम्पर्कादेव जायमानत्वात् तथात्वम्।

**इन्द्राणी** स्त्री० इन्द्रस्य पत्नी—ङीप् आनुक् च। १इन्द्रपत्न्यां शच्याम्। "अदित्यै रास्नासीन्द्राण्या उष्णीषः" यजु० ३८.२। "नैवेन्द्राणी न रुद्राणी न वरुणानी न रोहिणी" भट्टिः। "यथेन्द्राणी हरिहये स्वाहा चैव विभावसौ" भा० आ० १९८ अ०। "आजगाम शचीन्द्राणी भक्तः सुरनरोत्तमः" भा० व० ४१अ०। इन्द्रं परमैश्वर्य्यमानयति आ+नी—बा० ड गौ० ङीप्। "ऐश्वर्य्यं परमं यस्मा यसौ चैव सुराधुरः। इदि च परमैश्वर्य्ये इन्द्राणी तेन वा स्मृता" इति देवीपु० उक्तनिरुक्तिर्वा। २दुर्गाशक्तिभेदे। "ब्रह्माणीन्द्राणि! रुद्राणि! भूतभव्ये! यशस्विनि! त्राहि मां सर्वदुःखेभ्यो नारायणि! नमोऽस्तु ते" हरिवं० १७८अ०। "सा च अष्टमातृकान्तर्गता ऐन्द्रीत्यपरपर्य्याया तस्याश्च इन्द्रस्वरूपानुकारित्वादपि तथात्वम्। इन्द्रश्च आनयति जीवयति रोगोपशमनेन आ+नी—ड पूर्वपदा० णत्वम्। ३स्थूलैलायां राजनि०। ४स्त्रीणां करणे ५नीलसिन्दुवारवृक्षे (शोभाल) मेदि०। (निसिन्दा) ६वृक्षे अमरः, स्वार्थे कन्। इन्द्राणिकाप्युक्तार्थेषु।

**इन्द्रादृश** पु०। इन्द्रस्येवादर्शनमस्य आ+दृश—टक् ६त०। इन्द्रगोपे कीटे ततः ताला० विकारे अञ्। ऐन्द्रादृश०। तद्विकारे त्रि०।

**इन्द्रानुज** पु० ६त०। १वामने स हि अदित्यामिन्द्रजननोत्तरं कश्यपेनोत्पादितः तदनन्तरमुक्तो २ नारायणे च "इन्द्रावरजानुचरभूपतयोऽभ्यवाहतुः" माघः। इन्द्रावरजादयोऽप्यत्र।

**इन्द्राभ** पु० कुरुवंश्ये धृतराष्ट्रस्य पुत्रभेदे अयं धृतराष्ट्रः आन्विकेयादन्यः तथा हि "ततः संवरणात् सौरी सुषुवे तनयं कुरुम्" इत्युपक्रम्य तस्य "अविक्षितमभिष्वन्तमित्यादिना" पञ्च अविक्षिदादीन् सुतानुक्त्वा "अविक्षितः परिक्षित्तु" इत्यादिना तत्रापि परिक्षिदादीनष्टौ सुतानुक्त्वा "जनमेजयस्य तनया भुवि ख्याता महाबलाः। धृतराष्ट्रः प्रथमजः पाण्डुर्वाह्लीक एव च। निषधश्च महातेजास्तथा जाम्बूनदो बली" इत्यादिना जनमेजयस्याष्टौ पुत्रानुक्त्वा धृतराष्ट्रोऽथ राजासीत् तस्य पुत्रोऽथ कुण्डिकः हस्ती वितर्कः क्राथश्च कुण्डिनश्चापि पञ्चमः। हविश्रवास्तथेन्द्राभः

भूमन्युश्चापराजितः" इति भा० आ० ९४अ० उक्तः।

**इन्द्रायुध** न० ६त०। १शक्रस्यास्त्रे वज्रे "सनादं मेघनादस्य धनुश्चेन्द्रायुधप्रभम्" रघुः। इन्द्रे तदधिष्ठितमेघे आयुधमिव। सूर्य्यकिरणसंपर्कात् मेघे जायमाने २धनुराकारे पदार्थभेदे तल्लक्षणाद्युक्तं वृ०स० "सूर्य्यस्य विविधवर्णाः पवनेन विघट्टिताः कराः साभ्रे। वियति धनुःसंस्थाना ये दृश्यन्ते तदिन्द्रधनुः। केचिदनन्तकुलोरगनिःश्वासोद्भूतमाहुराचार्य्याः। तद्यायिनां नृपाणामभिमुखमजयावहं भवति। अच्छिन्नमवनिगाढं द्युतिमत् स्निग्धं घनं विविधवर्णम्। द्विरुदितमनुलोमं च प्रशस्तमम्बः प्रयच्छति च। विदिगुद्भूतं दिक्स्वामिनाशनं व्यभ्रजं मरककारि। पाटलपीतकनीलैः शस्त्राग्निक्षुत्कृता दोषाः। जलमध्येऽनावृष्टिर्भुवि सस्यवधस्तरौ स्थिते व्याधिः। वल्मीके शस्त्रभयं निशि सचिववधाय धनुरैन्द्रम्। वृष्टिं करोत्यवृष्ट्यां वृष्टिं वृष्ट्यां निवारयत्यैन्द्र्याम्। पश्चात् सदैव वृष्टिं कुलिशभृतश्चापमाचष्टे। चापं मघोनः कुरुते निशायाम् आखण्डलायां दिशि भूपपीडाम्। याम्यापरोदक्प्रभवं निहन्यात् सेनापतिं नायकमन्त्रिणौ च। निशि सुरचापं सितवर्णाभं जनयति पीडां द्विजपूर्व्वाणाम्। भवति च यस्यां दिशि तद्देश्यं नरपतिमुख्यं न चिराद्धन्यात्"। "न दिवेन्द्रायुधं दृष्ट्वा कस्यचिद्दर्शयेद्बुधः" मनुः "इन्द्रायुधद्योतिततोरणाङ्कम्" रघुः। ततः तालादि० विकारे अञ्। ऐन्द्रायुधस्तद्विकारे त्रि०।

**इन्द्रारि** पु० ६त०। असुरे।

**इन्द्रालिश** पु० इन्द्रमिन्द्रधनुरालिशति लिश—तीक्ष्णे ग्र—क; इन्द्रगोपे कीटभेदे तस्य विकारः ताला० अञ्। ऐन्द्रालिशस्तद्विकारे त्रि०।

**इन्द्रावसान** पु० इन्द्रस्य पर्जन्यस्यावसानमत्र। मरुदेशे। ततः उत्सादि० भवार्थे अञ्। ऐन्द्रावसानः मरुभवे त्रि०।

**इन्द्राशन** पु० इन्द्राय ऐश्वर्य्याय अश्यते भुज्यते अश—कर्म्मणि ल्युट्। (सिद्धि) १भङ्गायाम् शब्दर०। तत्सेवने हि राज्यमपि तुच्छं भवतीति तस्यास्तथात्वम्। इन्द्रः इन्द्रधनुरिव अश्नुते अर्द्धरक्तवर्णकत्वात्। (कुँच) गुञ्जावृक्षे हारा०।

**इन्द्रासन** पु० इन्द्र आत्मा अस्यते विक्षिप्यतेऽनेन अस—क्षेपे करणे ल्युट्। (सिद्धि) १संविदाख्ये तत्सेवने हि आत्मनो विक्षिप्तत्वात्तस्य तथात्वम्। पञ्चमात्रिकस्य प्रस्तारे आदि लघुके मध्यगुरुद्वयात्मके २ प्रथमे भेदे न०।

**इन्द्रिय** न० इन्द्रस्य आत्मनो लिङ्गं इन्द्र+घ। पाणि-

क्रियासाधने १ चक्षुरादौ २ हस्तादौ च। "इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा" पा० तस्य नेकाविधार्थकता दर्शिता इतिशब्दः प्रकारार्थे इन्द्रेण दुर्जयमिन्द्रियमित्यपि" सि० कौ०। अत्र सूत्रे इन्द्रेण परमात्मना दृष्टमित्युक्तिरपि इन्द्रियस्य चक्षुरादीनां प्रत्यक्षागोचरतां निरस्यति। यद्वा इन्द्रेणात्मना दृष्टमात्मत्वेनाभिमतं काणोऽहं बधिरोऽहमित्याद्यभिमतम्। "एतस्माज्जायते प्राणो मनः सर्व्वेन्द्रियाणि चेति" श्रुतेः इन्द्रियस्य ईश्वरसृष्टत्वम्। इन्द्रदत्तमिति इन्द्र ऐश्वर्य्यं दत्तोऽर्थे सत्कार्य्ये हि तेषामैश्वर्य्यमीश्वरेण दत्तम् अतएव तानि बलादिव गृहीत्वा विषयेषु प्राणिनं तत्तद्विषयग्रहणाय प्रवर्त्तयन्ति। पश्यति ह्यैश्वर्य्ये न तद् सम्भवति। चक्षुरादीनामात्मानुमापकत्वञ्चेत्थम्। करणव्यापारः सकर्तृकः करणव्यापारत्वात् छिदिक्रियायां वास्यादिव्यापारवदिति करणव्यापारेण कर्त्तुरनुगमकत्वे तत्साधनत्वात् ज्ञानक्रियाकरणमपि सकर्त्तृकं करणत्वादिति चक्षुरादिना ज्ञानसाधनेनात्मनोऽनुमानम्। तथा इन्द्रियस्याप्रत्यक्षत्वेऽपि ज्ञानक्रिया सकरणिका क्रियात्वात् छिदिक्रियावत् इत्यनुमानम् तत्सत्त्वे प्रमाणम्। तत्तन्मतभेदेन इन्द्रियस्य भौतिकत्वाभौतिकत्वसर्व्वगतत्वासर्व्वगतत्वप्राप्यकारित्वाप्राप्यकारित्वादिकम् आत्मशब्दे ६६५ पृष्ठे प्रपञ्चेन परीक्षितम्। इन्द्रियञ्च द्विविधं ज्ञानकर्म्मेन्द्रियभेदात् तत्र श्रोत्रादीनि ज्ञानेन्द्रियाणि हस्तादीनि कर्मेन्द्रियाणि। "श्रोत्रं त्वक्चक्षुषी जिह्वा नासिका चैव पञ्चमी। पायूपस्थं हस्तपादं वाक् चैव दशमी स्मृता" मनुः। "नासिकालोचने जिह्वा त्वक् श्रोत्रं चेन्द्रियाणि च। हस्तौ पायुरुपस्थश्च वाक्पादौ च दशैव तु" शारदा०। "बुद्धीन्द्रियाणि श्रोत्रघ्राणरसनत्वगाख्यानि। वाक्पाणिपादपायूपस्थानि कर्म्मेन्द्रियाण्याहुः" सां० का०। एतानि च बाह्येन्द्रियाणि। "उभयात्मकमत्र मनः संकल्पकमिन्द्रियञ्च साधर्म्यात्" सा०का० मनस्तूभयविधकरणोपकारित्वात् करणम्। तच्च ज्ञानकर्म्मव्यापारसामान्ये कारणमपि न तत्र करणम् असाधारणकारणस्यैव करणत्वात् रूपादिज्ञाने चक्षुरादीनामिव तत्र असाधारणव्यापारविशेषाभावात् किन्तु सुखाद्युपलब्धौ असाधारण्यात् तत्रैवास्य करणत्वमिति नैयायिकादयः। वेदान्तिनस्तु मनसोनेन्द्रियत्वमङ्गीकुर्व्वन्ति तच्च आत्मशब्दे दर्शितम्। अतएव "पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम्। अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनमिति" मनोबुद्ध्योरिन्द्रियात् पृथग् निर्देशः। सांख्यमते "सात्त्विक एकादशकः प्रवर्त्तते वैकृतादहङ्कारात्। भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम्" सां०का० रजोगुणोपष्टब्धसात्त्विकादेवाहङ्कारात् एकादशेन्द्रियोत्पत्तिरुक्ता तेनाहङ्कारिकाणीन्द्रियाणि। "घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः" गो०सू० भौतिकानीति नैयायिकाः। "एतस्माज्जायते प्राणः मनः सर्व्वेन्द्रियाणि चेति" श्रुतेः आत्मोपादानानीति वेदान्तिनः। अत्र इन्द्रियेभ्यः मनसः पृथग्निर्देशादपि मनसोनेन्द्रियत्वम् अतएव कठोपनिषदि गीतायाञ्च "इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः" "इन्द्रियाणि हयानाहुर्मनः प्रग्रहमेव चेति" च इन्द्रियमनसोर्भेदनिर्देशः"। यथा च तदुत्पत्तिः तथा पञ्चदश्यां दर्शितम् यथा। "तमःप्रधानप्रकृतेस्तद्भोगायेश्वरेच्छया। वियत्पवनतेजोऽम्बुभुवो भूतानि जज्ञिरे। सत्त्वांशैः पञ्चभिस्तेषां क्रमाद्धीन्द्रियपञ्चकम्। श्रोत्रत्वगक्षिरसनघ्राणाख्यमुपजायते। तैरन्तःकरणं सर्वैर्वृत्तिभेदेन तद् द्विधा। मनोविमर्शरूपं स्याद् बुद्धिः स्यान्निश्चयात्मिका। रजोंशैः पञ्चभिस्तेषां क्रमात् कर्म्मेन्द्रियाणि तु। वाक्पाणिपादपायूपस्थाभिधानानि जज्ञिरे" १ दीपे। तेषां स्थानकार्य्यादिकमुक्तं तत्रैव २ दीपे "श्रोत्रं त्वक्चक्षुषी जिह्वा घ्राणं चेन्द्रियपञ्चकम्। कर्णादिगोलकस्थं तत् प्राप्नं धावेद्बहिर्मुखम्। कदाचित् पिहिते कर्णे श्रूयते शब्द आन्तरः। प्राणवायौ जाठराग्नौ जलपानेऽन्नभक्षणे। व्यज्यन्ते ह्यान्तराः स्पर्शा मीलने चान्तरं तमः। उद्गारे रसगन्धौ चेत्यक्षाणामान्तरग्रहः। पञ्चोक्त्यादानगमनविसर्गानन्दकाः क्रियाः। कृषिवाणिज्यसेवाद्याः पञ्चस्वन्तर्भवन्ति हि। वाक्पाणिपादपायूपस्थं कर्म्मेन्द्रियपञ्चकम्। मनो दशेन्द्रियाध्यक्षं हृत्पद्मगोलकस्थितम्। तच्चान्तःकरणं बाह्येष्वस्वातन्त्र्यं विनेन्द्रियैः। अक्षेष्वर्पितेष्वेव गुणदोषविचारकम्। सत्त्वं रजस्तमश्चास्य गुणा, विक्रियते हि तैः। वैराग्यं क्षान्तिरौदार्य्यमित्याद्याः सत्त्वसम्भवाः। कामक्रोधौ लोभमोहावित्याद्या रजउत्थिताः। आलस्यभ्रान्तितन्द्राद्या विकारास्तमउत्थिताः। सात्त्विकैः पुण्यनिष्पत्तिः पापोत्पत्तिश्च राजसैः। तामसैर्नोभयं किन्तु वृथायुःक्षपणं भवेत्"। तत्रेन्द्रियाणां कार्य्यभेदा अपि सां०का० दर्शिताः यथा 'शब्दादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः। वचनादानविहरणोत्

स्पर्शानन्त्राय पञ्चानाम्''। आदिपदात् स्पर्शरूपरसगन्धा-
नां ग्रहणम् तथा च श्रोत्रस्य शब्दग्रहणम्, त्वचः स्पर्श-
ग्रहणम्, चक्षुषो रूपग्रहणम्। जिह्वाया रसग्रहणम्।
घ्राणस्य गन्धग्रहणमसाधारणं कार्य्यं भवति। एवं वागा-
दीनां वचनादिकर्माण्युक्तानि। "अन्तःकरणं त्रिविधं दशधा
बाह्यं त्रयस्य विषयाख्यम्। साम्प्रतकालं बाह्यं, त्रि-
कालमाभ्यन्तरं करणम्" सां॰ का॰। "अन्तःकरणं
त्रिविधं बुद्धिरहङ्कारो मन इति। शरीराभ्यन्तरवर्त्ति-
त्वादन्तःकरणम्। दशधा बाह्यमिन्द्रियं त्रयस्यान्तःकरणस्य
विषयाख्यं विषयमाख्याति विषयसंकल्पाभिमानाध्यव-
सायेषु कर्त्तव्येषु द्वारीभवति। तत्र बुद्धीन्द्रियाण्यालो-
चनेन, कर्म्मेन्द्रियाणि तु यथास्वं व्यापारेण" त॰कौ॰।
"विषयाणां ग्रहीतॄणि शनैः पञ्चेन्द्रियाणि च" मनुः।
"शौचमिन्द्रियनिग्रहः" मनुः। "इन्द्रियस्येन्द्रियस्यार्थे
रागद्वेषौ व्यवस्थितौ" "इन्द्रियाणि प्रमाथीनि" गीता॰।
षड् बाह्यानि ज्ञानेन्द्रियाणीति मनुष्याद्यभिप्रायम् क्वचित्
जीवे अदृष्टवशात् ततो न्यूनताऽपि। यथा घुणानाम्
स्पर्शसाधनत्वगिन्द्रियमात्रम् शङ्खशुक्त्यादीनाम् त्वग्जिह्वे
द्वे इन्द्रिये गण्डोलकादीनां त्रीणीन्द्रियाणि। सर्पादीनां
चत्वारीन्द्रियाणि तेषां श्रोत्राभावात् कुम्भीरस्य च चत्वारि
तस्य जिह्वाभावात् इत्यवधेयम्। एतेषाञ्च जीवानां लिङ्ग-
शरीरसत्त्वेऽपि तत्तद्गोलकस्थानशून्यत्वाच्च तत्तत्कार्य्यानि-
र्वृत्तिः। बौद्धमते गोलकान्येवेन्द्रियाणि। तन्मतं विव-
रणोपन्यासे दूषितं तत्र ९९९६पृ॰ दर्शितम्। २रेतसि
३वीर्य्ये च। "इन्द्रियकामस्य" श्रुतिः "समावदिन्द्रिया
भवन्ति" ताण्ड्य॰ "समानसामर्थ्याः" भा॰

**इन्द्रियगोचर** पु॰ इन्द्रियस्य गोचरः विषयः। शब्दादिषु
विषयेषु ते हि प्रतिनियतमेकैकस्येन्द्रियस्य ग्राह्या यथा
श्रोत्रस्य ग्राह्यः शब्दः, त्वगिन्द्रियस्य स्पर्शस्तद्विशिष्टद्रव्यञ्च,
चक्षुषो रूपं तदाश्रयद्रव्यञ्च, रसनायाः रसः, घ्राणस्य गन्ध
इत्यादि। एवमन्यान्यपि न्यायादिमते तत्तदिन्द्रियग्राह्या-
ण्युक्तानि यथा "घ्राणस्य गोचरो गन्धो गन्धत्वादिरपि
स्मृतः। तथा रसो रसज्ञायास्तथा शब्दोऽपि च श्रुतेः"।
आदिपदात् सुरभिगन्धत्वयोर्ग्रहणम्। तथा रसत्वमा-
धुर्य्यादिसहितः। एवं शब्दत्वतारत्वमन्द्रत्वादिसहितः
"उद्भूतरूपं नयनस्य गोचरो द्रव्याणि तद्वन्ति पृथक्त्व
संख्ये। विभागसंयोगपरापरत्वस्नेहद्रवत्वं परिमाणयुक्त-
म्। क्रियां जातिं योग्यवृत्तिं समवायं च तादृशम्। गृ-
ह्णाति चक्षुः, सम्बन्धादालोकोद्भूतरूपयोः। उद्भूतस्पर्श-
वद्द्रव्यं गोचरः सोऽपि च त्वचः। रूपान्यच्च त्वचो योग्यं
रूपमत्रापि कारणम्" भाषा॰ सोऽपि उद्भूतस्पर्शो-
ऽपि चकारात् तद्वृत्तिस्पर्शत्वमृदुत्वकठिनत्वादि ग्राह्यम्।
एते च बाह्येन्द्रियाणां विषयाः। तेषां मते मनस
इन्द्रियत्वात् तद्ग्राह्याण्यप्युक्तानि यथा "मनोग्राह्यं सुखं
दुःखमिच्छा द्वेषो मतिः कृतिः" एवं सुखत्वदुःखत्वादिकमपि

**इन्द्रियग्राम** पु॰ ६त॰। इन्द्रियसमुदाये "बलवानिन्द्रियग्रामो
विद्वांसमपि कर्षति" मनुः। इन्द्रियवर्गादयोऽप्यत्र। "निर्वि-
कार मधुनीन्द्रियवर्गः" माघः।

**इन्द्रियज** त्रि॰ इन्द्रियाज्जायते जन–ड ५त॰। इन्द्रियसन्नि-
कर्षजाते प्रत्यक्षे। "तदिन्द्रियजतद्धर्म्मबोधसामग्र्यपेक्षते"
भाषा॰। इन्द्रियजातादयोऽप्यत्र इन्द्रियाणि च विषय
सन्निकर्षद्वारा ज्ञाने करणानि विषयसन्निकर्षश्च तत्र व्या-
पारः व्यापारेणैव तेषां जनकत्वात् ज्ञानानां तज्जन्यत्वम्।

**इन्द्रियज्ञान** न॰ इन्द्रियेण जनितं ज्ञानम्। प्रत्यक्षे ज्ञाने।

**इन्द्रियनिग्रह** पु॰ इन्द्रियाणां निग्रहः यथेष्टं प्रवृत्तानां स्वस्व-
विषयेभ्यः निवर्त्तनेन निरोधः। इन्द्रियाणां यथेष्टं प्रवृ-
त्तानां स्वस्वविषयेषु १प्रसक्तिनिवारणे। स च सर्व्ववर्णसाधारण
धर्म्मः "धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।
धीर्विद्या सत्यमक्रोधो दशकं धर्म्मलक्षणम्" मनुः।
"इन्द्रियनिग्रहः अप्रतिषिद्धेऽपि विषयेऽनतिप्रसङ्गः"
एका॰ त॰ रघु॰। २योगसाधनाङ्गे श्रोत्रादीनां
ज्ञानेन्द्रियाणां वागादीनां च कर्म्मेन्द्रियाणां स्वस्व
व्यापारेषु अनियोजनरूपे रोधने च। सर्वेषामनिरोधे
योगसिद्ध्यभावोभङ्ग्या गीतायामुक्तः"। "इन्द्रियाणान्तु
सर्व्वेषां यद्येकं क्षरतीन्द्रियम्। तदस्य हरति प्रज्ञां दृतेः
पात्रादिवोदकम्" मनसोनिग्रहादेवान्येषां निग्रहो भवति
नान्यथा "इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते। त-
दस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि" गीतायां तथोक्तेः।
मनोनिग्रहोपायश्च "असंशयं महाबाहो! मनोदुर्निग्रहं
चलम्। अभ्यासेन तु कौन्तेय! वैराग्येण च गृह्यते" गी-
तोक्तेः अभ्यासवैराग्यरूपः। यथेच्छमिन्द्रियप्रसक्ते पाप-
मप्युक्तम् "विहितस्याननुष्ठानात् निन्दितस्य च सेवनात्।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति" या॰ स्मृ॰।
इन्द्रियजयोऽप्यत्र इन्द्रियजये च शौचमेव हेतुः। यथा
ह पात॰सूत्रभाष्ययोः "शौचात् स्वाङ्गजुगुप्सा परैर-
संसर्गः" "सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनानि

च” सू० “शुचेः सत्वशुद्धिस्ततः सौमनस्यं तत ऐकाग्र्यं तत इन्द्रियजयस्ततश्चात्मदर्शनयोग्यत्वम् बुद्धिसत्त्वस्य भवतीति” भा० एष च बाह्य उपायः। आभ्यन्तर उपायस्तत्रैवोक्तः। “ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः” पा० सू० “सामान्यविशेषात्मा शब्दादिर्ग्राह्यः तेष्विन्द्रियाणां वृत्तिर्ग्रहणं (१रूपम्) न च तत्सामान्यमात्रग्रहणाकारम् कथमनालोचितः स विषयविशेष इन्द्रियेण मनसानुव्यवसीयेतेति। स्वरूपं पुनः प्रकाशात्मनो बुद्धिसत्त्वस्य सामान्यविशेषयोरयुतसिद्धावयवभेदानुगतः समूहो द्रव्यमिन्द्रियम्। (२रूपम्) तेषां तृतीयं रूपम्। अस्मितालक्षणोऽहङ्कारः तस्य सामान्यस्येन्द्रियाणि विशेषाः। चतुर्थं रूपं व्यवसायात्मकाः प्रकाशक्रियास्थितिशीला गुणाः, येषामिन्द्रियाणि साहङ्काराणि परिणामः। पञ्चमं रूपं गुणेषु यदनुगतं पुरुषार्थवत्त्वमिति पञ्चस्वेतेषु इन्द्रियरूपेषु यथाक्रमं संयमः तत्र तत्र जयं कृत्वा पञ्चरूपजयादिन्द्रियजयः प्रादुर्भवति योगिनः” भाष्यम् तत्फलमपि तत्रोक्तम्। “ततो मनोजवित्वं विकरणभावः प्रधानजयश्च” पा० सू० “कायस्य मनोवदनुत्तमगतिलाभो मनोजवित्वम्। विदेहानाम् (देहानपेक्षाणाम्) इन्द्रियाणामभिप्रेतदेशकालविषयापेक्षो वृत्तिलाभः अतीतानागतदूरस्थसूक्ष्मार्थविषयश्च वृत्तिलाभो विकरणभावः। सर्वप्रकृतिविकारवशित्वं प्रधानजयः इत्येतास्तिस्रः सिद्धयो मधुप्रतीका उच्यन्ते एताश्च करणपञ्चकरूपजयादधिगम्यन्ते” भा० एतासाञ्च बाह्यसिद्धीनां पारम्पर्येण सत्त्वपुरुषान्यताख्यातिरेव तु मुख्यं फलमिति तत्रैव प्रसिद्धम्।

**इन्द्रियवध** पु० इन्द्रियाणां वधः स्वस्वकार्य्येषु शक्तिविघातः। इन्द्रियाणां स्वस्वकार्य्यानुकूलशक्तिप्रतिघाते ते च एकादशधा यथाह सां० का० कौमुद्योः “एकादशेन्द्रियवधाः सह बुद्धिवधैरशक्तिरुद्दिष्टा” का० एकादशेन्द्रियवधाः स्वस्वकार्य्ये वैकल्यरूपाः तत्र “बाधिर्य्यमित्यादि कौ० वाक्यम् अशक्तिशब्दे ४७२ पृष्ठे उदाहृतम्

**इन्द्रियबोधन** त्रि० इन्द्रियं बोधयति स्वप्रानसाध्यवैकल्य बुध+णिच्+ल्यु। स्वपानसाध्यवैकल्यबोधके मद्ये मद्यपाने हि इन्द्रियमात्रस्य स्वस्वकार्य्यव्यापारापाटवकरणात् आत्मवीर्य्यं तानि बोधयतीति तस्य तथात्वम्। “सर्वं पित्तकर मद्यम्” इत्युपक्रम्य ‘पाके लघु विदाह्युष्णं तीक्ष्णमिन्द्रियबोधनम्’। “कषायमधुरं मद्यं सुगन्धीन्द्रियबोधनम्”। “वातघ्नो मधुरप्रायो हृद्य इन्द्रियबोधनः” सुश्रु०।

**इन्द्रियवत्** त्रि० इन्द्रियं अस्त्यतया प्राशस्त्येन वास्त्यस्य मतुप् मस्य वः। १श्रेष्ठेन्द्रिये २प्रशस्तेन्द्रिये च स्त्रियां ङीप्। इन्द्रियेण तुल्यम् इन्द्रियस्येव इन्द्रिये इव वा वति। इन्द्रियतुल्ये अव्य० इन्द्रियं वीर्य्यमस्त्यस्य मतुप् मस्य वः वेदे पूर्व्वपद नि० दीर्घः। वीर्य्यान्विते। “तेजः पशूनां हविरिन्द्रियावत्” यजु०। “हविष इन्द्रियवान् मदिन्तमः” यजु०। क्वचित् वेदे दीर्घो न। “सर्वं हुतमिन्द्रियवत्” यजु० १४, २,

**इन्द्रियवृत्ति** स्त्री ६त०। “शब्दादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः। वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम्” सांख्योक्ते श्रोत्रादीनां शब्दादिषु प्रकाशनार्थे १व्यापारे कर्म्मेन्द्रियाणां २वचनादानादिव्यापारे च। तत्र बुद्धीन्द्रिय वृत्तिश्च इन्द्रियजन्या बुद्धेस्तत्तदाकारेण परिणामः साच निर्विकल्पकस्थानीया इति सां० कौ० समर्थितं तच्च ८२६ पृ० आलोचनशब्दे दर्शितम् कर्म्मेन्द्रियवृत्तिश्च वचनादानादिरूपो व्यापारः। मनोरूपेन्द्रियवृत्तिस्तु संकल्पविकल्पाध्यवसायरूपा मनोबुद्ध्योः परिणामभेदः।

**इन्द्रियसंप्रयोग** पु० इन्द्रियाणां संप्रयोगः स्वस्वविषयेषु प्रयोगः व्यापारणम्। विषयैरिन्द्रियसम्बन्धे असत्ख्यातिशब्दे ५२२ पृष्ठे उदा०।

**इन्द्रियसन्निकर्ष** पु० इन्द्रियस्य स्वस्वविषयैः सह सन्निकर्षः सम्बन्धभेदः। प्रत्यक्षसाधने इन्द्रियस्य स्वस्वविषयैः सम्बन्धभेदरूपे प्रत्यक्षजनकव्यापारे। स च न्यायमते षोढा यथा “विषयेन्द्रियसंबन्धो व्यापारः सोऽपि षड्विधः। द्रव्यग्रहस्तु संयोगात् संयुक्तसमवायतः द्रव्येषु समवेतानां, तथा तत्समवायतः तत्रापि समवेतानां, शब्दस्य समवायतः। तद्वृत्तीनां समवेतसमवायेन तु ग्रहः। विशेषणतया तद्वदभावानां ग्रहो भवेत्” भाषा०। तथा च द्रव्यस्य प्रत्यक्षे इन्द्रियसंयोगः कारणम् द्रव्यसमवेतगुणकर्म्मजातीनां प्रत्यक्षे इन्द्रियसंयुक्तसमवायः। द्रव्यसमवेतसमवेतानां गुणत्वकर्म्मत्वादीनां प्रत्यक्षे इन्द्रियसंयुक्तसमवेतसमवायः। शब्दस्य प्रत्यक्षे श्रोत्रसमवायः शब्दवृत्तिशब्दत्वादेः, श्रोत्रसमवेतसमवायः कारणम्। “अभावप्रत्यक्षे समवायप्रत्यक्षे च इन्द्रियसंयुक्तस्वरूपसम्बन्धविशेषणता हेतुः। वैशेषिकमते तु समवायस्य न प्रत्यक्षम्। अत्र यद्यपि विशेषणता नानाविधा तथा हि भूतलादौ घटाभावः संयुक्तविशेषणतया गृह्यते संख्यादौ रूपाद्यभावः संयुक्तसमवेतविशेषणतया, संख्यात्वादौ रूपाद्यभावः संयुक्तसम-

वेतसमवेतविशेषणतया। शब्दाभावः केवलश्रोत्रावच्छिन्न-विशेषणतया। कादौ खत्वाद्यभावः श्रोत्रावच्छिन्नसमवेत-विशेषणतया। एवं कत्वावच्छिन्नाभावे खत्वाभावादिकं विशेषणविशेषणतया। एवं घटाभावादौ पटाद्यभावः संयुक्तविशेषणविशेषणतया। एवमन्यदप्यूह्यम् तथापि विशेषणतात्वरूपेणैकैव सा गण्यते अन्यथा षोढा सन्निकर्ष इति प्राचां प्रवादो व्याहन्यतेति” मुक्ता०। इन्द्रिय संयोगादयोऽप्यत्र

**इन्द्रियस्वाप** पु० इन्द्रियाणां स्वस्वविषयेषु स्वाप इव अप्रवृत्तिरत्र। १सुषुप्त्यवस्थायाम् तत्र हि मनःसहितसर्वे-न्द्रियाणामुपरमः श्रुत्यादावुक्तः “सुषुप्तिकाले सकले प्रलीने” इति श्रुत्या “यत्र सुप्तो न कञ्चन पश्यतीति” श्रुत्या इन्द्रियमात्रलयश्रवणात्। इन्द्रियैःस्वस्य स्वकारणभावस्वापः प्राप्तिर्यत्र। इन्द्रियाणां स्वरूपतः स्वकारणलयकाले प्रलये। मरणे तु न स्वरूपतस्तेषां लयः। “तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमुत्क्रामन्तं मनोऽनूत्क्रामतीत्यादि” श्रुतेः “पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम्। अपञ्ची-कृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्” मिति स्मृतेश्च प्राणा-नामाप्रलयस्थायित्वावगतेः। तत्र गोलकाभावेन वृत्तिमात्र न भवति पुनर्देहान्तरे गोलकोदये वृत्तिलाभ इति भेदः “तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्त” इति शा० सू० भाष्ययोर्विवृतिः एवं सांख्यमतेऽपि किन्तु तन्मते लिङ्गदेहे प्राणपञ्चकं विहाय पञ्चभूतानां प्रवेश इत्येतावन्मात्रभेदः।

**इन्द्रियात्मन्** पु० इन्द्रियमेवात्मा। १इन्द्रियस्वरूपे कर्मधा०। २इन्द्रियेषु।

**इन्द्रियादि** पु० ६त०। सांख्यमतसिद्धे इन्द्रियकारणे अहङ्कारे “सात्विक एकादशः प्रवर्त्तते वैकृतादहङ्कारात्” सा०का०

**इन्द्रियाधिष्ठातृ** ६त०। इन्द्रियाणामचेतनानां स्वस्वकार्य्येषु व्यापारसम्पादनाय ईश्वरनियोजिते देवभेदे। ते च देवाः “दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः”। शारदा० दर्शिताः पदार्थादर्श एतद्व्या० “एते इन्द्रियाधिष्ठातृदेवाः। यदाहुः वैकारिकादिमाद्याश्च चन्द्रेणैकादश स्मृताः। इन्द्रियाणामधिष्ठातृदेवास्ते सात्विका मता” इति तथा च श्रोत्रस्याधिष्ठातृदेवता दिक्। त्वचः वायुः, चक्षुषः अर्कः। रसनायाः प्रचेताः, घ्राणस्याश्विनौ। वचः अग्निः पाणेः शक्रः, पादस्य उपेन्द्रः (विष्णुः), पायोः मित्रः उपस्थस्य कः ब्रह्मा। मनसः चन्द्रमाः।

**इन्द्रियायतन** ६त०। श्रोत्राद्याधारे देहे तस्य इन्द्रियाधा-रत्वस्याधारत्वम्। स च सूक्ष्म एव देहः। यथाह सां०का० “पूर्व्वोत्पन्नम (स) सक्तं नियतं महदादिसूक्ष्मपर्य्यन्तम्। संसरति निरुपभोगं भावैरधिवासितं लिङ्गम्”। “प्रधाने-नादिसर्गे प्रतिपुरुषमेकैकमुत्पादितम् आ चादिसर्गात् आ च महाप्रलयादवतिष्ठते महदादिसूक्ष्मपर्य्यन्तं महदहङ्का-रैकादशेन्द्रियपञ्चतन्मात्रपर्य्यन्तम् एषां समुदायः सूक्ष्मश-रीरं शान्तघोरमूढैरिन्द्रियैरन्वितत्वाद्विशेषः। नन्वस्त्वेत-देव शरीरं भोगायतनं पुरुषस्य, कृतं दृश्यमानेन षाट्कौशि-केन शरीरेणेत्यत आह संसरतीति उपात्तमुपात्तं च शरीर जहाति हायंहायं चोपादत्ते, कस्मात्? निरुपभोगं यतः, षाट्कौशिकं शरीरं विना सूक्ष्मं निरुपभोगं, तस्मात् संसरति। ननु धर्म्माधर्म्मनिमित्तः संसारः न च सूक्ष्मशरीर-स्यास्ति तद्योगः, तत्कथं संसरतीत्यत आह भावैरधिवा-सितं धर्म्माधर्म्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्य्यानैश्वर्य्याणि भा-वास्तदन्विता बुद्धिः तदन्वितञ्च सूक्ष्मशरीरमिति तदपि भावैरधिवासितं यथा सुरभिचम्पककुसुमसम्पर्कात् वस्त्रं तदामोदवासितं भवति तस्माद्भावैरधिवासितत्वात् संसरति। क-स्मात्पुनः प्रधानमिव महाप्रलयेऽपि तच्छरीरं न तिष्ठती-त्यत आह लिङ्गम् लयं गच्छतीति लिङ्गं हेतुमत्त्वेन चास्य लिङ्गत्वमिति” भावः। सां०कौ०। “पञ्चप्राणमनोबुद्धिदशे-न्द्रियसमन्वितम्। अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसा-धनम्” स्मृतिः। पञ्चद० इदमेव वाक्यमुपन्यस्तम्। न्यायादिमते स्थूलदेह एव इन्द्रियायतनं तैः सूक्ष्मदेहा-नङ्गीकारात् इति भेदः श्रोत्रादयश्चादेहापूर्व्वदेह एव तत्तदिन्द्रियाण्यपि तत्तद्देहे उत्पद्यन्ते नश्यन्ति च अन-न्तानि तानि च नित्यानि तेषाञ्च अदृष्टवशात् एकैक-स्मिन् देहे एकैकस्य प्रवेश इति हि तेषां मतम्। २ आत्मनि च “आत्मेन्द्रियाद्यधिष्ठातो” लिङ्गशरीरशब्दे एतेषां युक्तायुक्तत्वपरीक्षणम् करिष्यते।

**इन्द्रियाराम** त्रि० इन्द्रियेषु आरमति आ+रम-अच्। इ-न्द्रियार्थभोगप्रसक्ते “अघायुरिन्द्रियारामो मोघं पार्थ स जीवति” गीता०।

**इन्द्रियार्थ** पु० ६त०। इन्द्रियगोचरपदार्थे शब्दादौ “इ-न्द्रियार्थेषु सर्वेषु न प्रसज्जेत कामतः” मनुः। इन्द्रः इ-न्द्रिये तादर्थ्ये च हि०अ०। “इन्द्रियार्थसन्निकर्षोत्प-न्नम्” गौ०सू०। इन्द्रियेणार्थसन्निकर्षे इत्येव तत्र विग्रहस्तु न्याय्यः।

**इन्द्रियाविन्** त्रि० इन्द्रिय प्रशस्तता प्राशस्त्येन दाम्यस्य सा०

चिनि वेदे पूर्व्वपददीर्घः। १वश्येन्द्रिये २प्रसन्नेन्द्रिये च। “सएवास्मिन्निन्द्रियं दधा तन्द्रियाव्येव भवति” श्रुतिः।

इन्द्रियेश पु० ६त०। १जीवे तदधिष्ठानेनैव तेषां प्रवृत्तेस्तथात्वम् २इन्द्रियाधिष्ठातृदिगादिदेवादिषु च।

इन्द्रेज्य पु० ६त०। वृहस्पतौ शक्रेज्येन्द्रपूज्यादयोऽप्यत्र

इन्द्रेश्वर पु० इन्द्रेण स्थापित ईश्वरः ईश्वरलिङ्गम्। महेन्द्रपर्वतस्थे इन्द्रासुरवधजनितब्रह्महत्याविघातार्थं शक्रेण स्थापिते शिवलिङ्गभेदे तत्कथा प्रा० वि० कालि० पुराणम्। “वृत्तं हत्वा ततः शक्रो माहेन्द्रे स्थाप्य शङ्करम्। लिङ्गं विमुक्तः पापौघैस्ततः स त्रिदिवं गतः। अद्यापीन्द्रेश्वरं दृष्ट्वा तथा रामेश्वरं प्रभुम्। मुच्यते ब्रह्महत्याया नरो वै नात्र संशयः”।

इन्ध दीप्तौ रुधा० आ०अक० सेट् निष्ठायामनिट्। वर्त्तमानेचाऽतोनिष्ठा। इन्धे, इन्धाते, इन्धते, “यं त्वां जनास इन्धते” ऋ० ८,४,२ इन्धीत, इन्धाम्। इन्त्स्व इन्ध्वम्। ऐन्ध ऐन्धिष्ट इन्धाम्—बभूव। आस चक्रे इन्धिष्यते ऐन्धिष्यत। इन्धितव्यम्। इन्धिता इन्धनम्। इद्धोवर्त्तते। क्विप् समित् इन्धानः “अग्निमिन्धानो मनसा धियम् सचेत मर्त्त्यः” ऋ०। भावे इध्यते ऐन्धि। “परो वदिध्यते दिवि छा०उ०तु पदगणव्यत्यासः।

इन्ध पु० इन्ध+करणे—घञ्। १काष्ठे इन्ध—घञ्। २दीप्तियुक्ते। ३तन्नामके ऋषिभेदे पु० ततः गोत्रे नडा० फक्। ऐन्धायनस्तन्नोत्रापत्ये पुंस्त्री। दीप्तियुक्ते दक्षिणनेत्रे विशेषेण स्थिते ४परमात्मनि पु०। तस्य तदर्थत्वञ्च समर्थितम् वृ०उ०भा०। “इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन् पुरुषस्तं वा एतमिन्धं सन्तमिन्द्र इत्याचक्षते परोक्षेणैव, परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः” “इन्धो ह वै नाम इन्ध इत्येवं नामायं ‘चक्षुर्वै ब्रह्मेति’ आदित्यान्तर्गतः पुरुष एषः, योऽयं दक्षिणेऽक्षन् अक्षिणि विशेषेण व्यवस्थितः। स च सत्यनामा तं वा एतं पुरुषं दीप्तिगुणत्वात् प्रत्यक्षं नामास्य इन्ध इति तमिन्धं सन्तमिन्द्र इत्याचक्षते परोक्षेण, यस्मात् परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः प्रत्यक्षनामग्रहणं द्विषन्ति” भा० “इन्धयति दीपयति इन्ध—णिच्-अच्। ५दीपके त्रि०। एतस्मात् पूर्वस्थयोः आग्नाग्नेग्राः समासे लुक्। आग्नीध्रः अग्निमिन्धः। “होताध्वर्युरावया अग्निमिन्धो ग्रावग्राभः” यजु० २५,२८, अग्निमिन्धस्य अग्नीत् नाम ऋत्विक्।

इन्धन न० इध्यतेऽनेन इन्ध+करणे—ल्युट्। १काष्ठे “इन्धनौघधगप्यग्निस्त्विषा नात्येति पूषणम्” माघः। “स्वामिनीव विवाहेषु नवां भक्षे तथेन्धने” मनुः। इन्धने इन्धनाधिकारे इत्यर्थः “इन्धनार्थमशुष्काणाम्” प्रा० वि० स्मृतिः। इन्धयति इन्ध—णिच्-ल्यु। २दीपनकर्त्तरि त्रि०। भावे ल्युट्। ३प्रज्वालने न०।

इन्धन्वन् त्रि० इन्धन+मत्वर्थीयः। वेदे वनिप् नि० नस्य लोपः। इन्धनयुक्ते। “इन्धन्वभिर्धेनुभीरप्सुदूघभिः” ऋ० २,३४,५, “इन्धन्वभिः समिन्धनवद्भिः” भा०।

इन्व गतौ भ्वा० पर०। इनधातौ ९२८ पृष्ठे विवृतिः।

इन्वका स्त्री इन्वति इन्व—क्वुन् स इव कायति कै—क। मृगशिरोनक्षत्रोपरिस्थे इल्वलाख्यतारासु अमरटीका।

इभ पु० इण्—भ किच्च। १हस्तिनि “वन्येभदानानिलगन्धदुर्द्धराः” माघः २तत्संख्यानुसारेण अष्टसंख्यान्विते च। गजा हि अष्टसु दिक्षु स्थिता ऐरावतादयोऽष्टौ वर्त्तन्ते इति तेषामष्टत्वम्। ते च “ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः। पुष्पदन्तः सार्व्वभौमः सुप्रतीकश्च दिग्गजाः” अमरोक्तक्रमेण पूर्व्वादीशानान्तदिक्षु स्थिताः। अस्य च उत्तरपदस्थत्वे श्रेष्ठार्थद्योतकता व्याघ्रादेराकृतिगणत्वात् उपमितसमासः। स्त्रियां ङीप्। जातित्वात् पोटायुवतीत्यनेन समासेऽस्य पूर्वनिपातः पुंवद्भावश्च इभपोटा

इभस्य लक्षणविभागादि वृह०सं० “मध्वाभदन्ताः सुविभक्तदेहा न चोपदिग्धाश्च कृशाः क्षमाश्च। गात्रैः समैश्चापसमानवंशा वराहतुल्यैर्जघनैश्च भद्राः॥ वक्षोऽथ कक्षावलयः श्लथाश्च लम्बोदरं त्वग्बृहती गलश्च। स्थूला च कुक्षिः सह पेचकेन सैंही च दृग्मन्दमतङ्गजस्य॥ मृगास्तु ह्रस्वाधरवालमेढ्रास्तन्वङ्घ्रिकण्ठद्विजहस्तकर्णाः। स्थूलेक्षणाश्चेति यथोक्तचिह्नैः सङ्कीर्णनागा व्यतिमिश्रचिह्नाः॥ पञ्चोन्नतिः सप्त मृगस्य दैर्घ्यमष्टौ च हस्ताः परिणाहमानम्। एकद्विवृद्धावथ मन्दभद्रौ सङ्कीर्णनागोऽनियतप्रमाणः॥ भद्रस्य वर्णो हरितो मदश्च मन्दस्य हारिद्रकसन्निकाशः। कृष्णो मदश्चाभिहितो मृगस्य सङ्कीर्णनागस्य मदो विमिश्रः॥ ताम्रौष्ठतालुवदनाः कलविङ्कनेत्राः स्निग्धोन्नताग्रदशनाः पृथुलायतास्याः। चापोन्नतायतनिगूढनिमग्नवंशास्तन्वेकरोमचितकूर्मसमानकुम्भाः। विस्तीर्णकर्णहनुनाभिललाटगुह्याः कूर्मोन्नतैर्द्विनवविंशतिभिर्नखैश्च। रेखात्रयोपचितवृत्तकराः सुवालाः धन्याः सुगन्धिमदपुष्करमारुताश्च। दीर्घाङ्गु-

नताः शीघ्रोदपादहस्तिरहासैर्हस्तिनो भवन्ति । महागिरिदशार्णविन्ध्याटवीरावतीनां मध्ये दशार्णं वनमभिख्यातमत्र दीर्घाङ्गुलिपुष्कराः पाण्डुभाः श्यामा वा दुर्ग्रहाः मृदुस्वजघनाग्राः सितसूक्ष्मबिन्दुचित्रा-स्तूतफलतुल्यमदगन्धिनो विशालोत्सङ्गदन्ताः स्थूलहस्तास्थिरापीवा मध्यगाः स्वासनाः सत्ववन्तश्च । पारिपात्रवैदिशमध्यावर्त्तनानामन्तर्गतमेकं वनमत्रोद्गताः शीघ्रदीर्घक्रमेणोपदिग्धाङ्गाः बलवन्तोऽभिजाताः सुप्रमाणाः मध्यमाक्षमृदुत्वचः कचाविरलप्राया अल्पमेचकाहरिद्राखालुत्वचः सुहस्ताः स्निग्धरोमाणः स्थिराः सुगरोराः करेणूनामधिपतयः ख्यातायाश्च । त्रिपुरमहादक्षिणारण्योत्कलानां मध्ये कालिङ्गकं वनमत्र कलविङ्काभाः सर्व्वश्वेताः स्थिरपदाः शीघ्राः मृदुकर्णरोमाणस्तनुलगुदरादीर्घलम्बबालधयो दीर्घक्रमाः बलवन्तोऽल्पमेचकाः पद्मप्रभा वातुलदन्ता धनुःपृष्ठवंशारक्ततालुजिह्वौष्ठाः सुप्रयोगपरुषाःवराहजघनाः नीचवृत्तनखाःस्थिरचरणाः व्याघ्रवेदिनोमदगन्धाः पीतस्वल्पशिरोधराः महोरगहस्तकराः मृदुदीर्घ इत्याहस्तिनो भवन्ति । नर्मदोदधिसेवदेशान्तोपहारयामन्तरतोऽपरान्तिकं वनमत्र मानिनो धीराः श्यामाःसम्प्रतिष्ठिताः हस्वजघनशिरोधरा पीनायतविषाणाः स्वास्यका मृदुत्वच उदग्रादीर्घरक्तताल्वोष्ठजिह्वामहोत्सङ्गाः पद्ममदगन्धिनो धनुःपृष्ठवंशाविष्टस्वास्याभ्यवनविचारिणः । द्वारकार्बुदावर्त्तनर्मदान्तरतः सौराष्ट्रकं वनमत्राल्पायुषस्तन्त्राः पिङ्गायताक्षाः मध्यायताङ्गयोऽल्पमेचका मृदुविभक्तमाला प्रतिलोमलोमशचरणास्तनुत्वक्कर्णनखाः सूक्ष्मदन्ताः शिचात्मज इति । हिमवत्सिन्धुकुरुजाङ्गलकानामभ्यन्तरे वनं पञ्चनदाख्यं तत्र स्फुटितकृष्णश्वेतांशुदन्तास्तनुबिन्दूपचितकराः सुगन्धयोस्वद्दोमहामेचकदेशाङ्गप्रमाणाःसूक्ष्मदृष्टहस्तत्वचोदुर्विनेयाध्यानशीलाः क्रमवत्तदपो भवन्त्यपि । वनेषु तेषु जायन्ते प्रधानामध्यमोत्तमाः । प्रशस्ता निन्दितायापि तेषां वक्ष्यामि लक्षणम् । गजजनुकाउसलाग्रं सुसमस्लाङ्गुपुष्करं दुर्गन्धं कर्कशत्वग्रोमाणमाततलम्बलघुविरलपर्वाणं हस्तिनो हस्तमध्यन्यविघातधन्यं पीतं मृदुरोमाग्रमनुपर्वपतितं चारुदीर्घाङ्गुलिपीनं पृथुपुष्करं मृदुवलिमत् । सुगन्धिष्टस्तं पञ्चहस्तायतं हिरक्तं हस्तस्योतोप्योतृनाग च । कालस्फुटिताग्रसमविषमविषमवक्रमलक्ष-सूक्ष्मदन्तावपूजितौ पूजितौ च स्निग्धसूक्ष्ममदच्छिद्रोपतामलिनसमसाहितौ मधुपवर्णौ सुकुञ्चितायावाधमभ्यायातावष्टाङ्गुलपरिणाहौ । अथ विकृपविषमे वराहनकुलध्वाङ्क्षवानराभे कृष्णविच्छिन्नवर्णे सच्छिनीश्रिते लोचने न पूजिते पूजिते च मधुबिन्दुभसूर्य्यमणिपङ्क्तिवर्णे समुपहिते च । प्रशस्तं समाहितमायतपृथुवाहित्यमवस्थितरक्तताल्जिह्वौष्ठचारुसूक्ष्मसवर्णबिन्दूपचितं सर्व्वसंपूर्णम् । मृदुमृदुनिर्याणपीडितपुष्करं विषमभाषणात् पङ्कुल्वाग्बन्धनाभावेन नतकुम्भलम्बमेनातिरिक्तं प्रमाणं सङ्कटाननपिङ्ग कृष्णास्यूतदन्तरोमोपचितमपूजितं शिरोवारणानां पूजितं महोदयस्थानमुपचितसमक्रमनिम्नखरनिर्याणं पृथुपुष्करं स्निग्धमृदुसूक्ष्मस्तम्भरोमसुविभक्तौष्ठीपचितामावयाहं वा सुखोत्कृष्टोपकृष्टौ हनौ कर्णौ तनुविषमशिराततौ पीडितान्तावतिरुद्रप्रमाणौ संहतच्छिद्रौ सान्द्रमृदुसप्रमाणशिरालवपाठितपुटसंविपुलमूलिकौ, पृथुच्छिद्रौ दुन्दुभिस्वनौ वा । स्नेयावहाच्छिद्रातिदीर्घोपचितपीडिका सुसंहतौ पृष्ठावलम्बनात्सुवृत्तायतास्थानावपीडिता ग्रीवा वारणस्याप्रशस्ता मता तु प्रश्नोपरि पिण्डिका हठारणौ त्रिवलिः सान्तारत्निपरीणाहा द्वादशाङ्गुलायता सर्व्वसम्पूर्णा वा । विषमभवाप्यं संक्षिप्तलम्बं संपुटमानसं विगर्हितं स्थिरं च विनतमनुवृत्तं वक्रं पृष्ठवंशमशोभनम् । शोभनमुपचितसूक्ष्मं धनुःप्रमाणमेव संस्थानं विद्यात् । अथ पूर्व्वगात्रच्छिद्रोन्नतांसं विकचितहस्तयोर्हस्तं शिरालम्बनं सव्यव्याधिहन्तोहनिर्लग्नं विषमकक्षाविवस् प्रमाणहीननतनिदम् हृष्टमनुपूर्व्वोर्पचितं स्थिरविभक्ताजिनसत्कोटमनुपर्विम्बसुखमच्छिद्ररन्ध्रोपचितमयोरस्कं वा । अथ जघनं चनसुच्छितास्थि निर्मांसमेचकं कक्षाहीनातिरिक्तप्रमाणं वालध्यनुयायि समनर्थकरम् । अर्थकरमल्पमेचकं पक्षोपचितमहत्पृथुस्कन्धपृष्ठतरसमायतारन । चारुवालधिपरिपूर्णाण्डकोषायततया नातिरालपल्लवाकारमेहनमजयनञ्जयनं च श्यावात्यकृष्णस्फुटितनखश्लिष्टसन्धि, परुषासारतलसहा न पूजिताः पादाः अन्ये भवन्त्यपि च । विंशत्यष्टादशनखाः स्थिराः कूर्म्मसमाहिताः । गजानां पूजिताः पादा ये च स्युर्विकचाविलाः । पादाः कचाविला रूक्षविवर्णाः परुषाः कृशाः । चारणानाञ्च मताः सूर्य्ये वा स्निग्धतनूरुहाः । कृष्णबिन्दुचितां स्निग्धां त्वचं शंसन्ति दन्तिनाम् । वालस्तु यो

विद्यातस्य विषाणौ भार्श्वउन्नतौ । उपाहतौ विषाणेन दन्तेनैव वारणः । अनुन्नताभ्यां संपन्नःकुदन्तः स्याद-तावधिः । जर्द्धं गजान्तरात्तस्य प्रविमानवमौ द्विजौ । चतुरस्र स्थातिदीर्घेण दन्तेनैकेन वा गुणाः । वर्ज्यास्ते शुभकामेन सर्व्व एवातिगर्हिताः। पञ्चद्वये नदीजानां पञ्चमेऽब्दे वनौकसाम् । दन्तमूलपरीणाहान् द्विगुणान् कल्पयेत्परे । शरशक्तिधनुश्चक्रशूलपट्टिशलक्षणाः । दन्तायराजयो यस्य स नृपं नेतुमर्हति । रोमुणां तु संत्रयो यत्र पिटक स उदाहृतः । स ज्येष्ठः सप्तभागोनोमध्यमोऽसौ मतङ्गजः। अन्त्यः षड्भागहीनःस्यादतोऽन्योहि न पूजितः । सुखाय सेचके दैर्घ्यं पृष्ठपार्श्वोदरान्तरम् । आनाहउष्क्रय पादाहिन्द्रेयो यावदासनम्”। वनविशेषेण गजलक्षणं तत्रैव वार्हस्पत्यसंहिता । “वनानां मध्ये प्राच्यं कालिङ्गकमापरान्तिकं च त्रीणि वनान्यतिशोभनानि । तथापमपि प्राच्यं वनं मध्यवनसपरेषामिव शोभनम् । तत्रैरावतकुलप्रसूतिसम्भवाः प्रायेण मृगमिश्रभद्रलक्षणाः महाकायाः करिणो भवन्ति । विनयसत्त्वशक्तिसम्पन्नाःपूगफलप्रभास्त्वत्विषः प्रविरलमदा गजा युद्धेचापसर्पणोपसर्पणनीरवा भवन्ति नातिक्रोधनाः. समुद्वेजिताः शघं दर्शयन्ति । ते च हस्तैः कवलैः कायोपचयानातिशयेन मदाभिलुषाः कर्त्तव्याः । कालिङ्गके चाऽपरान्तिके च त्रेतायुगोत्पन्नाः मन्दा महागजान्वयजा मन्दाभिधानाः प्रायशो मृगावयवाः सङ्कीर्णाः-गजाः समुत्पद्यन्ते । नात्युदग्रा अवदातभा नातिस्थिरा मन्दा युद्धप्रियाश्च गजा भवन्ति । तथा काठमदाशार्णमार्गवेत्रवकाभिधानेषु मध्यमा गजाः समुत्पद्यन्ते मृगमन्दजातयः ते च पार्थिवाः मध्यमवामध्यमप्रमाणाः स्थूलरोमाचितशरीरास्तनुरदा मन्दगतयः । तथा सौराष्ट्रे पाञ्चनदाभिधाने द्वापरयुगोत्पन्ना मृगमतङ्गजान्वया मृगप्राया गजाभवन्ति भीरवः कुत्सिताङ्गाः नातिचण्डादुर्मदाः दुर्वृत्ताश्च एवंविधाःगजाः समुत्पद्यन्ते वनाद्व वनान्तरे गतेषु दुर्वृत्तेषु गजेषु धेनुकाखर्प्परेऽर्बुदवनेऽपि कालिङ्गकेऽपि । त्रासशीलश्च भीरुश्च ह्रस्वशामनमस्तकः । हीनाग्रभोगो दुःशीलस्त्वसंहतशरीरभृत् । समुच्छ्रितत्वनायामी परीणाहविवर्जितः । मृगस्तरूपोदीनश्च मृगजातिर्गजाधमः । अतः परं प्रवक्ष्यामि संकीर्णस्य च लक्षणम् । पशुत्वाद्वारणानाञ्च मङ्कृतां च वियोनिषु । धेनुकासु भवन्त्येते गजा सं-कीर्णलक्षणाः। भद्रोमन्दोमृगोवाथ शुद्धजातिः प्रजायते । तस्मान्मिश्राणि रूपाणि गदतोमे निबोधत । आगन्त्यागमिश्रजातानां निश्चयोनोपपद्यते । तथापि किञ्चिदुद्देशान्मिश्रलक्षणमुच्यते । भद्रमन्दो भद्रमृगो भद्रमन्दमृगस्तथा । एव भेदत्रयं मन्दमृगयोरपि जायते । भद्रादीनां च सर्वेषां रूपं संकीर्णसंज्ञितम् । अङ्गाधःकार्य्यभेदेन तज्जानि भिद्यन्ते द्विधा । त्रिधा च भिद्यतेभूय एकैकन्तु यथाक्रमम् । एवमष्टादशविधं कीर्त्तितं मिश्रलक्षणम् । शुभाशुभं विभागेन साम्प्रतम् निगदाम्यहम् । भद्रमन्दोभवेदिष्टोमृगमन्दस्तथाधमः । भद्रमन्दमृगश्चैव मध्यमः परिकीर्त्तितः। भद्रजातिर्महाकायोगजोमध्ये तु दन्तिनाम् । मन्दोऽवयवलेशेन स मुक्तो भवति द्विपः। मृगस्यापि हि रूपेण किञ्चिन्मात्रानुगतेन वै। अशुभत्वं न भद्रस्य जायते शोभनोहि सः । लोचनानां प्रधानत्वं यथाशास्त्रेषु कीर्त्तितम् । तस्मान्मृगाक्षिसंज्ञोभद्रोऽपि हि न शस्यते । भाद्रेणो परिकायेन मान्द्रेणाधोगतेन वा । उन्नतोहि गजानान्तु भद्रमन्दोभवेद्गजः । अनेनैव हि क्रमेण विपर्य्यासेन यो गजः। सोऽपि शोभन एव स्यान्मन्दभद्र इति स्मृतः। एवं विधात् मृगे चापि लक्षणान्मिश्रलक्षणम् । महावयवबाहुल्यात् मृगरूपस्य लेशतः। भद्रावयवनिर्मुक्तोमध्यमोऽसौ गजो भवेत्” कायेन यो भवेद्भद्रो मन्दोवापि मतङ्गजः। मृगमानोऽपरश्चैव स भवेद्वेगवान् गजः। मृगरूपाधिकत्वं च दृश्यते यस्य दन्तिनः । अधमस्तु स विज्ञेयः सत्त्वशक्तिविवर्जितः । करदन्ताक्षिकुक्षौ च यो मृगो जायते गजः । शेषावयवभद्रोऽपि हीन एव भवेदसौ । एवमुद्देशमात्रेण मिश्रभेदा मयोदिताः। नोदिता येऽपि तेऽत्रापि मिश्रा ज्ञेया मनीषिभिः। मिश्रलक्षणसंयोग उत्कृष्टं यत्र दृश्यते । रूपन्नामधेयोऽसौ जायते हि मतङ्गजः । अतः परम्प्रवक्ष्यामि लक्षणं गिरिचारिणाम् । तथा नदीचराणां च तथैवोभयचारिणाम् । महाबला महाकायाश्चितांसा गिरिचारिणः । सुपार्श्वाश्चारुदिग्धाङ्गादृढपादागतक्लमाः । उदग्रानिर्भयाश्चैव सल्लकीकवलप्रियाः । तटाघातविधौ भुग्नदन्तदारितभूतलाः । शार्दूलादिमहासत्त्वसंस्फोटातङ्कवर्जिताः । मदस्रावललोलाहादुर्दमावारिभीरवः । पांशुक्रीडारता नित्यं द्रुमोन्मूलनतत्पराः । विषाणवेष्टनाशीलाः स्वेदसन्तापनीरकाः । करास्फोटनिरता सीत्कारकरणप्रियाः । अनुदग्राघनश्यामाः सीकरोद्गिरणप्रियाः । तोयकर्म्मणि निःशङ्कामतङ्गाश्च नदीचराः । उभयेषुचर-

न्ते ते मदोपध्वं तथानघ । ये गजा हृष्टमनसस्ते भवन्त्यतिशो-
भनाः । सर्वेषामेव नागानां छायालक्षणमुत्तमम् । यद्यथा
जायते यस्य तत्तथैवाभिधीयते । सत्वांशकत्वाद्भद्रस्य पा-
टला भवति प्रभा । नवपल्लवसच्छाया स्निग्धा तनुतनूरुहा ।
तथा तमोंऽशकत्वाच्च कृष्णा मन्दस्य जायते । तरुणाम्बुद-
संकाशा स्थूलकृष्णकचान्विता । रजोंऽशकत्वाच्च तथा
मृगस्यापि हि धूसरा । मलिनाम्बुदसंकाशा रूक्षा
तनुतनूरुहाः । एवं छायाविशेषाः स्युर्भद्रादीनां मयोदिताः ।
छाया संमिश्रभावाच्च मिश्रा भवति दन्तिनाम् । वनजाति-
गुणैर्भद्रः गजश्रेष्ठो नरोत्तम ! । तमोऽंशकत्वं मन्दस्य यद्य-
दुक्तं निबोध मे । दुर्मनस्त्वं तथाऽऽलस्यं निद्रालुत्वं च
मूढता । गम्भीरवेदिता चेति मन्दस्य तम उच्यते । एवं
रजोगुणो राजन् मृगस्येन रजोंऽशकः । धैर्यं स्थैर्यं
पटुत्वं च विनीतत्वं सुकर्मता । अन्वर्थवेदिता चैव
भयस्थानेष्वमूढता । सुभगत्वं च धीमत्त्वं सत्त्वस्यैते गुणाः
स्मृताः । अतः सत्वांशको राजन् भद्रजातिरुदाहृतः ।
पिलत्वं बाहुशिरसोरन्तर्भागगतं तथा । दन्तयोर्मधु-
वर्णत्वं नेत्रयोर्मधुपिङ्गता । आननस्य पृथुत्वञ्च पूर्णता
कुक्षिपार्श्वयोः । पृथुत्वं पृष्ठभागस्य घनत्वं समसन्धिता ।
स्निग्धच्छाया त्वयायामःपरिणाहोच्छ्रयौ तथा । सश्री-
कत्वं गुरुत्वं च कायस्यैते गुणाः स्मृताः । सर्वलक्षणसं-
पूर्णो दृश्यते न मतङ्गजः । प्रधानावयवे लोके यत्नः
कार्यो मनीषिभिः । हीनं कृष्णं च कल्माषं पुष्करं न प्रश-
स्यते । संपूर्णं मांसलं रक्तं सुकुमारं शुभं स्मृतम् । त्र्यङ्गुल-
न्तु भवेद्धीनं हीनस्यविनिनाशनम् । कृष्णं भर्तृविघाताय-
कल्माषं भर्तृरोगदम् । संपूर्णं छिद्रितं भर्तुः पुष्करं चतुर-
ङ्गुलम् ॥ सौभाग्यदं मांसलन्तु सुकुमारं तथार्थदम् । रक्तपद्म-
दलच्छायं तथा मिष्टान्नपानदम् । अतः परं शुभे स्तो श्रोत-
सी पाटलोदरे । पञ्चाङ्गुलप्रमाणेन वर्तुलत्वेन चार्थदे । अवा-
प्तुं च ताल्वं च कर्णतालं सुखप्रदम् । ह्रस्वा स्थूला च वि-
पुला चिलिणी श्यामलोहिता । कुञ्चिता च तथा दृष्टिः स-
प्तधा दन्तिनां मता । तासां तु त्र्यङ्गुलायामा या ह्रस्वेत्य-
भिसंज्ञिता । ह्रस्वा करोति नृपतेर्विनाशं शीघ्रमेव हि ।
स्थूला दुर्भिक्षकरणी श्यामला नृपदुःखदा । करोति चिलिणी-
नित्यं तस्यैव तु बहुक्षयम् । भुग्ना दृष्टिर्विनाशाय राज्ञो
धनविनाशिनी । कुञ्चिताहीनयोश्चैव युद्धकाले रिपो-
र्जयम् । अतः परं प्रवक्ष्यामि क्रमेण करलक्षणम् ।
न करं दीर्घमिच्छन्ति वालधेः शास्त्रपण्डिताः । न वाल-
धिसमं ह्रस्वं नातिदीर्घं क्रमायतम् । न वृत्तं नातिकार्श्यं
च न ह्रस्वं न क्षतव्रणम् । नाक्रमेण कृतोत्सेधं न हीनं
दशनान्तरम् । न ह्रस्वाङ्गुलिसंयुक्तं नातिसंकटपुष्करम् ।
एतल्लक्षणसंयुक्तं करं शंसन्ति कोविदाः । वालधेः सुसमो-
हीनः समो वा दन्तिदुःखदः । अतिदीर्घो भवेद्भर्तुरायुषः क्ष-
यकारकः । तनुर्व्याधिकरो बालरतिकायोऽर्थनाशनः ।
रूक्षो व्याधिप्रणष्टर्थोद्यातव्रणक्षतां व्यथाम् । प्रतिलोमेन
च स्थूलो गजस्य सुखनाशनः । असमञ्जसहीनश्च असमञ्जस-
वर्द्धकः । दुःखशोकभयायासकर्त्ता भवति निश्चयः । दश-
नान्तरहीनश्च जायते दन्तिरोगकृत् । कथितं पूर्वमेवेष पुष्-
कराङ्गुललक्षणम् । अतो मया न कथितं साम्प्रतङ्करलक्षणे ।
निर्वलीको दीर्घरोमा क्रमवृत्तत्वसंयुतः । अणुबिन्दुविचित्रश्च
दैर्घ्येण च शताङ्गुलः । वालधेः पुष्करं यावदायामोऽत्तलपे
च्छया । अरत्निलयाऽऽनाद्य हीनहीनतरक्रमात् । युक्त-
स्तेन मानेन करः पूज्यतमो भवेत् ॥ निर्वलीके च सौ-
भाग्यन्दीर्घरोमार्थदः स्मृतः । क्रमवृत्तोजयं कुर्यादणु-
बिन्दुयुतो धनम् । सुप्रमाणं भवेद्राज्ञः करस्य परिवर्त्तनः ।
आनाहश्चाच सततं राज्यस्फीतिकरो भवेत् । करस्य की-
र्त्तितं ह्येतल्लक्षणं शुभसंज्ञितम् । अतःपरं प्रवक्ष्यामि
लक्षणं दन्तवेष्टयोः । कच्छीनावतिस्थूलौ विषमौ शिथिलौ
तथा । दन्तवेष्टौ सदा भर्तुः प्रमाणाभ्यासमौख्यदौ ।
दन्तमूले सुसम्बद्धौ सकचौ किञ्चिदुन्नतौ । दृष्टौ सदा तथा
भर्त्तुर्हितदौ परिकीर्त्तितौ । अतःपरं प्रवक्ष्यामि लक्षणन्तु
विषाणयोः । व्यस्तता सङ्कटत्वं च प्रांशुता भक्तशुभ्रता ।
वक्रत्वं ह्रस्वता चैव धूसरत्वं च रूक्षता । मृदुताऽधो-
गतित्वञ्च हीनता मूलमध्ययोः । प्रान्तयोः स्थूलता चैव
दीर्घता चातिमात्रता । सर्पच्छत्रककान्तित्वं दोषा ह्येते चतु-
र्दश । दन्तयोस्तु समाख्याताः फलं तेषान्निबोध मे ।
व्यस्तौ च सङ्कटौ दन्तौ मदहानिकरौ तु तौ । दन्तिनस्तनु-
तायुक्तौ व्याधिदौ परिकीर्त्तितौ । भक्तशुभ्रौ तथा भर्त्तु-
र्मेहा क्लेशकरौ मतौ । वक्रौ चार्थविनाशाय ह्रस्वौ च
परिकीर्त्तितौ । धूसरौ रूक्षतायुक्तौ गजस्यायुर्विनाशनौ ।
मृदुत्वयुक्तौ नागस्य शल्यव्रणकरौ मतौ । स्थूलाग्राधो-
गतित्वे च भर्तुर्यातुश्च दुःखदे । अशुभं लक्षणं ह्येतद्दन्तयोः
कथितं मया । शुभं च साम्प्रतञ्चक्ष्ये यथावदनुपूर्वशः ।
स्निग्धौ समौ सुनिष्क्रान्तौ संपूर्णौ व्रणवर्जितौ । मुकुलाग्रौ
दृढौ वापि ताम्रचूडौ हलोपमौ । दक्षिणाभ्युन्नतौ किञ्चित्
मृणालकुमुदप्रभौ । मधुकुन्ददलच्छायौ हेमचम्पक-

पिङ्गलौ । मधुपिङ्गौ घृतच्छायौ पीयूषसदृशप्रभौ । केतकी-
कुसुमाभौ च मृगाङ्ककिरणप्रभौ । अध्यर्द्धारत्निमानौ च
तद्दानाहसंयुतौ । अमीभिर्लक्षणैर्युक्तौ दन्तौ नागस्य
सम्मतौ । स्निग्धौ धनप्रदौ भर्त्तुरायुषश्च करौ मतौ ।
अरिघ्नौ तु मणिप्रकान्तौ संपूर्णौ राज्यदौ मतौ ।
निम्नौ राज्यलाभाय मुकुटाभौ जयप्रदौ । दृढौ रोगवि-
नाशाय ताम्रचूडौ हलोपमौ । अरिसंघविनाशाय कीर्त्ति-
तौ शास्त्रपण्डितैः । दक्षिणाभ्युन्नतौ भर्त्तुः कीर्त्तितौ भाग्य-
कारकौ । सुगन्धकुमुदच्छायौ सुभिक्षारोग्यकारकौ । हेम-
चम्पकसङ्काशौ वस्त्राभरणदौ स्मृतौ । कुन्ततो मधुपिङ्गौ च
निःसपत्नं महीतले । यशोलाभकरौ ज्ञेयौ घृतपीयूषसन्निभौ ।
केतकीकुसुमाभौ च भर्त्तुर्वंशविवर्द्धनौ । अध्यर्द्धारत्निकौ
दन्तौ सुतभृत्यजयप्रदौ । आनाहमानसंयुक्तौ सदाक्षीति-
करौ मतौ । इदं शुभकरं राजन् ! दन्तयोर्लक्षणं मतम् ।
अतःपरं प्रवक्ष्यामि नेत्रयोरपि लक्षणम् । मार्ज्जारनकुलक्रौ-
ञ्चग्राधामृगनिभेक्षणान् । सर्वदोषकरान् राजन् ! गजान्
दूरेण वर्जयेत् । स्निग्धे मधुनिभे दीप्ते कलविङ्काक्षिसन्निभे ।
रक्तपद्मदलच्छाये पद्मरागमणिप्रभे । निर्धूमाग्निशिखा-
कारे इन्द्रनीलसमप्रभे । सौम्यदृष्टिसमायुक्ते लग्नभ्रुवि लो-
चने शुभे । स्निग्धे हृद्धिकरे भर्त्तुर्मधुपिङ्गे जयप्रदे । दीप्ते
दीप्तिकरे चैव प्रतापायतने तथा । कलविङ्काक्षिरूपे च
धनधान्यविवर्द्धने । चामीकरकरे नित्यं रक्तपद्मदलप्रभे ।
पद्मरागनिभे चैव रत्नालङ्कारकारके । निर्धूमाग्निशिखाकारे
प्रतिपक्षभयङ्करे । मानयुक्ते च सौम्ये च लोचने बलवर्द्धने ।
चणकनूटकटोद्देशनिम्नौ राज्यविनाशनौ । संपूर्णौ च
वक्षोन्नाहमदद्वद्धिकरौ मतौ । दन्ताश्रयं भवेन्नित्यं
तालुकं षोडशाङ्गुलम् । षडङ्गुलं पृथुत्वेन वंश
मध्यगतं भवेत् । तथा शुभाशुभं चैव लक्षणैः प्रकी-
र्त्तितम् । कसरमपरिदग्धञ्च कृष्णं कल्माषमेव वा । पञ्चविध-
मनिष्टं स्याद्यथावदभिधीयते । कृष्णं मसीसमं ज्ञेयं क-
ल्माषं कृष्णलोहितम् । मांसञ्च धूम्रवर्णं च परिदग्धं प्रकी-
र्त्तितम् । कसरञ्च तिलच्छायं कथितं शास्त्रवेदिभिः ।
गर्भस्थस्य यदा पित्तं चीयते तालुकं भृशम् । कृष्णतालुस्तदा
नागोजायते पापलक्षणः । व्याधिभिः पीड्यते नित्यं वात-
पित्तकफोद्भवैः । तृतीयां वा चतुर्थीं वा दशां प्राप्य विन-
श्यति । संग्रामे वा पलायेत खड्गशस्त्रक्षतव्रणः । यस्य
सङ्घातपूर्णाङ्गः कृतान्तभवनं व्रजेत् । वातपित्तकफा यस्य
कुर्वन्ति तालुके गदम् । गर्भस्थस्यैव कल्माषतालुकं तस्य जा-
यते कृष्णतालुनि ये दोषा रक्ते चैव गुणाः स्मृताः । कल्-
माष तालुनस्ते तु भवन्ति च द्वयोरपि । रक्तच्छायं यदा वंशे
पार्श्वयोरसितं भवेत् । तदा मध्यफलं ज्ञेयं गुणदोष
समाश्रयात् । यदा वंशे च कृष्णं स्यात्पार्श्वयोश्चासिता
भवेत् । भर्त्तुरुद्वेगजनकं कल्माषं तालुकं तदा । किञ्चि-
ल्लीनं तु यत्तालु परिदग्धं तदा भवेत् । नागस्याधोरण-
स्यापि कलहकरं हि तत् । कसरं च भवेत् तालु पित्त-
कोपसमुद्भवम् । महामात्रविनाशाय धारणस्योपजा-
यते । (महामात्रो हस्तिपकः) कृष्णतालोरपि यदा दक्षि-
णावर्त्तनं भवेत् । दृश्यते नित्यमेवं हि तदासौ दोषवर्जितः ।
यथा न गृह्णाति नो दोषान् सुलोकः सुसमाहितः । गुणान्
करोति हृदये न तथा कथितानपि । दोषघ्नं लक्षणं शस्तं
यदाचार्य्यैरुदाहृतम् । तत्तथैवावगन्तव्यं नान्यथात्मापि
भाषितम् । एवं जिह्वापि मन्तव्या तालुनः सम(?)लक्षणा ।
अरत्निमात्रा दैर्घ्येण विस्तारेऽष्टाङ्गुला मता । अशुभं लक्षणं
ह्येतत्तालुकस्य मयोदितम् । शुभं च साम्प्रतं वच्मि लक्षणं
शृणु पार्थिव ! । रक्तं श्वेतं कषायं च तालुकं स्यात् शुभप्रदम् ।
रक्तं वृद्धिकरं भर्त्तुस्तथा चायुर्विवर्द्धनम् । दन्तिनोऽ-
शोकपुष्पाभं रिपुक्षयकरं मतम् । श्वेतं पुष्टिकरं चापि धा-
रणस्योपजायते । चम्पकाभं तथा भर्त्तुरारोग्यस्य विव-
र्द्धनम् । कषायं सर्वदा स्यात् प्रवालः सौख्यवर्द्धनम् । एवं
जिह्वापि रक्ताभा सर्वसौख्यप्रदा मता । अतःपर प्रव-
क्ष्यामि सृक्कण्योश्चित्र लक्षणम् । दन्तिनो मानहीने च
सृक्कणी मानवर्जिते । (सृक्कणी ओष्ठप्रान्तौ) मुखरोगकरे
नित्यं पण्डितैः परिकीर्त्तिते । सर्वसौख्यप्रदे तस्य
संपूर्णे द्वादशाङ्गुले । अतःपरं च प्रवक्ष्यामि लक्षणं चिबु-
कोष्ठयोः । अरोमशम्बलीयुक्तमाताम्रं च तथा लघु । गज-
स्योष्ठं न शंसन्ति मुनयो दन्तरोगदम् । दीर्घरोमा सुसंपूर्ण
ओष्ठः पद्मदलप्रभः । षोडशाङ्गुलमानश्च हस्तार्द्धं वा यतः
शुभः । भर्त्तुरायुःकरो दीर्घो दीर्घरोमा च कीर्त्तितः ।
पूर्णः पूरयते कोषं रक्तः सौभाग्यदो भवेत् । अरोमशं
तथा हीनं चिबुकं न प्रशस्यते । तद्धि धारणनाशस्य मुखरो-
गकरं मतम् । चतुरङ्गुलमानन्तु स्थूलं रोमान्वितं यत्
तत्प्रशस्तं गजेन्द्राणां सुखालङ्कारकारकम् । निम्ने च
विषमे चैव हीने चैवाशुभे मते । मदहानिकरे नित्यं
सगदे कर्णरोगदे । मण्डलिमादयुक्ते च समे चैव सुखप्रदे ।
मानं च कर्णपाल्यास्तु मूलादारभ्य लक्ष्यते । वाहित्थावधि
कुम्भं च हीनं निम्नं च गर्हितम् । मुखरोगकरं नित्य

वर्ज्जं स्थूलञ्च ह्रस्वं च पुच्छं वालविवर्ज्जितम् । समानाग्रञ्च नागस्य सर्व्वदोषकरं भवेत् । अवक्र ऋजुदीर्घश्च पन्थिहीनः सुपेचकः । गोपुच्छपाशप्रतिमकचव्रातविभूषितः । भूमिं तु न स्पृशेत् यस्तु चतुर्भिरङ्गुलैः सदा । स शुभो वालधिर्ज्ञेयो गजानां सुखप्रदः । अतिप्रमाणं ह्रस्वं च कर्व्वूरं विगतप्रभम् । शिरालं चाशुभं मेढ्रं राजहस्तिपदुःखदम् । शस्तं षडङ्गुलायामं नाहतः षोडशाङ्गुलम् । शिराजालविनिर्म्मुक्तमाम्रपल्लवसप्रभम् । द्व्यङ्गुलं श्रोतसा युक्तं बिन्दुमालाविवर्ज्जितम् । मेढ्रं प्रशस्तं विज्ञेयं भर्त्तुर्जीवितवर्द्धनम् । अतःपरं प्रवक्ष्यामि लक्षणं गात्रयोरपि । हीने तनू च दीर्घे च समांसोच्छ्रये तथा । विषमे च कषाक्रान्ते गात्रे नागस्य निन्दिते । हीने तनू च कुरुतः प्रयातुर्विनिपातनम् । समांसोच्छ्रये यातुर्विषमे च विपत्करे । कषाश्रिते गजस्यैव गात्ररोगकरे तथा । अतःपरं प्रवक्ष्यामि गात्रयोः शुभलक्षणम् । सार्द्धद्विरत्निभिस्त्रिरत्निः मताङ्गुलसमानता । एवंमिते स्मृते गात्रे भर्त्तारोग्यवीर्य्यकरे । समे च कषहीने च गजलाभकरे तथा । गजस्य पुष्टिदे नित्यं मांसले च घने स्मृते । गात्रे वारणनाथस्य एवंभूते शुभे मते । पिपिडे वा समलके गात्ररोगकरे सदा । सम्पूर्णे राज्यदे भर्त्तुर्गजस्य बहुसुखदे । तथैव रोमनिचिते गजस्य गजोरगदे । अतःपरं प्रवक्ष्यामि नखानाञ्च शुभाशुभम् । हीनाः कृष्णाश्च रूक्षाश्च कृशाश्च न नखाः शुभाः । सदा च रोगदा हीनाः कृष्णा भर्त्तुर्विनाशनाः । रूक्षाः कृशा गजस्यैव पादव्याधिविवर्द्धनाः । स्निग्धाश्चन्द्रार्द्धसच्छाया मानेनैव पुरोनखाः । सप्तादिपञ्चसंख्यानि चाङ्गुलानि क्रमेण हि । एवंविधा नखाः शस्ता भर्त्तुरारोग्यकारकाः । अतःपरं प्रवक्ष्यामि पादयोरपि लक्षणम् । हीनौ सुषुतलौ रूक्षौ चरणौ दन्तिदुःखदौ । हस्तप्रमाणौ दैर्घ्येण कूर्म्माकारौ सुखप्रदौ । अतःपरं प्रवक्ष्यामि लक्षणञ्चापराश्रितम् । अत्युच्छ्रिते च हीने च निन्दिते चापरे तनू । सम्पूर्णे च शुभे ज्ञेये त्र्यरत्न्यायामसंयुते । निन्दिते रोगदे ज्ञेये पूजिते प्रभुसौख्यदे । द्वादशाङ्गुल हीनं तु चापरान्तर्विभाजनम् । अपरपादयोश्चापि आयामोऽरत्निमात्रकः । नखानां च तथा मानं चतुरादिचतुरङ्गुलम् । प्रधानावयवानान्तु लक्षणं कथितं यथा । उत्सेधायामनाहानां साम्प्रतं कथयाम्यहम् । समतन्तुसमायुक्ततन्तुना वर्त्तितेन च । शुभप्रशस्ते दिने नित्यं मानं कुर्वीत मानवित् । सप्तारत्नि गजेन्द्राणां प्रमाणं वनजन्मनाम् ।

आसनं यावदुत्सेधस्तस्य सन्धिस्तु कीर्त्तितः । पेचकात्प्रतिमानन्तु आयामोऽरत्नयो नव । मध्यदेशे तदानाहो दशरत्निः प्रकीर्त्तितः । मानमेतद्धि भद्रस्य मुनिभिः परिकीर्त्तितम् । सप्तमेन तु भागेन हीनं मन्दस्य जायते । मन्दाद्धीनं मृगाख्यस्य षड्भागेन प्रकीर्त्तितम् । एवं क्रमेण वक्तव्यं मानं मानविशारदैः । किञ्चिन्मानाधिके चापि न दोषः संप्रपद्यते । दोषाणां च गुणानाञ्च बुद्धिरेव फलप्रदा । सत्त्वं हि वारणेन्द्राणां नित्यं तत्त्वेषु संस्थितम् । स्निग्धे मधुनिभे दीप्ते कलविङ्काक्षिसन्निभे । रक्तपद्मदलच्छाये पद्मरागमणिप्रभे । नीलच्छाये अतीक्ष्णे च गजे सत्त्वं प्रतिष्ठितम् । मार्ज्जारवानरादीनां सदृशे नीलकं गजे । हीनसत्त्वाश्च जायन्ते गिरिकूटोपमा अपि । अधिकं पुष्करं यस्य मांसलत्वेन जायते । प्रभयाथ कषायं स्यात्मानेनाष्टचतुष्ककम् । किञ्चिद्द्रुते च विज्ञेये श्रोतसी चतुरङ्गुले । स्थूलपञ्चाङ्गुलायामा त्र्यङ्गुला नाहमानता । हस्तोऽपि पूर्व्वमानस्य स्थूलत्वेनाधिको भवेत् । रोमशोनातिदद्रुश्च पुष्करः षड्भिरङ्गुलैः । आयामेनैव हीनः स्यात् पूर्व्वमानात् षडङ्गुलैः । नातिगोपुच्छसंस्थानः कृष्णबिन्दुविभूषितः । आनाहे रत्निमात्रौ तु चार्द्धहस्तद्वयायतौ । पीयूषकुन्ददन्तायौ किञ्चिद्रूक्षकपिङ्गलौ । स्निग्धौ मुग्धतमावेव दन्तौ नागस्य कीर्त्तितौ । दन्तावैरावतस्यैव कषाक्रान्तौ सुनिष्ठुरौ । पञ्चाङ्गुलौ कटौ ज्ञेयौ मांसोपचयपूरितौ । ज्ञेये कटोपरि तथा श्रोतसी द्व्यङ्गुलान्तरे । एकाशीत्यङ्गुलानाहे द्वाविंशत्यङ्गुलायते । किञ्चिन्नतं कषाक्रान्तं शाहित्यं परिकीर्त्तितम् । पतिमानं तु विज्ञेयं हस्तः सचतुरङ्गुलः । अध्यर्द्धरत्निमानं च प्रमाणान्तरभेदतः । आयामस्तु विज्ञेयस्तस्य धरस्तु दशाङ्गुलः । विंशत्यङ्गुलानस्तु परिणाहोऽभिधीयते । पञ्चाङ्गुलं तु चिबुकं सक्किणी तु नवाङ्गुले । षड्विंशदङ्गुलायामे सकृते परिकीर्त्तिते । अध्यर्द्धरत्निकौ कर्णौ विस्तारेण कषाश्रितौ । कषायपत्रौ स्थूलौ कृष्णबिन्दुविचित्रितौ । सपद्मा मकरायाभावचूकौ कषाश्रितौ । पञ्चाङ्गुलान्तरौ पीनावुभावोष्ठौ दशाङ्गुलौ । कर्णात् कर्णान्तरं यावत् षड्वत्यङ्गुलं शिरः । यातकुम्भं तथा ज्ञेयं स्थूलं सप्तदशाङ्गुलम् । अङ्गुलानां शतं सार्द्धमानाहि द्व्यङ्गुलाधिकम् । आयतत्वं च कण्ठस्य दशाङ्गुलमिति स्मृतम् । भद्रस्यैवासनं ज्ञेयं [illegible] सप्तरत्निकम् । षडङ्गुलोच्छ्रितं स्थूलं तुल्यं चाङ्गूलमानतः । शङ्कमूलाद् हिक्कान्तु जायते पश्चिमासनम् । उक्तं येष

तु हीनं स्यादासनं षड्भिरङ्गुलैः । मेचकस्त्र्यङ्गुलायामोऽस्यस्त्वेनाङ्गुलत्रयम् । विंशत्यङ्गुलमानाख्ये भवेत् पुच्छोऽयमागमम् । प्रान्तपादक्रमेणैव तथायामोऽङ्गुलत्रयम् । दैर्घ्येण तु स विज्ञेयो भूमेरष्टाङ्गुलोच्छ्रितः । इदं वालधिमानं तु मन्दस्य परिकीर्त्तितम् । सार्द्धद्व्यरत्निके मूले अपरे संप्रकीर्त्तिते । उदरे चातिमात्रं स्यान्मेढ्रं हस्तद्वयायतम् । विंशत्यङ्गुलमानाख्ये लम्बच्छायं सदा भवेत् । पञ्च चत्वारि च त्रीणि चाङ्गुलानि नखाः क्रमात् । आपाण्डुविवराः कुन्दाभासाश्चापरपादयोः । अनेनैव तु मानेन गात्रपादसमाश्रयाः । नखा मन्दस्य विज्ञेयाश्चरणाय तथाविधाः । अतिस्थूलः पृथुत्वेन सार्द्धहस्ताधिकः करः । अरत्निकं वा, दैर्घ्येण प्रमाणं गात्रयोरपि । उरोमणि तथा स्येयोरत्निमात्रोऽतिमांसलः । विंशत्यङ्गुलमानस्तु अन्तर्गलमणिर्भवेत् । अनेनैव हि मानेन शातकुम्भः प्रकीर्त्तितः । एते प्रशस्ता मन्दस्य नृनाथ ! कथितास्तव । प्रोक्ता ये तेऽपि भद्रस्य विज्ञेयाः समलक्षणाः । मृगस्य साम्प्रतं वच्मि प्रदेशान् लक्षणान्वितान् । त्र्यङ्गुलं पुष्करं तस्य त्र्यङ्गुले स्रोतसी तथा । अङ्गुलानि च चत्वारि कीर्त्तितान्यस्य चाङ्गुलाः । तनुः करः त्र्यरत्निःस्यादानाख्ये सार्द्धरत्निकः । वाहित्थात् पुष्करं यावन्मानं सद्भिरुदाहृतम् । तथा तनुतरौ दन्तौ दैर्घ्ये सार्द्धद्व्यरत्निकौ । हस्तौ च मस्तकौ स्यातान्तयोः सप्तदशाङ्गुलौ । प्रतिमानं तथा ज्ञेयं निम्नं पञ्चदशाङ्गुलम् । द्व्यङ्गुलं चिबुकं तस्मादधरस्तु षडङ्गुलः । अष्टादशाङ्गुलमानाख्ये सृक्कणी तु षडङ्गुले । स्यातामङ्गुलविंशत्यौ कपोलौ निम्नमध्यगौ । कटौ द्व्यङ्गुलमानौ तु निर्याणे चतुरङ्गुले । नेत्रे चापि तथा स्यातान्निष्प्रभे स्थूलतारके । नातिव्यक्तं समांसं स्याद्वातकुम्भं दशाङ्गुलम् । गर्त्ताकारञ्च निम्नं च कटकुम्भं तथैव तु । अष्टाङ्गुलान्तरं कुम्भ आयामे षोड़शाङ्गुलः । विंशत्यङ्गुलकौ कर्णौ लम्बौ ह्रस्वौ च वर्त्तुलौ । पञ्चत्यङ्गुलानाहा आयामे षोड़शाङ्गुला । ग्रीवा मृगस्य विज्ञेया करालमासनं भवेत् । सार्द्धद्व्यरत्निकायामः कुब्जतङ्कोऽतिमात्रया । वंशोमृगस्य विज्ञेयो निम्नतल्पनिभप्रभः । स्थूलास्थि विषमं निम्नं पुच्छमध्यर्द्धरत्निकम् । आसनेन समं चैव मृगस्य पश्चिमासनम् । पञ्चाङ्गुलस्तु विज्ञेयः पेचकोगुदसंस्तः । कचाग्र्यविषमाकीर्णः स्थूलोह्रस्वश्च वालधिः । अपरापादपार्ष्णिभ्यां हस्तमात्रश्चतुष्कयः । शेषंतनुरुहच्छदोद्विसप्तत्यङ्गुलायतः । तत्प्रमाणे तथा गात्रे चिपिटे चापि निष्प्रभे । चरणाश्च गतच्छायैश्चतुस्त्रिद्व्यङ्गुलैर्नखैः । संयुक्ताःस्फुटिता निम्ना मानेनाष्टादशाङ्गुलाः । एतदुद्देशमात्रेण कथितं मृगलक्षणम् । अतःपरं प्रवक्ष्यामि तेषां बलपरीक्षणम् । गजा न बलहीनेन सुरूपेणापि शोभनाः गुणेष्वपि बलं श्रेष्ठं तत् परीक्षेत पण्डितः । शरीरान्तर्गतः प्राणो बलशब्देन कीर्त्यते । क्रियते धारणस्याथ तस्योपायैः परीक्षणम् । जाम्बूनदस्य ताम्रस्य पलानां रजतस्य वा । अष्टादशसहस्राणि युक्त्वा संस्कन्ध वेगवान् । दशयोजनमध्वानं गच्छति श्रमवर्जितः । यो गजो गजमध्ये तु स उत्तमबलः स्मृतः । यश्चतुर्दशसाहस्रभारमादाय गच्छति । सप्तयोजनमध्वानं स मध्यमबलोमतः । दशसाहस्रिकं भारं गृहीत्वा पञ्चयोजनम् । अध्वानं योहि संयाति स हीनबल उच्यते । सन्निभागद्विहस्तेन परिणाहेन संयुतम् । चतुर्हस्तनिखातं तु योभिनत्युत्तमोहि सः । अथ चोत्पाटयेद्वापि बलेन महता युतः । सार्द्धत्रिहस्तखातन्तु सप्तहस्तोच्छ्रितं तथा । पञ्चाशदङ्गुलीनेन परिणाहेन संयुतम् । भिनत्ति योगजः शीघ्रं क्षिपत्युद्धृत्य वा पुनः । स गजानान्तु सर्वेषां मध्ये मध्यबलो मतः । हस्तत्रयनिखातन्तु षड्हस्तोच्छ्रयमेव वा । युक्तं स्थूलतया चैव पूर्वसंख्यार्द्धमात्रया । भिनत्ति हेलया यस्तु उत्खातं वा करोति वा । स्तम्भं कुञ्जरमध्ये तु स हीनबल उच्यते । गुरुत्वं च यतः श्रेष्ठं गुरुत्वादधिकं बलम् । बलादभ्यधिकं सत्त्वं तस्मात्सत्त्वं निरूपयेत् । शुद्धस्फटिकसङ्काशं सत्त्वं हृदि शरीरिणाम् । दुर्लक्ष्यं विद्यते सम्यगुपायैस्तद्धि लक्षयेत् । सुप्रशस्ते दिने लग्ने गजोगैरिकमण्डितः । कर्णे चामरशङ्खादिसत्साभरणभूषितः । पादान्दोलनसंजातघण्टारवनिभस्वनः । आरोहककरास्फालक्षतोत्थाङ्कोन्नताननः । अत्यन्तं ढौकयेच्छीघ्रं पार्श्वकोलाहलाकुलः । वेगोत्थानकृतास्फोटदन्तसंघट्टमर्द्दनैः । कृतां कामपि न हस्तस्य वेदनां यो न मन्यते । यो हि मर्द्दःकृतास्फालैः स्वकटं भर्त्तुमिच्छति । नापसर्पति भीत्यानोप्रतियातं रणात् क्वचित् । कण्ठगर्जितनादेन परिपूरितदिङ्मुखः । निवर्त्तते च दुःखेन स भवेत् सत्त्ववान् गजः । य त्यम्बसमूहं वा गजमालातिभीषणम् । रागोत्थानसमुद्भूतमस्योरकलहाकुलम् । उत्थाय समरे गच्छेद्रोषरञ्जितलोचनः । दन्तदारणरागेण प्रतिनागकृतेक्षणः । प्रसारितैरतिस्तब्धैर्निःशङ्कं कर्णपल्लवैः । यो गच्छत्यतिवेगेन स भवेत् सत्त्ववान्-

गजः । शार्द्दूलार्त्तिस्वानैर्भयवर्जितमानसः। क्षतकं च तथा नागं योऽभिगच्छत्यसौ हि सः । दावानलाग्निसन्निभो नीलाब्दसंनादगर्जितः । वनेषु विचरत्येव स सत्त्वसहितो गजः । क्षतबद्धावपाद्यस्तु न वारोहणमीयते । मङ्क्षन् मस्तकं दीनोऽमन्दान्मन्दतरो भवेत् । आलोकयति पार्श्वानि चीत्कारकरणप्रियः । आलोकयति पोत्राभ्यां लोचनाभ्यामतिद्विपम् । पदाक्रमणमूढं वा ज्वलन्तमिव गच्छते । अधमस्तु सुविज्ञेयो गज सः श्रमवर्जितः। यस्तु संघटते मन्दं चटितश्चापसर्पति । तथापसर्प्य वेगेन दन्ताघातं प्रयोजयेत् । किञ्चित्तिर्य्यङ्मुखीभूत्वा कृतचीत्कारनिस्वनः । कुरुते दन्तसंघातम् स विज्ञेयोऽधमो गजः” ।

प्रथमादिपञ्चदशासु मदविकारभेदमुक्ताह तत्रैव ।
“तटतरुभवनोन्मूलनरतस्तु पश्चाङ्गजो भवति । करयद्वाचितकटस्थल गलन्मदसलिलसिक्तभूमितलः । संग्रामे रिपुभटकरविमुक्तशरनिकरगलस्यन्दः । करवीरपुष्पलोहितलोचनः स चारुदारुणाकारः । प्रतिनागसंघदारणाक्रातिरंगस्तु सप्तम्याम् । न मृगेन्द्रं नैव पश्यति च न भयज्ञानाति सर्वसत्त्वकृतम् । यत्र घनास्फालितं सुसरितं धावनं पतति कारयन् । न सहन्ते तस्य गन्धं सङ्कोचितनालकुञ्जकरकटाः करिणः । मर्द्दितनिजवधा विमुक्तनादाः प्रणश्यन्ति । न तथा मङ्गाभरणैर्न चामरैर्नीलमालाभिः । भवति यथा मदधारैर्मुखस्य शोभा गजेन्द्राणाम् । क्रमविरहिता भवति हि षष्ठी वा पञ्चमी चतुर्थी वा । द्दोणावस्था करिणां सत्त्ववतां मदविशेषेण । अतिदृढमदविकारे कुर्व्वन्ति विपुमदेऽपि मातङ्गाः । सत्त्वातिरेकयुक्तावकस्य शोभां परां प्राप्ताः” । स्वल्पभेदे न मदोद्गमफलं तत्रैवाह ।“कुरुते नरपतिहृष्टिं दक्षिणगण्डस्थलोद्गतन्दानम् । रोमोद्गतं च वाद्यविशेषसुखदं सदा भवति । उभयकटस्थलसमनिर्गतं च विषयस्य वृद्धिकरम् । शिशिरसुगन्धिपरिमलं सुखप्रदं जायते भर्त्तुः । माङ्गल्यं श्रोजननं सौभाग्यकरं सत्त्वजननं च । माद्यन्ति यत्र देशे दशाविपाकेन बलक्षतानन्दाः । करिणस्तस्मिन् राजा वर्द्धितवंशः सुखं वसति । कतकवकुलैलापरिमलश्च सुखदोमदो भवति । मूत्रपुरीषस्वेदासृक्कफरसोत्पादितोऽग्रगन्धधरः । अशुभकरोऽसौ नरपतियात्रणाज्ञायते मदः । जायन्ते ये भावा राजन् ! मदखण्डमण्डितमुखस्य । नागस्य मदविशेषास्तांस्तान् प्रवक्ष्यामि । चालयति दुर्मुखमिवामाद पुष्करं क्षिपति प्रेरयति । लेढि-जिह्वाग्रेण सृक्कणी विघटितोष्ठपुटः । संपीड्य पुष्कराग्रेण चाङ्गुलिं निःश्वसन्नाभोवदनः । तिर्यक्प्रेक्षी भवति लोचिताक्षः कर्णं स्थितौ । तिर्य्यक् चालितवदनमङ्गुल्या पुष्कराग्रकम्पेन । किञ्चित्प्रसुप्ततारः कर्णकण्डूयनं कुरुते । किञ्चित्र दर्शयित्वा मेढ्रं नाशयति कोपकम्पनम् । हृष्टः क्रीडति परिवर्त्तितानगो मज्जनरसश्च कृतपतृषरः । प्रधावति संवेष्ट्य करं विषाणमुद्यम्य गर्जति सलिलपूरितजलधरगम्भीरनादेन । उद्यासितापहसः सच्छन्दकृच्छ्रतिकामि । गुरुमधिकश्च भवति वनतरुगहनोन्मूलनातुरतः। यागङ्कुशसुखजातं बाधनं न सहते ह्यभिमसत्त्वोग्रः । तिर्य्यग्विकलत्वाच्च तथा सगजो गुरुमधिकोग्रयः । रमते च पांशुविकरणकर्दमावगाहाद्यैः । एवंविधस्वभावो मदभेदवशाद्गजो भवति । यो यस्मिन्नेव ऋतौ त्यजति मदमतङ्गजः सुखदम् । स च तस्मिन्नेव पुनः प्रभिद्यते दानयुक्तश्च। इति मदवृद्धिविशेषाः कथितास्तव भूतलेश ! तत्त्वेन । परिवर्त्तते मदोऽयं हेतुभिरशुभैस्तु तान्यस्ते । प्रतिवारणाभिघातात् राध्वगमनात्क्षुभोजनाच्चापि । बन्धनदोषाच्च तथा तृष्णाकुलीकृताच्चापि । शार्द्दूलादिलासाहाशानलोल्काशनिप्रपतनाच्च । (अशनिरत्र विद्युत्)। नश्यति मदो गजानां शीघ्रं वर्त्म विभ्रमतश्च तथा । मातापितृजैर्दोषैर्मन्दमदानन्दवर्जिताश्च तथा । जायन्ते द्विरदा यैर्यथा तथा साम्प्रतं वक्ष्यामि । मन्दमदेन हि करिणा जगतः किञ्चिन्मदो गजो भवति। मदविरहितेन तथा जनितो मदविवर्जितोऽप्येव । समदेन तु यो जातो गजो गजेन्द्रेण भवति तस्य मदः । एवं मदप्रकारा मातङ्गानां समुद्दिष्टाः । शृणु साम्प्रतं नरेश्वर ! मदापसरणोद्भवानि चिह्नानि । यानि भवन्ति गजानां मन्दमृदुमदविगलितसमुद्यानाम् । स्वच्छायायुक्तो निस्तोषितगण्डस्थलमतन्त्रीः। कुप्यति येभ्यः शङ्काङ्करोति तेभ्योऽपि सत्त्वस्थः। गण्डस्थलेन जिघ्रति करेणुकां स्पृशति नैव हस्तेन । मूत्रपुरीषाणि च यो जिघ्रति वारणकृतानि यातुर्वा पार्श्वैर्गच्छति । सततं परिमृष्टदानराजिपरीकीर्णकटोऽहस्तेनातीव सङ्घर्षणं कुरुते। मुहुरभिनन्दति निद्रामलसो मनसा न तुष्टिमुपयाति । लिङ्गान्येतानि करिणो मदेन मुच्यमानस्य जायन्ते । प्रतिकुञ्जरयुद्धकृतो बलहर्षदशावयोभ्यस्त्वशुभः । भवति मदो नागानां तापादिषु सङ्क्षयश्च शुभः”। “रूपवान् मदसम्पन्नो विन्ध्यशैलसमप्रभः। जायते सत्त्वहीनस्तु कुञ्जरः येन हेतुना। येन वा रूपहीनोऽपि मदोच्छ्रयविवर्जितः । सत्त्ववान्

जायते नागो एतदाख्यातुमर्हसि” इति गरुड़पृष्टो बृहस्पतिरुवाच । “यथा जातकयोगेन जन्तूनां च शुभाशुभम् । तथा बन्धनकालोत्थकुञ्जानामपि जायते । सुलग्नावस्थितैः सौम्यग्रहैः पीड़ाविवर्जितैः । बन्धनं यस्य जायेत स भवेत् सत्ववान् गजः । क्षीणबलेषु गृह्यन्ते ये गजाः क्रूरदृष्टिभिः । ते चालोकितचलास्ते भवन्ति भयाकुलाः” । उक्तञ्च मनुना “मृगजातयोऽपि हि शूरा भवन्ति मधुपिङ्गललोचनाः स्निग्धाः । वृषसिंहमीनवृश्चिकलग्नेषु स्वीकृताः करिणः” । पुनर्गरुड़प्रश्ने गुरोः प्रत्युक्तिर्यथैव । “राजन् पञ्चविधं चैव गजानां विदितं मतम् । अत्यर्थं प्रथमं ज्ञेयं प्रत्यर्थं च तथापरम् । अन्वर्थं चैव गम्भीरमुत्तानं पञ्चमं भवेत् । प्रतोदाङ्कुशदण्डाद्यैर्विद्यादुद्वेजितानि यः । तीव्रशङ्कुचितस्पृष्टः स स्यादत्यर्थवेदिता । स्तोकं बहु बहु स्तोकं चतं मन्येत योगजः । चागङ्कुशादिभिर्नित्यं स हि प्रत्यर्थवेदिता । आनात्यङ्कुशतोत्राद्यैर्यथा तत्तथैव हि । चतज्ञायभयैर्ज्ञातोऽन्वर्थस्तः स गजो भवेत् । अङ्कुशादिव्रणान् राजन्! यश्चिरेणावगच्छति । तीव्रानपि स गम्भीरवेदी भवति वारणः । रोमस्थानमपि तृणेनापि स्पृष्टं वेत्ति तु यो गजः । उत्तानवेदिनं तन्तु गजं विद्धि महाभुज ! सर्वाणि वेदितव्यानि भद्रादीनां भवन्ति वै । प्रकृतिस्थस्य सततं भद्रस्यात्यर्थवेदिता । गम्भीरवेदिता चापि मन्दस्यैव प्रकीर्त्तिता । उत्तानवेदिता नित्यं मृगस्यैव भवेन्नृप ! । वेदित्वं गजजातीनां तिसृणामपि जायते । साम्प्रतञ्च यथाशास्त्रं कथ्यते वेगलक्षणम् । तिसृणामपि जातीनामुत्तमाधममध्यमम् । न चाल्पं न च दृढं द्विपञ्चपदसंस्थितम् । गजोत्थानसहोत्थानं नरं प्राप्नोति येन तु । रयाविष्टेन मनसा स वेगउत्तमोमतः। (द्विपञ्चपदसंस्थितं दशपदस्थितं गजोत्थानसहोत्थानं गजधावनसमसयधाविनम् ) येन वेगेन गृह्णाति नरं सप्तपदान्तरम् । पदानां शतमात्रन्तु स मध्यमजवो भवेत् । येन पञ्चपदस्थं हि नरं गृह्णाति नोदितः। पदानान्तु शतं सार्द्धं स हीनोजव उच्यते । शतद्वयं वा धनुषां गच्छेदुन्नमिताननः । द्वात्रिंशता च मात्राभिः स उत्तमजवो भवेत् । पञ्चाशता च मात्राभिः यायाद्यस्तु शतद्वयम् । स मध्यमोऽधमो ज्ञेयो मात्राणाञ्च शतद्वयात् । एवं परीक्ष्यते राजन्! वेगो वीथिषु दन्तिनाम् । अतःपरं प्रवक्ष्यामि गजस्य गुणलक्षणम्” ।

तत्र कल्याणशीलः “भाराहितोवा क्षुधितः क्षीणः श्रान्तोऽथ भूषितः । रात्रौ वा दिवसे वापि निर्विकारस्तु यो भवेत् । कल्याणशीलः स ज्ञेयो समस्तगजलक्षणैः विकारं कुरुते यस्तु पीड्यमानःक्षुधादिभिः । तमकल्याणिनं राजन् गजन्दुष्टं प्रकल्पयेत् । कोपोऽपि द्विविधो ज्ञेयः शिशुर्वाशिशुस्तथा । द्विविधस्यापि राजेन्द्र! यथावच्छृणु लक्षणम् । उद्वेजितोऽपि कालेन कोपं बध्नाति निर्भरम् । क्षिप्रं गृह्णाति च क्रोधं दुर्निवारं मुहुः सहम् । शिशुक्रोधः स विज्ञेयो गजलक्षणकोविदैः । वार्यमाणोऽपि यत्नेन न वशं याति मुह्यति । स ज्ञेयस्त्वशिशुक्रोधो राजन्! स हि रणप्रियः। साम्प्रतं चैव वक्ष्येऽहमायुर्लक्षणमुत्तमम् । आभ्यन्तरं च बाह्यञ्च लक्षणं द्विविधं स्मृतम् ! आभ्यन्तरं योगसाध्यं बाह्यं किञ्चिच्च लक्ष्यते । तेनान्तरं परित्यज्य बाह्यं लक्षणमुत्तमम् । क्षेत्रसत्त्वसमायोगा । भवन्ति द्वादशैव हि । एकं हस्तगतं क्षेत्रं द्वितीयं वदनाश्रितम् । तृतीयञ्च विषाणस्थञ्चतुर्थं शिरसिस्थितम् । पञ्चमं नयनस्थं च षष्ठं कर्णाश्रितं भवेत् । कण्ठस्थं सप्तमञ्चैव अष्टमं गात्रसंस्थितम् । नवमं चरणे ज्ञेयं शेषाङ्गस्थं द्विपञ्चमम् । एकादशञ्च कान्तिस्थं द्वादशं सत्वसंस्थितम् । एवं द्वादश क्षेत्राणि मातङ्गानां भवन्ति हि । द्वादशैव दशाज्ञेयाः शेषाङ्गेष्वभिलक्षिताः । विंशोत्तरं वर्षशतम्भद्रस्यायुः प्रकीर्त्तितम् । अष्टाशीतिर्मन्दस्य चत्वारिंशत् मृगस्य च । मिश्रस्य चायुषः संख्या जातिभावेन जायते । प्रदेशस्थानतत्त्वज्ञो जातिं समुपलक्षयेत् । सर्वक्षेत्रैः सुसंपूर्णैः संपूर्णायुर्गजो भवेत् । हीनैश्च हीयते चायुर्यावदभिधीयते । दशाब्दानां क्षयं कुर्यात्तल्लक्षणवर्जितः। विंशत्यब्दविनाशश्च हीने क्षेत्रद्वये भवेत् । क्षेत्रत्रयावहीने च त्रिंशदब्दपरिक्षयः । चत्वारिंशत्समाहानिर्हीने क्षेत्रचतुष्टये । (समा संवत्सरः) । पञ्चाशदब्दाहीयन्ते हीने तु क्षेत्रपञ्चके । षट्क्षेत्रहीनतायान्तु षष्टिवर्षविनाशनम् । सप्तत्यब्दविनाशाय सप्तक्षेत्रविहीनता ॥ अशीतिरष्टभिर्हीने वर्षाणाञ्च विनश्यति । नवतिर्नवभिर्हीनैः क्षेत्रैर्नाशं हि प्रयाति । दशभिश्च तथा हीनैर्नश्यत्यब्दशतं ध्रुवम् । दशोत्तरं चाब्दशतं हीना छाया विनाशयेत् । विंशोत्तरं चाब्दशतं हीने सत्त्वे विनश्यति । एवं दशाब्दनाशं च क्षेत्रं कुर्यादलक्षणम् । एवमायुःक्षयं विद्यात् गजस्य गजकोविदः । सामान्यलक्षणं ह्येतत् जीवितस्य परीक्षणे। विशेषलक्षणं यावत् षड्लक्षणजातितः । एवमुद्देशमात्रेण गजायुर्लक्षणं तव । कथितं साम्प्रतं राजन् ! दोषञ्च विविध लक्षणम्। पादानां लक्षणं सम्यक् दन्तदोषं प्रणा

-येत् । दन्तयोर्लक्षणं हन्ति दोषान् बाहित्थसंश्रितान् । बाहित्थलक्षणैः सम्यक् नेत्रदोषक्षयो भवेत् । नेत्रयोर्लक्षणं हन्ति दोषांस्तालुसमाश्रितान् । स्तकदोषविनाशश्च क्रियते तालुलक्षणैः । स्तकायां लक्षणं कुर्य्यात् मगद्दोषनाशनम् । कपोलकटदोषघ्नाः मगदस्याशुणा नृप ! । निर्याणशानकुम्भामान्दोषघ्नः करयोर्गुणः । कुम्भदोषविनाशाय तयोरेव गुणो भवेत् । कर्ण-दोषविनाशस्तु क्रियते कुम्भलक्षणैः । कण्ठदोषविनाशाय कर्णलक्षणमेव हि । आसनस्य हि ये दोषास्तान् हरेत्कर्णजोगुणः । वंशदोषक्षयकर आसनस्य गुणो भवेत् । गुणाघ्नन्ति हि वंशस्य दोषान् तत्स्थलसंश्रितान् । पश्चिमासनदोषघ्नं लक्षणं तत्स्थलाश्रितम् । कुक्षिमेचकदोषघ्नं पश्चिमासनलक्षणम् । गुणाः मेचककुक्षिस्थाः पुच्छदोषविनाशनाः । मेढ्रदोषक्षयं कुर्य्यात् पुच्छलक्षणमेव हि । मेहनस्य गुणा हन्ति दोषांश्चापराश्रितान् । अण्डकोषगतं दोषमपरालक्षणं हरेत् । नाभिदोषक्षयं कुर्य्यादण्डकोषस्य लक्षणम् । नाभेर्गुणैश्च हन्यन्ते दोषास्तानसमाश्रिताः । उरोमणिगतान् दोषान् नाशयेत् स्तनलक्षणम् । चिबुकस्य हरेद्दोषान् उरोमणिगतोगुणः । यथा दोषक्षयो राजन् ! लक्षणैः क्रियते शुभैः । दोषातिरेकोऽपि तथा प्रदेशगुणनाशकः । प्रदेशोऽनन्तरस्यैव प्रदेशस्य गुणान्वितः । कुरुते दोषनाशं हि स दोषोगुणनाशनः । वारकुम्भत्रिशाखात्रिकर्णलक्षणसंयुतः । सर्व्वैरेवाशुभैरन्यैर्लक्षणैः शुभोगजः । मूलं चन्द्रांशुशुभ्रं स्यादग्रं च ज्वलनप्रभम् । वज्रं काञ्चनसङ्काशङ्कादरड़ःसुपिङ्गलः । एतेषां च समायोगाद्दन्तानां मधुपिङ्गता । यतो गजविशेषाणामतो मधुनिभाः शुभाः । भद्रजातेर्गजस्यैतन्मन्दस्य च मृगस्य च । घृतपीयूषकुन्देन्दुकेतकीच्छविपञ्चकम् । एवं जातित्रयस्यापि सामान्यं शोभनं मतम् । कपोतधूम्रभस्मास्थिपर्पटकसन्निभाः दन्तयोस्त्वशुभा राजन् ! छाया पञ्चविधा अपि । अध्यर्द्धारत्निकं राजन् प्रमाणं दन्तयोः शुभम् ।

अत ऊर्द्धं प्रवक्ष्यामि गजानां वर्णलक्षणम् । आहारस्य विशेषेण वातपित्तकफैस्तथा । देशलक्षणगुणैश्चैव वीजयोनिवशेन । पक्षालोकननक्षत्रलग्नराशिवशेन च । पूर्वकर्म्मवशाच्चापि धातूनाञ्च विपर्य्ययात् । भवन्ति कारणैरेभिर्वर्णा नानाविधा नृप ! । दिव्यसत्त्वाः शुभैर्भेदैर्विविधास्ते भवन्ति हि । सिन्दूरगन्धर्पद्दूर्वाविद्युज्जाम्बूनदप्रभाः । इन्द्रनीलसमानाभा भवन्ति शुभकान्तयः । अतिश्वेताश्च रक्ताश्च शुकवर्हिणसप्रभाः । एते देवगजाः सर्व्वे भूतले न भवन्ति हि । अतिश्वेताश्च रक्ताश्च शुकवर्हिणसप्रभाः । दैवयोगाद्वने प्राप्ये कश्चिदेव भवन्ति हि । वन्दनीयश्च पूज्योऽसौ नागो प्राज्ञैर्नराधिपैः । म्लक्ष्णाङ्गाराङ्गारभस्मास्थिपङ्कमाञ्जिष्ठसन्निभाः । कृष्णधूम्रसवर्णाश्च गजास्ते तेऽतिनिन्दिताः । एवं वर्णविशेषास्तु कथितास्तव सुव्रत ! । गजमेकादशगुणं वक्ष्यमाणं निबोध मे । मधुसन्निभदन्तश्च स्यात्सोमधुनिभेक्षणः । उदरे पार्श्वयोर्वर्णश्च वक्रो च कमलप्रभः । द्विरेफसमवालश्च कुन्देन्दुसदृशैर्नखैः । स्थूलतारोमयुक्तश्च शेषेष्वङ्गेषु पीतकः । विचित्रञ्च मुखं यस्य रक्तैः श्वेतैश्च विन्दुभिः । स नागोगजयूथानां मध्ये राजाऽत्र जायते । तं प्राप्य नृपतिर्भुङ्क्ते सागरान्तं महीतलम् । नीलसवर्णसंस्थानः तु गजोयूथनायकः । मुखे मदे च हस्ते च कर्णोदरशिरस्सु च । केशैः शुभैश्च वलिभिर्विन्दुभिः परिमण्डलैः । सवर्णोयो भवेद्दन्ती कैलासः सोऽभिधीयते । अतःपरं प्रवक्ष्यामि निःश्वासस्य तु लक्षणम् । निःश्वासोद्विविधोज्ञेयः शुभश्चाशुभस्तथा । शुभः सुरभिगन्धः स्यात् पूतिगन्धोऽशुभोमतः । विशेषेण तयोश्चैव लक्षणं भूप ! कीर्त्यते । सूक्ष्मता दीर्घता चैव समता च सुगन्धिता । सौकुमार्य्यं मृदुत्वं च निश्वासस्य तु षड्गुणाः । स्थूलता ह्रस्वता चैव दुर्गन्धत्वं तथोष्णता । पारुष्यं विषमत्वञ्च दोषाश्चापि भवन्ति षट् । दशारत्निप्रमाणं च रेणुकं पित्तलक्षणम् । यो निश्वसिति दीर्घं च स दीर्घायुर्गजो मतः । अतःपरं प्रवक्ष्यामि गजालोकितलक्षणम् । स्निग्धं स्थिरं च सौम्यं च वारिजोत्फुल्लतारकम् । सलज्जं प्रतिभागं तु प्रेक्षितं शुभकारणम् । उद्विग्नञ्चञ्चलं दीनमविकाशिततारकम् । ऊर्द्धाधः पार्श्वदृष्टञ्च निरीक्षं निन्दितं भवेत् । कणानां शाश्वतं भेदान् वक्ष्यमाणान्निबोध मे । नेत्रयोः पुटपालिस्थाः कणाः शुभफलाः स्मृताः । संख्या तस्यैव मानन्तु रोम्णां चैव प्रकीर्त्तितम् । देहच्छायासवर्णत्वं मृदुत्वं च तथा परम् । अनाविलत्वं घनता मध्या च स्फुटितायता । अंशुमत्ता च सूक्ष्मत्वं रोम्णां सप्त गुणा स्मृताः । दोषाश्च सप्तसंख्याः स्युर्गुणानां च विपर्य्ययात् । शुभानि शुभकर्त्तॄणि दुःखदान्यशुभानि च । अतःपरं प्रवक्ष्यामि लक्षणं पक्ष्मसंश्रयम् । ताम्रोत्तानानि रूक्षाणि दीर्घाग्रावतनानि च । मृदूनि पिङ्गवर्णानि पक्ष्माणि करिणः सदा । स्निग्धच्छायानि लघ्णानि समानि च दृढानि च । अयनानि मत्कुणमुखाणि पक्ष्माण्यतिशुभानि च । गजानां स्वामिनः

सौख्यं कुर्व्वन्ति रमणीयताम् । दन्ताः स्निग्धाः समाश्च शुक्लाश्च चन्द्रप्रभाः । तालवृन्तसमाकारा कर्णा भर्तुर्जयप्रदाः । शुनःपुच्छसमा ह्रस्वाः कपिलाः स्फुटितास्तथा । घनत्वातिशयोपेताः शुभास्त्वतिनिन्दिताः । भर्त्तुरारोग्यनाशाय नित्योद्वेगकरास्तु ते । अतःपरं प्रवक्ष्यामि केशानामपि लक्षणम् । अभिन्ना ऋजवः स्निग्धा घना मधुकरप्रभाः । ज्ञेया वारणनाथस्य क्षेमवृद्धिकरा मताः । रूक्षास्तु निष्ठुराः पिङ्गाः स्फुटिताश्च जुगुप्सिताः । कुर्व्वन्ति दन्तिनां नित्यं स्वस्य नाथस्य चाशुभम् । पक्ष्मणाञ्चकेशरोमणां लक्षणं कथितं मया । कपिमार्जारमण्डूकशृगालैश्च समप्रभम् । वानरस्य समं चैव मुखं नागस्य निन्दितम् । स्निग्धान्यापूर्णगण्डानि गिरिकूटनिभानि च । आपूर्णमेघरूपाणि पूजितानि मुखानि वै । मदहीनं कृशं ह्रस्वं शाखिस्थनिःप्रभं तथा । वराहकोपगाक्रान्तमहत्पिचुकं तथा । ललाटतटपर्य्यन्तमसौम्यतिमिरन्वितम् । मदं हीनतायुक्तं मुखं नागस्य निन्दितम् । मुखस्य लक्षणं सम्यक् कथितं तव सुव्रत ! । अतःपरं प्रवक्ष्यामि मातङ्गगतिलक्षणम् । समा च लघुपादा च वेगेऽप्यतिशुभा मता । दीर्घक्रमा सुखोत्क्षिप्ता गात्रसंवरहारिणी । शुभलक्षणसंयुक्ता पुरुषस्य वकस्य च । मातङ्गहंससिंहानां गतिर्धन्या शुभा मता । क्रोधचलितगात्रा या विषमा सुलघुक्रमा । वेगेऽपि मन्दसञ्चाराविशेषान्दोलितासना । खरस्य ककलासस्य जम्बूकस्य खरस्य च । गमनेन समा या, सा शुभा नो दन्तिनाकृतिः । कथितं तव राजेन्द्र ! गजानां गतिलक्षणम् । स्थितानाञ्च यथायोगं साम्प्रतं लक्षणं शृणु । पञ्चस्थितसप्तस्थित नवस्थित द्वादशस्थिताश्चैव । पुण्यवतां जायन्ते राज्ञां गिरिसन्निभाः करिणः । कलापरहितैः स्निग्धैः करकुम्भविषाणकर्णनयनैश्च । संयुक्तो भवति गजो वसुदः पञ्चस्थितो नागः । (वसुदः धनदः) परिणाहायामोच्छ्रयबलविक्रमधैर्य्यकान्तिसम्पन्नः । भर्त्तुः प्रतापजननो ज्ञेयः सप्तस्थितो हस्ती । उत्साहवेगसाहसमदसत्वगुरुत्वदक्षतायुक्तः । करदन्तकर्म्मसु कुशलोनवस्थितः करी भवति । बहिर्मेधा सत्वं यत्नःकुम्भौ तथाऽलिणी हृदयम् । रोमाणि चर्व्वपादाः तथासनं पृष्ठवंशश्च । द्वादश चैतानि सदा स्थितानि दृश्यन्ते यस्य नागस्य । स द्वादशस्थितोवै भवति गजः सर्व्वसौख्यकरः । सञ्चारस्थितभेदाः कथिता शुभसंश्रया गजेन्द्राणाम् । दिव्याश्वसत्वानां लक्षणमिह साम्प्रतं वक्ष्ये । निहतद्विपदचतुष्पदकुणपाश्च स्पृशति च न यो जिघ्राति । न च जिघ्रति मूत्रादीन् स वारणो दिव्यसत्वस्तु । दत्तञ्च योऽत्ति मांसं सत्वानां सर्व्वं तु लोभेन । जिघ्रति मूत्रपुरीषाणि पिशाचसत्वः स विज्ञेयः । एवं सत्वपरीक्षा क्रियते नरनाथ ! वारणेन्द्राणाम् । स्वरलक्षणमिदानीमशुभं शुभञ्च वक्ष्यामि । स्थानान्यष्टौ नृपते ! भवन्ति शब्दस्य वारणेन्द्राणाम् । ताल्वोष्ठशिरउरःकरजिह्वामूलं गलकपोलौ च । गम्भीरसौम्यहृद्यास्तथाप्यमीरितास्तथा स्निग्धाः । नादाः शुभाः नराधिप ! षडेव कथिता गजेन्द्राणाम् । चत्वारस्त्वशुभा रौद्राभयशोकशङ्कोत्पन्नाः । एवं शुभाशुभाश्च दशप्रकाराःस्वरा ज्ञेयाः । अन्येऽपि गजवक्त्रागनिलास्फालनोद्भवा बहवः । शब्दाभवन्ति करिणां शुभाशुभं च तैर्भवति । निष्ठ्योषितचिबुकायितविहसितकूजितखरोग्रनादनिभाः । वायसजम्बूककपिकासभञ्जनकखारवास्त्वशुभाः । ज्ञेयानि शुभानि सदा मृदङ्गजीमूतदुन्दुभिनिभानि । पातायितगर्जितहसितानि वृंहितानि नागानाम् । पातायितञ्च ताल्वोष्ठसम्भवं गर्जितकं चैव । जिह्वासमुद्भवं च फेनायितमित्यभिख्यातम् । हसितं कपोलजनितं शुण्डाग्रविवरोद्भवञ्च नागानाम् । भवति धनधान्यवाहनभूलाभकरं नरेन्द्रस्य । हस्तेन मृदङ्गरवं तु कर्णाभ्यां दुन्दुभिस्वनञ्चैव । दर्दुररवं तु मेघवत्रेन करोति योऽसौ जयकरः । सर्व्वस्थानसमुत्था शब्दा नरनाथ ! वारणेन्द्राणाम् । आचार्य्यैः सर्व्वैर्वृंहितसंज्ञाश्च रवाः शुभा ज्ञेयाः । एते च जयपराजयकथनसमर्था भवन्ति भूपानाम् । गर्हितशुभप्रदेशस्थानाङ्गपरिवर्ज्जिता नादाः । शुष्कतृणकाष्ठकण्टकवल्मीकास्थिश्मशानदुष्टाश्च । पाषाणाङ्गारादिषु भूमिषु यदि संस्थिताः करिणः । वृंहन्ति हीनलक्षणमेतत्तुतदाऽशुभं भवति । प्रभूतमृदङ्गरवं तु यदि वृंहन्त्यानन्दपूरिताः करिणः । प्रस्थानं भवति तदा नराधिपस्य विजयस्तदा राजन् ! । सभामध्ये च यदा वृंहन्ति शार्दूलवत् गजाः श्रुत्वाः । भवति ससैन्यस्य तदाविजयः संख्ये नरेन्द्रस्य । (संख्यं संग्रामः) कलहंसनाद मधुरं किञ्चिदिषोत्क्षिप्तपुष्करस्तु यदा । वृंहति सदा च हस्ती तदापि जयोभवेद्भर्त्तुः । कर्णविवरकपोलगतं वृंहत्यसकृत् गजो यदा हृष्टः । मधुरञ्जलहसितञ्च जयप्रदं भवति भूपानाम् । त्रीन् वारान् क्रौञ्चरवं हंसरवं वृंहितं यदा कुरुते । एतदपि नागहसितञ्जयप्रदम्भवति भूपानाम् । गर्जति घनवत् सततं यदि वारणः प्रहृमनाः सुखरत्नेनिविष्टकरस्तदाऽरिविजयोऽभवेद्भर्त्तुः । धनदन

म्हीतसलिलं सशीत्कारं बृंहितं यदा कुरुते । भवति तदा नरपतिनाशश्च भवति शत्रुनाशः खल्वेव । कथितान्येतानि मया शुभानि गजबृंहितानि नरनाथ ! । अशुभानि च नागानामतःपरं प्रवक्ष्यामि । शङ्काचकितनयनो वराहघुरितनिःस्वनं कुरुते । तत्प्रतिबलस्य नूनम् तदा जयो भवति । भूपाल ! वेष्टितभूतलहस्तो नदति यदा धरणिप्रकम्पनाद्वनम् । नरपतिराष्ट्रविनाशो भवति तदा शत्रुसैन्यकृतः। मदच्छादितखरतरमधुरं निःस्वनं यदि करी कुरुते । जनयति विजयविनाशात् परराष्ट्रपीड़नं च तदा । अविभुग्नविषाणवदनं यदि वा सततूत्काल्य च हस्तम् । वामान्दोलितचरणोयदा करी बृंहति सनिःश्वासम् । व्याधानगतः कुरुते तदा बद्धोयाता वैरिभिःपाशैः। एवं प्रकृतिस्था यदि मतङ्गजा बृंहितानि कुर्वन्ति । आत्यन्तिकानि राज्ञां चैव भवन्ति वाच्यानि" । "यदि रिपुगजाभिमुखो निवार्यमाणोऽपि याति रभसेन। विंशतिपदानि नागस्तत्रापि जयो भवत्येव । अमदोऽप्युज्झाति मदं दुर्गन्धमदश्च सुरभिमदम् । दुष्टगजानां प्रथमन्तु लक्षणमेवं सकलम् । ह्रस्वतनुर्भग्नवदनो हि महाशिरास्तब्धकर्णयुगलश्च । नातिस्थूलोऽसितवर्णः श्यामानि च गात्रवदनरोमाणि । व्यालः स भवति हस्ती दुष्टात्मा दुष्टशीलश्च । स्थूलाक्षिपाण्डुरूक्षो दीर्घविषाणोन्नमितमुखश्रीः । पृथुपादः श्यावनखो वक्रोत्कटदन्तदण्डेन। विकृतकुक्षिश्च श्वोदरस्य कृष्णोवराहनयनश्च । प्रेयोवकीबनामा ख्यातोऽयं सर्वदोषकरः । अतिह्रस्वापरगात्रो ह्रस्वमुखः काककृष्णनयनश्च । स्थूलतराधोहस्तदन्तदीनहृतस्फुटितवहिर्नखपादः । स्थूलनखःस्थूलपुष्करकरश्च वामन संज्ञो गजाधमो दुष्टशीलश्च । विषाणे चातिदृढे ह्रस्वे परिमण्डलौ तथा कर्णौ । वदनञ्च मांसलं स्यादधोगतस्थूलनयनश्च । समांसलत्वङ्को ह्रस्वो ह्रस्वाङ्गुलिः करो यस्य । नाम्ना च विश्वरूपमुख इति ख्यातो दुष्टमातङ्गः । करकर्णशिरोबालाधिविषाणगात्राणि यस्य हीनानि। आदग्धभोऽतिवामनाङ्गः पापात्मा स स्वामिनाशकरः । शयनादुत्थाय बलादुत्थावपि पादौ कर्षति कष्टेन। प्रत्युषसि गच्छति पुनः क्वापि समुपस्थापितमुखश्च । अनिभृतगात्रश्छिद्रेदिप्सति तस्याननं च कर्णाभ्याम् । स ज्ञेयो घातकरः पापात्मा सर्वपापकरः । यस्य च लिङ्गाख्यं मेढ्रं ह्रस्वं ह्रस्वाङ्गुलिस्तनुर्ह्रस्वा । अतिनिम्नश्च वाहित्थं कर्णौ च तनुत्वचौ ह्रस्वौ । गात्रापरश्च दीर्घं नखाश्च अनितान्तरास्तथा । सर्वाणि च कालाभपक्ष्मरोमाणि च विदग्धानि।

उदरञ्चाकृष्णं स्यात् ग्रीवा तन्वायता च पक्षा च । वंशिकनामा मतोऽसौ दुष्टगजोवर्जनीयश्च । यस्य कराग्रौ दशनौ स्थूलौ नात्यन्तरन्तथा ह्रस्वम् । अकिणकशुक्लवर्णःकपिलम्बुकलोचनोऽतिविस्ततनुः । पापात्मायं हस्ती राज्ञा ह्येयः प्रयत्नेन । दिवसमपि यत्र तिष्ठति तं देशं दहति पावकप्रख्यः । राज्ञा विन्ध्याटवने वा परराष्ट्रे वा स मोक्तव्यः। अतिखरपरिपतनुर्नकुलच्छायस्तनूरुहैस्तब्धैः । यो हस्ती पातारं स पातयित्वा विनाशयति । धन्वासदृशसुखोदः कर्णः कषायस्य कर्कशा रूक्षाः। कृष्णारुच्यान्वयोऽसौ भर्त्तुर्विपदेव मातङ्गः। रोमभिरधोमुखगतैः काकाक्षो दीर्घवक्त्रश्च । स्थिरमुसलकर्णयुगलः स राक्षसोहस्ती रूपेण । तिर्य्यक्प्रेक्षणनिरतोदुर्गन्धः काककुम्भवदनश्च । मूत्रपुरीषघ्राणे सततसुको भवति चण्डालः। कुम्भौ यस्य विशालौ विचित्रस्थूलतारके च नेत्रे । लम्बायतं लिङ्गं स्यात् वालधिवालास्तु बडरूमाः । रक्तौ मेचककोषौ मेढ्रोपरिसंस्थितोदरञ्च महत् । चलपक्ष्मकस्तु हस्ती स भवति नाम्ना महादुष्टः । अङ्गं प्रसार्य्य वदनं विधूय चाधोरणं निपातयति । स जले स्थले च नागो विवर्जनीयः प्रयत्नेन। ह्रस्वकराङ्गुलिवालतनुदशनश्चास्यायामगात्रश्च । मत्कुणजातिः स गजः सुदुष्टशीलश्च दृष्टश्च। कालनखो हरिवर्णोहर्य्यचो ह्रस्वबालधिश्चैव । मधुपक्ष्मा दुर्गन्धिश्चर्मविवर्णविमतालुकैरूक्षैः । अतिपिङ्गलकर्णचूलोरोमयहस्तो वराहनयनश्च । तनुनखशिरालक्षणैर्नखान्तरैर्दुष्टचरणैश्च । विशुरोनाम गजोऽसौ स्याङ्गैः सर्वत्र कर्कशोजान्वोः । बहुपापकर्मयुक्तो व्यालानामप्यशोभनम् । रूक्षोवाहित्थभागो विषमौ दन्तौ च यस्य नागस्य । धूमशिखेव च्छाया स निन्दितो वर्जनीयश्च । दन्तौ चातिह्रस्वौ स्थूलौ रूक्षौ च मांसलौ कृष्णः । चिबुकं मांसविमुक्त स्थूलतरे तारके यस्य । स्थूलमुखो दुष्टात्मा नाशौ सांग्रामिको भवेद्द्विरदः। अति दुष्टकर्मनिरतो भयालुको वर्जनीयश्च । कृष्णा रूक्षा छाया वायसजङ्घा च दृश्यते यस्य। भूतोदनञ्च कुरुते निःशङ्कं यः करालेण । निःशेषं मल्लांश करोति यः सहस्तनिष्पेषम्। परिहरणीयो राज्ञा याने रणे स सहता प्रयत्नेन । अतीवविरलपक्ष्मा ध्यानपरः मलकरणनिरतश्च । हिङ्गुपोलस्य करादयन्तुदाति च धूतवन्त नित्यम् । वामेन च लिखति महीमुत्पादेन कुञ्चिताग्रेण । जर्जरविरूपकर्णः पापात्मा निन्दितो हस्ती । आनाहायामोच्छ्रयसत्वमुक्तो महाशिरालविकः । ह्रस्वाङ्गुलिवालकरो ह्रस्वापरगात्रकर्णश्च ।

एकोऽपि वामनःस्याद्यद्यपि भवेद्युद्धप्रियोऽसौ द्विरदः। राज्ञा तथापि लक्षणविवर्जितो वर्जनीयश्च । स्थूलहस्वहस्त-कर्णोविहीनजघनमापरस्वगूढश्च: । महता मेढ्रेण युतो-नष्टमदः कोशमहांश्च । मन्दालोकनिरतोमहाशिराः पृथुविशालनयनश्च । हस्ती नपुंसकोऽसौ विवर्जनीयश्च संग्रामे । अल्पायुषो भवन्ति हि सद्भावजिह्वोष्ठतालुका-नागाः । नरपतिभिस्ते सततं विवर्जनीयाः प्रयत्नेन ! आयामपरिहीनं वामनाह्वोच्छ्रायसुलेन भणितम् । उ-च्छ्रितवक्त्रं कुब्जं विषमकुम्भं कुक्कुरसमानहीनकक्षं च । एवंभूतं तु गजं राजा दूरेण वर्जयेन्मतिमान् । स्पृ-शति मन्दबुद्धिर्यस्तस्य कुलक्षयो भवति । लक्षणयुक्तोऽपि गजो द्वात्रिंशत्त्वेकविंशतिनखश्च । एकोनविंशतिनखः सप्तद-शनखश्च यो भवति । षोडश पञ्चदश वा नखान् धत्ते युक्तो वा चतुर्दशभिः । एकादशत्रयोदशनवदशभिर्द्वादशनखै-श्चैव । संयुक्तस्त्वशुभकरः सप्ताष्टाभिश्च भापनखैः । द्विर-ष्टाष्टादशनखाः विंशतिनखयुक्ताश्च शुभाः । कुरुते स्वामिविनाशं द्वात्रिंशतिनखोयश्च । एकोनविंशतिनखो युवराजविनाशं कुरुते । सप्तदशनखस्तु गजो नरपतिपात्र विनाशने समर्थः । षोडशनखसमातङ्गोनायकनाशं ध्रुवं कुरुते । पञ्चदशनखश्च योऽसौ सेनापतिनिधनकृज्जो भव-ति । कुरुते चतुर्दशनखोव्याधिं पुरवासिनां हस्ती । त्रयो-दशनखो राष्ट्रवित्तविनाशङ्करोति भूपस्य। द्वादशनखस्तु कुरुते पदातिहयगजयं ध्वंसे । एकादशनखयुक्तो गजहानिकरो भवेत् स गजः । दृढदार्ढ्यं च दशनखः करोति हस्ती दुरालोकम् । चतुरङ्गस्य बलस्य ना-शमन्तु नवनखो गजः कुरुते । अष्टनखश्च पुरोहित वंशसहन्तृसमर्थः । सप्तनखः प्रतिहारं नाशयति च पञ्चनखोऽमात्यम् । पञ्चनखो भक्तिकरं चतुर्नखो द्वार-पालस्य। त्रिनखोविषयाक्षेपं द्विनखस्त्वान्तः पुरान्तुबन्धस्य। एकनखोनखरहितोराष्ट्रविनाशं ध्रुवं कुरुते । एवम्भूत-नखावे नरपतिना न ते गजाग्राह्याः । कालभञ्जिता-श्चोऽतिलोमयोहीनकर्णश्चरवालः । हस्ती विवर्जनीयो हीननखः पूतिकोशा च । व्यजनक्षतं शस्त्रक्षतं दुर्भिक्ष-क्षतं चरक्षयं कुरुते । यस्मिन् देशे वसति नाशयति वन च दुष्टात्मा । यस्य न भवतोदन्तौ व्यजनक्षतं दुर्भिक्षक्षतं चरक्षय कुरुते । यस्मिन्देशे स वसति नाशयति वनं स दुष्टात्मा । यस्य न भवतो दन्तौ कुलरूपवतोऽपि गर्भ-दोषेण । स गजोमतृकुलनाशा न तं रणे योजयेद्राजा । कुञ्जरघटागतोऽसौ हरति गजानां बलं च सत्वञ्च । अतएव समरकाले नराधिपैर्वर्जनीयश्च । तनुहस्वदीर्घदन्तोन्नति-सङ्कटवक्रविघटितविषाणाः । एकदशनस्त्वधोमुखरदनश्च गजः प्रभंतजति । रदनविहीनो हस्ती निःशेषलक्षणयु-तोऽपि । भवति न नृपतियोग्योमदजलसंसिक्तग-ण्डोऽपि । दूर्वावर्तविरहितदीने सत्वरहिते विव-र्णे च । निम्नभकुम्भकुहरे राजा नारोहति पश्चाद्दर-हिते च । एवम्भूताश्चाव्दाः नित्यनाशका रणे करिणः। अविश्रामस्नुजस्रं निपतति नागस्य यस्य नित्यं हि । नयनव्याधिवियुक्तस्य तस्य भर्त्ता रणे म्रियते । वदनयोश्च नखा भर्तृश्चैव संबाधनकराः । जिह्वानखतुल्यमेह-नवदनानि भवन्ति यस्य कृष्णानि । वाह्विल्यभिन्न कृष्णः स गजोभर्तुः क्षयं कुरुते । वाद्यांसफलकपीठो राजन् ! तथैव पृष्ठवंशेन । वदनेन च कपिवदनानुका-रिणानिन्दितो हस्ती। कर्णौ दन्तौ च समौ न नतौ भवतो यस्य नरनाथ ! । स नराधिपबलविनाशकरः करीजायते समरे । चित्रौ रोमचितौ वा स्थूलौ वातिप्रलम्बिताग्रौ वा । कोशौ कोषविनाशं स करोति नागश्च भूपानाम् । सितबि-न्दुभिर्विचित्रं चैतं वा यस्य जायते मेढ्रम् । स गजःपत्नि विनाशङ्करोति भूपस्य संग्रामे । नागस्येव चिपिलाणि यस्य देहे भवन्ति रोमाणि । स गजःप्रतिगजबलेन विद्धो निजबलं दहति । सुप्तोत्थितस्य वदनात् यस्य गजेन्द्रस्य गलति रुधिरजालम् । व्यसनशतं सृजति शब्दसौ भर्तुर्नागवरः । इति कथितं तव नृपते ! दुष्टमातङ्गलक्षणं सम्यक् । पापकरिलक्षणमतः परं संप्रवक्ष्यामि । यल्लक्षणं मयोक्तंभद्रादीनां शुभं च दुष्टं च। तत्करिणीष्वपि योज्यं जातिविभागेन च युक्त्या । कुलक्षणेन कलितानि करेणुकानामङ्गानि भवन्ति। युवतिसदृशानि पुरुषोचितानि च तथा पीनान्य-ङ्गानि करेणूनाम् । गजसंस्थाना करिणी निम्नतटान्तर सुपीनकाया च । स्थूलायता च सततं प्रभूतदया सता-च करिणीनाम् । प्राच्यवनसमुद्भूताः प्रायेण लक्षणयुता भवन्ति करिणः । सुलक्षणेषु च छाया लक्षणं प्रधानं तच्च पञ्चविधं भवति । पृथिव्यम्भोवाय्वाकाशात्मकम् । तत्र पृथिव्यम्भोज्यात्मकं प्रशस्तं वाय्वाकाशात्मकमप्र-शस्तम् । क्रमेण छायाभिधीयते बलोपचयधर्मेण समुत्पद्यते । तस्यैव देहोद्द्योतजननी, स्थिरा प्रभाऽ-भिधीयते । छायाफलस्य द्विगुणफलसमादनधर्मा प्रभा

प्रभूतमिति सूरिभिः। दक्षिणं दक्षिणाङ्गं च हस्तिनः पुण्यदं मतम्। तथा वामं च वामाङ्गं हस्तिनीफलदं मतम्। लक्षणं दक्षिणाङ्गोत्थं फलं भूमिभुजां मतम्। सम्पद्व्यक्तं भवेद्यच्च लक्षणं तन्महाफलम्। यदल्पमप्रकाशञ्च तदल्पफलदं मतम्। मध्यमानफलं मध्यं लक्षणं तु समादिशेत्। शुभाशुभेन मिश्रेण बहुत्वेनादिशेत् फलम्। कदाचित् शुभदं चास्य गजानामप्यलक्षणम्। शुभकर्म्माणमासाद्य राजानमथ वा द्विजम्। यथा हि सर्वचरितः समुद्रं समुपेत्य हि। स्वरसेन वियुज्यन्ते भवन्ति लवणाम्भसः। एवमासाद्य भर्त्तारं बहुलक्षणलक्षितम्। भवन्ति बाधितानीह दुर्लक्षणफलानि च"। इत्युपक्रम्य गजदेहस्थानविभागनामभेदस्तत्रैव दर्शितः। यथा "विषाणयोर्वर्त्तिर्य्यक्स्थादायताग्रो पक्षोऽपि सः। किविका च पक्षस्याधःकुम्भोपरि च विस्तृतः। अथ पक्षोपरिस्थोऽपि पुरःकरोऽपि भवेत्तथा। तथा पक्षोपरिस्थे च किविकोपरिभागके। वाहित्थोपरि केशाश्च मस्तकं च तथा मतम्। स्यातां मस्तकपिण्डौ च मस्तकस्य च बिन्दुकः। तथा बिन्दूपरि स्यातां वितानौ बिन्दुपार्श्वतः। ततोऽन्तरवितानं च पृष्ठं तत्र विनिर्द्दिशेत्। बिन्दुवितानयोश्चान्तः पुरस्तात् पाठिकौ किल। लोके मस्तकपिण्डादि वितानबिन्दुपाठकः। निर्य्याणं च वितानोर्द्धं कर्णौ चापि ततः कटौ। कटयोः स्रोतसी चापि कटस्रावस्तयोरधः। पृष्ठतः कटिसन्धी च गण्डौ च कटयोरधः। कटगण्डान्तभागे शाटसन्धी च शाटके। शाटाश्वाश्रुपरिष्टाच्च कर्णसन्धिसमीपगे। श्रवणे गात्रगण्डाधःकपोलौ च तदन्तरे। रोमकूर्च्चौ च शादौ च कपोलाधस्तथा मतौ। ततः शङ्खसन्धी च शङ्खान्तरमतः च। आशङ्खात् हन्वधः प्रदेशः शिरसोन्नतः। अक्षिकूटावपङ्गाख्यावुभावुपरि वै तयोः। शुण्डाग्राऽधरः स्यात्तु नेत्रस्रावौ तयोरधः। अपाङ्गावक्षिबाह्ये च तत्सन्धी चाक्षिपृष्ठतः। पक्ष्मणोर्मण्डले चाथ तत्सन्धी वर्त्ममण्डलौ। वर्त्ममण्डलसन्धी च ततश्च श्वेतमण्डले। श्वेतमण्डलसन्धी च ततः कृष्णे च मण्डले। तत्सन्धी च ततः कृष्णे सतसन्धी वर्त्ममण्डले। तयोरपि तथा सन्धी प्राग्भागे चक्षुषोरपि। कनीनिके समाम्नाते सन्धी तत्र तथानयोः। इत्यक्षिगतदेशानां समूहो भवेदिह। किल विन्तौ च कर्णौ च कर्णयोश्चूलिका ततः। तदधः कर्णपिप्पल्यौ वलिके द्वे प्रदेशगे। कर्णसलकसन्धी च पश्चात् कर्णापवर्त्तयः। तदन्तश्च समस्थानावुद्घातौ परिकीर्त्तितौ। कर्णचूलिकयोरग्रे पिङ्गलाख्यौ च भाषितौ। पुरस्तात् कर्णपिप्पल्याः कर्णसंवेशचर्म्मणी। कर्णान्तः कर्णनाड्यौ च कर्णान्ते तस्य भागतः। तदग्रीथिःकवन्धश्च सभङ्गमध्यकर्णयोः। कर्णसन्ध्योरधस्ताच्च तथाधःसन्धिसंज्ञितौ। तदधः कर्णपाल्यौ च प्राक् कर्णोपरितस्तयोः। नाड़ीपार्श्वगतौ चात्र मध्यकर्णौ तयोरधः। अधःकर्णौ समाख्यातौ बहिःकर्णापवर्त्तयोः। पार्श्वकर्णौ बहिःकर्णौ कर्णयोश्च क्रमाद्बहिः। अन्तरान्तरकर्णौ च पर्य्यन्तकर्णपाशयोः। अधस्ताच्चेति भागाः स्युः कर्णयोः करिणोऽपि च। ग्रीवायाः प्राग्भवोभागो ग्रीवा सन्धिस्ततस्तथा। ग्रीवापृष्ठं ततःस्याच्च मध्ये तत्र कृकाटिका। ग्रीवापृष्ठे तथाधस्तादुगलभाण्डश्चिपस्य च। अधःकण्ठस्तयोर्योर्द्धं मन्ये ते गलकण्ठयोः। अमन्यौ कण्ठपार्श्वे च तयोश्चावलिपिण्डिका। गलस्य पार्श्वयोरूर्द्धं दर्दुरौ चात्र निर्द्दिशेत्। शुण्डे सन्ध्योपरिस्थातामुपरिष्टात्तयोस्तथा। किविकौ च तथा चोक्तौ पश्चादुपरि चैतयोः। पार्ष्णिघातौ च संख्यातौ पार्ष्णिघातान्तरे तथा। उत्पङ्क्तावुपरि स्यातां स्कन्धादूर्द्धं तथानयोः। तन्मध्ये पण्वसोर्द्ध्वमिति ग्रीवांशसंग्रहः। (हस्तिपकेन पार्ष्णिभ्यां यौ देशौ हन्येते तौ पार्ष्णिघातौ) गात्रमात्रमायतं च भवेदासनसादितः। तत्पार्श्वयोः प्रतोकाशौ तावंसौ च तयोरधः। तदधः प्रत्यगंसौ च तथैवांसफले तथा। तदधस्तात्ततोबाहू ततोबाहूत्तरं तथा। अर्वाग्गत्र शुण्डे तत्र बाहुपृष्ठोद्भवे अपि। अपारे च तदूर्द्धं च तयोस्तङ्गाविकौ तथा। पाद्यावथाङ्गादूर्द्धञ्च तयोरायामपृष्ठतः। पाद्यन्ताङ्गपुरस्ताच्च भुजयोरुदितौ यवौ। यवभागोपरि तथा पुरस्तात् फलकोच्छ्रितौ। पिण्डिकाधश्च नेमाख्यौ वियोषौ यवयोरधः। उत्सङ्गौ च वियोषाधः प्रष्ठौ चापि तयोरधः। तत्सन्धी च ततः पर्व्वसन्धानौ तदधोमतौ। तदधः पाणिपादौ वै कूर्च्चौ चानु तयोरधः। तदधोनखकूर्च्चाश्च ततो नखशिखा दश। पुरःपुरोनखौ नाम्ना सनखौ चैव विश्रुतौ। तदन्वात् नखग्रीवा वियोषाः पार्श्वतोनताः। अन्तःपार्श्वबहिःपार्श्वे स्यातां पार्श्वनखेषु च। अथाश्च राजयश्चात्र पादनाड़ाविकास्तथा। तलसन्धी ततः स्यातां तले च तदनन्तरम्। तलप्रदेशपुरतस्तत्परा नखबन्धतः। तलकर्णौ ततः पश्चात् तलप्रष्ठौ ततःपरौ। तलयोरन्तरं चैव हृदये च करीरके। किंविभोराजयश्चेति तलसङ्गाविका अपि। पक्षहस्तौ ततः स्यातामन्तर्बाहू ततोऽन्तरे। बहिर्बाहू बहिश्चोर्द्ध्वं गात्र सर्वं ततोऽपि च। कक्षौ गात्र

प्रकोष्ठयोर्ध्व कक्षयोरन्तरं ततः । इति प्रदेशा गदिता गजानां गात्रगोचराः। कण्ठस्यान्तर्मणिः पूर्वं ग्रीवायाः समाश्रयः । उरोमणिः समाम्नातस्ततः स्यादुरसः स्थितिः। याऽधोभागा पार्श्वगा तत्र गात्रसन्धिसमाश्रिता । आवर्त्तमणिरप्यत्र विज्ञो भासुरसङ्कुलः। ततः सन्धिकरस्तु स्यात्तस्याधः स्तनयोः पुरः । स्तनयोरन्तरं चापि चतुरस्रान्तरं भवेत् । अधःस्तनौ च स्तनयोरन्तरे चात्र चूचुके । स्तनान्तौ स्तनवृन्तौ च चोरिकौ चापि चूचुके । चतुरस्रान्तरालं च भवेच्चूचुकयोरधः । स्तनयोरप्यधस्ताच्च पुरस्तात् स्तनयोर्भवेत् । हृदयं चास्य पार्श्वस्थावायामौ च वक्षसयोः । स्यातामायामकाण्डौ च तद्योर्विवरौ ततः । ततः क्रोडं पदाधस्तात् पश्चाद्यामककाण्डयोः । रन्ध्रे चापरवक्षसश्च स्तनयोरप्यनन्तरम् । जठरे नाभिरित्येते प्रदेशाः किल वक्षसः । आपराङ्कपुरःशेफोरेतःस्रावावधिः स्मृतः । ततोऽण्डकोषसन्धिः स्यात् कोषसन्धिश्च शेफतः । क्रमान्मेहनमत्र स्यात् मेढ्रवंशो भवेदपि । आनिर्गमात्तथा तस्य बाह्यपार्श्वगतौ मतौ । अपतस्तस्य ककुदं तस्याश्री पार्श्वयोरपि । मेहनस्य पुरःस्रोतो वङ्क्षणौ कोषपार्श्वगौ । अपरास्त्रयिणौ शुक्रे तथा वङ्क्षणमध्यगे । इत्यण्डकोषभागाः स्युः क्रमादासनमुच्यते । तदन्त्यासनस्योर्द्ध्वं वक्रवंशस्य पृष्ठतः । भवेदपरवंशश्च ततोऽप्यङ्गाथ आसनम् । पश्चिमासनमप्यस्य पृष्ठतः परतस्य च । अत आस्थिप्रदेशश्च ततो वंशश्च मावधिः । (आस्थिरासनम्) । आश्र्वंशाभिधानाश्च भागाः पश्चाद्विपादिनः । स्यातां च तत्पश्चाच्चात् पक्षसन्धी तथा ततः । स्याताञ्च पक्षपार्श्वे च नर्मूकाश्च क्रमादपि । पक्षाधोऽनन्तरौ चानुकूलौ पक्षसमाश्रितौ । निम्नाभौ मध्यगौ तत्र पश्चु वंशयोर्मध्यतः । कक्षाभोगौ कालकवौ पश्चात्स्यादाकरौ ततः । उत्कटौ कुक्षिपक्षाच्च त्र्यस्थिपार्श्वगतावपि । कालकोत्कटदेशानां पार्श्वंशश्च पार्श्वयोः । कालके पिण्डिके चाधो विद्याच्चापरयोः स्थिते । उत्कटपिण्डिका त्र्यस्थिस्यागमेवावलम्बनम् । अधनं पश्चोऽप्याश्च एवं कालनका दश । भवेत् पायुश्च पायोस्तु गुदमध्यन्तरं तथा । वहिर्गुदस्य वर्त्म स्यात् गुदान्तःकन्दरं विदुः । विस्तपायन्तरे कक्षौ तथा पिण्डिकयोरपि । अधस्तादन्तरे किञ्चिन्यन्तरं तत्र संस्थितिः । पिण्डिकायाः मण्डूक्यावन्योस्तौ पिण्डिकान्तरे"। अवयवप्रमाणभेदास्तत्रैव । "पिण्डिकारत्निकामाना पुष्करोऽपि भवेत्तथा । कर्णसन्धिर्भवेच्चापि तद्वारत्निप्रमाणतः । कर्णापवर्त्तौ पाल्यौ च स्यातां हस्तसमुच्छ्रितौ । कर्णाग्री च तथा विद्याद्विस्तारे द्वादशाङ्गुले । कर्णाश्चावपि हस्तौ द्वायायाम परिणाहतः । कर्णवर्त्तिं विद्धि कर्णप्रमाणेन च रत्निकाम् । शिर चासनमुद्दिष्टं मानेन त्रिकहस्तकम् । शिरसस्तु प्रमाणेन स्यात् षड़ङ्गुलमासनात् । आसनेन समं शीर्षं कल्याणकरमित्यपि । वक्षासनं च नीचेन शिरसः स्यात् षड़ङ्गुलम् । अपापो नाम स प्रोक्तो गजो निन्दितलक्षणः । शिरो यस्य भवेदुच्चमासनाद्द्वादशाङ्गुलम् । सोऽभ्युदयाभिधानेन वक्षःपादासनं भवेत् । आसनं वङ्क्षणोद्देशाद्याहेश्च पक्षभागतः । मञ्जुसमानफलक उत्कटोऽक्षोस्थितोऽपि च । अष्टौत्येवं समाख्यातं वक्षःपादासनं भवेत् । हस्तद्वयप्रमाणेन पेचकात् पश्चिमासनम् । द्वादशाङ्गुलनिम्नं स्याद्राशनात् पश्चिमासनम् । सार्द्धहस्तत्रयं चाथः प्रमाणमपि वालधेः । सप्ताङ्गुलप्रमाणेन पायुश्च परिमण्डलः । अरत्निपरिमाणेन विदुस्तद्द्गुणान्तरम् । अरत्नितोऽधिकं यस्य विस्तारेण स्तनान्तरम् । तिर्यग्लोमचयं गात्रमरिष्टः शोकदो गजः । अरत्नित्रयमानेन नाभिदेशस्तनान्तरम् । नाभिश्च मूलकोषश्च गुदारत्न्यर्द्धमानतः । अण्डकोषश्च हस्तार्द्धप्रमाणेन समन्वितः । द्वे चारत्नी तथार्द्धं च कोषमार्गं भवेदपि । सोऽर्द्धहस्तद्वयायामो हस्तानाहयुतो मतः । प्रौढे तु परिणाहः स्यादरत्निद्वितयं तथा । हस्तयोश्चार्द्धमार्गं स्यात् चतुर्भागेण संयुतम् । तथास्य पार्श्वतः प्रोक्तावरत्निप्रमितौ मतौ । चतुर्भागयुतारत्निर्भवेद्व्यतत्कोपरि । अष्टाङ्गुलप्रमाणेन स्यातां ततः पुरोनखौ । सप्ताङ्गुलापनखाः पार्श्वे पञ्चाङ्गुलानखाः। षड्विंशत्यङ्गुलश्च भवेद्गात्रापरे तथा । अपरार्ध्वा भवेदुर्पन्धिररत्न्यर्द्धेन मानतः । अरत्निश्च तथायामो भवेच्च करयोरपि । सप्ताङ्गुलास्तु वंशोपाः पाल्योः पार्श्वनखास्तथा । पञ्चाङ्गुलाश्चाष्टाङ्गुलाश्च नवचापि नखा मताः । इत्यङ्गमानं भागस्य दिङ्मात्रमिह दर्शितम् । समाङ्गा अपि मातङ्गा दृश्यन्ते दुःखदाः क्वचित् । दृश्यन्ते विषमाङ्गाश्च क्वचित् कल्याणदायिनः । तस्मात् प्रमाणं केषाञ्चिदप्रमाणतया मतम् । प्रमाणं कतमाचार्यैः सर्वलक्षणवेदिभिः । अथाङ्गप्रत्यङ्गमात्रावत् मातङ्गानां गुणागुणाः । भूयोऽप्यगुणदोषाभ्यां प्रसङ्गात् कथिताः पुनः । उपरिक्रमतो वृद्धो नातिस्तब्धोर्द्ध्वदृस्थितिः। उन्नतस्निग्धाच्छरोमा च लोहिताङ्गुलिपुष्करः । सर्वव्यञ्जनपूर्णश्च गजः कल्याणकारकः । भाग्यप्रदो वामहस्तप्रदायततनूरुहः । कर्दो हीनविन्दुश्च गजो दुःख-

प्रदो मतः । हिपाकाद्यकरा ह्रस्वा हीनपार्श्वाश्च दन्तिदाः । पुष्करं हीनमध्यञ्च विद्याद्भर्त्तृविनाशनम् । युक्तमाने निगाढे च निम्नस्रोतसो शुभे । तुल्यमाहिते च स्यातान्तत् पलाशसमद्युती । उन्नतौ क्रमवृत्तौ च स्निग्धावभ्युदितौ समम् । दक्षिणौ च समानौ च प्रहारप्रगुणच्छवी । ततः प्रदक्षिणावर्त्ताबुदात्तौ दन्तिनां रदौ । करस्य गात्रौ चापि श्वेतास्थिसदृशद्युती । विषाणे च तथा स्यातां चापाग्रे वारणस्य च । यो दक्षिणैकदन्तस्य श्रिया तु रहितो गजः । वामैकदन्तो दन्ती च दुःखदः कादिनोमतः । दशां प्राप्य चतुर्थीं च द्वितीयां यस्य न द्विजौ । स्थूलावनायतौ स्यातां स मूढो नाम दुर्गजः । उर्द्धसंस्थानवक्रौ च प्रतिमानगतौ न वा । युयुत्सामिव कुर्व्वाणा यस्य बालाः षडुद्दिपः । दन्तौ हस्तोपमौ यस्य दीर्घौ पार्श्वेन चोन्नतौ । दक्षिणेन विषाणेन वामदन्तदरन्तथा । कारयेद्यस्तु मातङ्गो वामदारी स वै भवेत् । तथा दक्षिणदारी च दक्षिणदरणं तथा । वामेन कारयेद्योऽपि यातुः स्वामिनएव सः । तथा हस्वविशालेन दन्तेनैकेन दन्तिनः स्थूलेनाथर्वदीर्घेण दुःस्थिताख्योऽपि वर्ज्जितः । अन्तर्नताभ्यां सहन्तः कुदन्तोऽपि नतावधः । कूपे वामोन्नतिश्चापि रदाभ्यां द्विरदः कचित् । दन्तदुर्वागताख्यो हि द्विरदोमध्यलक्षणः । बहिर्नतौ हस्तलम्बौ रदौ यस्य स दुर्गजः । व्रणावतौ रदौ मूले विनाहन्ति मदागतिम् । श्यामस्थाकार रदनाग्रान्निमदृगनास्तथा । दुर्जाता विषमा वक्रफलकाश्च क्षणास्तथा । स्यातदीर्घातिसुस्थाश्च वदनेनावशंसिनः । निरन्निमितमेढस्य पञ्चरन्निमितोरदः । यष्टिदन्तोनुकथितो राजपुत्र ! मनीषिभिः । प्रपूर्णं प्रतिमानञ्च तारामं बलिवर्जितम् । ऋक्षाविन्दुसमानञ्च मृदुत्वक्कायरोमशम् । स्वायतं पृथुवाहित्थं सर्व्वगात्रसमाहितम् । रक्तौष्ठतालुदशनविवरमुखसंस्थितिम् । तं राजा वर्जयेत् युद्धे शुभलक्षणवर्जितम् । बालार्कसदृशे यस्य हरिवर्णविलोचने । मनःशिलाप्रभे वापि ज्येष्ठोऽसौ शुभिषदः । पद्मापाङ्गे च विपुले सुप्रसन्ने सितासिते । यस्याक्षिणी सवाक्षिभ्यां विभक्ताख्यो हितप्रदः । यस्य तुङ्गे च नयने महती दृष्टिमण्डले । स्निग्धनिर्म्मलवर्णे च तारकाद्यः स सम्मतः । यस्यातजः समा भासे वृत्ताकारे विलोचने । पारावताक्षं नागं तं प्रशंसन्ति शिवप्रदम् । कृष्णे नात्यायते नेत्रे प्रसन्ने स्वच्छदर्शने । यस्य स्यातां सवाध्यक्षो धन्यः शुभलक्षणः । हैयङ्गैरिकवर्णाभे दृश्येते यस्य चाक्षिणी । ध्वाङ्क्षाक्षः स विनिर्दिष्टो दुर्भिक्षादिभयावहः । कृष्णापाङ्गे शुभे नेत्रे कांस्यखण्डाप्रभे । यस्य स्यातां भवेन्नाग मृत्युरात्र न गर्हितः । समन्ततो नोपचिते संस्पृष्टे च मनागदृशी प्रोक्षाक्षिकूटौ यस्यापि विषमाक्षः स दुर्भगः । वैषम्याद्विषमप्रेक्षी नेष्टो हरितया दृशा । तथा निषप्रभया दृक्षा वर्ज्जितः काचपिङ्गलः । तन्द्रीर्यस्यानुदृश्येत विरूपं विषमं तथा । तथैव तिर्य्यग्दृक् हस्ती तिर्य्यक्प्रेक्षी न दूषणः । अधःप्रेक्षी च यो यः स्यादूर्द्धगामिविलोचनः । सदृशो बभ्रुमार्जारप्रभत्वमतचक्षुषाम् । स स्याद्‌निष्टदृक् हस्ती तिर्य्यक्प्रेक्षी च दूषणः । अधःप्रेक्षी च सप्रेयो मृदुर्द्धगामिदर्शनः । दृष्टिः स्निग्धा प्रफुल्ला च सुस्थितामलतारका । चार्व्वपक्ष्म प्रशस्तस्य वारणस्य विलोक्यते । उदयतारको नाम्ना नाम्ना पार्श्वविसर्पिणी । विलक्ष्याचलपक्ष्मा तु कुपिताऽनेकपस्य दृक् । सर्वाङ्गलक्षणेभ्योऽपि चक्षुर्लक्षणमुत्तमम् । इत्येवं लक्षणानां पूर्वेषामनुशासनम् । प्रशस्तनेत्रे द्विरदे न्यूनोभद्राणि पश्यति” मस्तकादिलक्षणन्तु प्रायेण बार्हस्पत्योक्तलक्षणसमभित्यतस्तन्नोक्तं यत्र विशेषस्तदुच्यते । “एककूपप्रजातानि स्निग्धानि च मृदूनि च । रोमाण्योष्टानि रोमणाञ्च मेचको दक्षिणाङ्गजः । वाङ्मूलस्यैव रोमाणि दृश्यन्ते यस्य दन्तिनः । संहतानि विचित्राणि स पूज्यो वारणोरणे ।”

करिणो वामनत्वादौ कारणान्तरं तत्फलञ्चोक्तं तत्रैव “वाय्वाकाशगुणाधिक्यपृथिवीगुणवर्ज्जनात् । जायते किल मातङ्गः कुब्जो वा वामनोऽपि च । यतो भूतगुणोऽन्योन्यमधितिष्ठति मानतः । तैर्गुणैर्जायते सर्वो दन्तीति मुनयो विदुः । हीनाङ्गोहानिकारी स्यादधिकाङ्गोऽधिकं हरेत् । राष्ट्राहितौ भवेतान्तु वक्रकुब्जाविति स्थितिः । आयामानाहसंयुक्तो ह्रस्वाकारो हि वामनः । नष्टोऽसन्तरनिर्व्वाणो महास्थिवगदोऽपि च । अस्थिश्वेतौ च कृष्णौ च दन्तौ यस्याश्रितौ करम् । स नाशयित्वा राजानं हत्वा नाग पलायते । ह्रस्वमेढ्राङ्गुलिकरः श्रोताश्रितरोमयुक् कपिकौशिककाकाहिनकुलप्रख्यलोचनः । कालापद्मनेत्रश्च तन्वाननहनुस्तथा । वल्या समाननिर्माण: प्रलम्बपृथुपेचकः । मण्डूकाभत्वचित्वक् च शाखानलनभोऽपि च । परिमण्डलकर्णश्च सदृष्वाङ्क्षशिवध्वजः । प्रौढोन्नताक्षिकूटाद्यः शबलाशाङ्‌घ्रिसेचनः । ध्वाङ्क्षध्वगन्तधो निर्मदो दन्तिदूषणः । सवली यस्य मदानौ प्रोक्तौ चापि कषायितौ । चिवुकौ चायतस्थूले अवैव तनुराविका । अधोवक्राणि रोमाणि

हनू च क्षररोमके। शुक्लाकृतयः पादा डिम्बवत्यपि विश्रुतः। आस्योष्ठतालुरसनाः काक कष्णावकान्तयः। कर्णौ कदाचितौ भूगौ ताम्रवर्णश्च वाजधिः। कराभिप्रेमवाहक्तौ मानोनाङ्गुलिपुष्कवे। स्थूले च पक्ष्मणी नेत्रप्रभे दुष्प्रेक्ष्ये तथा। दुर्वृत्तानि तथाङ्गानि ककोमुखनिभं मुखम्। रेखाद्विरेफानुरूपा मक्षिकाभिश्चिताकृतिः। वर्त्तिमानौ दन्तौ च शुष्काग्रपनिगूहितौ। कर्णे च कठिने यस्य नीलगोपक विद्युति। विवर्णं कठिनं रूक्षं भिन्नमिश्रतनुरुहम्। नपुंसकञ्च मातङ्गो न दूरे त्यागमर्हति। मञ्जिष्ठारागभावेन यस्तुतुर्वानरोपमा। स पूतनोऽग्निभयदो यूथहा परिवर्ज्जितः। तिर्य्यक्प्रेक्षी चाधःप्रेक्षी दुर्गन्धमदसंयुतः। काकपिङ्गोदरोनेष्टो मातङ्गः स्यात् मतङ्गजः। पुष्करे स्तनमध्ये च वामहस्ते मतङ्गजः। किलासैरावृतः स्याच्च तद्राष्ट्रे दुर्नयं दिशेत्। पश्चात्समुत्थितावापोनिम्नमीलितलोचनः। वाहिन्यसंश्लिष्टमुखोनिन्द्याणो मतङ्गजः। न्यूनं विंशतिवर्षस्य दन्तौ यस्य प्रमाणतः। अतिमात्रौ न वै स्यातां नागोनागवनस्तु सः। हीनातिरिक्तदशनो यस्य वै तस्य सङ्कटः” इत्यवयवदोषाः।

“अथ वर्णस्यावर्त्ताः शुभपाकाभा स्वरोगतिः। वलं सत्वमनूकञ्च गन्धोवोधितमिङ्गितम्। स्याद्भूतगुणवैशेष्याद् वर्णवैशेष्यमेव हि। वातादिभ्योऽपि दोषेभ्योवर्णवैशेष्यमिष्यते। रौक्ष्यं परातिरेकेण सर्वं वातस्य वै भवेत्। शोणता शोणितात्, पित्तात् रौद्रता, सौम्यतेन्दुजा” इत्युपक्रम्य “कफो गर्भशयानस्य स्निग्धतां प्रतिपद्यते। पित्तं गर्भशयानस्य रूक्षत्वं प्रतिपद्यते। तत्करो कथितः कालस्तथैव स्निग्धदर्शनः। पित्तं कफश्च युगपद् वेविष्टि तु ततस्ततः। श्यामवर्णोऽपि मातङ्गो जायते स्निग्धएव वै। गर्भे च मांससहिते कफरक्ते यदा स्थिते। चिरं गर्भशयानस्य हरिस्निग्धस्ततोऽप्यसौ। रक्तपित्तकफानाञ्च सङ्करत्वगतो तथा। हरितारुणपोमाद्या नानावर्णा भवन्ति हि। सर्वलावुगतःतेन सोऽनलादूरुता भवेत्। पारुष्यं धूसरत्वं च सुस्निग्धत्वं भवेत्तथा। कश्चिद्वर्णविभेदाश्च पूर्वसम्भवकारणात्। पङ्कनतलवाराञ्च पितृवीजवशात्तदा। तस्मादि श्वेतवर्णाश्च शुकवर्हिसमत्विषः। शुक्लहेमरवप्रभाः सुरेषु प्राचि च कचित्। न्यथान्तु हरयः कृष्णाः श्यामाश्च करिणः स्मृताः। हरिर्मेधुसवर्णश्च कृष्णाञ्जनसन्निभः। न कालो न हरिर्नागोमध्याभः श्याम दृश्यते। एतेषु त्रिषु वर्णेषु हरिवर्णोवरोमतः”। इति वर्णभेदकारणादिनिरूपणम्।

“आवर्त्तः षड्विधश्चैव त्वग्जोद्गमभङ्गजः। कोषजः पक्ष्मजातश्च वालजो रोमजोऽपि च। कोषरोमजौ शस्तौ दन्तकल्पनजः शुभः। शोकानर्थप्रदाः प्रोक्तास्त्वगजपक्ष्मजवालजाः। भूमिदोरोमजावर्त्तः कोषावर्त्तोजयप्रदः। दशनसम्भवावर्त्तः सुतदारप्रदस्तथा। कथितः पक्ष्मजावर्त्तोज्ञातिजातभयप्रदः। व्यालह्यालजावर्त्तः स्वामका रोमसम्भवः। प्रशस्तोदक्षिणावर्त्तोवामावर्त्तो विगर्हितः। मतो व्यक्तो मृदुस्निग्धः सवर्णः पीतरोमजः। वामाङ्गे दक्षिणावर्त्तोवामावर्त्तश्च दक्षिणे। आवर्त्तः समातोऽभीष्टो द्विजराजसमप्रभः। शुभोऽप्यक्षेत्रजातोऽसौ शुभं नैव प्रयच्छति। अशुभक्षेत्रजातश्च नानिष्टफलदः शुभः। अवग्रहे पद्मतले स्तनयोरन्तरे तथा। ग्रीवाया मणिकूटोर्द्धं कुम्भयोरन्तरे तथा। उत्सवे दन्तवेष्टे च कर्णमध्ये च वक्षसि। आवर्त्ता वारणानां हि सुनिश्चेयाः शुभप्रदाः। स्तनान्तरे शिरोमध्ये कुम्भान्तश्चूलिकान्तरे। वक्षस्यावर्त्तसम्पन्नः कुञ्जरः पञ्चमङ्गलः। शीर्षावर्त्तोऽभिषेकाय स्तनावर्त्तोजयाय च। सुखाय चूलिकावर्त्तः कुम्भोरोरोमजः श्रिये। वंशे पीठेऽथ वाहित्थे सन्ध्यास्य शगदे कटे। कर्णेऽक्षिकूटे नाभौ च कक्षपक्षांसकुक्षिषु। वालधौ पेचके मेढ्रे रन्ध्रेशक्षिकतासु च। आवर्त्ता न प्रशस्यन्ते कर्णभागगताश्च ये। कोणप्रमाणलघवोमर्मपर्वप्रदेशगाः। अशुभक्षेत्रजाताश्च सकिलासान्तरोत्थिताः। मनोनेत्राभिरामो हि सुखस्त्वोगदितो महान्। ऊर्द्धप्रक्षोदीर्घश्च रोमजोऽर्थजयावहः। मर्मभागेषु नागस्य निन्द्यास्ते रोमजादयः। समभागगतावर्त्ताः सर्व्वतः सुखदा मताः”। इत्यावर्त्तः।

“स्वस्तिकादिसुसंस्थानं पुण्यं दर्शनदेहजम्। स्निग्धं भवेत् शुभच्छायमच्छिन्नं वाञ्छितप्रदम्। कलश्यादिकसंस्थानं विपतन्तुसमं स्फुटम्। रूक्षं कृष्णञ्च कृष्णं तातानर्थकसंज्ञकम्। दद्यात् सुतं सितं पुण्यं स्निग्धपीतञ्च हेमदम्। नीलोत्पलाभं शीतांशौ स्निग्धकालञ्च हस्तिदम्। यदि स्यात् पूजिते भागे कृष्णं स्निग्धपाण्डुरम्। सुरचापसमाकारं तद्भवेद्भूभुजः शुभम्। शक्रचापनिभं पुण्यं दन्तोपरि च दन्तिनः। दिशेदिष्टं सुमित्तं च धर्मं च क्षितिरक्षिणः। स्तनान्तः स्निग्धरूक्षे च पुण्ये भाग समे तथा। पुण्ये श्रोत्रान्तःकाले च स्थानिष्टानि विनिर्दिशेत्। श्रीवत्सादिनिभाकारे वैजयन्तीध्वजोपमे। शङ्खप्रा-

शारदश्चापे सलचामरवीचिभिः । क्षौमस्तर्ष्यसमाभासैः सितैश्चाम्बानसूर्त्तिभिः । दिष्टे शुभाय नृपतेर्निन्द्यमहि-षाकृति । चक्रव्यादनिभाकारं रणापशकारणम् । धूमाभं पुष्पमिच्छन्ति स्वल्पेऽग्निभयाय च । तथा पुष्पं तथा नेष्टं द्विपरोगविवर्द्धनम्” । इति पुष्पम् ।

‘भूताम्नाय्यमुपज्ञाता भवेच्छाया विनाशिनाम् । ग-ता भूतलवक्र्या न यथा शालिनोद्भवा । छायायाः स-म्भवः पूर्वं, परतः परितः प्रभा । छायायाः सम्भवः पूर्वं प्रभा तदुपरम्यते । वर्णमालाश्रिता च्छाया प्रभा वर्णस्य चाश्रयः । लक्षणानि तु नागानां पापानि च शुभानि च । छायावशात् फलन्त्येव छाया तेनातिलक्षणम् । यस्य सा-लक्षणं भद्रं छाया भद्रा भवेन्न तु । न चासौ शुभदो हस्ती छायोपहतलक्षणः । पापलक्षणयुक्तोऽपि शुभच्छायायुतो-गजः । फलं लक्षणजं हित्वा छायाफलमवाप्नुयात् । नी-राजनेऽभिषेके च ध्वजोच्छ्राये रणोदये । तेषु तेषु च कालेषु भवेच्छाया च शोभना । यद्यपि प्रतिमानेंऽशे कुम्भे कर्णे कटेषु च । निर्वाणे सस्वकस्थाने वेदयोश्च कपोलयोः । पिण्डिकाजघनाभोगे तेषु तेषु पदेषु च । प्रदेशेषु प्रधानेषु छायाया वीक्षणं भवेत् । प्रशस्ता पार्थिवी छाया वह्निजा जलजापि च । नेष्यते व्योमजा छाया मातरिश्वभवापि च । पार्थिवी स्निग्धगम्भीरा सर्ववर्णे विभाव्यते । छाया श्यामा च रक्ता च स्निग्धा जाम्बू-नदाग्निजा । छाया नीलाम्बुदाभासा स्निग्धा सलिलस-म्भवा । अव्यक्तपरुषा तस्य छाया गगनजा मता । धूम्रा रूक्षा च वायव्या भस्माभा निष्प्रभा तथा । एतास्छायाः रदोष्णाः सुमातङ्गे राजपूजिते । नीलाम्बुजेन्द्रनीलाभा नीलाञ्जननिभाऽपि च । कान्ता पार्थिवी छाया सुभिक्षक्षेमकारिणी । बालार्कपद्मकिञ्जल्कशक्रगोपकस-न्निभा । ज्वालाभा तप्तहेमाभा वह्निजा विजयप्रदा । छायाम्भसी पयःशङ्खकुन्दरूप्यनिभद्युतिः । सौम्याख्यया प्रतीता या भर्त्तुरर्थप्रदा सदा । जलमुहृदसच्छाया धूम्र-द्युतिरतिस्थिरा । निन्द्या च व्योमजा छाया नित्योद्वेग-करी मता । सर्ववर्णैरुपेताऽपि निष्प्रभा भस्मसन्निभा । विच्छिन्ना विकृता च्छाया वायवी सा भयावहा । वैरिञ्ची वैष्णवी मैत्री छाया माघवनी तथा । कौमारी राक्षसी सार्पी गान्धर्वी च तथाऽऽसुरी । पैशाची चेति याश्छाया च्छायाविद्भिः कश्चित् शुभाः । भूतोत्पलक्षणे तासां भेदो-नेह तु कीर्त्तितः । तेजोऽतिरक्ता भद्रस्य पाटला भ-वति प्रभा । छाया रक्तकला स्वच्छपक्वपूगनिभाऽपि वा । कृष्णा च मन्दकादेश्छाया तु मृगहस्तिनः । मति-मान्मरधूयेन गीर्वाणायुधदर्शना” इति छाया ।

“हस्तिनां विविधा ध्वानाश्छिद्रेभ्यः करतोऽपि च । भवन्ति वायुवशतो नालानां वेष्टनेन च । प्रयाणे भूमिविक्षेषु ध्वजे जातिकुलेषु च । नागेषु बृंहितं ग्राह्यं सत्त्वस्थे न जातिषु । क्षुधितोऽत्यस्तनिद्रान्तर्तृषितो बृंहति कश्चित् । यदि दन्ती शुभे देशे समये च वसुप्रदः । दर्शयेद् बृंहितं भद्रं तत्फलं स्फीतमादिशेत् । सरोवरे तथाऽऽरामे गोष्ठे विबुधवेश्मनि । निकुञ्जे हृद्यदेशे हि विज्ञेयः शुभदो-ध्वनिः । यात्रायामभिषेके च यज्ञादिसमये तथा । समये चैव पुण्ये च बृंहितं स्याज्जयप्रदम् । श्मशानादिकाष्ठवल्मीकबुद्धस्थाने भयप्रदः । दुर्नीचे च प्रधूमे च प्रति-स्थायदिनेषु च । अतिशीतेऽतिघर्मे च प्रभाते चाशुभो रवः । भूतले न्यस्तहस्तो हि पर्वस्तनवनोगजः । कूजन् निर्व्यथनं कुर्य्यात् यदि वा नक्षतीश्वरः । करेण बृंहितोनागो दुर्भि-क्षाद्युपरिप्लुतः । आदिशेदन्निशोणितमथ वा प्रथमा-पतेः । आयतश्रवणहस्तस्य शाखाधोगतचक्षुषः । जघने वामतो वालं तथा निक्षिपतोऽचलत् । (वालं वालधिम्) । निषीदतो वहल्यतो हृष्टरोम्णोऽविमूर्च्छतः । ग्रामे नि-क्षिप्य गण्डूषं बृंहितं स्यादनर्थकृत् । खेभ्यः स्रवति नागानां क्षतजं यदि शोणितम् । (खेभ्यः छिद्रेभ्यः)तथा सन्ध्यान्तदेशे च प्राणिनां क्षयमादिशेत् । यद्याग्नेयी-मुखीभूत्वा प्राच्यां वाऽर्कोदयं प्रति । दन्ती तीक्ष्णरवं कुर्य्यात्तदा स्यात् पावकाद्भयम् । करेण यदि मातङ्गो बृंह-माणः स्तनं स्पृशेत् । आलाने बध्यमानस्तु संयुति जयमा-दिशेत् । (संयुति युद्धे) । आलाने बध्यमानस्तु शीतूकुर्वन् कुरुते ध्वनिम् । गात्रं प्रक्षालयन्नागस्ततः प्रस्थानमादि-शेत् । क्षिप्त्वा करं विषाणस्यं विषमं कुजते यदि । नि-रीक्षमाणो गगनं हतां हस्तिस्तदा हरेत् । यदाभ्युन्नतवक्त्रेण समस्थानश्च जिघ्रतः । तथा कुञ्चितहस्तेन हृष्टं गात्रं च जिघ्रतः । कुर्वतो दक्षिणं हस्तं शनैर्निक्षिपतोऽपि यत् । बृंहितं स्यात्तदिष्टञ्च तथान्योन्यकरस्पृशः । स्पृष्ट्वा शुभ-वस्तूनि कुसुमादीनि चेद् द्विपः । कुर्य्यात्स्वनं शुभं तेन फलं शुभतरं भवेत् । उच्चैरभिमुखः शान्तो यदा नर्दति वारणः । पटहध्मायमानेन तदा तत्र जयो ध्रुवः । सुखेन मण्डूकरवान् कर्णाभ्यां दुन्दुभिध्वनिम् । करेण सुर-जारावान् कुर्वन् कल्याणकारकः । कलशादिसमाराव

विकटाश्च तथाः स्मृताः”। इति ध्वनिः। गतिसत्त्वे तु प्रागुक्ते एवात्र प्रायेण दर्शिते नातस्ते ऽत्रोदाहृते।

“सत्त्वं त्रिविधमिच्छन्ति श्रेष्ठमध्याधमैर्गुणैः। सात्त्विकं राजसं चापि तामसञ्च विषाणिनाम्। एषामपि गुणास्त्रेधा यथवक्ते च कीर्त्तिताः। सत्त्वस्योक्ता गुणाः शौर्य्यं बुद्धिर्धैर्य्यं सुहृष्टता। रजसो ये गुणास्ते च क्रोधोत्साहावपि क्वचित्। गुणाश्च तमसस्तन्द्रा तमोमोहप्रमादिताः। सौभग्याः कान्तियुक्ताश्च प्राज्ञाश्च चिरजीविनः। क्रियाक्लेशसहाः शान्ताः सात्त्विकाः सामजाशयाः। मिश्राश्च मध्यसाध्याश्च कीर्त्तितानिर्भयाः क्वचित्। क्रियायोगसहाः किञ्चिद्राजसा मध्यमायुषः। तामसा दुःखिता मूढा विरूपा अल्पजीविताः। युक्तोऽप्यन्यगुणैः सर्व्वैर्युतश्चेत् सात्त्विकैर्गुणैः। श्रेयोगुणः स समरे तथाऽध्वनि मतङ्गजः। एषां वागीशनिर्दिष्टा विषयापेक्षया स्थितिः। भद्रे सन्निहितं सत्त्वं, रजो मन्दे, तमो मृगे। देवगन्धर्व्वयक्षाणां पन्नगासुररक्षसाम्। पिशाचानां नराणां तुल्यं ज्ञेयं नागस्य चेष्टितम्”। इति सत्त्वम्।

“यत् पूर्व्वमञ्चवं सृष्टं सत्त्वं रूपं गतिः स्वरः। तस्यानुकरणात् युक्तमनूकमिति कोविदाः। सत्त्वरूपजवारावैः शुभानुकारिता शुभा। देवर्षिगणगन्धर्व्वनागानूकाः शुभामताः। एवमेव च दुष्टानुकृतोदुष्टाः प्रकीर्त्तिताः। दैत्यरक्षःपिशाचानामनूकं परिवर्ज्जितम्। वृषविंशतुरङ्गादिसमानूकामता द्विपाः। नेष्टाः सरठव्याघ्रादिसमानाकृतियोगिनः”। अनूकम्।

“आस्याक्षिकुम्भकर्णेषु मदनिश्रावणायुषु। मलदमणुमूलेषु गन्धं समुपलक्षयेत्। इष्टगन्धान्निषेवेत धारणात् धरणीपतिः। दुष्टगन्धात् यदा भूपो बलतः परिवर्ज्जयेत्। सर्पिर्मधुसुराजाजदधिक्षीरानुकारकः। बाल्यक्षौमीरमदिरापद्मकाशादिसन्निभः। मालतीकेतकीजातीचन्दनाधिकसौरभः। सरसामलकामोदो गन्धो नागस्य शस्यते। अश्वकृन्मूत्रमत्स्यपूतिवसाकुणपकुत्सितः। पक्षिनीडमलाक्तादिसमप्रतिमविनिर्मितः। खरोष्ट्रमूषकरसमः श्मशानधूमसन्निभः। मीनमत्कुणतुल्यश्च गन्धो नागस्य दुःखदः”। इति गन्धः।

“पञ्चधा विदितं स्याच्च विज्ञेयं सामजन्मनाम्। अत्यर्थोक्तागमगम्भीरप्रत्यर्थान्वर्थभेदतः। वस्त्रूहाताद्बुद्धिष्यते दूरादंशादि सङ्कुचेत्। अत्यर्थं सङ्कुचेत् स्पृष्टः स गजोऽत्यर्थवेदिता। योऽपि त्वक्स्पर्शमात्रेण रोमस्पर्शवशेन वा। विद्याद्दुःखाङ्कुशादींश्च स स्यादुक्तागमवेदिता। त्वग्भेदात् शोणितस्रावात् तीव्रमव्यथनादपि। अङ्कुशादीन् विजानाति स हि गम्भीरवेदिता। शनैर्हतोभयं वेत्ति शनैर्वेत्ति भृशाहतः। विपरीतमतिर्नागो ज्ञेयः प्रत्यर्थवेदिता। प्रत्येति पार्ष्णिघातो यो निरुद्धोतश्च गच्छति। प्रतिलोमायते यश्च सोऽपि प्रत्यर्थवेदिता। शनैर्हतः शनैर्वेत्तिभयं वेत्ति भृशाहतः। प्रत्येति प्रतिषिद्धश्च नोद्यमानश्च गच्छति। यथासंज्ञं विदध्याच्च सर्व्वकर्माणि योऽद्भुतम्। अन्वर्थवेदिनं प्राज्ञोजानीयात्तं शुभं गजम्” इति विदितम्।

“मतङ्गजेङ्गितं वक्ष्ये शृणु तदवधानतः। शुभमानञ्च येन स्यात् यात्रादिसमये नृप!। अनुयानं गतोऽन्यात् किञ्चिद्रूपं यदि द्विपः। तज्जयः, प्रतियानं तु कृपाहत्वा पराजयः। दृष्ट्वा रिपूनभिमुखान् पार्ष्णिघातोऽपि चेद्गजः। प्रजेत्तद्विजयोनूनं यदि वा प्राप्नुयात् धने। दक्षिणेनाग्रपादेन क्षितिमुत्पाटयेद्यदि। उत्तोलयेद्वामपादं तदा जयमुदीरयेत्। करेण वामहस्तेन यदा पृथ्वीं प्रमार्ज्जयेत्। विस्मृत्यनेन कर्णौ च तदा सौख्यं समादिशेत्। मेचकं कुटिलं कृत्वा करं जिघ्रति चेत् द्विपः। सहृष्टहृदयाङ्घ्रिश्च तदाभ्युदयमादिशेत्। दक्षिणं तु यदा दन्तं दन्ती प्रमुदितेन्द्रियः। परिमृजति हस्तेन तदा स्यात् प्रियसङ्गमः। तथैव गजशालिश्च स्वकरेण परामृशन्। श्रीयोगमुपयातं तु वारणोविनिवेदयेत्। वल्गेच्च दक्षिणं पादं वामपादेन वा भुवम्। विलिखेद्वारणः क्षिप्रमङ्कुशैः स्यात् पराजयः। यदा तु दुर्मनादन्तं वामं हस्तेन शोधयेत्। तदात्मनोऽशुभं वाच्यं याहवाय निषादिनः। करेण वामगात्रं च क्षिप्रगात्रः प्रमार्ष्टि चेत्। तदानिष्टं भवेद्भर्त्तुरन्यथा च शुभं भवेत्। व्यथमानः पतेत् त्रस्तः क्षणवन्ते यदा द्विपः। नाभिनन्देच्च नाद्यादि तदा परिभवो भवेत्। अकस्मादेव कुप्यन्ति भ्रमन्ति च पतन्ति च। करिणो यदि तद्विद्यात् विग्रहं समुपस्थितम्। यदा पश्यति मातङ्गोविद्रुतञ्च पराजयम्। प्रवासं परराष्ट्रं वा तदा भवति दुर्मनाः। अदंशमशकपीडायां करेण परिवीजनात्। गवाङ्कुशप्रदेशनिक्षेपात् सव्याजमुपसर्पणात्। अकस्माच्च स्खलद्गत्या धरण्यां प्रणिपातनात्। जलप्रतारवैमुख्यादहितभक्ष्यसेवनात्। स्तब्धकर्णतया गत्वा पादाग्रवेधनादपि। द्रुतदंष्ट्रादिपीडत्वादकल्याणकरः करी। आत्मपरोजलोत्तीर्णो रिपूणां पतनं वदेत्” इङ्गितम्।

“जायते त्रिविधः कोपः संचारश्च विषाणिनाम्।

शिघ्रक्रोधोऽशुभोऽपि स्यादनिष्टोऽशिघ्ररोषकः । यः क्रुध्यति चिरेणैव मृदुक्रोधो भवेदपि । वाग्दण्डमात्रतश्चैव प्रतिपित्सो न मुह्यति । अनुशाम्यति रोषाश्च स शिघ्रक्रोधसंज्ञितः । दृश्यते सर्वकार्येषु शुभजातिर्मतङ्गजः। यः क्रुध्यत्यचिरेणैव मध्यक्रोधो भवेदपि । प्रतिपित्सश्च वाग्दण्डतोऽङ्कुशप्रजननकाङ्गुलैः । मुह्यत्येव चिरेणापि रोषाद्विरतिमेति च । अशिघ्रक्रोधसंज्ञोऽसौ विज्ञेयो वारणाधमः” इति कोषः । विस्तरस्तु पालकाव्यादौ दृश्यः।

**इभकणा** स्त्री॰ इभोपपदा कणा शाक॰त॰। गजपिप्पल्याम् ।

**इभकेशर** पु॰ इभमद इव केशरोऽस्य । नागकेशरे “स्फाटकालगुरुभकेशरागुरुचन्दनैः” सुश्रु॰ ।

**इभगन्धा** स्त्री इभस्य गन्ध एकदेशोदन्त इव पुष्पमस्याः । नागदन्त्याम् सा च स्थावरविषभेदः यथा सुश्रुते “मूलं पत्रं फलं पुष्पं त्वक्क्षीरं सारएव च । निर्यासोधातवश्चैव कन्दश्च दशमः स्मृतः” इत्युपक्रम्य “कुमुद्वतीवेणुकाकरम्भमहाकरम्भकर्कोटकरेणुकखद्योतकचर्म्मरीभगन्धा सर्पघातिनन्दनसारपाकादीनि द्वादश फलविषाणि” इति विभज्य “शुष्कशोफः फलविषैर्दाहोऽन्नद्वेष एव चेति” तद्विकारो दर्शितः।

**इभदन्ता** स्त्री इभस्य दन्तइव शुभ्रं पुष्पमस्याः । गजदन्तशुभ्रपुष्पवत्यां १नागदन्त्याम्, सा च स्थावरफलविषा ।

**इभनिमीलिका** स्त्री इभं हस्तिनमपि निमीलयति सेवनात् निद्रापयति । १भङ्गायाम् । इभस्येव निमीलिका । २वैदग्ध्याम्

**इभपालक** पु॰इभं पालयति । (माहुत) हस्तिपके ।

**इभपोटा** स्त्री पोटा पुंलक्षणा इभी परनिपातः पुंवद्भावश्च । पुंगजलक्षणयुक्तायां हस्तिन्याम् ।

**इभभर** पु॰६त॰। गजसमूहे [ सिंहे ।

**इभमाचल** पु॰ इभमाचलयति आ+चल-णिच्—वा॰ष ।

**इभया** स्त्री इभैर्यायते भक्ष्यतया प्राप्यते या-कर्म्मणि घञर्थे क १त॰। स्वर्णक्षीरीवृक्षे रत्नमाला इभयेति वा पाठः ।

**इभयुवति** स्त्री युवतिरिभी पूर्वनि॰ पुंवद्भावश्च । युवत्यां हस्तिन्याम् वा ङीप् ।

**इभाख्य** पु॰ इभस्याख्याख्या यस्य । नागकेशरे त्रिका॰।

**इभानन** पु॰ इभस्याननमेवाननं यस्य । गजानने गणेशे तस्य यथा तदाननत्वं तथोक्तं “स्वयं गोलोकनाथश्च पुण्यकस्य प्रभावतः। पार्व्वतीगर्भजातश्च तव पुत्रो भविष्यति । स्वयं देशगणानाम्न यज्ञादीशः कृपानिधिः। गणेश इति विख्यातो भविष्यति जगत्त्रये । “शनिदृष्ट्या शिरश्छेदात् गजवक्त्रेण योजितः । गजाननः शिशुस्तेन नियतिः केन बाध्यते” ब्रह्मवै॰ पु॰ ६अ॰ । शनिदृष्ट्या तच्छिरश्छेदकथा तत्रैव १२अ॰ । “पार्व्वतीवचनं श्रुत्वा सोऽनुमेने हृदा स्वयम् । पश्यामि किं न पश्यामि पार्व्वतीसुतमित्यहो । यदि मत्तो मया दृष्टस्तस्य विघ्नो भवेद्ध्रुवम् । अन्यथा मे प्रत्यवायस्तत्परतः स्यात्करणम् । इत्यालोच्य च धर्म्मिष्ठो धर्म्मं कृत्वा स्वसाक्षिणम् । बालं द्रष्टुं मनश्चक्रे न बालमातरं शनिः । विषण्णमानसः पूर्वं शुष्ककण्ठोष्ठतालुकः । सव्यलोचनकोणेन ददर्श च शिशोर्मुखम् । शनिश्च दृष्टिमात्रेण चिच्छेद मस्तकं मुने ! । चक्षुर्निवारयामास तस्थौ नम्राननः शनिः” एवं शिरश्छेदमुक्त्वा । “तान् सर्व्वान् मूर्च्छितान् दृष्ट्वा चारुह्य गरुडं हरिः । जगाम पुष्पभद्रां स उत्तरस्यां दिशि स्थिताम् । पुष्पभद्रानदीतीरे ददर्श काननस्थितम् । गजेन्द्रं निद्रितं तत्र शयानं हस्तिनीयुतम् । दिश्युत्तरस्यां शिरसं मूर्च्छितं सुरतश्रमात् । परितः शावकान् कृत्वा परमानन्दमानसम् । शीघ्रं सुदर्शनेनैव चिच्छेद तच्छिरो मुदा । स्थापयामास गरुडे रुधिराक्तं मनोहरम्” । गजशिरश्छेदमुक्त्वा तत्पत्न्या स्तुतेन हरिणा तस्य कल्पान्तजीवनं दत्तमित्युपवर्ण्य । “आगत्य बालकस्थानं बालं कृत्वाऽथ वक्षसि । रुचिरं तच्छिरः कृत्वा योजयामास बालके । ब्रह्मस्वरूपी भगवान् ब्रह्मज्ञानेन लीलया । जीवनं योजयामास हुङ्कारोच्चारणेन च । पार्व्वतीं बोधयित्वा तु दत्त्वा क्रोडे च तं शिशुम् । बोधयामास तां नाथ आध्यात्मिकविबोधनैः” “सेनाचरीभवदिभाननदानवारिवासेन यस्य जनितासुरभीरणश्रीः” नैष॰। इभवक्त्रादयोऽप्यत्र । “तं नमामि गजाननम्” माघः ।

**इभारि** पु॰ ६त॰। सिंहे इभाशिनादयोऽप्यत्र । [ग्दव॰ ।

**इभोषणा** स्त्री इभोपपदा उषणा शाक॰त॰। गजपिप्पल्यां

**इभ्य** त्रि॰ इभं गजमर्हति दण्डा॰ यत् । १प्रचुरगजादिधनाढ्ये २नृपे ३हस्तिपके च पु॰। “उषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास” छा॰उ॰ तस्य भाष्ये इभो हस्ती तमर्हतीतीभ्य ईश्वरोहस्त्यारोहोवेति । “आभिः ष्टिस्थूनां भ्रातेव सचाभिश्याव राजा वचाम्यत्ति” ऋ॰१, ६५,४, स्वार्थे कन् । इभ्यकस्तत्रैव स्त्रियान्तु टापि वा अत इत्वम् इभ्यका—इभ्यिका । इभाढ्यायां स्त्रियाम् ।

**इभ्यतिल्विल** त्रि॰इभ्यस्तिल्विलः पुष्टइव । गजादिभिः प्रचुरे आढ्ये । “यदि प्रतीचीयादिभ्यतिल्विल इव भायति-

स्विष्टो भविष्यतीति विद्यात्” शत॰ब्रा॰ ४,५,८,११,

**इभ्या** स्त्री इभमर्हति सेव्यत्वेन दण्डा॰ यत्। १हस्तिन्यां २शल्लकीवृक्षे च मेदि॰।

**इमथा** अव्य॰ इदम्–इवार्थे–थाल् “प्रत्नपूर्व्वविश्वेमात् थाल् छन्दसि” पा॰ सू॰ निर्देशात् नि॰ इमादेशः। इदानीन्तनतुल्ये। “तं प्रत्नथा पूर्व्वथा विश्वथेमथा इव ज्येष्ठतातिं बर्हिषदं स्वर्विदम्” ऋ॰ ५,४४,१। “प्रत्नथा पुरातनयजमाना इव पूर्व्वथा आदौ वा पूर्व्वे यथा। विश्वथा विश्वे सर्वे प्राणिनो यथा। इमथा इदानीं वर्त्तमाना यजमाना इव” भा॰ “इदवत्” यजु॰ ७अ॰ ११च पठिता।

**इयक्षु** त्रि॰ यज+सन उ वेदे नि संप्रसारणम्। यष्टुमिच्छौ “अन्वग्निर माया अपि त्वमग्न इयक्षवे” ऋ॰ १०,४,१, वेदे प्रायेण सर्वत्र नि॰ संप्रसा॰। “इत्था वो अद्रिहं यथा–वियक्षन्” १,१५२,२, देवानां इयक्षनो यजमान इयक्षति” ऋ॰ ८, ११,११५,

**इयत्** त्रि॰ इदं परिमाणमस्य इदम्–वतुप्। एतावदर्थे “गीतं यदि नवनीतं किमददिति यशोदया पृष्टः। इयदिति गुरुजनसविधे विहृतधनिष्ठापयोधरः पायात्” उद्भटः। “इयान् बाव किल यज्ञोऽभवत् यथा” ऐत॰ “इयन्ति वर्षाणि तया सहोग्रम्” रघुः “इष्टिं निक्षिपतीति विश्वमियता मन्यामहे दुःस्थितम्” शा॰द॰। अत्र साधनप्रकारः इदम्+परिमाणार्थे वतुप् तस्य घः इदम इश् “वस्येति” पा॰प्रक्रियाकौमुदी टीकाकारोक्ति:। अतएवात्र वैयाकरणा औपनिषदाश्च पठन्ति। “उदितवति परस्मिन् प्रत्यये शास्त्रयोनौ गतवति विलयञ्च प्राकृतेऽपि प्रपञ्चे। सपदि पदमुदीतं केवलं प्रत्ययोत्थं तदियदिति मिमीते कोऽनुदा पण्डितोऽपि”। स्त्रियां ङीप्।

**इयत्तका** स्त्री कुत्सिता इयत्ता कुत्सितार्थे कन् ह्रस्वः। कुत्सितेयत्तायाम्। ततः अर्श आ॰ अस्त्यर्थे अच्। कुत्सितेयत्तायुते अल्पप्रमाणे “इयत्तकं कुषुम्भकस्तकं भिनद्म्यश्मना” ऋ॰ १,१९१,१५,

**इयत्ता** स्त्री इयतो भावः तल्। १सीमायां, २परिच्छेदे, ३संख्यायाञ्च। “न गुणानामियत्तया” “अथः परिच्छेत्तुमियत्तयाऽलम्” “इ त्तया रूपमियत्तया वा” इति च रघुः।

**इयस्** त्रि॰ इ–कर्त्तरि असुन् किच्च। १गन्तरि भावे असुन्। २गतौ “तेषां हैयसेवास किमिह कर्त्तव्यम्” शत॰ब्रा॰२,२,२,२,

**इर्** –ईर्षायां कण्ड्वा॰ यक् उभ॰। इर्यति इर्यते।

**इरज्** –ईर्षायां कण्ड्वादि॰ यक् प॰। इरज्यति। “इरज्यन्नग्ने प्रथयस्व जन्तुभिरस्मे रायः” ऋ॰ १०,१४०,४। “इरज्यन्त वसवो रध्योबिनारि” ऋ॰७,२३,२, यद्देवानश्यं जगतामिरज्यसि” ऋ॰१०,७५,२। “युवं विप्रस्य मन्मनामिरज्यथः” ऋ॰१,१५१,६।

**इरण** त्रि॰ ईरिण+पृ॰। अमरभूतौ अमरटीका रमा॰।

**इरम्मद** पु॰ इरया जलेन अन्नेन वा माद्यति वर्द्धते इरा–मद–खश् नि॰ ह्रस्वः मुम् च। १वज्राग्नौ २वाड़वानले च। “इरम्मदं बृहदुक्थं यजत्र” यजु॰११,७४। “इरया अन्नेन माद्यति उग्रं पश्येत्यादि” पा॰नि॰“वेददी॰। “इहते इवाक्रन्दे इत्येतदिरम्मदमितीरया ह्येष मत्तः” शत॰ब्रा॰६,६,२,३।

**इरस्** इरज्वत् कण्ड्वा॰ इरस्यति “मात्पूषन्नाघृण इरस्यः” ऋ॰७,४०,६। “यत्ता इरस्यतीदम्” ऋ॰१०,८६,१।

**इरा** स्त्री इण्–रक् इं कामं राति रा–क वा। १भूमौ, २वाचि, ३सुरायाम्, ४जले, ५अन्ने च। “इरा विश्वस्मै भुवनाय जायते यत्पर्जन्यः पृथिवी रेतसावति:” ऋ॰ ५,८३, १। “इरामत्ता ओदनं पिन्वमानाः” शत॰ब्रा॰६,६,२२। ६कश्यपस्य पत्नीभेदे। “धर्मपत्न्यः समाख्याताः कश्यपस्य वदाम्यहम्। अदितिर्दितिर्दनुःकाला अनायुः सिंहिका मुनिः। कद्रुः प्राधा इरा क्रोधा विनता सुरभिःखशा” इत्युपक्रम्य “इरा वृक्षलतावल्लीतृणजातीश्च सर्व्वशः”। असूतेति शेषः। गरुडपु॰।

**इराक्षीर** पु॰ इरा जलं क्षीरमिवास्य। क्षीरसमुद्रे।

**इराचर** न॰ इरायां जले भूमौ वा चरति चर–ट ६त॰। १वर्षोपले त्रिका॰ २भूचरे ३जलचरे च त्रि॰ स्त्रियां ङीप्।

**इराज** पु॰ इरा इरेव अजति क्षिपति अज–अच् न वी भावः। कन्दर्पे शब्दा॰। [ त्रिका॰।

**इराम्बर** न॰ इरा जलमम्बरमिव यस्य। वर्षोपले करकायाम्।

**इरावत्** इरा+भूम्नि मतुप् मस्य वः। समुद्रे तत्र भवः अण् ऐरावतः। अर्जुनेन नागकन्यायामुत्पादिते २वीरभेदे तद्वृत्तान्तकथा” भा॰भी॰ ९१अ॰।

“अर्जुनस्यात्मजः श्रीमानिरावान्नाम वीर्य्यवान्। सुतायां नागराजस्य जातः पार्थेन धीमता। ऐरावतेन सा दत्ता ह्यनपत्या महात्मना। पत्यौ हते सुपर्णेन कृपणा दीनचेतना। भार्य्यार्थं तान्तु जग्राह पार्थः कामवशानुगाम्। एवमेष समुत्पन्नः परक्षेत्रेऽर्जुनात्मजः। स नागलोके संवृद्धो मात्रा च परिरक्षितः। पितृव्येण

परित्यक्तः पार्थद्वेषाद्दुरात्मना । रूपवान् बलसम्पन्नो गुणवान् सत्यविक्रमः । इन्द्रलोकं जगामाशु श्रुत्वा तत्रार्जुनं गतम् । सोऽभिगम्य महाबाहुः पितरं सत्यविक्रमः । अभ्यवादयदव्यग्रो विनयेन कृताञ्जलिः । न्यवेदयत चात्मानमर्जुनस्य महात्मनः । इरावानस्मि भद्रं ते पुत्रश्चाहं तव प्रभो ! । मातुः समागमो यश्च तत्सर्वं प्रत्यवेदयत् । तच्च सर्वं यथावृत्तमनुसस्मार पाण्डवः । परिष्वज्य सुतञ्चापि सोत्मनः सदृशं गुणैः । प्रीतिमानभवत् पार्थो देवराजनिवेशने । सोऽर्जुनेन समादिष्टो देवलोके तदा नृप ! । प्रीतिपूर्वं महाबाहुः स्वकार्य्यं प्रति भारत । युद्धकाले त्वयाऽस्माकं साह्यं देयमिति प्रभो । बाढमित्येवमुक्त्वा च युद्धकाल इहागतः" ।

"इरावन्तं तु निहतं दृष्ट्वा पार्था महारथाः" भा०भी० ९२अ०। "पुत्रं विनिहतं श्रुत्वा इरावन्तं धनञ्जयः।" ९५अ० । ३नदीभेदे स्त्री ङीप् । भा० स०प०९अ० वरुणसभावर्णने । "इरावती वितस्ता च सिन्धुर्देवनदी तथा" "इरावत्यां हतो भोजः कार्त्तवीर्य्यसमो युधि" भा० व० १२अ० "भतद्रु कामहं तीर्त्वा तथा रम्यामिरावतीम्" । भा०अ०४४अ०। "इरावत्यां महाभोजावग्निसूर्य्यसमौ युधि" हरिवं० ३६। । "इरावती धेनुमती हि भूतं" ऋ०७,९९,२। ४अन्नादियुक्ते त्रि० "वासिष्ठं वर्त्तिरश्विनाविरावत्" ऋ०७,४०,५ । "इरावत् रुचिरत्नादियुक्तम्" भा० । "सुनृतावन्तः सुभगा इरावन्तोहसमुदाः" अथ० ७,६०,६ ।

**इरावती** स्त्री इरां भूमिम् अवति अव–शा०अत ङीप् । वटपत्रीवृक्षे, सा हि शाखाभेदनेनापि भूमिमाच्छादनात् पालयतीति तस्यास्तथात्वम् ।

**इरिकावन** न० इरैव कन् अत इत्वम् इरिकाप्रधानं वनम् । सुभ्रा० "इरिकादीनि वनोत्तरपदानि संज्ञायाम्" पा० गण० पाठात् न णत्वम् । जलप्रधाने वनभेदे । इरिकादीनि च "इरिका तिमिर समीर कुवेर हरि कर्म्मार" ।

**इरिण** न० ऋ–इन किच्च । १ऊषरभूमौ, २निराश्रये, ३शून्ये च । "यथा गौरो अपाकृतं तृष्यन्नेत्यवेरिणम्" ऋ०८,४,३ । "अवेरिणे बीजमुप्त्वा न वप्ता लभते फलम्" मनुः ।

**इरिन्** त्रि० इर–बाहु०"णिनि वलोपः । १प्रेरके । "न वेवामिरो मघव इह वा" ऋ०५,८७,३। २ईश्वरे च ।

**इरिमेद** पु० इरी रोगादीर्णः मेदोनिर्य्यासो यस्य । विट्खदिरे । "इरिमेदः कषायोष्णो मुखदन्तगदास्रजित् । हन्ति कण्डूविषश्लेष्मकृमिकुष्ठविषव्रणान्" भावप्र० ।

**इरिविल्लिका** स्त्री इरिविल्लैव कन् । "पिडकामुत्तमाङ्गस्थां वृत्तामुग्ररुजाज्वराम् । सर्व्वात्मिकां सर्व्वलिङ्गां जानीयादिरिविल्लिकामिति" निदानोक्ते मस्तकस्थे व्रणभेदे । कनभावे इरिविल्लाप्यत्र । "इरिविल्लां गन्धनाम्नीं कक्षां विस्फोटकांस्तथा । पित्तजस्य विसर्पस्य क्रियया साधयेद्भिषक्" सुश्रु० ।

**इरेश** पु० ६त० । १वरुणे, २वागीशे, ३भूमिपतौ, ४विष्णौ च

**इर्गल** न०स्त्री अर्गल+पृ० । द्वाररोधके काष्ठभेदे तस्मै हितम् अपूपादि० यत् । इर्गल्यः छ इर्गलीयः । तत्साधने द्रव्ये ।

**इर्य्य** त्रि० इर–कण्ड्वा० यक् वेदे नि० न यलोपदीर्घौ । प्रेरके । "यूयं राजानमिर्य्यं जनाय विभ्वतष्टम्" ऋ०५,५८,४ ।

**इर्वारु** स्त्री उर्व–आरु पृषो० । ( काकुड़ ) १कर्कट्याम् । २हिंसके त्रि० । "सिंहव्याघ्रवृकतरक्षुऋक्षद्वीपिमार्ज्जारशृगालमृगेर्व्वारुकप्रभृतयो गुहाशयाः" सुश्रुतः । मृगेर्व्वारुकः मृगहिंसकः । वा उङ् । इर्व्वारुरप्युक्तार्थे ।

**इर्वारु(रू)शुक्तिका** स्त्री इर्वारुः(रूः) शुक्तिकेव स्वयंस्फोटनात् । (फुटी) ( स्वयं भिन्नविपक्वकर्कट्याम् ) ।

**इल** शयने अक० गतौ क्षेपे च सक०तुदा०पर०सेट् । इलति । ऐलीत् इयेल ईलतुः इलितः इलः ।

**इल** क्षेपणे चुरा०उभ०सक० सेट् । एलयति ते ऐलिलत् त । ऐलयीत् ऐलिष्ट "कथं वातमेलयति कथं न रमते मनः" अथ०१०,७,३७ । "यामां देवतानां यांयां कामयते ता भूत्वेलयति" शत०ब्रा० १०,२,८,८ ।

**इलविला** स्त्री पुलस्त्यमुनिपत्न्याम् कुबेरजनन्याम् । एतत्सम्बन्धेनैव कुबेरस्य ऐलविल इति नाम ।

**इला** स्त्री इल–क । १भूमौ, २गवि, ३वाचि, ४जम्बुद्वीपस्य नववर्षमध्ये वर्षभेदे तद्वीमा चेलावृतशब्दार्थे वक्ष्यते । ५ वैवस्वतमनुकन्यायां बुधपत्न्याम् । सा हि विष्णुवरात् पुंस्त्वमासाद्य पुनः महेश्वरशापात् स्त्रीत्वं गता बुधस्तु तामुपगम्य पुरूरवसमुत्पादयामासेति पुराणे प्रसिद्धम् । तत्र इडाशब्दे उक्तप्रायम् ६ स्वप्रयोके त्रि० ।

**इ(ए)ला** कण्ड्वा० यक् प० अक० सेट् । इ(ए)लायति ।

**इलावृत** न० इला पृथिवी आवृतं निषधादिभिः । नववर्षात्मकजम्बुद्वीपस्य वर्षभेदे तच्च वर्षम् "पर्व्वतान्माल्यवतः, प्राच्यां गन्धमादनपर्व्वतः । इलावृतं नीलगिरेर्याम्यतो, निषधादुदक् । सुमेरुश्चतुःसीमाभिरभिव्याप्ते देशेऽस्ति । "माल्यवांश्च

शतकोटिपत्रमात्रोमिवास्य किल मध्यमावृतः । नीलश्वेतनिषधावधी च तावन्तरालमनयोरिलावृतम् । निषधनीलहुगन्धमाल्यवैरलमिलावृतमावृगमावभौ । अमरकेलिकुलायसभाकुलं रुचिरकाञ्चनविलमधीतकम्'' शि० पि० । ''एतेन भारतमिलावृतवद् विभाति'' माघः । इलावृतस्य पर्य्यन्तादिवर्णनम् । भाग० ५ स्क० १६ अ० ।

''एषां मध्ये इलावृतं नामाभ्यन्तरवर्षं यस्य नाभ्यामवस्थितः सर्वतः सौवर्णः कुलगिरिराजो मेरुर्द्वीपायामसमुन्नाहः कर्णिकाभूतः कुवलयकमलस्य मूर्द्धनि द्वात्रिंशत्सहस्रयोजनविततो मूले षोड़शसाहस्रं तावतान्तर्भूम्यां प्रविष्टः । उत्तरोत्तरेणेलावृतं नीलः श्वेतः शृङ्गवानिति त्रयो रम्यकहिरण्मयकुरूणां वर्षाणां मर्य्यादागिरयः प्रागायता उभयतः क्षारोदावधयो द्विसाहस्रपृथव एकैकशः पूर्वस्मात् पूर्वस्मादुत्तरोत्तरेण दशांशाधिकांशेन दैर्घ्य एव ह्रसन्ति । एवं दक्षिणेनेलावृतं निषधो हेमकूटो हिमालय इति प्रागायता यथा नीलादयः । अयुतयोजनोत्सेधा हरिवर्षकिंपुरुषभारतानां यथासंख्यम् । तथैवेलावृतमपरेण पूर्वेण च माल्यवद्गन्धमादनावानीलनिषधायतौ द्विसहस्रं पप्रथतुः । केतुमालभद्राश्वयोः सीमानं विदधाते । मन्दरो मेरुमन्दरः सुपार्श्वः कुमुद इत्ययुतयोजनविस्तारोन्नाहा मेरोश्चतुर्दिशमवष्टम्भगिरय उपक्लृप्ताः । चतुर्ष्वेतेषु चूतजम्बूकदम्बन्यग्रोधाश्चत्वारः पादपप्रवराः पर्वतकेतव इव अधिसहस्रयोजनोन्नाहास्तावद्विटपविततयः शतयोजनपरिणाहाः । ह्रदाश्चत्वारः पयोमध्विक्षुरसमृष्टजलाः । यदुपस्पर्शिन उपदेवगणा योगैश्वर्य्याणि स्वाभाविकानि भरतर्षभ ! धारयन्ति । देवोद्यानानि च भवन्ति चत्वारि नन्दनं चैत्ररथं वैभ्राजकं सर्वतोभद्रमिति । येष्वमरपरिवृढाः सह सुरललनाललामयूथपतय उपदेवगणैरुपगीयमानमहिमानः किल विहरन्ति । मन्दरोत्सङ्ग एकादशशतयोजनोत्तुङ्गदेवचूतशिरसो गिरिशिखरस्थूलानि फलान्यमृतकल्पानि पतन्ति । तेषां विशीर्य्यमाणानामतिमधुरसुरभिगन्धबहुलारुणरसोदेनारुणोदा नाम नदी मन्दरगिरिशिखरान्निपतन्ती पूर्वेणेलावृतमुपप्लावयति । यदुपजोषणाद्भवान्या अनुचरीणां पुण्यजनवधूनामवयवस्पर्शसुगन्धवातो दशयोजनं समन्तादनुवासयति । एवं जम्बूफलानामत्युच्चनिपातविशीर्णानामनस्थिप्रायाणामिभकायनिभानां रसेन जम्बूनदी नाम मेरुमन्दरशिखरादयुतयोजनादवनितले निपतन्ती दक्षिणेनात्मानं यावदिलावृतमुपस्यन्दति । तावदुभयोरपि रोधसोर्या मृत्तिका तद्रसेनानुविध्यमाना च वाय्वर्कसंयोगविपाकेन सदामरलोकाभरणं जाम्बूनदं नाम सुवर्णं भवति । यदु ह वाव विबुधादयः सह युवतिभिर्मुकुटकटककटिसूत्राद्याभरणरूपेण खलु धारयन्ति । यस्तु महाकदम्बः सुपार्श्वनिरूढस्तस्य कोटरेभ्यो विनिःसृताः पञ्चायामपरिणाहाः मधुधाराः सुपार्श्वशिखरात् पतन्त्योऽपरेणात्मानमिलावृतमनुमोदयन्ति । या ह्युपयुञ्जानानां मुखनिर्वासितो वायुः समन्ताच्छतयोजनमनु वासयति । एवं कुमुदनिरूढो यः शतवल्शो नाम वटस्तस्य स्कन्धेभ्यो नीचीनाः पयोदधिमधुघृतगुड़ान्नाद्यम्बरशय्यासनाभरणादयः सर्व एव कामदुघा नदाः कुमुदाग्रात् पतन्तस्तमुत्तरेणेलावृतमुपयोजयन्ति । यानुपजुषाणानां न कदाचिदपि प्रजानां वलीपलितक्लमस्वेददौर्गन्ध्यजरामयमृत्युशीतोष्णवैवर्ण्योपसर्गादयस्तापविशेषा भवन्ति । यावज्जीवं सुखं निरतिशयमेव । कुरङ्गकुररकुसुम्भवैकङ्कत्रिकूटशिखरपतङ्गरुचकनिषधशितिवासकपिलशङ्खवैदूर्य्यजारुधिहंसर्षभनागकालञ्जरनारदादयो गिरयो मेरोः कर्णिकाया इव केशरभूता मूलदेशे परित उपक्लृप्ताः । जठरदेवकूटौ मेरुं पूर्वेणाष्टादशयोजनसहस्रमुदगायतौ द्विसहस्रं पृथुतुङ्गौ भवतः । एवमपरेण पवनपारियात्रौ दक्षिणेन कैलासकरवीरौ प्रागायतौ । एवमुत्तरतस्त्रिशृङ्गमकरौ । अष्टाभिरेतैः परिसृतोऽग्निरिव परितश्चकास्ति काञ्चनगिरिः । मेरोर्मूर्द्धनि भगवत आत्मयोनेर्मध्यत उपक्लृप्तां पुरीमयुतयोजनसाहस्रीं समचतुरस्रां शातकौम्भीं वदन्ति । तामनु परितो लोकपालानामष्टानां यथादिशं यथारूपं तुरीयमानेन पुरोऽष्टावुपक्लृप्ताः'' । भा० भी० ६ अ० जम्बूखण्डविभागे तु ।

''धनुःसंस्थे महाराज ! द्वे वर्षे दक्षिणोत्तरे । इलावृतं मध्यमन्तु पञ्च वर्षाणि चैव ह । उत्तरोत्तरमेतेभ्यो वर्षमुद्रिच्यते गुणैः । आयुःप्रमाणमारोग्यं धर्म्मतः कामतोऽर्थतः । समन्वितानि भूतानि तेषु वर्षेषु भारत ! । एवमेषा महाराज ! पर्व्वतैः पृथिवी चिता । हेमकूटस्तु सुमहान् कैलासो नाम पर्वतः । यत्र वैश्रवणो राजन् ! गुह्यकैः सह मोदते । अस्त्युत्तरेण कैलासात् मैनाकं पर्वतम्प्रति । हिरण्यशृङ्गः सुमहान् दिव्यो मणिमयो गिरिः । तस्य पार्श्वे महद्दिव्यं शुभं काञ्चनवालुकम् । रम्यं बिन्दुसरो नाम यत्र राजा भगीरथः । दृष्ट्वा भागीरथीं गङ्गामुवास बहुलाः समाः । यूपा मणिमयास्तत्र चैत्याश्चापि हिर-

स्वजाः । तत्रैव तु गतः सिद्धिं सहस्राक्षो महायशाः । स्रष्टा भूतपतिर्यत्र सर्वलोकैः सनातनः । उपास्यते तिग्मतेजा यत्र भूतैः समन्ततः । नरनारायणौ ब्रह्मा मनुः स्थाणुश्च पञ्चमः । तत्र दिव्या त्रिपथगा प्रथमन्तु प्रतिष्ठिता । ब्रह्मलोकादपक्रान्ता सप्तधा प्रतिपद्यते । वस्वोकसारा नलिनी पावनी च सरस्वती । जम्बूनदी च सीता च गङ्गा सिन्धुश्च सप्तमी । अचिन्त्या दिव्यसङ्काशाः प्रभोरेवैष संविधिः । उपासते यत्र सत्रं सहस्रयुगपर्य्यये । दृश्यादृश्या च भवति तत्र तत्र सरस्वती । एता दिव्याः सप्त गङ्गा स्त्रिषु लोकेषु विश्रुताः" ।

इलिनी स्त्री चन्द्रवंश्यमेधातिथिनृपकन्यायाम् । "मेधातिथिः सुतस्तस्य यस्मात् कण्वोऽभवद्द्विजः । इलिनी नाम यस्यासीत् कन्या वै जनमेजय !" हरिवं०३२अ० ।

इली स्त्री इल–गतौ क गौरा० ङीष् । करवाले (काटार)।

इलीविश पु० असुरभेदे "अभिध्यदिलीविशस्य दृढाविरुद्भिन्नच्छृणमिन्द्रः" ऋ०१,३३,१२,

इलीश पु० इलीव करवालिकेव शोभते शुभ-ड । करवालिका सदृशावयवे समानख्याते मत्स्यभेदे ।

इलिश पु० इलीश+पृ० । इलीशमत्स्ये (इलिश) ।

इल्वल पु० इल+स्तत्रे वलच्–नि० गुणाभावः । १मत्स्यभेदे २असुरभेदे च मेदि०स च सिंहिकापुत्रभेदः "सिंहिकायां समुत्पन्ना विप्रचित्तेः सुतास्तथा । दैत्यदानवसंयोगाज्जातास्तीव्रपराक्रमाः । सैंहिकेया इति ख्यातास्त्रयोदश महाबलाः । व्यंसः शल्यश्च बलिनो नभश्चैव महाबलः । वातापिर्नमुचिश्चैव इल्वलः खसृमस्तथा । आञ्जिको नरकश्चैव (कालनेमि) कालनाभस्तथैव च । राहुर्ज्येष्ठस्तु तेषां वै सूर्य्यचन्द्रप्रमर्द्दनः" हरि०३अ० । तच्चरितं यथा

"इल्वलो नाम दैतेय आसीत् कौरवनन्दन ! । मणिमत्यां पुरि पुरा वातापिस्तस्य चानुजः । स ब्राह्मणं तपोयुक्तमुवाच दितिनन्दनः । पुत्रं मे भगवानेकमिन्द्रतुल्यं प्रयच्छतु । तस्मै स ब्राह्मणो नादात् पुत्रं वासवसन्निभम् । चुक्रोध सोऽसुरस्तस्य ब्राह्मणस्य ततो भृशम् । तदाप्रभृति राजेन्द्र ! इल्वलो ब्रह्महाऽसुरः । मन्युमान् भ्रातरं छागं मायावी ह्यकरोत्ततः । मेषरूपी च वातापिः कामरूपोऽभवत् क्षणात् । संस्कृत्य च भोजयति ततो विप्रं जिघांसति । स चाह्वयति यं वाचा गतं वैवस्वतक्षयम् । स पुनर्देहमास्थाय जीवन् स्म प्रत्यदृश्यत । ततो वातापिमसुरं छागं कृत्वा सुसंस्कृतम् । तं ब्राह्मणं भोजयित्वा पुनरेव समाह्वयत् । तामिल्वलेन महता स्वरेण वाचमीरिताम् । श्रुत्वाऽतिमायो बलवान् क्षिप्रं ब्राह्मणकण्टकः । तस्य पार्श्वं विनिर्भिद्य ब्राह्मणस्य महासुरः । वातापिः प्रहसन्राजन्निश्चक्राम विनाशयन् । एवं स ब्राह्मणान् राजन् ! भोजयित्वा पुनः पुनः । हिंसयामास दैतेय इल्वलो दुष्टचेतनः" भा०व०९६अ० ।

३मृगशिरोनक्षत्रशिरःस्थासु पञ्चसु तारासु स्त्री०व० । तत्र इन्वका इति पाठान्तरम् । इन्वन्ति प्रीणयन्ति इवि-प्रीणने क्वुन् इदित्त्वात् नुम् क्षिपकादि० न अत इत्वम् इति भानुदीक्षितः । तेन इल्वका इति लकारमध्यपाठकल्पनं प्रामादिकमेव । [ ऐन्वीत् । इन्वकाः ।

इव व्याप्तौ प्रीणने च इदित् भ्वा०पर०सक० सेट्। इन्वति

इव अव्य० इण्–क्विप् क । १सादृश्ये, २उत्प्रेक्षायाम्, ३ईषदर्थे, वाक्यालङ्कारद्योतकता चास्य तत्र उपमायाम् "इवेन नित्यसमासोविभक्त्यलोपश्चेति" वार्त्ति० उक्तेर्नित्यसमासः विभक्त्यलोपाभावश्च स च समासस्वरार्थ एव । "वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये" रघुः ।"हंसीव कृष्ण ! ते कीर्त्तिः स्वर्गङ्गामवगाहते" चन्द्रालोकः। एतत्प्रयोगे श्रौती उपमा "श्रौती यथेवशब्दा इवार्थो वा वतिर्यदि" सा०द०उक्तेः । उत्प्रेक्षायाम् ।"गुणा गुणानुबन्धित्वात् तस्य सप्रसवा इव" रघुः । "गङ्गाम्भसि सुरत्राण ! तव निःसाण निःस्वनः । स्नातीवारिवधूवर्गगर्भपातनपातकी" "सुखमेणीदृशो भाति पूर्णचन्द्र इवापरः" सा०द० इवादिशब्दप्रयोगे उत्प्रेक्षावाच्यत्वम् । "वाच्ये वादिप्रयोगे स्यादप्रयोगे परा पुनः" सा०द०उक्तेः । वाक्यालङ्कारे "सर्वदा क इव वा सुखितोऽस्ति" किरा०"किमिव हि मधुराणां मण्डनं नाकृतीनाम्" शकु० "स्खलति सा कियतीमिव न व्यथाम्" नैष० ईषदर्थे "तदस्ति पर्युषितमिव" शत०ब्रा० "आवर्जिता किञ्चिदिव स्तनाभ्याम्" कुमा० ४अवधारणार्थे च । "श्रिये पूषन्निषुकृतेव देवाः" ऋ०१,१८४,३। "इषकृतेव इवशब्द एवार्थे" भा० । "अक्षण्वेव तु वा ईश्वरा" शत०ब्रा०। इवशब्दोऽवधारणार्थे" भा० ।

इषीका स्त्री इषीका पृ० । इषीकाशब्दार्थे अमरटीका ।

इष गतौ सर्पणे च दिवा०पर०सक०सेट् । १इष्यति, ऐष्यत् । ऐषीत् इषितः एषित्वा । "इष्यन् वाचमुपवक्तेव होतः" ऋ० ९,९४,९ । "योऽभियात इषितः प्रयाति" अथ० १०,८,३५ । "स तत्कर्णीपितस्तूयमन्वे" अथ० ६,३५, ५ । "हिन्वानो वाचमिष्यसि" ऋ० ९,६४,९ । इष्या-

यामपि "अथ इष्य होतरित्यथ इच्छ होतरित्येवैतदाह" शत०ब्रा० १,८,२,१५। गतौ तुदादिरपि इषति निरु०।

अनु+अन्वेषणे गवेषणे "अन्विष्यन्तस्ततःसीताम्" रामा० "यावदेनामन्वेष्यामि" शकु०। "न रत्नमन्विष्यति मृग्यते हि तत्" कुमा०। "तस्यान्विष्यन् वेतसगूढं प्रभवं सः" रघुः। स्वार्थे णिच्। तत्रैव "राममन्वेषयामि" सा०द०।

प्र+प्रेरणे। "अप्रैषीद्राजपुत्री मां सुराहारीं तवान्तिकम्" भा०व०१६ अ०। "गत्वा प्रैषीञ्च रावणम्" भट्टिः "अध्वर्युप्रेषितोमैत्रावरुणः प्रेष्यति" आश्व०श्रौ०। "शेषं च प्रेष्यति" कात्या०१२,६,१ "अग्नीषोमाभ्यां छागस्य वपायै मेदसः प्रेष्य" शत० ब्रा० ३,८,२,२७। यत् प्रैष्यः। घञ् प्रैषः। स्वार्थे णिच्। प्रेषयति प्रेषयामास। "स च मां प्रेषयामास" रामा०। [ षितः पर्य्येषणा।

परि+सत्कारपूर्व्वकनियोजने पर्य्येष्यति स्वार्थे णिच् पर्य्ये-

इष वाञ्छायाम् तुदा०पर०सक०सेट् वेट् क्तः। १इच्छति, "इच्छामि संवर्द्धितमाज्ञया ते" कुमा०। इच्छेत् "यदीच्छेद्विपुलान् भोगान्" मल० त०पु०। "राजान्तेवासिवाक्येभ्यः सोदयोत्खे(?)न क्षुधा" वा०स्म०। ऐच्छत् ऐषीत् "ऐषीः पुनर्जन्मजयाय यत्नम्" भट्टिः इयेष "इयेष सा कर्त्तुमवन्ध्यमात्मनः" कुमा०। ईषतुः। इच्छन् "किमिच्छन् कस्य कामाय किमर्थमनुसंज्वरेत्" श्रुतिः।

एषिता—ऐष्टा एषित्वा—इष्ट्वा। भावे श इच्छा "आत्मजन्या भवेदिच्छा" न्यायका०। इष्टः "इष्टोऽसि मे सखा चेति" गीता। कर्मणि इष्यते "निरात्माश्रुदिष्यते" स्मृतिः। एष्टव्यः एषितव्यः। "एष्टव्या बहवः पुत्रायद्येकोऽपि गयां व्रजेत्" पु०।

अनु+अन्वेषणे। "तं अहन्त इवान्वीषुः" शत०ब्रा०। "कृत्स्नमात्मानमन्विच्छामो यमन्वेष्टा" छा०उ०। "अनुपदमन्वेष्टा" पा० "वयं तत्त्वान्वेषात् मधुकर! हतस्त्वं खलु कृती" शकु०

प्रति+ प्रतिग्रहे प्रतीच्छति ( प्रतिगृह्णाति )। "ततः प्रतीच्छ प्रहरेति वादिनी" नैष० "स्नुषां प्रतीच्छ मे कन्याम्" प्राप्तौ च "बुद्धौ शरणमन्विच्छ" गीता। स्वार्थे णिच् वेदे०नि० गुणाभावः। इषयति "इच्छं स्तदास्त रायेण मदन्त इषयेम ज्योतिः" ऋ०१,१८५,८। "इषयेम इच्छाम" भा०।

परि+अन्वेषणे च परीच्छति (अन्विष्यति) "भगवन्तं वा अहमेभिरार्त्विज्यैः पर्य्येषिषम्" छा०उ०।

अभि+सम्यगिच्छायाम् अभीष्टम्।

इष आभीक्ष्ण्ये क्र्यादि० पौनःपुन्ये पर०सक० सेट् इष्णाति इष्णातु इषाण। "इष्णन्निषाणामुं मइषाण सर्व्वलोकं मइषाण" यजु० ३१,२२,ष०। ऐष्णात् ऐषीत्। एषितः एषित्वा। प्रेरणे च। "भिनद्गिरिं शवसा वज्रमिष्णन्" ऋ० ४,१७,३। इष्णन् प्रेरयन्" भा०। इच्छार्थेऽपि "पूर्वीरिषश्चरति मध्व इष्णन्" ऋ० १,१८१,६। "मध्वः मधुनः इष्णन् इच्छन्" भा०। आभीक्ष्ण्यञ्च क्रियापौनःपुन्यम्। क्रिया च धात्वर्थविशेषः स च वाञ्छागत्यादिरेव तस्यैवाभीक्ष्ण्यद्योतनेऽस्य धातुत्वम्

इष गतौ भ्वा० उभ०सक० सेट्। एषति ते। ऐषीत् ऐषिष्ट अनु—अनुसरणे। अन्वेषति। "अन्वेषन्तोवनं राजन्" "देशमन्यं दुराचारमन्वैषन् वानरास्तथा" रामा०।

इष् त्रि० इष—इच्छायां क्विप्। १इच्छायुक्ते। इष्टचरः। "विदाद्दूर्जं शतक्रतुं विदादिषम्" ऋ२,१२,४। कर्मणि क्विप्। २इष्यमाणे त्रि० ३अन्ने स्त्री "मधुमतीर्न इषस्कृधि" यजु० ७,२, "आशिषामवत्परीरिषः १,२,१। "इषे त्वोर्ज्जे त्वा" यजु० १,१,। इष्यतेइष—अन्तर्भूतण्यर्थे कर्म्मणि क्विप्। ४एषणीये। "इषस्तुतो मघवन्" ऋ० ५,५०,५, "इषः एषणीयस्य" भा०। इष—गतौ भावे क्विप्। ५यात्रायाम् स्त्री

इष पु० इष—गतौ क्विप्—इट् यात्रा तस्मिन् साधौ जिगीषूणामस्मिन् अर्श आ०अच्। सौरे चान्द्रे च आश्विने १मासि। "आवर्ये भाद्रमासि सुपतिम्यष्गतो पार्थवाम: प्रदिष्टः" राजमा०उक्तेः "सौराश्विनस्य यात्राया अर्थलाभदत्वात्तथात्वम्"। अत एव रघौ "सरितः कुर्वती गाधाः पथश्चाश्यानकर्दमान्। यात्रायै नोदयामास तं शक्तेः प्रथमं शरत्"। शरत्कालस्य राज्ञां यात्रार्थत्वमुक्तम्। शरदुक्तश्च "इषश्चोर्जश्च शरदिति" श्रुत्युक्तः आश्विनकार्त्तिकमासरूपःकालः तस्य च सौरत्वमुक्तवाक्ये वक्ष्यते "आमेखलं सञ्चरतां घनानां छायामिषे सानुगतां निषेव्य" कुमा०पाठान्तरम्। "अनिमिषेऽनिमेषमपश्यत" माघः। तत्र चान्द्रे "इषे मास्यसिते गते नवम्यामार्द्रयोगतः" तिथि० देवीपु०अत्र चान्द्रोगौणः "यच्छरद्यूर्जश्च ओषधः पच्यन्ते तेनोहैताविषश्चोर्जश्च" शत० ब्रा० का०४,२,१,१७, "अन्तर्भूतण्यर्थे भावे कअर्थे क"। २प्रेषणे "इषवान् मम रेजति" ऋ०१,२८,६, "इषवान् प्रेषणवान्" भा०। इष—इच्छायां कर्मणि घञर्थे क ३अन्ने म०निरु०।

इषणि स्त्री इष—भावे अनि वेदे०नि० गुणाभावः। प्रेषणे

"दुहाना धेनुर्वृजनेषु कारवेत्मना शतिनं पुरुरूपमिषणि" ऋ०२,२,९, इषणि एषणायाम् भा०। सप्तम्या लुक्। लोके तु एषणिः वा ङीप्। इषणिमिच्छति क्यच्। वेदे० नि० इलोपः इषण्यति "ऋतस्य बुध्न उषसामिषण्यन्" । ऋ०३,६१,७, ततः भावे अ। "इषण्या प्रेषणायाम्" "इषण्यया नः पुरुरूपमाभर" ऋ०८,४९,१८।

इषव्य त्रि०इषुणा विध्यति इषौ कुशलो वा यत्। शरलक्ष्ये, १शरव्ये २शरत्यागकुशले च "आराष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी" यजु०वा०२२,२२ "इषुभिर्विध्यति इषव्यः यद्वा इषौ कुशलः" वेददी० [धातयः" ऋ०९,७९,१,

इषि त्रि०इष–कि। इच्छावति "विपश्चिदश्वाना इषयोऽभ्य-

इषिका स्त्री इष–गत्यादौ क्वुन् अत इत्त्वम्। इषीकाशब्दार्थे तूलशब्दपरे ह्रस्वः इषिकतूलम्" तद्धेयतूले।

इषीका स्त्री ईष–गत्यादिषु ईकन् कित् ह्रस्वश्च। १गजनेत्रगोलके। २काशे, ३मुञ्जामध्यवर्त्तितृणे च तदाश्रयात्रैव अश्वत्थाम्ना पाण्डववधाय महास्त्रं परित्यक्तम् यथा भा० प० १४अ० "व्यथितात्माऽभवत् द्रौणिः प्राप्तश्चैनममन्यत। तत्र दिव्यमदीनात्मा परमास्त्रमचिन्तयत्। जग्राह च स चैषीकां द्रौणिः सव्येन पाणिना। स तामापदमासाद्य दिव्यमस्त्रमुदैरयत्" इत्युपक्रम्य "ततस्तस्यामिषीकायां पावकः समजायत। प्रधक्ष्यन्निव लोकांस्त्रीन् कालान्तकयमोपमः" इमामिषीकामधिकृत्य कृतोपाख्यः अण् ऐषीकं भारतान्तर्गतपर्वभेदे "मुञ्जाद्वेषीका तूलमिति" शत०ब्रा० "यदि नडानां यदि वेणूनां यदि वेषीकाणाम्" शत०ब्रा० १,१,४,१९, ४शरशलाकायां ५वीरणशलाकायाञ्च उज्ज्व० "तस्मिन्नास्थदिषीकास्त्रं रामोरामावबोधितः" रघुः।

इषिर त्रि०इष–गतौ किरच्। १गतिशीले। "स न इषिरो अभिता रातः" ऋ०७,२५,४, "इषिरः गतिशीलः"भा० २चलनशीले च "निधामनामिषिरामिन्द्र! भूमिम्"ऋ०२, १०,६। "इषिरां चलन्तीम्" भा० ४अग्नौ पु० उज्ज्व०

इषु पुंस्त्री ईष्यते हिंस्यतेऽनेन ईष–उ ह्रस्वश्च। १बाणे "प्रतिस हरचिषुम्" रघुः। "इषुमति रघुसिंहे दंदशूकान् जिघांसौ" भट्टिः। "इषुभिः प्रतियोत्स्यामि" गीता स्त्रीत्वे "तस्य वाश्नीरिषवो याभिरस्यति" ऋ०२,२१,४,८। "यामिषुं गिरिशन्त! बिभर्ष्यस्तवे" यजु० १६,२। तत्र बाणसंख्ये २पञ्चसंख्यान्विते च। पञ्चशरशब्दे वक्ष्यमाणस्य कामशरस्य पञ्चसंख्याकत्वस्यानुसारेण शरशब्देन हि पञ्चसंख्या बोध्यते। "पञ्चपञ्चाष्टसप्तेषु श्रेयमोजःसु राशिषु" ज्योति०। ३ वृत्तक्षेत्रान्तर्गते जीवावधिपरिधिपर्यन्तलम्बरेखायाञ्च तदानयनप्रकारः सोदाहरणः लीला०दर्शितो यथा

"ज्याव्यासयोगान्तरघातमूलं व्यासस्तदूनोर्दलितः शरः स्यात्। व्यासाच्छरोनाच्छरसङ्गुणाच्च मूलं द्विनिघ्नं भवतीह जीवा। जीवार्द्धवर्गे शरभक्तयुक्ते व्यासप्रमाणं प्रवदन्ति वृत्ते" उदा० "दशविस्तृतिवृत्तान्तर्यत्र ज्या षण्मिता सखे। तत्रेषुं वद बाणाज्ज्ये ज्याबाणाभ्याञ्च विस्तृतिम्"न्यासः। व्यासः १०, ज्या ६, अनयोर्योगः १६, अन्तरं ४ तयोर्घातो ६४, तस्य मूलं ८, तेनोनो व्यासः २, दलितः शरः१। तेन १०हस्तव्यासके वृत्तक्षेत्रे यदि जीवमितिः ६ तदा शरमानम् १ एकहस्त इति ज्ञेयम्। ज्ञातशरव्यासके वृत्तक्षेत्रे जीवानयनं यथा व्यासः १० हस्ताः, शरः १हस्तः तेनोनितः व्यासः ९, तस्य मूलम् ३। द्वाभ्यां गुणितम् ६, जीवामानम्। ज्ञाताभ्यां ज्याबाणाभ्यां व्यासानयनम्। यथा जीवा ६ तस्यार्द्धं ३, तस्य वर्गः ९। शरसंख्यया १ भक्तो ९। शरसंख्यया १ योगे व्यासमानम् १०। एवमन्यसंख्यकजीवादौ अनया दिशा शराद्यानयनम्। ग्रहाणां क्रान्तिवृत्त क्षेत्रस्य शरानयनं संक्षेपेण दर्शितम् सि०शि०

"सविराशिग्रहद्युज्यानिघ्नस्त्रिज्योद्धृतः शरः। स्फुटोऽसौ क्रान्तिसंस्कारे दृक्कर्मण्ययनाख्ये तथा" सू०। "अयं संक्षिप्तो गौणप्रकारः। मुख्यस्तु पूर्वं व्याख्यात एव। तथापीह युक्तिमात्रमुच्यते। विषुवद्वृत्तात् क्रान्तिर्ध्रुवाभिमुखी। क्रान्त्यग्राच्छरः कदम्बाभिमुखः। अयं तेन तिर्यक्त्वेन न संस्कार्यः। अतः क्रान्त्यग्रे यद्द्युज्यावृत्तं तस्य शराग्रस्य च यदन्तरं तत् तेन संस्कृता सती स्फुटा भवति। तज्ज्ञानार्थं कोटिरूपम्। शरः कर्णरूपः। तद्वर्गान्तरपदं द्युज्यावृत्ते भुजः। एतत् त्र्यस्रं दिग्वलनजत्र्यस्रसंभवम्। तत्र सत्रिराशिग्रहक्रान्तिः कदम्बध्रुवस्थलयोरन्तरम्। तज्ज्या भुजः। तद्द्युज्या कोटिस्त्रिज्या कर्णः। यदि त्रिज्येयं कोटिस्तदा शरेण केत्युपपन्नम्। कोटिरूपस्यैव शरस्य ध्रुवेऽन्नुखत्वात्तज्ज्ययाऽयनं दृक्कर्म कर्त्तुं युज्यते" प्रमि० त्रिप्रश्नाधिकारे च "विक्षेपलिप्ताः क्षितिजादिकानां खेषा ११० द्विबाणेन्दुमिता १५२ रसाश्वाः ७६। षट्त्रीन्दवः १३६, स्वाग्निभुवः १३० सितज्ञपातौ स्फुटौ स्वचलकेन्द्रयुक्तौ" सू० "क्षितिजस्य खरुद्रमिता ११० मध्यमा

विक्षेपलिप्ताः । बुधस्य द्विबाणेन्दुमिताः १५२ । गुरोः षट्सप्ततिः ७६ । शुक्रस्य षड्द्विभू१२६ तुल्याः । शनेः खनीन्दु १२० मिता वेदितव्याः । तथा बुधशुक्रयोर्यौ गणितागतौ पातौ तौ स्वस्वशीघ्रकेन्द्रेण युक्तौ कार्यौ । एवं स्फुटौ स्तः । अत्रोपपत्तिः । मध्यमगतिशासनायां वेधप्रकारेण वेधवलये ग्रहविक्षेपोपपत्तिर्दर्शितैव । किंत्वन्त्यफलज्यार्धधनुषा बलिष्ठेन तुल्यं यदा शीघ्रकेन्द्रं भवति तदा त्रिज्यातुल्यः शीघ्रकर्णो भवति तस्मिन् दिने वेधवलये यावान् परमो विक्षेप उपलभ्यते तावान् ग्रहस्य परमो मध्यमविक्षेपः । एवमेते भौमादीनामुपलब्धाः पठिताः । अथ बुधशुक्रयोः पातस्य स्फुटत्वमुच्यते । भगणाध्याये ये बुधशुक्रयोः पातभगणाः पठितास्ते स्वशीघ्रकेन्द्रभगणैरधिकाः सन्तो वास्तवा भवन्ति । ये पठितास्ते स्वल्पाः कर्मलाघवेन सुखार्थम् । अतः पठितचक्रभवौ स्वशीघ्रकेन्द्रयुतौ वास्तवभगणनिष्पन्नौ स्फुटौ भवतः । तथा चोक्तं गोले ।"ये चात्र पातभगणाः पठिता लघवस्ते शीघ्रकेन्द्रभगणैरित्यादि"। इदानीं ग्रहविक्षेपानयनमाह" प्रमि०।"मन्दस्फुटात् खेचरतः सपातशुक्राद्भुजज्या पठितेषुनिघ्नी। स्वशीघ्रकर्णेन हृता शरः स्यात् सपातमन्दस्फुटगोलदिक्कः" मू० । "मन्दस्फुटाद्ग्रहात् सपातयुक्ताद्भुजज्या साध्या । सा ग्रहस्य पठितेन शरेण गुण्या स्वशीघ्रकर्णेन भाज्या फलं स्फुटविक्षेपः स्यात् । सपातो मन्दस्फुटो ग्रहो यदि राशिषट्कादूनस्तदोत्तरो विक्षेपोऽन्यथा दक्षिणः । अत्रोपपत्तिः । मन्दस्फुटो ग्रहः स्वशीघ्रप्रतिमण्डले भ्रमति । तत्र च तस्य पातोऽपि । पातो नाम प्रतिमण्डलविमण्डलयोः संपातः । तस्मादारभ्य विक्षेपप्रवृत्तिः । इह सुवर्तुलशलाकया कक्षामण्डलं तत्प्रतिमण्डलं च छेद्यकोक्तविधिना विरचय्य तत्र शीघ्रप्रतिमण्डले मेषादेः प्रतिलोमं पातस्थानं च चिह्नयित्वा तत्र विमण्डलं निवेश्यम् । पातचिह्नाद्राशिषट्कान्तरे विमण्डलप्रतिमण्डलयोरन्यं सम्पातं कृत्वा पातात् पूर्वं त्रिभेऽन्तरे पठितविक्षेपप्रमाणेन प्रतिमण्डलादुत्तरतो विमण्डलं केनचिदाधारे स्थिरं कृत्वा मेषादेरनुलोमं मन्दस्फुटं ग्रहं प्रतिमण्डले विमण्डले च दत्त्वा विक्षेपोपपत्तिं दर्शयेत् । तत्र तयोर्ग्रहयोर्यावान् विप्रकर्षस्तावांस्तत्र प्रदेशे विक्षेपः । अथ तस्यानयनम् । पातस्थाने हि विक्षेपाभावः । ततस्त्रिभेऽन्तरे परमो विक्षेपः । अन्तरेऽनुपातेन । अतः पातग्रह-

चिह्नयोरन्तरं तावज्ज्ञेयम् । तत्र तयोर्योगे कृते भवति । यतो मेषादेरनुलोमं ग्रहो दत्तः । पातस्तु प्रतिलोमम् । अतस्तयोर्योगः शरार्थं किल केन्द्रम् । तस्य दोर्ज्या साध्या । यदि त्रिज्यातुल्यया दोर्ज्यया पठितविक्षेपतुल्यं प्रतिमण्डलविमण्डलयोरन्तरं लभ्यते तदाऽभीष्टया ग्रहस्थानभवया दोर्ज्यया किमिति फलं शीघ्रकर्णाग्रे विक्षेपः । अथ द्वितीयोऽनुपातः । यदि शीघ्रकर्णाग्रे एतावान् विक्षेपस्तदा त्रिज्याग्रे क इति । अत्र गुणभाजकयोस्त्रिज्यातुल्ययोस्तुल्यत्वान्नाशे कृते सति दोर्ज्यायाः पठितविक्षेपो गुणः शीघ्रकर्णो हरः । फलं कक्षाप्रदेशे विक्षेपो व्यासरूपस्तस्य चापं स्फुटविक्षेप इत्यर्थः । भूचिह्ने सूत्रस्यैकमग्रं बद्ध्वा द्वितीयमग्रं विमण्डले ग्रहस्थाने निबद्धं सूत्रं कार्यः । सूत्रकक्षामण्डलयोरन्तरं स्फुटः शर इत्यादि सर्वं बालाय दर्शनीयम् । इदानीं विक्षेपस्य क्रान्तिसंस्कारयोग्यतार्थमयनवत् स्फुटीकरणमाह" । प्रमि० "त्रिज्यावर्गादयनवलनज्याकृतिं प्रोह्य मूलं यष्ट्या क्षुण्णः परविशिखस्ताडितस्त्रिज्ययाप्तः । यद्वा राशित्रययुतखगद्युज्यकाघ्नस्त्रिमौर्व्या भक्तः स्पष्टो भवति नियतं क्रान्तिसंस्कारयोग्यः" मू० । ग्रहस्य "युतायनांशोडुपकोटिशिञ्जिनीत्यादिनायनं वलनं साध्यम् । अत्र वलनशब्देन वलनज्या ग्राह्या न धनुः । तथा इतः प्रभृति उत्क्रमज्याभिः कर्म कर्तव्यम् । यत उत्क्रमज्याभिः शरज्या शरकलातुल्यैव भवति । तस्यानयनम् । वलनस्य वर्गं त्रिज्यावर्गादपास्य यन्मूलं लभ्यते तद्यष्टिसंज्ञं ज्ञेयम् । तया यष्ट्या ग्रहविक्षेपो गुणितस्त्रिज्यया भक्तः स्फुटः क्रान्तिसंस्कारयोग्यो भवति । अथानुकल्प उच्यते । यद्वा राशित्रययुतखगद्युज्यकाघ्न इति राशित्रययुतस्य ग्रहस्य यावती द्युज्या तया स गुणस्त्रिज्यया भक्तः स्फुटो भवति । अत्र भाजकस्यैकत्वाद्गुणकस्यान्यत्वात् फलं स्वल्पान्तरमित्यतोऽनुकल्पेनोक्तम् । अत्रोपपत्तिः । क्रान्त्यग्रात् किल शरो भवति । शराग्रे ग्रहः क्रान्तिः शरेण संस्कृता स्फुटा भवति । अत्र गणितागतेनैव शरेण क्रान्तिः स्फुटा क्रियते तदयुक्तम् । यतः क्रान्तिर्विषुवन्मण्डलात् तिर्यग्ध्रुवाभिमुखी । विक्षेपस्तु क्रान्तिमण्डलात् तिर्यक्कदम्बाभिमुखः । यथोक्तं गोले । "सर्वतः क्रान्तिसूत्राणां ध्रुवे योगो भवेद्यतः । विषुवन्मण्डलप्राच्या ध्रुवे याम्या तथोत्तरा" । सर्वतः क्षेपसूत्राणां ध्रुवाज्जिनलवान्तरे । योगः कदम्बसंज्ञोऽयं ज्ञेयो

वलनवशोधकम् । तत्रापमण्डलप्राच्या याम्या सौम्या च दिक् सदा । कदम्बभ्रमवृत्तं चेति” । अतो विक्षेपः कदम्बाभिमुखो भवति । ध्रुवाभिमुख्या क्रान्त्या सह कथं तस्य भिन्नदिकस्य योगवियोगावुचितौ । तयोर्यद्भिन्नदिक्त्वं तदायनवलनवशात् । अथ तद्गोलोपरि प्रदर्श्यते । यथोदितं गोलं विरचय्य क्रान्तिवृत्ते यद्ग्रहचिह्नं तस्मात् परितो नवतिभागान्तरेऽन्यत् तिर्य्यग्वृत्तं निवेश्यम् । अथ ग्रहचिह्नाद्ध्रुवोपरिगामि सूत्रं तस्मिन् वृत्ते यत्र लगति तत्कदम्बयोरन्तरस्य ज्या तिर्य्यग्ज्या स कर्णः । तयोर्व्वेगान्तरपदं कोटिः । सा च यष्टिसंज्ञा । क्रान्त्यपाद्विक्षेपः कदम्बाभिमुखः कर्णरूपः । तस्य कोटिरूपकरणायानुपातः । यदि तिर्य्यग्ज्याकर्णे यष्टिः कोटिस्तदा शरकर्णे का । फलं क्रान्तिसंस्कारयोग्यो विक्षेपो भवति । तेन संस्कृता क्रान्तिः स्फुटा । विक्षेपाग्रस्थस्य ग्रहस्य विषुवन्मण्डलस्य च यद्याम्योत्तरमन्तरं सा स्फुटा क्रान्तिरुच्यते अथानुकल्पेऽपीयमेव वासना । अत्र सत्रिराशिग्रहक्रान्तिज्या भुजस्थाने कल्पिता स भुजः । तद्द्युज्या यष्टिस्थाने कल्पिता सा कोटिः । तत्रापि तिर्य्यग्ज्या कर्ण इति सर्व्वमुपपन्नम्” प्रमि० । तत्रैव स्थानान्तरेऽप्युक्तम् ।

“नाडिकामण्डलात् तिर्य्यगन्तरं यत् क्रान्तिवृत्तावधिः क्रान्तिवृत्ताम्बरः । क्षेपवृत्तावधिस्तिर्य्यगेवं स्फुटो नाडिकावृत्तखेटान्तरालेऽपमः” गू० ।“क्रान्तिवृत्ते यत् स्फुटग्रहस्थानं तस्य नाडिकावृत्तात् तिर्य्यगन्तरं सा क्रान्तिः अथ विमण्डले च यत् ग्रहस्थानं तस्य क्रान्तिवृत्तात् तिर्य्यगन्तरं स विक्षेपः । अथ विमण्डलस्थग्रहस्य नाडीवृत्तात् तिर्य्यगन्तरं सा स्फुटा क्रान्तिः” प्रमि० ।

४ सामवेदविहिते यज्ञभेदे । “इषुवज्रौ सामवेदे विहितौ” सि०कौ० । इषुप्रकारः स्थूला० कन् । इषुकः शरप्रकारे

**इषुकामशमी** स्त्री पुरीभेदे “पूर्व्वेषुकामशमी” सि०कौ० ।

**इषुकार** पु० इषुं करोति कृ–अण् उप० । बाणकारके शिल्पिभेदे “पिङ्गला कुररः सर्पः सारङ्गोऽन्वेषणं वने । इषुकारः कुमारी च षडेते गुरवो मम” भौतेनोक्तं सम-र्थंनीयं पिङ्गलादीनां यथोपदेशकारित्वात् गुरुत्वं तथा वर्णितम् यथा । “आशा बलवती राजन् ! नैराश्यं परमं परमं सुखम् । आशां निराशां कृत्वा तु सुखं स्वपिति पिङ्गला । सामिषं कुररं दृष्ट्वा बध्यमानं निरामिषैः । आमिषस्य परित्यागात् कुररः सुखमेधते । गृहारम्भो हि दुःखाय न सुखाय कदाचन । सर्पः परकृतं वेश्म प्रविश्य सुखमेधते । सुखं जीवन्ति मुनयो भैक्ष्यवृत्तिसमाश्रिताः । अयत्नेनैव जीवन्ति सारङ्गा इव पक्षिणः । इषुकारो नरः कश्चिदिषावासक्तमानसः । समीपेनापि गच्छन्तं राजानं नावबुद्धवान्” “बहूनां कलहो नित्यं द्वयोः सङ्कथनं ध्रुवम् । “एकाकी विचरिष्यामि कुमारीशङ्खको यथा” भा० शा० प० अ० १७८ इषुकृदादयोऽप्यत्र ।

**इषुकृत** त्रि० इषुरिव शीघ्रगामी ऋजुगामी वा कृतः । बाणतुल्यं शीघ्रगामितया ऋजुगामितया च कृते । “श्रिये पूषन्निषुकृतेव देवा नासत्या” ऋ० १८४,३ । इषुकृतेव इवशब्द एवार्थे । आजिधावनाय इषुवच्छीघ्रऋजुगामिनौ कृताविव सन्तौ” भा० इषुकृता इव नासत्या इत्यादौ सर्व्वत्र आन्द्र च्या । एतेन इषुकृच्छब्दस्योदाहरणतया एतस्या ऋच उपन्यासः प्रमादिक एव ।

**इषुध** शरधारणे कण्ड्वा० प० अक० सेट् । इषुध्यति ऐषुध्यीत् इषुध्यिता–इषुधिता । याच्ञायामपि “विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसि” ऋ० ६,५०,१ । पतिं वो अघ्न्यानां धेनूनामिषुध्यसि” ऋ० ८,५८,२ । भावे अ । इषुध्या प्रार्थनायां स्त्री । “दिवोदासोऽम्भस्य वीरैरिषुध्येव मरुतो रोदस्योः” ऋ० १,१२२,१ । उण् इषुध्यु प्रार्थके “इषुध्यव ऋतसापः पुरन्धीः” ऋ० ५,४१,६ ।

**इषुधर** पु० इषुं धरति धृ–अच् ६त० । बाणधरे इषुभृदादयोऽप्यत्र । “यशांसि सर्व्वेषुभृतां निरास्यत्” भट्टिः ।

**इषुधि** पुंस्त्री० इषवो धीयन्तेऽत्र धा–कि इषुध–इन् यलोपो वा । बाणाधारे बाणधारके वा तूणे । स्त्रीत्वे “धनुर्गृहीत्वेषुधीमादाय तथाऽक्षये महेषुधी” भा० व० । २८अ० । निषङ्गेण इषुधीरसक्तः” ऋ० १,३३,३ । पुंस्त्वे “बद्धाऽऽपन्नौ महेषुधी” रामा० । “बह्वीनां पिता बहुरस्य पुत्रश्चिश्चाकृणोति समनावगत्य” । “इषुधिः सङ्काः पृतनाश्च” ऋ० ६,७५,५ । ‘बह्व इषवो धीयन्ते इषूणां निधानत्वात् “इषुधिरिषूणां निधानम्” यास्कः” भा० ।

**इषुप** पु० इषुं पिबति पा० पाने क उप० स० । असुरभेदे स हि कलावतारे नग्नजिन्नामा राजासीत् यथाह भा० आ० ६७अ० “इषुपो नाम यस्तेषामसुराणां बलाधिकः । नग्नजिन्नाम राजासीत् भुवि विख्यातविक्रमः” ।

**इषुपुङ्खा** स्त्री इषोः पुङ्खमिव पुष्पमस्याः । शरपुङ्खायाम् ।

**इषुपुष्पा** स्त्री इषुरिव पुष्पमस्याः । शरपुष्पायाम् ।

**इषुमत्** पु० इषवः सन्त्यस्य प्राशस्त्येन मतुप् । प्रशस्तबाणधरे । “इषुमति रघुसिंहे दन्दशूकान् जिघांसौ” भट्टिः ।

इषुमात्र न० इषुः प्रमाणमस्य इषु+मात्रच् । १शरप्रमाणे अग्नि-वेदिगां २कुण्डे कुण्डशब्दे विवृतिः । ३इषुप्रमाणमात्रे त्रि० स्त्रियां ङीप् । "यद्येकः पशुः स्यात् एकप्रादेशां कुर्यात् अथ यदि पञ्च पशवः स्युः पञ्चप्रादेशां कुर्यादिषुमात्रीं वा वीर्य्यं वा इषुर्वीर्य्यवत्त्वमेतैव तद्भवति । पञ्चप्रादेशा ह्येव त्वेव इषुरेषुर्भवति" शत० ब्रा० ६,५,२,१० । इदञ्चा-मधिकृत्य प्रवृत्तम् । उखां करोतीत्युपक्रम्य "पञ्चप्रादेशा मिषुमात्री वा तिर्य्यक् पञ्चपशौ" कात्या० १६,२,२५, उक्तेः । इषुमानं च अङ्गुल्यवधिबाहुमूलपर्य्यन्तमानं तच्च प्रादेशत्रयम् याज्ञिकसम्प्रदायप्रसिद्धम् । ४शरगतिपर्य्य-न्तमाने च । "अथ यदब्रवीत् वर्द्धस्वेति । तस्मादु ह स्मैषु-मात्रमेव तिर्य्यक् वर्द्धते इषुमात्रं प्राङ्सोऽवैवावरं सह-द्रम् ददावव" शत० ब्रा० १,६,२,११ इत्यासुरवर्द्धन प्रकारः । "इषुमात्रं धनुषः सकाशात् बलात् प्रयुक्तेषु-र्यावद्दूरं गच्छति तावन्मात्रं प्रतिपक्षं तिर्य्यक् उभय पार्श्वतः अवर्द्धत" भा० । शरविक्षेपप्रमाणस्य । इषु-विक्षेपशब्दे दृश्यम् ।

इषुविक्षेप पु० इषोर्विक्षेपयोग्यदेशः । शार्ङ्ग शतहस्तमिते शरविक्षेपयोग्ये देशे तत्प्रमाणमाह आ० त० पितामहः "मध्यमेन च चापेन प्रक्षिपेत्तु शरत्रयम् । कृतान्तात्तु शते शार्ङ्गे क्षयं कृत्वा विचक्षणः । तत्प्रमाणदेशातिक्रमेणैव पुरीषोत्सर्गः कार्य्यः । "ततः कक्ष्यं समुत्थाय कुर्य्यात् मैत्रं नरेश्वर ! नैऋत्यामिषुविक्षेपमतीत्याभ्यधिकं भुवः" । मैत्रं मित्रदेवताकपायुसम्बन्धात् पुरीषोत्सर्गं इषुविक्षेप मतीत्य इषुविक्षेपयोग्यदेशादूर्द्ध्वं" आ० त० रघु० ।

इषेत्वक पु० इषे त्वा इतिभागोऽस्त्यत्रानुवाके अध्याये वा गोपथा० वुन् । इषेत्वा इतिमन्त्रयुक्ते अनुवाके अध्याये च । स च यजुर्वेदीयः प्रथमाध्यायः तत्रादौ इषे त्वो-र्ज्जेत्वेति पठ्यमानात् तस्य तथात्वम् एवं तदन्तर्गतोऽनु-वाकोऽपि तथा ।

इष्कर्त्तृ त्रि० निस्+कृ–तृच् "निसस्तपावनासेवने" प्राति-शाख्यस्त्रप्रोक्तेषोपसर्गैकदेशनकारलोपः । निष्कर्त्तरि । "इष्कर्त्तारमध्वरस्य प्रचेतसम्" ऋ० १०,१४०,५ । इष्कृतादयोऽप्यत्र ।

इष्कृति स्त्री निस्+कृ–क्तिन् इष्कर्त्तृवत् नलोपः । गर्भात् निष्क्रमकारिण्यां मातरि जनन्याम् । "इष्कृतिर्नाम वो माता योयूयं स्थ निष्कृतीः" यजु० १२,८३, । "इष्-कृतिर्नाम निष्कृतिनाम्नी माता जननी" वेददी० ।

इष्ट त्रि० इष–कर्म्मणि क्त । १अभिलषिते, २प्रिये "इष्टोऽसि मम बलेति गीता० च । यज भावे क्त । ३यज्ञादौ न० कर्म्मणि, क्त । ४पूजिते ५एरण्डवृक्षे पु० । ६संस्कारे न० । "एकाग्निकर्म्म हवनं त्रेतायां यच्च हूयते । अन्तर्वेद्याञ्च यद्दानमिष्टं तदभिधीयते । अग्निहोत्रं तपः सत्यं वेदानाञ्चानुपालनम् । आतिथ्यं वैश्वदेवञ्च प्राहुरिष्टमिति स्मृतम्" जातूकर्ण्योक्ते ७धर्म्म-कार्य्ये न० । इष्टञ्च इच्छाविषयः तच्च द्विविधं गौणं मु-ख्यञ्च । तत्र इतरेच्छानधीनेच्छाविषयोमुख्यं तत्साधनं गौणम् । तत्र मुख्यमिष्टं सुखं दुःखाभावश्च । तदिच्छाया इतरेच्छानधीनत्वात् । तत्साधनं पाकभोजनादि गौणं सुखदुःखाभावेच्छयैव तदिच्छायाः समुत्पादात् अ-धिकमिच्छाशब्दे ९१२ पृष्ठे उक्तम् । तत्रेच्छाविषये "सह यज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः । अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्" । "अनिष्टमिष्टं मिश्रञ्च त्रिविधं कर्म्म चोच्यते" । "इष्टं हि वो देवा दास्यन्ते यज्ञ भाविताः" इति च गीता । यज्ञे "पुरोडाशभुजामिष्टमिष्ट कर्त्तुमतन्द्रिताम्" माघः इष्टं यागः इष्टमीष्टं कर्त्तुमत-न्द्राणामित्यर्थः । "इष्टं दत्तमधीतं वा विनश्यत्यनुकीर्त्तनात्" देवलः । इष्टं यजनम्" शु० त० रघु० इत्युक्ते च "यज्ञैरिष्ट क्रतुशतम्" विक्रमो० स्मृतिपरिभाषिते इष्टकर्म्मणि द्विजातीनामेवाधिकारः न स्त्रीशूद्रयोः यथाह "इष्टञ्च द्विजातीनां धर्म्मः सामान्य उच्यते । अधिकारी भवेच्छूद्रः पूर्त्ते धर्म्मे न वैदिके" जातूकर्ण्यः "वैदिके वेदसाध्ये अग्नि-होत्रादाविति" रत्नाकरः । "पितृव्यगुरुदौहित्रान् भर्त्तुः स्वस्रीयमातुलान् । पूजयेत् कव्यपूर्त्ताभ्याम् वृद्धानाथाऽति-थीन् स्त्रियः" इत्यत्र स्मृतिवचने स्त्रिया पूर्त्तमात्रेऽधिकार-विधानात् तत्र "अवाप्तयोत्सर्गरूपपूर्त्ते गोरवतारणानुम-न्त्रणयजमानकर्तृकमन्त्रपाठ विधानात् तत्र अमन्त्रकतया स्त्रीशूद्रयोरनधिकारेण तद्वति यागेऽपि तयोर्नाधिकारः विशेषोपदेशाभावात्" इति द्वैतनिर्णयानुसारिणः । इष्टोत्सर्गे तदङ्गहोम इव ब्राह्मण द्वारा तन्मन्त्रपाठसम्भवात्तयोरपि तत्राधिकारः इति रघुनन्दनादयः । "अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते" वराहपु० "तस्य तत्कृतस्याग्नौ न स्त्री जुहुयादनुपेतः" आप० वचनं तु स्वयंहोमविषयम् । "श्रौतस्मार्त्तक्रियाहेतोर्वृणुयादृत्विजः स्वयम्" याज्ञ० श्रौत इव स्मार्त्तेऽपि कर्म्मणि ऋत्विग्वरणोक्तेः । अतएव "ऋ-त्विग्वादे नियुक्तश्च समौ संपरिकीर्त्तितौ । यज्ञे स्वाम्याप्नु-

थात् पुरुषं हानिं वाहेऽस्य वा जयमिति" बृह० उप० ३,८ "श्रौते कर्मणि न० "उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्त्ते संसृजेथामयञ्च" यजु० १५,५४ इष्टापूर्त्ते श्रौतस्मार्त्ते कर्मणी" वेददी० । १० इच्छया कल्पिते लि० "इष्ट-हतिरिष्टगुणिता व्येका दलिता विभाजितेष्टेन" लीला० ११यज्ञेन तोषिते परात्मनि १२विष्णौ च पु० "इष्टो-ऽविशिष्टः शिष्टेष्टः" विष्णु स० "इष्टः परमानन्दात्मकत्वेन प्रियः यज्ञेन पूजितो वेति" भा० । यज–करणे या० क्त, भावे क्त स्वार्थे अच् वा । १३ इष्टकायां न० । "मरुतार्कैश्च शुध्यन्ति पक्वेष्टचितानि च" विष्णु०।

**इष्टकाचित** लि० इष्टकया चितः व्याप्तः । इष्टकाभिर्व्याप्ते

**इष्टकर्मन्** न० इष्टप्रसिद्ध्यर्थं कर्म शाक०त० । लीलावत्युक्ते गणितभेदे तत्प्रकारो यथा "अथेष्टकर्मणि करणसूत्रं वृत्तम् "उद्दिष्टकालापवदिष्टराशिः क्षुण्णो हृतोंऽशै रहितो युतो वा । इष्टाहतं दृष्टमनेन भक्तं राशिर्भवेत् प्रोक्तमितीष्टकर्म । अत्रोद्देशकः । पञ्चघ्नः स्वत्रिभागोनो दशभक्तः समन्वितः । राशित्र्यंशार्द्धपादैः, स्यात् कोराशिर्द्व्यूनसप्ततिः । न्यासः गुणः ५ । स्वत्रिभागः १/३ । हरः१०। राश्यंशाः १/३ १/२ १/४ । दृश्यम् । ६८ । अत्र किल कल्पित-राशिः ३ । पञ्चघ्नः । १५ । स्वत्रिभागोनः । १०। दश-भक्तः । १ । कल्पित ३ राशेस्त्र्यंशार्द्धपादैः ३/३ ३/२ ३/४ समन्वितोहरोजातः १७/४ । अथ दृष्टम् ६८ इष्टेन ३ गुणितम् २०४ । हरेण १७/४ भक्तं जातोराशिः । ४८ । एवं सर्वत्रोदाहरणे राशिः केनचिद् गुणितोभक्तोवा राश्यंशेन रहितोयुतोवा दृश्यते इष्टं राशिं प्रकल्प्य तस्मिन्नुद्दिष्टकालापवत्कर्मणि कृते यन्निष्पद्यते तेन भजेद्दृष्टमिष्टगुणं फलं राशिः स्यात् । तत्र दृष्टजात्यु-दाहरणम् । यूथार्द्धं सत्रिभागं वनविवरगतं कुञ्जराणाञ्च दृष्टं षड्भागश्चैव नद्यां पिबति च सलिलं सप्तमांशेन मिश्रः । पद्मिन्याञ्चाष्टमांशः स्वनवमसहितः क्रीडते सानुरागो नागेन्द्रो हस्तिनीभिस्त्रिभिरनुगतः का भवेद्यूथ-संख्या । न्यासः

१/२ १/६ १/८ दृश्यम् ४ । एषां सवर्णने
१/३ १/७ १/९ द्वाभ्यामपवर्त्तितं २/३ ।४/२१।
५/३६ । पुनरेषां सवर्णितानामैक्यं नवभिरपवर्त्तितं २५१/२५२ दृश्योनं १/२५२ अनेन ४ दृष्टे इष्टगुणिते भक्ते जाता हस्तिसंख्या १००८ । अपरोदाहरणम् । अमलकमलराशेस्त्र्यंशपञ्चांशषष्ठैस्त्रिनयनहरिसूर्य्या येन तु-र्य्येण चार्य्याः । गुरुपदमथ षड्भिः पूजितं शेषपद्मैः सकलकमलसंख्यां क्षिप्रमाख्याहि तस्य । न्यासः १/३ १/५ १/६ १/४ दृश्यम् । ६ । अत्रेष्टं राशिम् १ प्रकल्प्य प्राग्वज्जातोराशिः । १२० । अन्यदुदाहरणम् । हारस्तारस्तरुण्या निधुवनकलहे मौक्तिकानां विशीर्णो भूमौ यातस्त्रिभागः शयनतलगतः पञ्चमांशोऽस्य दृष्टः । प्राप्तः षष्ठः सुकेश्या गणक ! दशमकः संगृहीतः प्रियेण दृष्टं षट्कञ्च सूत्रे कथय कतिपयैर्मौक्तिकैरेष हारः । न्यासः १/३ १/५ १/६ १/१० दृश्यम् । ६ । अत्रेष्टं राशिम् १ प्रकल्प्य प्राग्वज्जातोराशिः ३० । अथ शेषजात्युदाहरणम् । स्वार्द्धं प्रादात् प्रयागे नवलवयुगलं योऽवशेषाच्च काश्यां शेषाङ्घ्रिं शुल्कहेतोः पथि दशमलवान् षट् च शेषाद्गयायाम् । शिष्टा निष्कत्रिषष्टिर्निजगृहमनया तीर्थपान्थः प्रयातस्तस्य द्रव्यप्रमाणं वद यदि भवता शेषजातिः श्रुतास्ति । न्यासः ।

१/१ दृश्यम् ६३ । अत्र रूपम् १ राशिं प्रकल्प्य
१/२ भागान् शेषान् शेषादपास्य अथवा भागा-
२/९ पवाहविधिना सवर्णिते जातम् । ७/६०
१/४ अनेन इष्टगुणिते ६३ दृष्टे । भक्ते जातं
६/१० द्रव्यप्रमाणम् । ५४० । इदं विलोमसूत्रे-

णापि सिध्यति । अथ विश्लेषजात्युदाहरणम् । "पञ्चांशोऽलिकुलात्कदम्बमगमत्त्र्यंशः शिलीन्ध्रं तयोर्विश्लेषस्त्रिगुणोमृगाक्षि ! कुटजं दोलायमानोऽपरः । कान्ते ! केतकमालतीपरिमलप्राप्तैककालप्रियादूताहूत इतस्ततो भ्रमति खे भृङ्गोऽलिसंख्यां वद । न्यासः १/५ १/३ २/५ दृश्यम् ।१। जातमलिकुलमानम् ।१५। एवमन्यत्रापि"।

**इष्टका** स्त्री इष–तकन् टाप् "इष्टकेषीकामालानाम्" पा० निर्द्देशात् ह्रस्वम् । (इट्) मृदादिनिर्म्मिते १मृत्खण्डभेदे यज्ञे अग्निचयनार्थे २मृदादिनिर्म्मिते द्रव्यभेदे च शत० ब्रा० तु निर्वचनान्तरमुक्तं यथा । "यावद्यावद्वै जुहवांचकार तावत्तावद् भवतीति तद्यस्मा इष्टे समभवन्तस्मादिष्टका" ६,१,२,२२ । "तं देवा अग्न्योराहुतिभिरभिषज्यन् ते यां यामाहुतिमजुहवुः सासैनं पक्वेष्टका भूत्वा समपद्यत तद्यदिष्टात् समभवंस्तस्मादिष्टकास्तस्मादग्निना इष्टकाः पचन्त्याहुतीरेवैनास्तत् कुर्वन्ति" इति च तत्रैव । इष्टकाकरणकाल-प्रकारादि" कात्या० श्रौ० १६,२सू० दर्शितं यथा । "उखासम्भरणमष्टम्याम्" १सू० । "उखायाः सम्भरणमुखा सम्भरणम तदष्टम्यां भवति "अष्टकायामुखां सम्भरतीति

( ६,२,२,२२ ) शत०ब्रा० वचनात् । उखा चोपवप्रणम् अपाठाद्यत्र सम्भृतएव ततश्चान्तराले तस्या अपि प्रयोक्तृत्वम् । मध्यदायतु प्रालानकृष्णाट्स्याम्" कर्कः "आहवनीयस्य पुरस्तान्मत्या चतुरश्रे श्वभ्रे स्वत्पिशक्ख- मवदधाति भूमिखनम्" २स्रू० । "भूमिखननमत्यूनान- तिरिक्तम्"क०। "पिक्खमपरेण व्यध्वे वल्मीकवपां छिद्रां निदधाति"३स्रू०। 'पिक्खाहवनीययोर्व्यध्वे अर्धपथे"क०। 'व्यध्वे पिक्खाहवनीययोर्मध्ये, वल्मीकवपाम् उपदी- कालतस्य शङ्कयस्य वपामिव वपाम् अन्तःपुटां छिद्रां छिद्र- संयुक्ताम्" संप० । "आहवनीयं दक्षिणेन तिष्ठन्मुञ्ज- पञ्चाङ्गीयवाविशन्ति प्राञ्चोऽन्यगर्दभाजा: पूर्वापरा रास- भोमध्येऽन्यपूर्वाः" ४स्रू० । 'आहवनीयस्य दक्षिणतः तिष्ठद्भिर्मुञ्जमयीभिः पञ्चाङ्गीभिः पञ्चाङ्क्री सुखरिकाः ताभिर्बद्धास्तिष्ठन्ति प्राङ्मुखाः अश्वगर्दभाजा: पूर्वापर- रोत्ता रासभोमध्येऽन्यपूर्वाः" क० । "उत्तरत आहवनी- यस्यारत्निमात्र उभयतश्छेद्या वैणवी सुषिराभ्रिः कल्मा- षाभावेऽकल्माषी प्रादेशमात्र्यरत्निमात्री वा" ५स्रू० । "आ- कल्पर्यांतमूनामुत्तरतो मा भूदित्याहवनीयपक्षणम्"क० । "परिपावरमात्वर्तुरा" संप०। "हिरण्मयीमेके" ६स्रू०। "एके आचार्या इच्छन्ति, अतश्च विकल्पः" क० । "अष्ट- स्थोतं जुहोति संततहुत्स्वहन् मुञ्जान इति (११,१) ७स्रू० । 'अष्टस्वहोतमाज्यद्रव्यं संततं जुहोति" क० । 'देवस्य त्वेति (११,९) अभ्रिमादाय "हस्त आधाले त्वेनाभ- मिमन्त्रयते" । (११,११) ८स्रू० । "अश्वप्रभृतीश्च प्रत्यृचं प्रतूर्तं युञ्जानां योगे योगऽइति (११,१२,१४) ९स्रू० । "अभिमन्त्रयते" क० । "अनुपश्यन्नन्तक्रमयत्यनेनाम् प्राचः प्रतिमन्त्रं प्रतूर्तवन्तरिक्षं पृथिव्याः सधस्थादिति" (११,१५,१६ ) १० स्रू० । "अग्निपु ष्पलतश्च पिक्खं मच्छन्त्वग्निं पुरीष्यमिति" ( ११,१६ ) । ( ६,२,२,१ ) शत०ब्रा० ११स्रू० । "दक्षिणतश्च ययवो युगपत्" १२स्रू० । "गच्छतां च दक्षिणतः ययवः, उत्तरतश्च पुरुषाः युगपद्गमनं कुर्वन्ति"क० । "अनद्धा पुरुषमीक्षते देवपिशङ्गमनुख्यानसंक्रमग्निं पुरीष्यमिति" । (११,१७) १३स्रू० । "यो देवादीक्षावति स देवपिशङ्गमनुख्यार्थ- वतः" क० । "वल्मीकवपामादाय छिद्रेण पिक्खमीक्ष- तेऽन्यग्निरिति" (११,१७) १४स्रू०। "इहा निदधात्येनाम् । १५स्रू०। "वल्मीकवपाम्" क०। "आगत्येत्यभिमन्त्रयतेऽ- श्वम्" (११,१८) १६स्रू० । "आक्रम्य वाजिनेन (११,१९ )

पिक्खमभिज्ञापयति" १७ स्रू० । "एनेमेत्यश्वोऽभिधीयते" क० "द्यौस्त इति (११,२०) पृष्ठस्योपरि पाणिं धारयन्न- नुपश्यन्नुत्क्रामेत्युत्क्रामयति ( ११,२१ ) १८स्रू० । "अश्वम्" क० । "उदक्रमीदित्यभिमन्त्रयते (११,२२) १९ क०।"अश्वमेव"क०।'आहवनीयवत् स्थापयति पिक्खस्य" २०स्रू० । "पश्यन्" क० "उपविश्य खदमभिजुहोत्या त्वा जिघर्मीति (११,२३ ) 'व्यतिषक्ताभ्यामञ्जलिभ्यामाहुती ( ११,२३,२४ ) स्रुवेणाश्वपदे" २१स्रू० । "अत्- संस्कारत्वादुपविश्येत्युच्यते, व्यतिषङ्गश्च एकस्याः पूर्वार्ध इतरार्धः इतरयोरप्येवमेव" क० । "अभ्र्या पिक्खं त्रिः परिलिखति परि वाजपतिरिति (११,२५,२७ ) अन्ति- र्बहिष्कृतरयोस्तयाभ्र्या पिक्खं खनति देवस्य त्वेति (११,२८) २२स्रू० । "अभिपक्षणमभ्र्यन्तरमिखनार्थम् तथा चाह 'अत वा वैषाव्यभिरत्नीदतीति "(६,५,- ४,२ शत०ब्रा० उत्तरया परया ऋचा पूर्वलिखिता- द्वहिर्बहिर्वाञ्छप्रदेशे परिलिखति" । क० "कृष्णाजिनमा- कीर्योत्तरतस्मिन् पुष्करपर्णमपां पृष्ठमिति" (११,२९ ) २३सू० । "तस्मिन्कृष्णाजिने" क० । "विशाखोऽसिहिव इति (११,२९ ) २४सू० । "पुष्करपर्णम्" क० "आ- लभत उभे मर्म च स्पृशति"(११,३०,३१) २५स्रू०। "उभे कृष्णाजिनपुष्करपर्णे, मन्त्रद्वयात्त युगपदालम्भनम्" क० । "पिक्खं पुरीष्योऽसीति (११,३२) । "२६ स्रू० 'आलभते" क०। "पाणिभ्यां परिगृह्योत्थाय दक्षिणोत्त- राभ्यां दक्षिणः पाणिस्त्वामग्नइति" (११,३२ ३८ ) । पडूमिः सर्वं पक्षकृत्या" २७स्रू० "अत्रैव मन्त्रः "अथैनं परिमृह्णातीति" शत०ब्रा० (६,४,२,२ ) वचनात्"क० इति द्वितीया कण्डिका ।

"पुष्करपर्णे निदधाति"१स्रू०। "अपः मध्ये ऽपनयत्यपो देवीरिति (११,३८)२सू० । 'श्वभ्र; पिक्खावटः" क० । सं तदति ( ११,२९ ) वा तमपक्षिपति "३सू० । 'श्वभ्र- एव" क० । "अनामिकया संवपति पुरस्तात्पश्चाद्दक्षिणत उत्तरतश्च" ४सू० । "संवापश्चावटे पुरीषस्य" क० । "आस्तीर्णयोरन्तात्समुद्गृह्णाति सुजात इति"( ११,४० ) ५सू०। "आस्तीर्णयोः कृष्णाजिनपुष्करपर्णयोः" क० । "बन्धनायोभयोः प्रान्तान् सर्वत ऊर्ध्वान् करोति"संप०। 'तिष्ठता सम्भृतोक्तोपनह्यति वासोभ्यग्नइति । (११,४०) ६सू० । 'उदुम्बरीतानन्तान्" क० । 'उत्तिष्ठति पिक्ख- माहायोदु तिष्ठेति" ( ११,४१ ) ७सू० । "ऊर्ध्व ऊषु णः

कुर्वन्ति" (६,५,२,१२) श॰ब्रा॰। "तथा च चतिसङ्ख्यकत्वाद्येकैका निधानान्ता क्रियते" क॰। "इष्टकास्तु तिस्रो विश्वज्योतिषः पृथग्लक्षणास्त्र्यालिखिताः" ६सू॰। "तृतीयस्याभ्यर्धे यथाद्यायजमान एव तिस्र इष्टकाः विश्वज्योतिःसञ्ज्ञकाः पृथग्लक्षणाः करोति लक्षणकरणं च प्रथमाद्वितीयाप्रत्यग्रत्वार्थमेवोपधानं यथा स्यादिति" क॰। "मृदश्मपयवां निदधाति" ७सू॰। "उखां क्रियमाणामुपयेतदल्पमयया तां यदनतिरिच्यमानां निदधाति कार्यार्थम्" क॰। "अवशिष्टां मृदश्मपयवसक्तां निदधाति" संप॰। "सप्तभिरश्वशकृद्भिरुखां धूपयति दक्षिणाग्न्यादीप्तैरेकैकेन वसवस्त्वेति (११, ६०) प्रतिमन्त्रम् ८सू॰। "शकृद्भिरश्वस्य" संप॰। "अभ्रा अश्वं महदस्त्वं खनत्यदितिष्टेति (११, ६१) ९सू॰। "अभ्रिम पूर्वोक्तैव प्रकृतत्वात् खन वा वेणव्यभ्रिरत्नीवेदतीति (६,५,४,२) श॰ब्रा॰वचनात्" क॰। "श्रपणमालीयं यथाकृतमवदधाति" १०सू॰। अश्वे, येनैव क्रमेण कृता अषाढाद्याः उखायां तु विशेषः, "देवानां त्वेत्युखां (११,६१) न्युब्जाम्" ११सू॰। "अवदधाति" क॰। "श्रपणेनाश्वच्छाद्य दक्षिणाग्निमादीपयति धिषणास्त्वेति (११,६१) १२सू॰। "निर्मन्थ्येन वा श्रपणश्रपणे" १३सू॰। "कर्तव्ये" क॰। "वरूत्रीष्टे तोपमायो (११,६१) जपति" १४सू॰। "उखाभीच्छमाणः" क॰। "आचरति मित्रस्येति (११, ६२) १५सू॰। "आचरणं च श्रपणप्रक्षेपः" क॰। अषाढादीनामधस्तादुपरिष्टाच्च पुनः श्रपणं प्रक्षिपति" संप॰ "यावद्भाचरेत्" १६सू॰। "यावद्भिः प्रकारैः श्रपणं प्रक्षिपेत्तावत्कालेनैव मन्त्रेणाचरेत्" संप॰। "दिवैव प्रदहनोद्धरणे" १७सू॰। "कर्तव्ये" (६,५,४,१०) श॰ब्रा॰। "प्रदहनं पचनम् उद्धरणं वहिर्निष्कासनम्" संप॰। "उद्वपति श्रपणम्" १८सू॰। "पदार्थतया" क॰। "भस्मसाद्भूतं पराकरोति" संप॰। देवस्त्वेत्युखाम्" १९सू॰ (११,२१)। "उद्वपति" क॰। "उखानां करोत्यव्यथमानेति (११,६२) २०सू॰। "उत्थायास्याम्" (११,६४) २१सू॰। "ऊर्ध्वं यच्छति" क॰। "परिगृह्य पात्रे करोति मित्रैतां नद्दति" (११, ६४, २२सू॰। "अजापयसावसिञ्चति वसवस्त्वेति" (११,६५) प्रतिमन्त्रम्" २३सू॰। "उखाम्। क्षिप्रपक्षे च उत्तानकरणाद्येकैका अजापयसावसेकान्ता कर्तव्या" क॰। "इष्टकाक्रियातस्त्र्यालिखितानाम्" २४सू॰। "अत ऊर्ध्वमिष्टकास्त्र्यालिखिताः क्रियन्ते" क॰। "अपरिमितालिखिता लोकम्पृणयोः" २५सू॰। "द्वितीयाचतुर्थ्योः कुत एतत् ते हि प्रकृत्याम्नायते "रसो वै ते चितौ अपरिमित उ वै रस इति" ( ८,७,२,१७ ), श॰ब्रा॰। "अतश्च विकल्पोऽयम्" क॰। "पूर्ववदग्निः पाके" २६सू॰। "इष्टकानां पाके भवति निर्मन्थ्यो दक्षिणाग्निर्वा" क॰। फाल्गुनामावास्यायां दीक्षाशङ्का कल्पयेयं तस्माद्। "दण्डोच्छ्रयणान्तं कृत्वाध्वर्युयजमानयोरन्यतर उखामाहवनीयेऽधिश्रयति मुञ्जकुलायशणकुलायावस्तीर्णाम् अन्तरेमयां मा सु भित्था इति (११, ६८) तिष्ठन्नुदङ्मुखः" ३१सू॰। दण्डोच्छ्रयणान्तमाध्वरिकं कर्म कृत्वा उखामाहवनीयेऽधिश्रयति, सा च मुञ्जकुलायावस्तीर्णा भवति अन्तरेणया। प्रागुदीचीं दिशमभिमुखः। अधिकारसुपजीव्याह" क॰ "तस्मप्रतिलोमगविष्णुक्रमसामप्रेषु च" ३२सू॰ प्रागुदीचीं दिशमभिमुखो भवति" क॰ "अष्टमावारूढे त्रयोदशास्तां प्रादेशमात्रीः समिध आदधाति" ३३सू॰। "उखावामग्नावारूढे त्रयोदश समिध आदधाति, प्रादेशमात्रीग्रहणं च मिदानुकरणप्रसङ्गार्थम्" क॰। "अनारोहत्यङ्गारानोद्यैके" ३४सू॰। अनारोहत्यग्नावुखायाम् अङ्गारानोप्यैके समिदाधानं कुर्वन्ति" क॰। ता इदानीमाह, "एतोचां कार्मुकीं दृश इति" (११,७०) ३५सू॰। "आदधाति, लघुको धमनः तदीया कार्मुकी" क॰। "वैकङ्कतीं परस्मा इति(११,७१) ३६सू॰। "औदुम्बरीं परमस्मा इति" (११,७२) ३७सू॰। "अपरशुवृक्णां यदग्न इति" (११,७३) ३८सू॰। "या परशुना न छिन्ना" क॰। "अकुठारच्छिन्नाम्" संप॰। "अधःशयां यदत्तीति" (११,७३) ३९सू॰। "भूमिसंलग्ना या सदा शुष्का भवति" संप॰। "पालाशीः मत्यूधमहरहरिति" (११,७५)। ४०सू॰। "आदधाति यथैताः पालाश्यो भवन्तीति (६,६,२,७) श॰ब्रा॰ वचनात्, एवं चापरशुवृक्णा अधःशया औदुम्बर्यावेव भवतः जात्यन्तराविधानात्" क॰। "उपोत्तमां क्षत्रियस्येच्छन्" ४१सू॰। "उत्तमायाः समीपे उपोत्तमा द्वादशी, तां क्षत्रियस्य यजमानस्येच्छयादधाति अन्यस्य क्षत्रियपुरोहितव्यतिरिक्तस्य उभे उपोत्तमोत्तमे इच्छयाधीयेते, एवं हि श्रूयते" श॰ब्रा॰ ( ६,६,२,१२ ) क॰। "एवं च वर्ति, उत्तमां पुरोहितस्य" ४२सू॰। "इच्छयादधाति" क॰। "उत्तमाम् याङ्कति" ( ११,८२ ) संप॰। "अन्यस्योभे" ४३सू॰। "अन्यक्षत्रियस्यापुरोहितस्य च

एकादश भवन्ति त्रयोदश वा" क०। "ऋत्विक्पुरोहितव्यतिरिक्तस्य द्वादशीत्रयोदश्याविच्छया भवतः" संप० "स्वाहाकारः सर्वासूखायाम्" ४४सू०। "उखाया-माधीयमानासु समित्सु, अतोऽन्यत्रापि स्वाहाकारो भवति सर्वासित्यभिधानात्" क०। "उखायां सर्वासु समित्सु स्वाहाकारो भवति" संप०। "औदुम्बर्यादि दशान्तमन्ते" ४५सू०। "एवं सति प्रागौदुम्बर्याहोमा-दुखाधिश्रयणादि"तान्यु हैवमुखायामेवैतान्यौदुम्बराणि जुहोतीति वचनात्" (६,६,१,२२) क०। "अन्तरावसरे" संप० इति ४ कण्डिका।

"यजमानः स्वाद्रे रुक्मं प्रतिमुञ्चते परिमण्डल-मेकविंशतिपिण्डं कृष्णाजिननिष्यूतं लोमसु शुक्ल-कृष्णेषु शणसूत्रे त्रिवृत्प्रोतमुपरिनाभि बहिष्पिण्डं इत्यनो रुक्म इति"(१२,१)। "रुक्मं हि प्रजा सर्व-मेवैतत्सूयते (६,६,१,२), यजमानग्रहणाच्च स्वय-मेव यजमानः प्रतिमुञ्चते, द्वादशाहे च सर्वे यजमानाः प्रतिमुञ्चेयुः अत ऊर्ध्वं पिण्डाद्यन्वारम्भः एवं हि सर्वैः कृतं भवति" क०। "परिमण्डलं वर्तुलम्, एकविंशति-पिण्डम् पिण्डं निर्बाधम् निर्बाधन्ते उन्नताः निःका-शन्ते उन्नताः स्वरूपाद्बहिर्निःसृता भवन्ति, कृष्णाजिन शुक्लकृष्णेषु लोमसु निष्यूतं नितरां स्यूतम्, पुनः कीदृशम् त्रिगुणे त्रिवृति शणमये सूत्रे ओतं प्रोतम् तथा उप-रिनाभि, पुनः बहिष्पिण्डं बहिर्निर्बाधम्" संप०। "दण्डशिक्यासन्दीषु मुञ्जरज्ज्वस्त्रिवृतो बहिर्ध्वाः" २सू० "उभया याभ्यां व्यक्तते तौ दण्डौ, शिक्यं प्रतीतम्, आस-न्दी च। चतुरस्रा रज्जवो बहिर्ध्वा भवन्ति" क०। "बहिर्ध्वाः कर्दमलिप्ताः" संप०। "परिमण्डलाभ्या-पिण्डाभ्यामुखां परिगृह्णाति मखोऽसीति" (१२, २) ३सू०। "हरति ज्ञायमानामेति" (१२,२) ४सू०। "तामेवोखाम्" क०। "आहवनीयस्य पुरस्तादुद्दाला-सन्दीपदासन्द्यां चतुरस्राक्त्रां शिक्यवत्यां निदधाति देवा अग्निमिति (१२,२) ५सू०। "उद्दालासन्दीवदिति प्रादेशपादी गम्यते" (१२,४,२) क०। सा च चतुरस्री सह पादैः, तस्यां शिक्यवत्यामासन्द्यां च, निदधाति उखाम्" क०। "शिक्यपाशं प्रतिमुञ्चते षडुद्यामं विश्वा रूपाणीति" (१२,२) ६सू० "ग्रीवायाम्" क०। "सशिक्यं प्राञ्चं प्रत्यवृह्णाति सुपर्णोऽसीति" (१२,४) पिण्डवत् ७सू०। "सह शिक्येन प्राञ्चमग्निं प्रत्यवृह्णाति, पिण्डवदिलूर्ध्वबाहुः (१,८)। "धारणं च" ८सू०। "पिण्डवदेव उपरिनाभि" क०। अत्र द्वाभ्यामङ्काभ्यां शुक्लयजुर्वेदस्याध्यायादि, त्रिभिरङ्कैः कात्यायनश्रौतसूत्रस्या-ध्यायकण्डिकादि। चतुर्भिरङ्कैः शतपथब्राह्मणस्याध्यायादि ज्ञेयं तेन तत्तत्प्रतीकमात्रगृहीतमन्त्रसूत्रादि तत्तत्स्थाने द्रष्टव्यम् विस्तरस्तु शत० ब्रा० ६ अ० द्रष्टव्यः। लौकि-केष्टरचितप्राचीरादौ इष्टकाचयनफलेन इष्टकासंख्या-ज्ञानोपायो दर्शितो लीला० यथा "चितौ करसङ्ख्यं वाहेदत्तम्। उच्छ्रयेण गुणितं चितेः किल क्षेत्रसम्भव-फलं घनं भवेत्। इष्टकाघनहृते घने चितेरिष्टकापरि-मितिश्च लभ्यते॥ इष्टकोच्छ्रयहृदुच्छ्रितिश्चितेः स्युः स्तराश्च दृषदां चितेरपि॥ उदाहरणम्। अष्टादशाङ्गुलं दैर्घ्यं विस्तारो द्वादशाङ्गुलः। उच्छ्रितिस्त्र्यङ्गुला यासामिष्ट-कास्ताश्चितौ किल॥ यद्विस्तृतिः पञ्चकराष्टहस्तं दैर्घ्यं च यस्यां त्रिकरोच्छ्रितिश्च। तस्यां चितौ किं फलमिष्टकानां सङ्ख्या च का ब्रूहि कति स्तराश्च॥ इष्टकायाः घनहस्त-मानम् ३/२६ चितेः क्षेत्रफलम् ४०। उच्छ्रयेण ३ गुणितं चितेर्घनफलम् १२०। यथोक्तकरणे लब्धा इष्टका सङ्ख्या २५६०। स्तरसङ्ख्या २४। एवं पाषाणचयेऽपि" 'व्यासात् षोडशभागः सर्वेषां सद्मनां भवति भित्तिः। पक्वेष्टकाकृतानां दारुकृतानां च स विकल्पः। इ०स०। "नेष्टकारचिते पितॄन् संतर्पयेत्" शङ्खलि०। "लक्षणयात् कोटिगुणितं फलं स्वाहाकृतिभिः कृतात्। कोटिकोटिगुणं पुण्यं फलं स्यादिष्टकामये" मठ०त० पु०। वास्तु-यागे 'आकाशपदे' इष्टकारोपाचारः वास्तुयाग-शब्दे द्रष्टव्यः।

**इष्टकाचयन** न० इष्टकयाऽग्नेश्चयनम्। इष्टकया अग्नेश्च-यने तत्प्रकारः कात्या०श्रौ०सू०।"एतया त्रिवृत्याभिमन्त्र्य केऽन्यचितं चिन्वन्ति द्रोणचिद्रथचक्रचित्कङ्कचित्प्रउगचिदु-भयतःप्रउगः समुह्य पुरीषः" १६,५,८। "एते ह्यग्नि-विशेषाः तदाकारांश्चिन्वन्त्येके एके सुपर्णचितम् विकि-कृत्वादस्या विकृतेरग्न्यन्तरेष्वप्राप्तिर्मा भूदित्युच्यते एवं हि श्रूयते "तं हैकएतया विकृत्याभिमन्त्र्यान्यां चितिं चिन्वन्तीति" (६,७,२,८ शत०ब्रा०) क०। "विकृत्या एतया ऋचा अन्यचितं पक्षित्रधमन्यमग्निं चिन्वन्ति त-मेवाह द्रोणचिदित्यादि" संप०। "समुह्य पुरीषे प्रतिदिश पुरीषाहरणम्" १० सू०। प्रतिदिशं पुरीषमाहृत्याहृत्य तेनैव चयनम्" क०। "विष्णुक्रमान् क्रमते विष्णो-

प्रेङ्खन इति (१९,२९ ) प्राङ् यात्वा यथार्थम्" १८सू०। "गच्छेत्" क०। "आरोहेत् पार्श्वतो गच्छेत्"१९सू०। "यजमानः संस्कारात्"क०। "अदे खर्जत्वक्रन्ददग्निरिति (११,२२) जपति" २०सू०। "खर्जनं च शब्दकरणम्" क०। "वासेऽवहरत्सुहुतावोक्षितउत्तरतः समिदाधानं प्र-प्रायमिति (१२,२४) २१सू०। "यत्र वाससातैवावहरणम् न प्राग्वहतेः एवं ह्याह (६,८,१,१२) स यदि पुरा वसथे विमुञ्चेतानसेवाग्निः स्यादिति" वसत्यां तु उत्तरतोऽग्नेरवतार्य समिदाधानं "प्र-प्रायमिति"। उद्धृतावोक्षितग्रहणं च परिसमूहनाद्युपसंग्रहार्थमपि स्मार्तं ह्येतदनूद्यते (६,४,४,१८) उद्धते वाऽ अवोक्षितेऽग्निमादधातीति" एवं च सति तदपचारे स्मार्तं प्रायश्चित्तम्"क०। "वासार्थे रथे उत्तरस्यां दिशि अग्निमवतारयति" संप०। "वनीवाहनमेतद्दीक्षासु यदेच्छेत्" २२सू०। "वनीवाहनमिति" संज्ञास्य कर्मणः सा च संव्यवहारार्था "ऊर्ध्वं वनीवाहनादिति" (२५सू०) तच्च दीक्षासु कर्तव्यम्। यदेच्छोपजायते महावीरकरणयूपच्छेदनवनीवाहनानि दीक्षासु क्रियन्ते क्रमस्तु नैषाम् पाठाभावात्" क० "श्मश्रुभक्षावपनं क्रयणीयादौ" २३सू०। उक्तभक्षावपनमपि कर्तव्यम् आदौ क्रयणीयस्याह्नः"क०। "अन्यत्र चेच्छन्"२४सू०। "करोति"क०। "ऊर्ध्वं वनीवाहनात् क्रमयोगात्" २५सू०। अन्यत्रेच्छया कुर्वन् वनीवाहनादूर्ध्वं करोति मन्त्राणां पाठक्रमयोगात्" क०। "वनीवाहनादूर्ध्वं सोमक्रयदिने आदौ अन्यत्र दीक्षा भक्षावपनम्। कुतः क्रमयोगात् पूर्वं वनीवाहनमन्त्राः पश्चाद्भक्षापोऽभ्यवहरणस्य" संप० "पलाशपुटेनापो देवीरित्येकया ( १२,३५ ) २६सू०। "पलाशपुटेन भक्ष्य गृहीत्वाप्लावयति"क०। "ततो द्वाभ्याम्" (१२,३६-३७) २७सू०। "पुनराप्लावयति द्वाभ्यामृग्भ्याम्"क०। "आद्याभ्यां (१२,३५-३६) वा पूर्वम्" २८सू०। "पूर्वमावपनं द्वाभ्यामृग्भ्याम् तत एकयर्चा" वाशब्दो विकल्पार्थः तंल्यस्तुतित्वात्" क०। "अनामिकया प्राश्नाति दत्त्वे प्रसद्येति (१२,३८-४१) २९सू०। "प्राश्नातुं कामः कियदश्नानामिकयादत्ते" (६,८,२,७)। "प्राश्नोयामुपतिष्ठते बोधा मदूति" (१२,४२) ३०सू०। "यत्तदात्तं भक्ष तत्रास्य" क०। "प्रायश्चित्तं समिधोपहृत्य" ३१सू०। ६कण्डिका।

"आज्यं निषत्कर्भवहति ( १२,४२ ) जुहोति" १सू०। "प्रायश्चित्तिरित्यस्य होमस्य संज्ञा उपपूर्वस्य हरतिर्ग्रहणार्थो दृष्टोऽन्यत्रापि "अथ स्रुचोपहत्याज्यमिति (२,४,१,२५)" क०। "समिधा करणभूतया स्रुक्स्थानीयेन उपहत्य गृहीत्वा" संप०। "उत्थाय दधाति समिधं पुनस्त्वेति ( १२,४४ ) २सू०। उत्थानग्रहणं च प्रतिपत्तित्वात् गुणार्थं चेति। नैमित्तिकान्यत्रैव प्रकरणे पठ्यन्ते तदर्थमाह" क० "गार्हपत्येऽनुगते निर्मथ्य" ३सू०। "आदधाति मन्थनं प्राप्तत्वादनाख्यम् उच्यते प्रायश्चित्तार्थम्"। "प्राजहिते उपशान्ते मथित्वा प्रायश्चित्ती करोति" संप०। "इत्याहवनीये सांकाशिनेन हृत्वाः" ४सू०। "इत्यात्र वर्तमानात्र आहवनीयेऽनुगते सांकाशिनेन हृत्वा तमादधाति" सांकाशिनशब्दः प्रगुणमेव हृत्वेत्यर्थकः एतद्योच्यते पूर्ववत्प्रणयनं मा भूदिति" क०। "आहवनीयेऽनिप्रणीतेऽनुगते सांकाशिनेन हृत्वा ऋजुना सदोहविर्धानमध्यमार्गेणैव हृत्वा" संप०। "आग्नीध्रीयमुत्तरेण सदः" ५सू०। "हृत्वा निदधाति उत्तरेण सदो हविर्धानाग्न्युदासार्थः" क०। आग्नीध्रीयमग्निमनुगतं सदस उत्तरेणैव हृत्वा" संप०। "प्रष्टङ्गारादाहतोस्तेत्" ६सू०। "उक्ते चानुगते पूर्ववत्प्रष्टङ्गारात् अयं तु विशेषः आहृता आहृदुपहरणं च मन्त्रागमस्त्वर्थम्। "एतयैवाहुतानुपहरन् यजुरिति ( ६,६,४,९) श्रुतेः"क०। "उक्तेऽन्वावनुगते गार्हपत्यादाहवनीयमग्निरित्याहृत्य (११,१७ समितमिन्दुपस्याय (१२,५७ आहृता मन्त्ररहितक्रियामात्रेण पूर्वधदुक्तां प्रष्टङ्गारात् उखामाहवनीयेऽधिश्रित्योख्यमग्निमुत्पादयेत्" संप०। "अध्वरप्रायश्चित्तिं च सर्वेषु यथाकालं पूर्वां-पूर्वाम्"७सू०। "अध्वरप्रायश्चित्तिं च करोति सर्वेषु निमित्तेषु तां च पूर्वाम् पूर्वां यथाग्निकौ च। सर्वग्रहणं च भक्षापोऽभ्यवहरणार्थम्। (२२) तत्रापि हि विधीयेते (६,८,२,११) उभे प्रायश्चित्ती "करोतिये एवाग्नावनुगते इति" यथाकालमिति चाध्वरप्रायश्चित्त्यर्थमुच्यते आग्निकी तु विशकलनदत्येव" क० "सर्वेषु पूर्वोक्तेष्वग्न्यनुगमेषु यथाकालं परमेष्ठ्यादिकाचाहुतिं (२६,६,१) पूर्वां पूर्वां जुहुयात् आदग्निप्रायश्चित्तिम् चकारात्" संप० "उखाभेदने नवस्थाल्यां महाशुष्काशुष्काकपालमवधायावपति" ८सू०। यद्येषोखाभिद्येतेति" (६,६,४,८) प्रक्रम्य सर्वमिदमाम्नातम् एतच्चैकोखापक्षे भवति। नित्यपक्षे तु द्वयोरेवैकस्मावपनम्"(६,५,२,२२)क०। "उखोपशमने पिष्टा मदा स-

ष्टोणां करोत्याहता" ९सू० । "उखासम्भूतमेकमुखायां प्रचिन्नम् हितोयमुपधयया सह पिधा, आहता मन्त्रमर्जम्, आहत्वत्वेन क्रियामात्रमुच्यते तथा चोक्तम् ( ६,६,४, २ ) एतवैवाहतानुपहरन् यजुरिति" क० । "आहता मन्त्ररहितेतिकर्त्तव्यतया" संप०।"प्रकायामावपति कपालं च १०सू०। "प्रकायाकृखायाम् अग्निं कपालं च" क०। 'उखोपधये पिधा संसृज्य निदधाति"११सू० । "उखा-कपालमुपधयां च पिधा संसृज्य स्थापयति" क० ।

इदानीं चयनप्रकारमाह । अध्यात्मं चयनमुपविष्ट" १२सू०। "आत्मनआभिमुख्येन चयनं कर्तव्यम् न परा-गिति, तथा च नैर्ऋतीषु वचनात्पराङ्चयनमुक्तम् (७, २,१,१२) । अपरो विशेषः" "सव्यमाङ्गमन्तरं कृत्वोत्तर-लक्षणाभिरिष्टकाभिः" १३सू०" ।"चेतव्यः"क०। "नित्ये सादनसूददोहसाउपधानादुत्तरे तया देवतया ता अ-स्वेति (१२, ५२, ५५,)१४सू० । "सर्वासिष्टकासु एते नित्ये भवतः तया देवतेति सादनम् ता अस्वेति सूद-दोहसाधिवदनम्" क० । "अविशेषोपदेशात्" १५सू० । "अविशेषेण ह्यनारभ्य कश्चिदिष्टकाविशेषमेते श्रूयेते"क० । "विशेषमनुपादाय सामान्येन तयोरुपदेशात् विधा-नात्" संप० । "अनाम्नातप्रतिषेधाच्च" १६सू० । "यत्र नैर्ऋत्यादिषु नाम्नानेते नित्ये संहितायां न पठ्यंते तत्रा-पि प्रतिषेधः श्रूयते ( ७,१,१,१४ ) सादनसूददोहसाधि-वदतीति" "अतः प्रतिषेधात् सर्वत्राप्येते भवतः" संप० । "एकनोदनास्वेकदेशास्तु तन्त्रेण" १७सू० । एकनोदना अपस्या वपस्या इत्येवमादि, एकनोदना अपि यद्येकदेशा भवन्ति, यथा तासामेव देशभेदः अपस्याः पञ्चपञ्चाग्नू कान्ते-ष्विति ( १७,६,२ ) अतश्च प्रतनूकं नित्ये, देशभेदे त्वपति तन्त्रेणेति"क० । "एकनोदना एकं विधिवाक्यं यासां ताः । एको देश एकमुपधानस्थानं यासां ताः तत्र तन्त्रेण नित्ये भवतः" संप० । "आत्मनि यजुष्मतीः" १८ सू०। "इष्टका उपदधाति न पक्षपुच्छयोः" क० (८,७,२,२ ) । लोकम्पृणास्तु दशसु दशसु मन्त्रो लोकं पृणेति ( १२, ५४ ) । (८,१,२१२) १९सू०। "आसा-दनं च" २०सू०। लोकं पृणानाम्, सूददोहसाधिवदनं तु भवति अप्रतिषिद्धत्वात्" क०। 'प्रतिचिति द्वे-द्वे उप-धाय" २१सू०। लोकं पृणामन्त्रवचनम्, पुनर्दशसु-दशसु । "प्रथमं द्वे-द्वे उपधाय ततो दश-दशोपदध्यात्" संप० । "अयुग्मगणमध्यमानूके" २२सू०। अयुग्मो य इष्टकागणो यथा पाञ्चचित्याः सप्त तासां मध्यमानूके उपधेयं" क०। "त्रिपञ्चसप्तादिगणः" संप० । "एका च" २३सू० । "या चैकेष्टका साप्यनूक एव, यथा विश्वज्योतिर्हि यजु-र्वेत्येवमादि" क०।"अभितो युग्माः"२४सू०।"अनूकमभि-तोऽर्धार्धिकया युग्मा उपधीयन्ते"क० । "उदञ्चो वर्गाः पूर्वापरे" २५सू० । "यत्र पूर्वापरइति देशव्यपदेशः तत्रोदग्लक्षणा इष्टकावर्गा उपधीयन्ते" क० । "ति-र्यगनूकमभितोऽर्धयावधिके पूर्वापरे देशे इष्टकानां वर्गाः समूहाः उदग्लक्षणा उपधेयाः" संप० । "प्राञ्चो दक्षिणोत्तरे" २६सू० । "यत्र तु दक्षिणोत्तरव्यपदेशः तत्र प्राग्लक्षणा इति" क० । "प्रागनूकमभितोऽर्धावा-वधिके दक्षिणोत्तरे प्राञ्चः प्राग्लक्षणाः उपधेयाः" संप० । "भिन्नलक्षणयोरचयनम्" (८,७,२, १६ ) २७ सू० । "होत्राणामुत्तमेऽहनि वेद्यग्निमानम्" २८सू० । "कर्त्तव्यम्"क०। "उत्तरस्यानेऽर्धव्यामेन गार्हपत्यस्य परि-लिखति" २९सू० । "मण्डलमिति शेषः" क० । "मण्ड-लाहा प्रक्रमणमन्तःपात्यस्य"३०सू० । "पूर्वार्धाद्व्यामस्य त्रीन् प्राचः प्रक्रमान् प्रक्रामतीति वचनात् (१०,२,३,१) । "पूर्वार्धादेव व्यामस्य प्रक्रमणम् न तस्मात्तु प्रक्रमणमनन्तौ चरितार्थम्" क० । "वावधारण, मण्डलादेवान्तःपातस्य क्रमणम् न पूर्वार्धात् व्यामात्" संप० । "पश्चाद् प्राचा-त्मादमात्रे त्रिवृत्" ३१सू० । यूपावटे अतः यजुर्यू-पानयः तत्त्वात्पश्चात् पद्मालोकमात्रे चित्यस्याग्निक्षेत्रस्य स्थानं भवति" संप० । "यजमानेनोर्ध्वबाहुप्रपदोच्छ्रि-तेन समस्थितेन वा" ३२सू० । ( १०, २,२,६ ) । "प्रपदोच्छ्रितः पादाग्रे अवस्थितः समस्थितः प्रसिद्ध एव, तत्क्रियायामोदितत्वात्प्रक्रमणवदध्वर्युर्मा भूदिति यजमानग्रहणम्" क० । ७कण्डिका ।

"द्विपुरुषां रज्जुं मित्वा"१सू०।"द्विपुरुषां रज्जुं मित्वेति निगदे व्याख्यातम्" । "उभयतःपाशाम्" २सू०। "मध्ये लक्षणम्"३सू०। "अभितोऽर्धपुरुषयोश्च"४सू० । "मध्य-मात्लक्षणात् पुरुषपञ्चमे" संप० "अर्धे च" ६सू०।"पुरुष-पञ्चमस्यार्धे"क० । "चतुरश्रायतस्य पाशयोः शङ्कू मध्ये ऽर्धपुरुषयोश्च" ७सू० । "पाशावुन्मुच्यार्धपुरुषीययोः प्रतिमुच्य दक्षिणायाम्य मध्यमे नितोदं करोति"८सू० । "गर्तम्"संप० "उन्मुच्य पाशावेकं मध्यमे प्रतिमुच्य दक्षिणाभिनितोदमायस्य मध्यमे शङ्कुः"९सू० । "तस्मिन् पाशं प्रतिमुच्य पूर्वार्धे च दक्षिणायस्य मध्यमे शङ्कुः"

१०सू० । "पश्चार्द्धपुरुषे च" ११सू० । "उन्मुच्य पूर्वाद्वात् पश्चार्धे प्रतिमुच्य दक्षिणायम्य मध्यमे शङ्कुः" १२सू० । "अभितोऽर्द्धपुरुषयोश्च" १३सू० । "एवमुत्तरोऽन्तः" १४सू० । "दक्षिणे पार्श्वे पूर्ववदायम्य पञ्चमभागीये शङ्कुः"१५सू० । "तस्मिन् पाशं प्रतिमुच्य पूर्वे चार्धपुरुषीये पञ्चमभागोयार्धपुरुषीययोः सन्निपात्य तस्मिञ्छङ्कुः" १६सू० । "एवं पश्चात्"१७सू० । "एवमुत्तरः पक्षः" १८सू० । "तथा पुच्छं वितस्त्या" १९सू० । इच्छन् पक्षपुच्छाग्रेषु चतुरङ्गुलं चतुरङ्गुलं संकर्षति विकर्षन्त्वन्ते"२०सू०। "यत्र पक्ष आत्मानमप्येति स पक्षाप्ययः एवं पुच्छाप्ययः। अप्ययेषु पक्षयोः पुच्छस्य च आत्मसम्बन्धिसमीपे चतुरङ्गुलं चत्वारि-चत्वार्यङ्गुलान्युभयोः पार्श्वयोः सङ्कर्षति सङ्कोचयति, तथा अन्ते पक्षपुच्छप्रान्ते उभयोः पार्श्वयोः चतुरङ्गुलं विकर्षति विस्तारयति" कप० । "पञ्चारत्निः पुरुषो दशपदो द्वादशाङ्गुलं पदं प्रक्रमस्त्रिपदः पञ्चविभक्तस्य" २१सू० । "पञ्चारत्नयोः यस्य सः पञ्चभिररत्निभिः पुरुषः दशभिः पदैः पुरुषो द्वादशभिरङ्गुलैः पदम् इत्येवमर्थो न भवति इतः प्रागरत्न्यादीनां तत्परिमाणानुक्त्येनाविद्धत्वात्, अतश्चैवम् पुरुषस्य समविभक्तस्य यः पञ्चमो भागः सोऽरत्निः तस्य दशमो भागः पदम्, पदस्य द्वादशो भागोऽङ्गुलम् त्रिभिः पदैरेकः प्रक्रमः इति न भवति पदस्य सिद्धत्वात्" क० । "परितत्य रज्ज्वा सहितं बहीरज्ज्वेकपष्टे शते परिश्रितो मिनोति" २२सू० । "रज्ज्वा परितत्य सर्वतोवेष्टयित्वा रज्ज्वाबहिर्भागे सहितं रज्जुसंलग्नं यथा भवति तथा एकषष्ट्यधिके द्वे शते परिमिनोति" 'क० "चतुर्दशशतानि वा त्रीणि" २३सू० । चतुर्दशत्यधिकानि त्रीणि शतानि" क० । "ऊर्ध्वाः शर्कराः खाते" २४सू० । "उत्तरेषु पुरुषीयेष्वैकशतविधात्" २५सू० । "उत्तरेषु अष्टविधादिषु चयनेषु आ एकशतविधात् एकशतविधचयनं यावत् एकाधिकशतपुरुषात्मकपञ्चमवतितमचयनपर्य्यन्तम् पुरुषीयेष्व एकैकपुरुषवृद्ध्या अग्निमानं भवति तस्मादु सप्तविधमेव प्रथमं विदधीतेति" (१०,२,२,१८) क० "यथाग्निवेदीष्टकाप्रमाणम्"२६सू० । वेदिश्च इष्टकाश्च वेदीष्टकाः तासां प्रमाणं वेदीष्टकाप्रमाणम् तद्यथाग्नि भवति, अग्निमानमनतिक्रम्य यथाग्नि, यथाग्निक्षेत्रस्य प्रमाणं वर्द्धते तथा वेदिप्रमाणं वर्धते इष्टकाप्रमाणं च वर्द्धते, न हि वेदिवृद्धिं विना तन्मध्ये वर्धितस्याग्नेर्मानं सम्भवति, नापि इष्टका न वर्धिता वर्धितमग्निक्षेत्रं पूरयितुं शक्नुवन्ति, अतो युक्तमुभयोर्वृद्धिः"क० । "अन्तःपात्यगार्हपत्ययोरिच्छन्" २७सू०। "पूर्वार्धाद्यामस्य त्रीन् प्राचः स वेद्यन्तः प्रक्रमः प्रक्रमति" (१०,२,२,१) यः प्रक्रमत्रयपरिमितो देशः सोऽन्तःपात्य उच्यते, तस्यान्तःपात्यस्य गार्हपत्यस्य गार्हपत्यचितेश्च इच्छन् इच्छया वृद्धिं कुर्य्यात् इच्छया न कुर्य्यात् तत्रैकउत्तरा" श्रुतेः (१०,२,२,६ ) क०। "उत्तरपक्षस्यापरस्यां स्रक्त्यां परिश्रितो मिनोति जङ्घामात्रीं नाभिमात्रीं मुखमात्रीमिति" २८सू० । "अग्नेरुत्तरपक्षस्यापरस्यां पश्चिमकोणे एवम्प्रमाणास्तिस्रः परिश्रितो मिनोति" क० । व्याप्तश्च स चतुरङ्गैः शतपथब्राह्मणाध्यायादि बोध्यम् । त्रिभिः कात्यायनश्रौतसूत्राध्यायादि द्वाभ्यां शुक्लयजुर्वेदाध्यायादि तेन तत्तत्स्थाने कात्यायनश्रौतसूत्रमन्त्रमूलवाक्यादिकं द्रष्टव्यमिति सङ्केतज्ञापनम् । विस्तरस्तु शतपथब्राह्मणे लिखिताद्य सूचिताध्यायादौ द्रष्टव्यः।

इष्टकापथ न० इष्टकायामपि पन्था यस्य अच् समा० इष्टकापथं यस्याधोसुखवायुकरणात् । १वीरणमूले । इष्टकया निर्मितः पन्था अच् समा० । इष्टकानिर्मिते २पथि पु० ।

इष्टकाय लि० इष्टका अस्त्यर्थे व । इष्टकायुक्ते ।

इष्टकावत् लि० इष्टका+चतुरर्थ्यां मध्वादि० मतुप् मस्य वः । इष्टकाचितइष्टदेशादौ स्त्रियां ङीप् ।

इष्टगन्ध पु० कर्मधा० । १सुगन्धौ । इष्टोगन्धोऽस्य । २सुगन्धिद्रव्ये लि० ३वालुकायां न० मेदि० ।

इष्टतम लि०अतिशयेन इष्ट+तमप् । १प्रियतमे २अतिशयाभीष्टे "बहुधादिष्टतमं लोके"गोता । द्वयोर्मध्ये अतिशयेन इष्टः तरप् । इष्टतरः द्वयोर्मध्ये अतिशयेन इष्टे लि० ।

इष्टदेव पु० इज्यते यज-कर्मणि क्त कर्मधा० । १पूज्ये देवे तन्त्राद्युक्तविधानेन यस्य मन्त्र उपास्यतया स्वीकृतस्तस्मिन् २देवे च । इष्टदेवतादयोऽप्यत्र स्त्री ।

इष्टनि लि० यज-तनिक् संप्र० इष-तनिक् वा । १यष्टव्ये २एष्टव्ये च । "तुविब्रह्मस्य इतोषूर्वाशिष्टनिरार्त्तनाशिष्टनिः" ऋ० 1,१२७,६ । "इष्टनिरेष्टव्योयष्टव्यो वा"भा० । [व्याकरणोक्तसंस्कारानुसारेण प्रयोगे ।

इष्टप्रयोग पु० इष्टस्य शिष्टप्रयुक्ततया निश्चितस्य प्रयोगः ।

इष्टवत् न०यज-इष वा क्तवतु स्त्रियां ङीप् । १यजनकर्त्तरि २इच्छायुक्ते च । "इष्टं वेदाध्ययनादिः साध्यतयाऽस्त्यस्य मतुप् मस्य वः । ३इष्टकर्म्म कर्त्तरि । वेदे तु पूर्व्वपददीर्घः इष्टावान् "इष्टावन्तोरातिषाचोदधानाः" ऋ० १८,१,

२० । "इष्टिभिः पशुबन्धैश्च चातुर्मास्यैस्तथैव च । अग्निष्टोमादिभिर्यज्ञैर्येन चेष्टं च इष्टवान्" व्यासोक्ते ४इष्ट्यादिकारिणि त्रि०। स्त्रियां ङीप् ।

**इष्टव्रत** त्रि० इष्टं व्रतं यस्य । १व्रतयोग्ये इष्टानि कल्याणानि व्रतानि कर्माणि सिध्यन्ति येन। २इष्टकर्मसाधने अन्नादौ "इष इष्टव्रता अकः" ऋ० २,५,८,६ । "इष्टानि कल्याणानि व्रतानि कर्माणि याभिः सिध्यन्ति ता इषः अन्नानि" भा० ।

**इष्टसाधन** न० ६त० । अभीष्टसाधने इच्छाशब्दे उदाहृतिः । ततो भावे त्व । इष्टसाधनत्व तद्भावे न० । तल् । इष्टसाधनता तद्भावे स्त्री ।

**इष्टा** स्त्री इज्यतेऽनया यज–करणे वा० क्त । शमीवृक्षे राजनि० तत्समिधा होज्यते इति तस्याः तथात्वम् कर्मणि क्त । अभिमतायां स्त्रियाम् ।

**इष्टाकृत** त्रि० अनिष्टमिष्टं कृतम् इष्ट+च्व्यर्थे डाच् कर्मणि क्त । इष्टीकृते "शतामिष्टाकृतं नाम पूर्वावरणहृषिकम्" रामा० ।

**इष्टादि** पु० "इष्टादिभ्यश्च" पा० सूत्रेण तत्सगमनेनेत्यर्थे विहितेनिप्रत्ययनिमित्तभूतशब्दसमूहे स च गणः । "इष्ट पूर्त्त उपसादित निगदित परिगदित परिवादित निकथित निषादित निपठित संकलित परिकलित संरक्षित परिरक्षित अर्चित गणित अवकीर्ण आयुक्त गृहीत आम्नात श्रुत अधीत अवधान आसेवित अवधारित अवकल्पित निराकृत उपकृत उपाकृत अनुयुक्त अनुगणित अनुपठित आकुलित" आकृतिगणत्वेन "कृतेन पठितो नाम्निन् गतः सेवत" गैण० ।

**इष्टापत्ति** स्त्री ६त० कर्मधा० वा । १इष्टस्यापत्तौ इष्टाया आपत्तौ च वादिना दर्शितापत्तेः प्रतिवादिन इष्टत्वे हि सा भवति । "इष्टापत्तौ दोषान्तरमाह" जग० ।

**इष्टापूर्त्त** न० इष्टं च पूर्त्तं च तयोः समाहारः पूर्वपददीर्घः । इष्टशब्दोक्ते अग्निहोत्रादौ "वापीकूपतडागादिदेवतायतनानि च । अन्नप्रदानमारामः पूर्त्तमित्यभिधीयते" इति मनूक्ते पूर्त्ते च । "वितथन्तु वदेयुर्ये धर्मं प्रह्राद पृच्छते । इष्टापूर्त्तं च ते घ्नन्ति सप्त सप्तपरावरान्" भा० स० ६६अ० । "इष्टापूर्त्तेन च तथा वक्तव्यमनृतं न तु" भा०प० १८५अ० । "इष्टापूर्त्तफलं न स्यान्न शिष्यो न गुरुर्भवेत्" भा०व० २२अ० । क्वचित् इतरेतरद्वन्द्वोऽपि द्वि०व० । "इष्टापूर्त्ते संसृजेथामयञ्च" यजु० १०,५४ ।

**इष्टार्थोद्युक्त** त्रि० इष्टे अर्थे उद्युक्तः । उत्सुके इष्टार्थलाभाय त्वरमाणे काकायमहिष्णौ ।

**इष्टाश्व** त्रि० इष्टोऽश्वोयस्य । १प्रियहये २राजभेदे पु० । "किमिष्टाश्व इष्टरश्मिरेतैः" ऋ० १,१२२,१३ । "इष्टाश्व एतन्नामको राजा" भा० ।

**इष्टि** स्त्री यज–क्तिन् । १यागभेदे । स च कात्या०श्रौ०सू० दर्शितः "कर्मयज्ञो द्रव्यदेवतायुक्तो यजतिः" । ३,१,१,सू० "क्रियाशब्दः आख्यातप्रत्ययान्तो निर्वपत्यादिशब्दो यजतिः प्रत्येतव्यः यागो ज्ञेय इत्यर्थः न निर्वापावभ्रथादिरूपसंस्कारमात्रविधायकः यजतिशब्दोऽत्र तदर्थयागपरः । एवं यागत्वे सिद्धेऽपि इदं संदिह्यते सौर्यं चरुं निर्वपेदग्निषोमीयमजमालभेतेत्यादौ किं यागमात्रं भवति उत धर्मा अपि भवन्तीति यदा च धर्मा भवन्तीति पक्षस्तदापि संदेहः किं पूर्वाकृतिसम्बन्धिनो धर्मा भवन्ति उताग्निहोत्रसम्बन्धिनः, आहोस्विद्दर्शपूर्णमासयोः, अथवा ज्योतिष्टोमस्येति, अथवा दर्शपूर्णमासयोरेवेति, । धर्माणामनाम्नानाद्यथाश्रुतं यागमात्रं कर्तव्यमिति प्राप्ते आह" क० "दर्शपूर्णमासधर्मा इष्टिपशुषु सामर्थ्यात्" २सू० । सौर्यादौ धर्मा भवन्ति न यागमात्रम् एवमेतानि विधिवाक्यानि समर्थान्यर्थवन्ति सप्रयोजनानि भवन्ति अन्यथा साकाङ्क्षत्वादर्थप्रतिपादनाभावेन निरर्थकान्येव स्युः । तथा हि सौर्येण यागेन ब्रह्मवर्चसं भावयेदित्यत्रांशत्रयवती भावना विधीयते किम्, केन, कथमिति, किमंशो ब्रह्मवर्चसम्, तत्र केनांशः सौर्येणेति, कथमंशस्तु वाक्यमध्ये नास्ति तेन कथं भावयेदिति वाक्यं कथमंशसापेक्षम् । यत्र सापेक्षं भवति तदध्याहारेणानुषङ्गेण वा पूरयित्वा निराकाङ्क्षं कर्तव्यम् । अन्यथा तस्यानर्थक्यापत्तेः न च वेदे मात्रामात्रस्य तदिष्यते तस्मादत्र निराकाङ्क्षीकरणाय विध्यन्तेतिकर्तव्यतापरपर्यायः कथमंशोऽत्र कश्चिदनुषञ्जनीय इति सिद्धे आह "दर्शपूर्णमासधर्मा इष्टिपशुषु सामर्थ्यादिति" सर्वासु इष्टिषु अग्नीषोमीये पशौ च दर्शपूर्णमासयोरेव धर्मा भवन्ति सामर्थ्यात् पूर्वोक्त एव हेतुरत्रापि योज्यः । दर्शपूर्णमासधर्मा एव सौर्यादिविधीनां शेषीभवितुं समर्थाः यस्मात् पुरोडाशादयो ह्यवघातादिभिरेव सिध्यन्ति नाभिघातादिभिरिति । इष्टिपशुष्विति इष्टिषु सर्वासु अग्नीषोमीये पशौ च पश्वन्तरेषु ह्यग्नीषोमीयधर्मा भवन्ति" क० । इत्यारभ्य पञ्चविंशत्या सूत्रैरादिमेण उक्तस्तत्र विस्तरेणावसेयः । तथा च दर्शपौर्णमासेतिकर्तव्यताको यागभेद इष्टिरग-

न्यथा । तत्करणप्रकारः आश्व० श्रौ० सूत्रे दर्शितो "यथा पौर्णमासेनेष्टिसोमा उपदिष्टाः" । २,१,१, प्रथमेऽध्याये दर्शपूर्णमासौ व्याख्यातौ विध्यन्तररहितौ । उत्तरत्रेष्टयः पशवश्च वक्ष्यन्ते विध्यन्तरविहिताः । तेषां विध्यन्तरापेक्षास्ति" "अतोऽयमर्थः सूत्रस्य, यस्मिन्शास्त्रे उपदिष्टा इष्टयः पशवश्चापि अविशेषिताज्यभागास्ते सर्वे वार्त्रघ्नाज्यभागा इति"। "पौर्णमासेनेत्यस्यायमर्थः, पौर्णमासेन व्याख्याता इति वार्त्रघ्नाज्यभागा इत्यर्थः । तेन समाम्नातानामिष्टीनां पशूनाञ्च अन्यदेवतागमसमासः सिद्धो भवति । तथा चोक्तमिष्ट्ययनप्रकरणे "असमाम्नातास्वर्थात् तन्त्रविकारः" नारा० वृत्तिः तत्र कालस्तत्रैव दर्शितः यथा "तैरमावास्यायां पौर्णमास्यां वा यजेत" सू० २,१,२, "तैरिष्टिपशुसोमैरमावास्यायां पौर्णमास्यां वा यागः कर्तव्य इति इष्टिपशूनां प्रकृतिप्राप्त एवायं कालः पुनर्विधीयते यदृच्छाकालतां निवर्त्य पद्यकालताप्राप्त्यर्थम् । किञ्च दर्शप्रकृतेरमावास्या पौर्णमासप्रकृतेः पौर्णमासीत्येवं नियमं निवर्त्य अनियमेन उभयकालताप्राप्त्यर्थम् । प्रकृत्यविरोधात् पर्वप्रत्याहरत्यहोरात्रे विकृतिः कर्तव्या । यदाह्नः पूर्वभागे पर्व स्यात् तदा प्रकृतिं कृत्वा विकृतिः कार्या । यदा परभागे रात्रौ वा तदा विकृतिं कृत्वा प्रकृतिः कार्येति सोमस्यायनप्राप्तः कालो विधीयते । इष्ट्यादिवत्सम्बन्धादेव यजेतेत्यपि सिद्धे यजेतेतिवचनं सोमस्य याग एतयोः कालयोः सम्पादनीयो नान्यत् दीक्षादीति" वृत्तिः । "राजन्यस्याग्निहोत्रं जुहुयात्" ४सू०। "क्षत्रियस्याग्निहोत्रहोमः पर्वणोरेव कर्तव्यो नान्यस्मिन् काल इति यद्वाह वैश्योऽप्यनयोरेव कालयोरग्निहोत्रं जुहुयात् नान्यस्मिन्निति गम्यते । अत्र विशेषमाह" वृत्तिः। "तपस्विने ब्राह्मणायेतरं कालं भक्तमुपहरेत्" ४सू०। "तपस्वी कर्मनिरतस्तस्मै ब्राह्मणाय अतपस्विनेऽपि ब्राह्मणायैव दद्यात् न जात्यन्तराय तपस्विनेऽपीति । इतरं कालमिति, इतरेषु सर्वेष्वग्निहोत्रकालेष्वित्यर्थः । भक्तमुपहरेत्, भक्तं पक्वौदनं पक्वान्नमुपहरेत्, दद्यात् । एतदुक्तं भवति । राजन्यवैश्ययोः पर्वस्वग्निहोत्रकालद्वयं वर्जयित्वा इतरेषु कालेषु ब्राह्मणायौदनो दातव्यो न होमः कर्तव्य इति । अग्निधारणन्तु क्रियत एव" वृत्तिः । ततोऽग्न्याधानं प्रसङ्गादुक्तं तत्राधानमन्तरे पूर्वं दर्शितम् अग्न्याधानोत्तरं कर्त्तव्यमाह "यदि त्विष्ट- क्रतुयुः" २,१,१८, सू० "अग्नीनेवेति वाक्यशेषः । यद्यनधिकारत्वादाधानविधेर्विनियोजकस्य प्रकरणस्य व्यापाराभावादाधानाङ्गमिष्टयो न स्युः, इष्टीनामनधिकारत्वादिष्ट्यङ्गमाधानं न स्यात्, तथापि न कश्चिद्दोषः, अन्यथा- त्वेनैवोभयोरप्यनुष्ठानसिद्धेः" । "अस्मिन्नर्थे सूत्रयोजना । यद्याधानमिष्टीनामाधानाङ्गता स्यात् तथापि आहवनीयाद्यग्निसम्बन्धात् तानेवाग्नीनिष्टयः क्रतुयुः विस्तारयेयुः कुर्युः साधयेयुरित्यर्थः । तद्वत्तु साधनादिषु विशेषं दर्शयति । आधानेऽग्नीनां साध्यत्वेन सम्बन्धानामेव साध्यत्वम् । इष्टिषु साधनत्वेन सम्बन्धानामपि कल्पनागौरवभयात् साध्यत्वमिति विशेषं न्यहणीमः एवं यद्याधानेनेष्टिभिश्चाग्नय एवांशतः साध्या इत्यनधिकाराणां कथमनुष्ठानसिद्धिरिति न्यायविदामेव उपालम्भो नास्माकम् । अस्माकं तु साध्यसाधनसम्बन्धेऽवगते तदर्थिनां कर्त्तृत्वेनावगतानां ब्राह्मणादीनां कथञ्चिदधिकारकल्पनयानुष्ठानसिद्धिः । अथवाऽनधिकाराणामप्यन्यशेषाणामपि तत्साधनसाध्यरूपेणोपकारकत्वेन कार्य्यं श्रुतिप्रयुक्तत्वं विधानामनुष्ठानसिद्धिरित्यलमतिविस्तरेण" नारा०वृत्तिः। "प्रथमायामग्निरग्निः पवमानः" १९ सू०। "प्रथमायामिष्टौ द्वे देवते । अग्निः प्रथमः केवलः । द्वितीयः पवमानगुणकोऽग्निः । केवलस्याग्नेर्नित्ये एव । "अग्न आयूंषि पवसेऽग्ने पवस्व स्वपाः" २०सू०। "एते द्वितीयस्य पवमानगुणकस्य" वृ०। "स हव्यवाडमर्त्योऽग्निर्होता पुरोहित इति स्विष्टकृतः संयाज्ये इत्युक्ते सौविष्टकृती प्रतीयात्" २१सू०। "सौविष्टकृत्योर्याज्यानुवाक्ययोः पर्यायेण संयाज्ये इति संज्ञा विधीयते" वृ०। "सर्वत्र देवतागमे नित्यानामपायः" २२ सू०। "सर्वत्रेति प्रकरणान्तरेऽपीति दर्शयति । देवतागम इत्यत्र समासनिर्देशस्य तुल्यत्वाद्देवताया देवतयोर्देवतानां वा आगम इत्येवं भवति । नित्यानां प्राकृतीनामित्यर्थः । अपाय उद्धार इत्यर्थः । एतदुक्तं भवति । विकृतौ देवताया एकस्या आगमे द्वयोर्बह्वीनां वा अनागमेऽपि प्राकृतीनां सर्वासामुद्धार इति । यां पुनर्विकृतौ इष्टिचोदनां कृत्वा देवतां न विदधाति, तत्र नोद्धारः प्राकृतीनाम् । तत्र ता एव देवता भवन्तीत्यर्थः । यथा गदितः सोमेन यक्ष्ये पशुना इष्ट्या वा इत्यादौ" वृ०। "याः स्विष्टकृतमन्तराज्यभागौ च तास्तत्स्थाने" २३सू०। "नित्यानामपाय उक्तः । तत्र किं सर्वा नित्या उद्धर्तव्याः उत काश्चिद्देवतास्तेनैतं संशयं निवर्तयति या आज्यभागौ स्विष्टकृतं चान्तरा देवता यष्टव्यास्ता उद्धर्तव्याः । याः पुनर्विकृतौ विहितास्तास्तत्स्थाने उ-

कृतानां प्राकृतीनां स्थाने भवन्ति" इति वचनात्, तद्धर्मिकाश्च भवन्तीति गम्यते" इ०। "एष समानजातिधर्मः" २४सू०। "योऽयमतिदिष्टो विधिर्देवताभ्योऽन्यत्रापि स समानजातीयेषु भवति। समानजातीय एककार्य इत्यर्थः" इ०। "द्वितीयस्यां इध्यन्तौ अग्निः पावकोऽग्निः शुचिः स नः पावकदीदिवोऽग्ने पावकरोचिषाग्निः शुचिव्रततम उदग्ने शुचयस्तव" २५ सू०। "एकः पावकगुणकोऽग्निः, अपरः शुचिगुणकः। "साक्षात् विश्वा अभियुजोऽग्निमीळे पुरोहितमिति संयाज्ये तृतीयस्यां सामिधेन्यावावपते प्रागुत्तमायाः पृथुपाजा अमर्त्यइति द्वे" २६ सू०। "आवपते इति वचनात् अधिके एते सामिधेन्यौ भवतः। प्रथमायां द्वितीयस्यां तृतीयस्यामिति वचनात् यस्यामिष्टौ यत् तन्त्रं विहितं तस्यामेकदेवतायामपि तत् तन्त्रं भवति न यथोक्तनानादेवतायामेवेति" इ०। "धाय्ये इत्युक्त एते प्रतीयात् पुष्टिमन्तावग्निना रयिमश्नवद्यस्मानो अमीवहेति। अग्नीषोमाविन्द्राग्नी विष्णुरिति वैकल्पिकानि" २७सू०। "तयायामेको गृह्यते" इ०। "अदितिः" २८सू०। "अदितिश्चान्या, अस्यां द्वे देवते" इ०। "उत त्वामदिते सुव्रतानामृतस्य पत्नीमवसे हुवेम तुविक्षत्रामजरन्तीमुरूचीं महि महीमू षु मातरं सुव्रतानामृतस्य पत्नीमवसे हुवेम" सुशर्माणमदितिं सुप्रणीतिम्" २९ सू०। "एषा कल्पजा" इ०। "प्रेद्धो अग्न इमो अग्न इति संयाज्ये विराजाविष्टुप्‌ता एते प्रतीयादिति तिस्रः" ३० सू०। "इत्येतास्तिस्र इष्टयोऽनुक्रान्ता इत्यर्थः। उक्तानुकीर्त्तनमुत्तरार्थम्। यदाद्योत्तमे वैव स्यातामाद्या वेति पक्षस्तदापि तिसृणामिष्टीनां यावत्यो देवतास्ताः सर्वा यष्टव्या इत्येवमर्थम्। आद्योत्तमपक्षे मध्यमायां ये देवते ते आद्यायामेव प्रक्षेप्तव्ये। यदा पुनराद्यैव तदा सर्वा देवता आद्यायामेव प्रक्षेप्तव्या इत्येवमर्थम्" इ०। "आद्योत्तमे वैव स्याताम्" ३१ सू०। "इष्टी इति शेषः। "आद्या वा" ३२ सू०। "आद्यैवेष्टिर्भवतीत्यर्थः" इ०। "तथा सति तस्यामेव धाय्ये विराजौ" ३३ सू०। "यद्याद्यैव भवति तदा द्वितीयतृतीययोरपि देवतास्तत्र भवन्तीत्युक्तम्। अतस्तस्यामेव धाय्ये विराजौ भवतः। धाय्याविराजामनुप्रवेशस्य निमित्तं तृतीयस्या इष्टेर्देवतानुप्रवेश इत्येवमर्थं तथा सतीत्युक्तम्" इ०। "इतिमात्रे विकारे वैराजतन्त्रेति प्रतीयात्" ३४सू०। "पौर्णमासतन्त्रायामिष्टौ धाय्याविराण्मात्रे विकारे सति सेष्टिर्वैराजतन्त्रेति वेदितव्या" इ०।

"आधानाद्ध द्वादशरात्रमजस्राः" ३५सू०। "अत्राधानमिष्टीसोक्ता आधानादूर्द्ध्वं द्वादशरात्रमजस्रा इत्युक्तम्। तस्यायमभिप्रायः, यावता कर्मसमुदायेनाग्नीनां सिद्धिर्भवति तावतः कर्मसमुदायस्याधानशब्दो वाचक इति ज्ञापयितुम्। तेनाग्न्याधेयं पुनराधेयं चेत्यत्र सेष्टिकस्याधानस्य ग्रहणं भवतीति सिद्धम्। आधानेनेष्टिभिश्च सिद्धाग्नयो द्वादशाहोरात्राणि सर्वे स्वरूपेणैव धार्यन्ते। एतदजस्रधारणमग्निहोत्रपूर्वं एवाधाने भवति, अग्निहोत्रस्यैवानन्तरमुच्यमानत्वात्। अनुष्ठानक्रमेणैव कर्मणां व्याख्यानमित्युक्तत्वाच्च" वृत्तिः। एवमिष्टिसामान्यं प्रदर्श्य विशेषेष्टयस्तत्र दर्शिताः तत्रादौ नवयज्ञेष्टिः साचाग्रायणशब्दे दर्शिता तत्र राज्ञ एवाधिकारः त्रयाणां वर्णानामविशेषेणेतिकल्पद्वये प्राप्ते राज्ञो विशेष उच्यते "इष्टिस्तु राज्ञः" "सर्वेषां चैके एके सर्वेषामिष्टिरेवेति मन्यन्ते" २,८,६,७,। "श्यामाकैश्चाग्रायणेष्टिः स च वर्षासौ तत्र याज्यादिकं २,९,८,९,१०, सू०उक्तम्। अन्यनवान्नभोजने जपमन्त्रादिकमुक्तम् १२,१३। एतानित्या इष्टयः अथ काम्याः इष्टयः २,१०,१२, इत्यादौ। तत्र आयुष्कामेष्टिस्तत्र अग्निगुणभेदजीवातुमद्देवता २,१०,२,३,४, सू०। स्वस्त्ययनेष्टिः रक्षितवद्देवताका तत्र याज्यादिकम् ५,६,७, पुत्रकामेष्टिः पुत्रवद्गुणकाग्निदेवताका तत्र याज्यादि ८,९,१०, वैमृधेष्टिः विमृद्गुणकेन्द्रदेवताका तत्र याज्यादिकं १३,१४,१५, सू०। आग्नेष्टिरावापाकदेवताका तत्र याज्यादिकम् १७,१८, सू०। लोकेष्टिः पृथिव्यन्तरिक्षदेवताका तत्र याज्यादिकम् २०,२१,२२, सू० मित्रप्राप्तिकामेष्टिः अग्निसोमवरुणमित्रेन्द्रबृहस्पतिसवितृपूषन्सरस्वतीदेवताका तत्र याज्यादि ११,२,३,४,२। इयमिष्टिः महावैराजीनाम्ना। अभिचारकामेष्टिः कुपामसुरीयनाम्नी शूरगुणकेन्द्रदेवताका तत्र याज्यादि ११,७,८,९। विमतसम्पातिकामेष्टिः संज्ञानी नाम वसुरुद्रादिगुणकाग्निसोमादिचतुष्टयदेवताका तत्र याज्यादि १०,११। भेदकामेष्टिः। इन्द्रामरुद्देवताका तत्र याज्यादि १३,१४,१५,१६,सू०। सम्पत्तिकामेष्टिः ऐन्द्रामारुती संज्ञानीवत् याज्यादिकम्। १७,सू०। मत्रभिभवनिवृत्तिकामेष्टिः ऐन्द्रावार्हस्पत्या तत्र याज्यादि १८१९ सू०। पवित्रेष्टिः। अग्न्यादिदेवताका तत्र याज्यादि २,१२,१। "वैश्वानरीं व्रातपतीं पवित्रेष्टिं तथैव च। ऋतावृतौ प्रयुञ्जानः पुनाति दशपौरुषम्"। वृष्टिकामेष्टिः कारीरी नाम सा च अग्न्यादि-

नानादेवताका अग्निदेवताका वा तत्र याज्यादि २,१२,१,२,४,५,६,७,८,९,सू० । सर्वाश्च एता दर्शपौर्णमासेतिकर्तव्यताका: । पञ्चगुणके कर्म्मणि पशोरुभयतोऽन्यतरतो वा पशुकामेष्टिः सा च आग्नेयी आग्नावैष्णवी वा आश्व० श्रौ०सू० २,१,२,३,४ सू०। तस्यामितिकर्त्तव्यतायाज्यादि तदुत्तरसूत्रजातैरुक्तम्। विध्यपराधप्रायश्चित्तीष्टि: २,१०,१,सू० विध्यपराधस्वरूपकारणप्रदर्शनपूर्वकं तत्करणप्रकारादि तदुत्तरसूत्रजातैर्दर्शितम् । पारणीष्टिः तत्प्रकारादि २,१२,५, प्रातःकालातिपत्तौ प्रातरिष्टि: तत्र देवतादि २,१२,१२, आस्त्वग्निपाले च संवेष्टि: २,१२,१५ निमित्तभेदेष्वे प्रायश्चित्तेष्टौ देवताभेदादि २,१२,१६, आरभ्य आध्यायात् सूत्रैरुक्तम् । उपासदूक्षरणीवेष्टिः तद्देवतादि ४,१,२१ २६सू०। दीक्षाप्रयोजनेष्टिः दीक्षणीया नाम तत्रदेवतादि ४,२,१,१८, सू०पर्य्यन्तेनोक्तम् । प्रायणीयेष्टिः तत्र देवतादि ४,३,१सूत्रादौ। आतिथ्येष्टिः तत्र देवतादि ४,५,१सूत्रादौ । उदयनीयेष्टिः तद्देवतादि ६,१४,१, सूत्रादौ उदवसनीयेष्टि: तद्देवतादि ६,१४,१,२२, सूत्रादौ । अन्याः पुनराधेयेष्टिप्रभृतयोऽपि इष्टयः विस्तरभयान्नोक्ताः आकरेषु दृश्याः ।

शत०ब्रा० १,६,२,१२, इष्टिकरणप्रकारविशेषो दर्शितःयथा। "स यदीष्टिं कुर्व्वीत सप्तदश सामिधेनीरनुब्रूयादुपांशु देवता यजति तद्धीष्टिरूपं, मूर्द्धन्वतौ याज्यानुवाक्ये स्यातां वार्तघ्नावाज्यभागौ, विराजौ संयाज्ये" "अग्नेरिष्टिमभिधाय अथ पृथक् प्रयोक्तव्याया आग्नेयेष्टेर्वैशेषिकमङ्गजातमाह । यदीष्टिं दर्शपूर्णमासाभ्यां पृथगेव कुर्व्वीत प्रधानदेवता उपांशु यजेत तदुपांशुत्वं काम्येष्टिरूपं स्यात् । मूर्द्धन्वत्यौ "अग्निर्मूर्द्धा" "भुवो यज्ञस्य" इत्येते। (यजु०१२,१४.१५,) मूर्द्धन् शब्दवत्यौ प्रधानस्य याज्ये स्विष्टकृद्याज्यापुरोऽनुवाक्ये, विराजौ विराट्छन्दस्के "प्रेद्धो अग्ने" "इमो अग्ने" इत्येते (यजु०१७,७६,७७, ) भवतः" भा०

दर्शपौर्णमासयागं कृत्वा प्रायश्चित्तेष्टिः कार्य्या तत्प्रकारः शत०ब्रा० ११,१,२,१,दर्शितो यथा। "पौर्णमासेनेष्ट्वा इन्द्राय विमृधेऽनुनिर्वपति तेन यथेष्ट्यैवं यजतेऽमावास्येनेष्ट्वादित्यै चरुमनुनिर्वपति तेन यथेष्ट्यैवं यजते १ । स यत्पौर्णमासेनेष्ट्वा इन्द्राय विमृधेऽनुनिर्वपतीन्द्रो वै यज्ञस्य देवतायैतदग्नीषोमीयं पौर्णमासं हविर्भवति तत्र नेन्द्राय स्येति किं चन क्रियते एतेनो हास्यैतत् सैन्द्रं हविर्भवत्येतेन सैन्द्रो यज्ञोऽथ यदिन्द्राय विमृधेऽनुनिर्वपति सर्वा उ हि मृधो नाष्ट्राः पौर्णमासेन हन्ति २ । अथ यदामावास्येनेष्ट्वा अदित्यै चरुमनुनिर्वपत्येष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः स यत्रैष एतां रात्रिं न पुरस्तान्न पश्चाद्ददृशे तेनैतदनद्धेव हविर्भवति तेनाप्रतिष्ठितमियं वै पृथिव्यदितिः सेयमद्धा सेयं प्रतिष्ठितैतेन हास्यैतदद्धेव हविर्भवत्येतेन नाप्रतिष्ठितमेतत्तु तस्मादनुनिर्वपत्यथ तस्मादनुनिर्वपेत् ४ । स यत्पौर्णमासेनेष्ट्वा इन्द्राय विमृधेऽनुनिर्वपति सैन्द्रो मे यज्ञोऽसदिति सर्वो वै यज्ञ इन्द्रस्यैव स यत्सर्वो यज्ञ इन्द्रस्यैवैतेनो हास्यैतत् सैन्द्रं हविर्भवत्येतेन सैन्द्रो यज्ञः ४। अथ यदामावास्येनेष्ट्वा अदित्यै चरुमनुनिर्वपत्यामावास्यं वा अनुनिर्वाप्यं पौर्णमासेन वा इन्द्रो वृत्रमहंस्तस्मा एतद्वृत्रं जघ्नुषे देवा एतद्धविरनुनिरवपन् यदामावास्यं किमनुनिर्वाप्येऽनुनिर्वपेदिति तस्मात्तानुनिर्वपेत् ५ । स यत् पौर्णमासेनेष्ट्वा अथान्यद्धविरनुनिर्वपत्यामावास्येनेष्ट्वाथान्यद्धविरनुनिर्वपति द्विषन्तं ह स भ्रातृव्यं प्रत्युत्क्रयतेऽथ यः पौर्णमासेनैव पौर्णमासीं यजतेऽमावास्येनामावास्यामसपत्ना हैवास्यानुपबाधा श्रीर्भवति ६ । पौर्णमासेन वै देवाः पौर्णमासीं यजमाना आमावास्येनामावास्यां क्षिप्रएव पाप्मानमपाघ्नत क्षिप्रे प्राजायन्त स यो हैवं विद्वान् पौर्णमासेनैव पौर्णमासीं यजतेऽमावास्येनामावास्यां क्षिप्रएव पाप्मानमपहते क्षिप्रे प्रजायते स यद्यनुनिर्वपेद्याद्दक्षिणां नादक्षिणं हविः स्यादिति ह्याहुर्दर्शपूर्णमासयोर्ह्येवैषा दक्षिणा यदन्वाहार्य इति त्वनुनिर्वाप्यस्याथाभ्युदितस्य७" २कण्डिका।"अद्यामावास्येति मन्यमान उपवसति। अथैष पश्चाद्ददृशे स हैष दिव्यः श्वा, स यजमानस्य पशूनभ्यवेक्षते तदपशव्यं स्यादप्रायश्चित्तिकृत एतस्माद् हैतद्भीषावचन्द्रमसादिति"१ । छायानुपसर्पन्ति। एतेनो हैतदुपतपदाप्यते नयचितमित्येतस्य हैवैतदाप्यते २ । यथचान्द्रमस इति । चन्द्रमा वै सोमो देवानामन्नं तं पौर्णमास्यामभिषुण्वन्ति सोऽपरपक्षेऽप ओषधीः प्रविशति पशवो वा अप ओषधीरदन्ति तदेनमेतां रात्रिं पशुभ्यः संनयति ३ । सोऽद्यामावास्येति मन्यमान उपवसति । अथैष पश्चाद्ददृशे तद्यजमानो यज्ञपथादेति तदाहुः कथं कुर्य्यादित्या यज्ञपथाद्यजेता२ न यजेता२ इति यजेत हैव न ह्यन्यदपक्रमणं भवति श्वः-श्वः एवैष ज्यायानुदेति स आमावास्यविधेनैवेष्ट्वायेष्टिमनुनिर्वपति तदङ्गैव श्वो वा ४ । तस्य त्रीणि हवींषि भवन्ति । अग्नये पथिकृतेऽष्टाकपालं पुरोडाशम्, इन्द्राय वृत्रघ्न एकादशकपा-

तम्, अग्नये वैश्वानराय द्वादशकपालं पुरोडाशम् ५। स यद-ग्नये पथिकृते निर्वपति। अग्निर्वै पथः कर्त्ता स यस्मादेवादो यजमानो यज्ञपथादेति तमेनमग्निः पन्थानमापादयति ६। अथ यदिन्द्राय वृत्रघ्ने। पाप्मा वै वृत्रो यो भूतेर्वारयित्वा तिष्ठति कल्याणकर्मणः साधोस्तमेतदिन्द्रेणैव वृत्रघ्ना पा-प्मानं वृत्रं हन्ति तस्मादिन्द्राय वृत्रघ्ने ७। अथ यदग्नये वैश्वानराय द्वादशकपालं पुरोडाशं निर्वपति यत्र वा इन्द्रो वृत्रमहंस्तमग्निना वैश्वानरेण समदहत्तदस्य सर्वं पाप्मानं समदहत्तथोएवैष एतदिन्द्रेणैव वृत्रघ्ना पाप्मानं वृत्रं हत्वा तमग्निना वैश्वानरेण संदहति तदस्य सर्वं पाप्मानं संदहति स यो हैवं विद्वानेतयेष्ट्या यजते न हास्यात्मन पाप्मा परिशिष्यते ८। तस्यै सप्तदश सामिधे-न्यो भवन्ति। उपांशु देवता यजति याः कामयते ता या-ज्यानुवाक्याः करोत्यथमाज्यभागावेव संयाज्ये ९। तिसृ-धन्वं दक्षिणां ददाति। धन्वना वै श्वानं बाधन्ते तदेत-मेवैतद्बाधते यत्तिसृधन्वं दक्षिणां ददाति १०। दण्डं द-क्षिणां ददाति। दण्डेन वै श्वानं बाधन्ते तदेतमेवैतद्बाधते यद्दण्डं दक्षिणां ददात्येषा ऽनादिष्टा दक्षिणा दद्यात्त्वेवा-न्याममन्यद्धात्ततरा दक्षिणास्तासां यत् सम्पद्येत सा सा हैषा यथाकेष्टिरसंयथाभ्युदितो यजेतैव" श० ब्रा०। "दर्शयागे पुरस्ताच्चन्द्रदर्शनप्रायश्चित्तेष्टिरुक्ता अथ पश्चा-त्तद्दर्शने नैमित्तिकीमिष्टिं विधित्सुराह। अथान्तरं सायंकाले एव चन्द्रमाः पश्चात् प्रतीच्यां दिशि दृश्ये दृश्यते। अभ्यवेक्षते अभ्यवहर्त्तुं पश्यति यथा व्याघ्रको वने संचरतो मेषादीन् पशूनभ्यवजिहीर्षति। एतस्मादेव खलु चन्द्रसम्बन्धिवत्सरूपेण पूर्वोक्तवत् पकारः समा-धानः तस्माच्चन्द्रादिति भीषा उक्तरूपया भीत्या, वाया-सुपगच्छन्ति गवाद्याः पशवः तिरोहिता यजमानस्य भव-न्तीत्यर्थः पशूनामुपतापकारि यदेतच्चन्द्रदर्शनं तत् खलु-चितं हुत्वा रिक्तीकृतमित्याचक्षते २। एतमेव चन्द्रगतं दोष-मेवमाचक्षते, चन्द्रमसः सम्बन्धी तन्नक्षत्रमध्यवर्त्ती मध इति अत एव तस्य मघाख्य इति प्रसिद्धिः। उपवसथकालं गतं देवाद्वहरूपं चन्द्रमसं पौर्णमासीकाले पूर्वाकुर्वन्ति। पशव ओषधीर्जग्ध्वा अपश्च पीत्वात्मनि तं चान्द्रमसं क्रतुसं रस-ममावास्यायां धारयन्ति तत एनं रसममावास्यासम्बन्धिन्यां रात्रौ पशुभ्यः सकाशात् संनयति सम्यक्प्रापयति। तत्-संनयनं प्रतिपच्चन्द्रदर्शने सति नोपपद्यते। ३दर्शयाग-कालातिक्रमलक्षणस्य दोषरूपस्य तत्परिहारप्रकारमाह।

प्रकृतो दर्शयागः शीघ्रं समापनीयः अनन्तरमेवैतद्दोषप-रिहाराय प्रायश्चित्तेष्टिः कर्त्तव्या। स आमावास्यविधेने-वेति यथोदितकालेऽनुष्ठितोऽमावास्यायागस्तत्प्रकारेणैव प्रतिपदि प्रक्रान्तां दर्शेष्टिं समाप्य४। अथास्यामिष्टौ प्रकृ-तिवद्विकृतिः कर्त्तव्येति चोदकप्राप्तेष्वङ्गेषु विशेषं विधत्ते। प्रकृतौ पञ्चदश अत्र चोदकप्राप्ताः पृथुपाजवत्यौ धाय्ये द्वे इति सप्तदश (सामिधान्यः) भवन्ति। प्रकृतौ प्र-धानयागे उच्चैर्धर्मः। प्रकृतदेवताविकृतुक्तावतः पञ्चां दाशतय्यां समाम्नाता या अपतः कामयते। आज्यभागयोः स्विष्टकृद्यागे च याथाकाम्यम् ८। तिसृभिरिषुभिर्युक्तं धनुः तिसृधन्वम् पूर्ववदाकारः समासान्तः। एतं चन्द्रात्मकं दिव्यं श्वानम् १०। "अदृश्यमानचन्द्रेऽप्यपि" ११ भा०
"इष्टीः पार्वायणान्तीयाः केवलानिर्वपेत् सदा" मनुः "प्राजा-पत्यां निरूप्येष्टिम्"। "हेमन्ते नवसस्येष्ट्या" मनुः "आ-रेभिरे जितात्मानः पुत्रीयामिष्टिमृत्विजः" रघुः। २"याग-मात्रे च "कर्त्तुमिष्टिमभिवाञ्छता मया" माघः राजसूयया-गाभिप्रायमिदम्। इष–क्तिन्। ३इच्छायाम्। इष्टप्रयोग-निर्वाहाय पातञ्जलभाष्यकृतः इच्छादोषके ४श्लोकाद्यात्मक वाक्यभेदे च। यथा। "हिपश्चन्तानामेवेष्टिः" सर्वनाम्नोवृ-त्तिमात्रे पुंवद्भाव" इत्यादि। एतयेष्ट्या "ठक्छसोश्च" वार्त्ति० "एकतद्धिते चेति" सूत्रस्य गतार्थम्" सि०कौ०। "अनुत्-सूत्रपदन्यासेति" माघव्याख्यायाम् अनुत्सूत्रसमाचारा इष्ट्युपसंख्यानेनैरपेक्ष्येण सूत्राकारैरेव" इति मल्लि०।

**इष्टिका** स्त्री इष–तिकन्। इष्टकायस्त्रार्थे "उद्वर्त्तनं त्विष्टि-कया कण्डुकोठविनाशनम्" सुश्रु०। "इष्टिका वासुकी-शान चयनार्थे कृताऽभवत्" भा० आश्व० ८८अ०।

**इष्टिकापथिक** न० इष्टिकायाः पथिकं तदुद्देशेनापि प्रभव-त्वात्। नामव्याकरणे राजनि०। [ कृतयागे।

**इष्टिकृत्** त्रि० इष्टिं यागं कृतवान् कृ–भूते क्विप् ६त०।

**इष्टिन्** त्रि० इष्टमनेन इष्टा० इनि। कृतयागे "अध्वरेष्वि-ष्टिनां पाता" भट्टिः।

**इष्टिपच** पु०इष्टये इच्छायै अभिलाषाय पचति न यथार्थं पच–अच्– ६त०। १ असुरे २ दैत्ये च शब्दर०। स ह स्वेच्छापूरणार्थमेव पचति न यथार्थमिति तस्य तथात्वम्।

**इष्टिपशु** पु० ६त०। यज्ञिये पशौ। [मिता०।

**इष्टिमुष्** त्रि० इष्टिं यागं मुष्णाति मुष–क्विप् ६त०। दैत्ये

**इष्टियायजूक** पु० इष्ट्या यायजूकः। "काम्येष्टियजनशीले। "तस्मात् इष्टियाजूकः स्यात् पशुभ्यः एकं प्रासन्नत्" इ०व०।

इष्टियाजुकः इष्टियजनशीलः इष्टिशब्देन काम्या इष्टयः शातपथप्रसिद्धाः ताच्छील्ययोगात्काम्येष्टि यजनप्रधानो-न स्यात्" भा० ।

इष्टीकृत त्रि० अनिष्टमिष्टं कृतम् इष्ट+च्वि-कृ-कर्मणि क्त । अनिष्टे इष्टे कृते । अनिष्टिरिष्टिः कृता । इष्टिभेदे सत्ते न० । "सत्रमिष्टीकृतं नाम समुपास्ते महातपाः" भा०व०२५८अ०

इष्टु स्त्री इष-भावे तुन् । इच्छायाम् उणादिकोषः ।

इष्त्यन न० इष्ट्यायनं गमनं यत्र । "यागविशेषाचरणभेदे" इष्ट्यनस्य आश्व० श्रौ०२,१४, सूत्रादौ दर्शितं यथा "अत ऊर्द्धमिष्ट्यनानि" १।"अत ऊर्द्धं यानि वक्ष्यन्तेऽस्मिन् अध्याये तानि इष्ट्यनसंज्ञानीति विद्यात् । इष्टिभिरयनं गमनं येषु कर्मसु तानीष्ट्यनानि" नारा०वृ० । "सांवत्सरिकाणि"२सू०।"संवत्सरेण क्रियन्ते संवत्सरं च क्रियन्त इत्युभयथा विग्रहः कर्तव्यः,दाक्षायणयज्ञचातुर्मास्यानामनेकसांवत्सरिकत्वसिद्ध्यर्थम् वृ०।"तेषां फाल्गुन्यां पौर्णमास्यां चैत्र्यां वा प्रयोगः"३सू०।"फल्गुनीभिर्युक्ता पौर्णमासी फाल्गुनी, चित्रया युक्ता चैत्री । तेषां सांवत्सरिकाणां आगन्तुकानामस्मिन् काले प्रारम्भः कार्यः । दर्शपूर्णमासगुणविकाररूपाणां दाक्षायणयज्ञादीनामारम्भे कालनियमो नास्तीति तेषामित्युच्यते" नारा०वृ०। "तुरायणम्"४सू०।"तुरायणं नामेष्ट्यनमुच्यते"वृ०।"अग्निरिन्द्रो विश्वेदेवा इति प्रथमिष्ट्योऽनुसवनमहरहः"५सू० ।"अग्निदेवत्या इन्द्रदेवत्या विश्वदेवदेवत्या चैतास्तिस्र इष्टयः त्रिषु सवनेषु यथासङ्ख्येन एकैकेष्टिः कार्याऽहन्यहनि । अहरहरिति वचनं पौर्णमास्यमावास्ययोर्बाधनार्थम्" वृ०। "एका वा त्रिहविः" ६सू०"एताभिरेव देवताभिर्युक्ता एकैवेष्टिस्त्रिहविष्काऽहन्यहनि प्रातः सवन एव कर्त्तव्या वेत्यर्थः" वृ०। "इडादधीनामेष्ट्यनं तत्र देवतादि २ १४ १-१०" द्यावापृथिव्योरयनं नामेष्ट्यनं तत्र देवतादि २,१४,१२,१५" "चातुर्मस्यानि इष्ट्यनानि तद्देवतादि २,१५,१ सूत्रादौ । एवमन्यान्यपि इष्ट्यनकर्म्माणि आकरे दृश्यानि

इष्ट्वा अव्य० यज-क्त्वा । १यागं कृत्वेत्यर्थे । "अश्वमेधेन चेष्ट्वा" कर्कटिकम् । इष-क्त्वा । २अभिलष्येत्यर्थे च ।

इष पु० इष्यति इच्छत्यनेन वा इष-गतौ इष-इच्छायां मक् वा । १वसन्तकाले २कामे च भावे मक् ।३गतौ । ततः अस्त्यर्थे इनि । इष्मिन् गतियुक्ते त्रि०स्त्रियां ङीप् ।"ते वाशीमन्त इष्मिणो अभीरवः" ऋ० १,८७,६। "इष्मिणः गतिमन्तः"भा०। इष-इच्छायां कर्म्मणि मक् ।४इष्यमाणे अन्नादौ अस्त्यर्थे इनि अन्नादिमति "हिरण्ययाः स्वायुधास इष्मिणः"ऋ०५,८७,५। इष्मिणोऽन्नवन्तः"भा० ।

इष्य पु० इष्यते इष-क्यप् । वसन्ते ऋतौ हेम० । तस्य ऋतूनां मध्ये इष्टतमत्वात्तथात्वम्"ऋतूनां कुसुमाकरः" गीतायां तस्य भगवद्रूपत्वोक्तेः इष्टत्वम् ।

इष्व पु० इष-सर्पणे वन्-गुणाभावः । आचार्ये उद्देशार्थम् पक्षप्यमाणत्वात्तथात्वम्। उज्ज्वलदत्तस्तु ईष दाने इत्यस्यैव रूपं दीर्घादि इत्याह । उपदेशदानात्तस्य तथात्वम् ।

इष्वग्र न०६त०। बाणाग्रे । गहादिपाठात् भवादौ छ । इष्वग्रीय तद्भवादौ त्रि०। [इष्वनीकीय तद्भवादौ त्रि०।

इष्वनीक न० ६त० । बाणावयवे । गहा० भवादौ छ ।

इष्वसन पु०इषवोऽस्यन्ते क्षिप्यन्तेऽनेन अस-क्षेपे करणे ल्युट् ६त०। धनुषि ।"रामभिष्वसनदर्शनोत्सुकम्" रघुः ।

इष्वास पु० इषवोऽस्यन्तेऽनेन अस-क्षेपे करणे घञ् ६त० । १धनुषि "अत्र शूरा महेष्वासाभीमार्जुनसमा युधि" "काश्यश्च परमेष्वासः शिखण्डी च महारथः"गीता । अर्द्धर्चादिपाठात् क्लीवत्वमपि । इषून् अस्यति अस-अण् उप०स० । २शरक्षेपके त्रि०(तीरन्दाज) मेदि० ।

इस् अव्य० ईं कामम् स्यति षो-क्विप् नि० आलोपः । १सन्तापे २कोपे ३दुःखानुभवे च गल्दर०।

इह अव्य० इदम्+ह इशादेशः । अस्मिन् काले देशे दिशि वा १इत्यर्थे "एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चन" श्रुतिः "इह जन्मनि जन्मान्तरे वा" वे०सा०। "नेह नाशुत किञ्चन" "नेहाभिक्रमनाशोऽस्ति" गीता । "तदखिलमिह भूतं भूतगत्या जगत्याः" नैष०।प्रथमार्थे ह । २अनुभूयमाने लोके इहामुत्रार्थफलभोग विरागः वेदा० सा० च इहकालः । इह भवः विदितोवा कर्मा० ठञ् । ऐहिक इहभवे इहविदिते च त्रि० । "ऐहिकब्रह्मणपतेर्दाहादिनिषेधात्" शु०त०रघु०। [मानकाले ।

इहकाल पु०इदम्+प्रथमार्थे ह इह कर्म०। एतत्काले वर्त्त-

इहतन त्रि० इहभव ट्यु तुट् च ।इहभवे स्त्रियां ङीप् ।

इहत्य त्रि० इह भवः इह+त्यप् । इहकालादिजाते । स्वार्थे-कन् । इहत्यक तत्रार्थे स्त्रियां नित्यमित्त्वम् । इहत्यिका

इहद्वितीया स्त्री मयू०स० । अत्रत्य द्वितीयायाम् ।

इहपञ्चमी स्त्री । मयू०स० । अत्रत्यपञ्चम्याम् ।

इहल पु० इह भवं लाति ला-क । चेदिदेशे त्रिका० तद्वासिनि ब०व० ।

इहलोक पु० इदम्-प्रथमार्थे ह कर्म० । एतल्लोके अनु-

भूयमाने लोके इहलोके भवः ठञ् अनुश० द्विपदवृद्धिः ऐहलौकिक तद्भवे त्रि० ।

इहामुत्र अव्य० इह च अमुत्र च द्व०। एतल्लोके परलोके च "इहामुत्रार्थफलभोगविरागः" वेदा०सा० ।

इति वाचस्पत्ये इकारादिवर्णशब्दार्थनिरूपणम् ।

ई

ई अव्य० ई क्विप् । १ विषादे २ दुःखभावनायाम् ३क्रोधे ४अनुकम्पायाम् ५प्रत्यक्षे ६सन्निधौ ७संबोधने च । मेदि न्यामयं सान्ततया पठितः । पृषो०साधुः ।

ई स्त्री अस्य विष्णोः पत्नी ङीप् । लक्ष्म्याम् ।

ई कान्तौ (इच्छायाम्) गतौ व्याप्तौ क्षेपे भोजने सक० गर्भग्रहणे अक० अदादि अनिट् पर० । एति ईतः इयन्ति । ऐत् । ऐषीत् । इयाय इयतुः । एता एष्यति ऐष्यत् । "ईतः । अस्यात्मनेपदित्वमपि "न हि तरपिवदीते" द्विक्परार्धीनवृत्तिः" कविक० टी०दुर्गा० ।

ई याचने द्विक० आत्मने० अदादि अनिट् निरु० । ईते इयीत ईताम् । ऐत । ऐष्ट । इये । "आ घोदेवास ईमहे वामं प्रयत्यध्वरे" यजु० ४,५ । "अजस्रं घर्ममीमहे" यजु० २६,६ ।

ई गतौ दिवा०सक० अनिट् आत्म० । ईयते ऐष्ट । ईतः "पद्मैरन्वीतवधूमुखद्युतः" माघः । ईङ्–गतौ नकि० ।

ईक्ष दर्शने पर्यालोचने च भ्वा० आत्म० सक० सेट् । ईक्षते ईक्षेत ईक्षताम् ऐक्षत ऐक्षिष्ट ईक्षाम्–बभूव आस–चक्रे–ईक्षिता ईक्षिषीष्ट ईक्षिष्यते ऐक्षिष्यत । ईक्षितव्यः ईक्षणीयः ईक्ष्यः ईक्षिता ईक्षितः ईक्षित्वा वीक्ष्य । ईक्षणम् ईक्षा । ईक्षमाणः । कर्मणि ईक्ष्यते ईक्ष्यमाणः । धातुनिर्देशे इक्तिः ईक्षिः । "न धर्मवृद्धेषु वयः समीक्ष्यते" न कामवृत्तिर्वचनीयमीक्षते" कुमा० । "तदैक्षत बहु स्यां प्रजायेय" श्रुतिः । "स प्रजापतिरीक्षां चक्रे" श्रुतिः "सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि । ईक्षते योगयुक्तात्मा" गीता । "कथमीक्षामहे सर्वे, दुर्य्योधन! तवेङ्गितम्" भा०व०२६८श्लो० । "ऐक्षिष्ट पुंभिः प्रचितान् स गोष्ठान्" भट्टिः वेदे पदव्यत्यासोऽपि "कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्" कठो० । पृष्टेन शुभाशुभालोचने च तद्योगे शुभाशुभसंबन्धिनि चतुर्थी । "राधीक्ष्योर्यस्य विप्रश्नः" पा० । "यदीयः विविधः प्रश्नः क्रियते तस्मिन् चतुर्थीत्यर्थः । "कृष्णाय ईक्षते गर्गः पृष्टो गर्गः शुभाशुभं पर्यालोचयतीत्यर्थः" सि०कौ० । "ईक्षतेर्नाशब्दम्" शा०सू० । "कारणे ईक्षितृत्वश्रवणात्" भा० ।

अधि+विवेचने अधीक्षते "कुहककर्मकितोक्षोकः सत्येऽप्यपायमधीक्षते" हितो० ।

अनु+अनुचिन्तने । "तामन्वीक्षत इयं वै सप्तमीकवमेयम्" शत०ब्रा० ६,२,२,५ । "अन्वीक्षमाणोरामस्तु विषण्णं भ्रान्तचेतसम्" रामा० ।

अप–आकाङ्क्षायामनुरोधे अवधिनियमे च । "अपेक्षते प्रत्ययमुत्तमं त्वाम्" कुमा० "अपेक्षन्ते न च स्नेहं न पात्रं न दशान्तरम् । परोपकारनिरता मणिदीपा इवोत्तमाः" उद्भटः । "किमपेक्ष्य फलम् पयोधरान् ध्वनतः प्रार्थयते मृगाधिपः" किरा० । "द्वित्वादयः परार्धान्ता अपेक्षाबुद्धिजा मताः" "अपेक्षाबुद्धिनाशाच्च तेषां नाशः प्रकीर्तितः" भाषा० "शब्दोव्यञ्जकत्वेऽर्थान्तरमपेक्षते" सा०द० । "सापेक्षत्वेऽपि गमकत्वात् समासः" पा०भा० "सा प्रक्रिया या कथमित्यपेक्षा" मीमा० । "नदीशः परिपूर्णोऽपि मित्रोदयमपेक्षते" चन्द्रा० ।

वि+अप+विशेषेणापेक्षायाम् । "न व्यपैक्षत समुत्सुकाः प्रजाः" रघु० । "व्यपेक्षमाणौ सहसीतयागतौ" रामा० "समर्थः पदविधिः" पा०भा० व्यपेक्षाऽव्यपेक्षापक्षद्वयमुपन्यस्तम् । तत्र व्यपेक्षापक्षोमतान्तरेण उपन्यस्तः स च युक्तिविरुद्धत्वात् कैयटविवरणादौ दूषितः "धाक्यवत् सा व्यपेक्षाऽपि वृत्तावपि न हीयते" भर्तृ० । सा च शब्दबोधिपयोगिन्याकाङ्क्षारूपा आकाङ्क्षाशब्दे विवृतिः ।

अव+ आलुचदर्शने । "योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः" गीता । "अवेक्षमाणोमहतीं मुहुर्मुहुः" माघ; सम्यक्पर्य्यालोचने च । "यदवोचदवेक्ष्य सुन्दरी" किरा० ।

अनु+ अव+पर्य्यालोचने अनुसन्धाने च "सूक्ष्मतां चान्ववेक्षेत योगेन परमात्मनः" मनुः ।

अभि+अव+भोजनार्थेक्षणे । "यजमानस्य पशूनभ्यवेक्षते" शत० ब्रा० ११,१,५,११, "अभ्यवेक्षते अभ्यवहर्तुं पश्यति" भा० ।

परि+अव+समन्तादर्शने । "ततो वाचस्पतिर्जज्ञे तं मनः पर्य्यवेक्षते भा० आ०२१अ० ।

प्रति+अव+ प्रतीत्य पर्य्यालोचनया दर्शने । "अथैमां प्रत्यवेक्षमाणो जपति" शत०ब्रा० ५,२,४,२० ।

सम्+अव+सम्यग्दर्शने । "अपीयमोऽयं समवेक्षते सभाम्" भा०वि०२१८श्लो०।"यदि दृष्टं बलं सर्वं समग्रं समवेक्षिताः" भा०आ०२५अ० । सम्यक्पर्य्यालोचने च "सर्वं तु समवेक्ष्येदं निखिलं ज्ञानचक्षुषा" मनुः ।

आ+सम्यग्दर्शने ।"अथान्वीक्ष्य पाञ्चालीम्" भा०स०२२८०।

उद्+ऊर्द्ध्वदर्शने । "सहस्ररश्मिना साक्षात् सप्रणाममुदीक्षिताः" कुमा० । अपेक्षायाञ्च "त्रीणि वर्षाण्युदीक्षेत कुमार्य्यृतुमती सती" मनुः ।

उप+हेयत्वज्ञानेन परित्यागे "उपेक्षया सत्वहानिः" दाय०भा०टी० "ये मां विप्रकृतां क्षुद्रैरुपेक्षध्वं विशोकवत्" भा० व०११अ० प्रतिचिकीर्षाभावे "उपेक्षते यः श्लथवल्लिनीर्जटाः" कुमा० "नोपप्रेक्षेत क्षणमपि राजा साहसिकं नरम्" मनुः अपर्य्यालोचने अनुसन्धानाभावे च "गूढेन चरता तत्त्वमुपेक्षितमिदं मया" रामा० ।

सम+उप+सम्यगुपेक्षायाम् । "यत्पर्वं समाधाय लोभोहात् समुपेक्षते" भा०स०१०६० श्लो०।

निस्+निर्+निःशेषेण दर्शने निश्चयार्थं दर्शने च ।"यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान्" गीता ।

परि+तत्त्वानुसन्धाने प्रमाणाद्युपन्यासेन वस्तुतत्त्वावधारणे च "परीक्ष्य लोकान् कर्म्मचितान्" श्रुतिः। न्यायसूत्रभाष्यादौ प्रमाणप्रमेयादि परीक्षा बहुशो दर्शिता । सम्यग्विवेचने च ।"नैता रूपं परीक्षन्ते नासां वयसि संस्थितिः। सुरूपं वा विरूपं वा पुमानित्येव भुञ्जते" मनुः । लक्षणादिमत्त्वेन ज्ञाने च "अस्त्रविद्याविदश्चैव सूता विप्राश्च तद्विदः । नैपुण्यं परीक्षन्तां तव यत्नार्थसिद्धये" भा०आश्र०२०२७ श्लो०।"यस्मात् परीक्षितः पुंस्त्वे" वा०कठ०। "सर्व्वस्य हि परीक्ष्यन्ते स्वभावा नेतरे गुणाः" हितो० भक्तिमत्त्वादिना ज्ञाने च ।"मायां मयोद्भाव्य परीक्षितोऽसि" रघुः । विवादे सत्यत्वासत्यत्वादिसंशयनिरासाय स्वपक्षप्रामाण्यव्यवस्थापनाय शपथकरणे तुलापरीक्षादि । परीक्षाशब्दे विवृतिः ।

प्र+प्रकर्षेण दर्शने "प्रेक्षन्ते सर्व्वभूतानि बहुशः पर्व्वसन्धिषु" भा०व०११६५७ । "यत् किञ्चिद्दर्शनीयानि सन्निधौ प्रेक्षते धनी" भा०व०मनुः। "उदायुधानापततस्तान् दृप्तान् प्रेक्ष्य राघवः" रघुः । "पुनः प्रेक्ष्य च शूलिनम्" कुमा०।

अभि+प्र+आभिमुख्येन दर्शने ।"प्राचीं दिशमभिप्रेक्ष्य महर्षिरिदमब्रवीत्" भा० व०१६३अ० । "दह्यमानमभिप्रेक्ष्य क्षिवस्ताः संप्रदद्रुवुः" भा०व०८८अ० ।

उत्+प्र+उत्प्रेक्षायां । कञ्चिद्धर्म्मं साधर्म्येणान्यस्यान्यरूपता कल्पने उद्भावने च । "उत्प्रेक्षामोऽवयं तावन्मतिमन्तं विभीषणम्" रामा० ।"तद्वदुत्प्रेक्ष्योत्प्रेक्ष्य प्रियसखि गतांस्तांश्च दिन यान्" अमरु० । "भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना" सा०द०।"अलङ्कारशब्दे ३९५ पृष्ठे विवृतिः।

सम्+प्र+सम्यग्दर्शने । "संप्रेक्ष्य नासिकाग्रं स्वं" गीता "योगक्षेमं च संप्रेक्ष्य वणिजो दापयेत् करम्" मनुः ।

अभि+सम्+प्र+आभिमुख्येन सम्यग्दर्शने ।"अभिसंप्रेक्ष्य भर्त्तारं क्रुद्धा वचनमब्रवीत्" भा० आदि० प०२०११ ।

प्रति+अनुरोधे अपेक्षायां पूजने च ।"प्रतीक्ष्यं तत् प्रतीक्ष्यायै पितृस्वस्रे प्रतिश्रुतम्" माघः "प्रथमं संस्थिता भार्य्या पतिं प्रेत्य प्रतीक्षते" भा०आ० २०२३ । "नाभिनन्देत मरणं नाभिनन्देत जीवितम् । कालमेव प्रतीक्षेत" मनुः ।"संवत्सरं प्रतीक्षेत द्विषन्तीं योषितं पतिः" मनुः ।

सम्+प्रति+सम्यक्प्रतीक्षायाम् "मुहूर्त्तं संप्रतीक्षस्व" भा० आ० २६०२ । "एकवेणीधरा हि त्वां नगरी संप्रतीक्षते" रामा० ।

वि+विशेषेण दर्शने ।"वीक्षन्ते त्वां विस्मिताश्चैव सर्वे" गीता । "दीर्घाध्वाने नृणां वीक्ष्य नित्य लोके विपर्य्ययम्" मनुः । "अङ्गीकृतस्रग्व्यजनीक्षणेन" रघुः ।

अनु+वि+सन्ततवीक्षणे पश्चाद्वीक्षणे च । "तस्मादुदियोऽनुवीक्षमाणोऽपति" शत०ब्रा० ५,२,१,२५ ।

अभि+वि+आभिमुख्येन वीक्षणे।"नैनं भुवि शक्नोति कश्चिदप्यभिवीक्षितुम्" मनुः ।

उद्+वि+ऊर्द्ध्ववीक्षणे।"उद्वीक्षमाणा भर्त्तारं सुखेन परिशुष्यता" रामा० "पतिव्रतामिमां साध्वीं तवोद्वीक्षितुमच्युत" भा० अनु० २अ० "उद्वीक्षितं प्रकृतिभिर्भरतानुगाभिः" रघुः ।

सम्+उद्+वि+समन्तादुद्वीक्षणे "निपेतुर्भूमिपाः सर्वे समुद्वीक्ष्य परस्परम्" रामा० ।

प्रति+वि+प्रतिदर्शने यत्कर्त्तृकं स्वदर्शनं तस्य स्वेन दर्शने । "ततः स राजा प्रतिवीक्ष्य ताः स्त्रियः" रामा० ।

सम्+वि+सम्यग्वीक्षणे ।

सम्+सम्यग्दर्शने पर्य्यालोच्य दर्शने । "पुरस्तादेव प्रतीचे समीक्षमाणायानुप्रयात्" शत०ब्रा० ११,५,४,१४ । "समीक्ष्य वसुधां चरेत्" मनुः । "अप्रकृष्टसहस्रेण शीकरेण स नागराट् । समैक्षत गुडाकेशम्" भा० आश्व०२२२१श्लो०।"तान् समीक्ष्य स कौन्तेयः सर्व्वान् बन्धूनवस्थितान्" गीता "अचिरमेवैनं समीक्ष्य प्रमतात्मा-

रिचः” हितो० “समीक्ष्य कुलधर्मांश्च स्वधर्मं प्रतिपादयेत्” मनुः ।
प्र+सम्+प्रकर्षेण सम्यगीक्षणे । “सर्व सर्व्वाः समुत्पन्नाः प्रसमीक्ष्यापदोऽभयम्” मनुः “कुलं ख्यातिञ्च वृत्तं च बुद्ध्या तु प्रसमीक्ष्य च” भा० आ० ४२७४ श्लो० ।

**ईक्षण** न० ईक्ष–भावे ल्युट् । १ दर्शने । करणे ल्युट् । २ नेत्रे । तत्र दर्शने “शिल्पः कार्य्येक्षणे नृणाम्” मनुः नेत्रे । “अभिमुखे मयि संहृतमीक्षणम्” शकु० “सदा संरक्षनयनौ सदा चानिमेषणौ” भा० आ० ३२ अ० । “इत्यद्रियोभा प्रहितेक्षणेन” रघुः ।

**ईक्षणिक** त्रि० ईक्षणं हस्तरेखादीक्षणेन शुभाशुभदर्शनं शिल्पमस्य ठन् । शुभाशुभफलकथनोपजीविनि सामुद्रिके । स्त्रियां टाप् । “मङ्गलादेशवृत्ताश्च भद्राश्चेक्षणिकैः सह” मनुः”

**ईक्षति** पु० ईक्ष–धात्वर्थनिर्द्देशे श्तिप् । ईक्षणे । “ईक्षतेर्नाशब्दम्” शा० सू० ।

**ईक्षा** स्त्री ईक्ष–भावे अ टाप् । ईक्षणे १दर्शने २पर्य्यालोचने च “स ईक्षां चक्रे” श्रुतिः “अवणादनु ईक्षा अन्वीक्षा” । न्यायसू० वृत्तिः । आन्वीक्षिकीशब्दे विवृतिः ।

**ईक्षेण्य** त्रि० ईक्ष–वा० एन्य । ईक्षणीये दृश्ये “ईक्षेण्यासोऽह्योऽगः” ऋ० ८,७७,२ । “ईक्षेण्यासः ईक्षणीयाः” भा० ।

**ईख** गतौ इदित् भ्वा० पर० सक० सेट् । ईङ्खति ऐङ्खीत् । ईङ्खाम् बभूव आस चकार । ईङ्खिता ईङ्खिष्यति ऐङ्खिष्यत् । ईङ्खितः “धन्वाधनवित: मकः प्रेङ्खन् क्षुभिता चिति:” भट्टिः “मुच्यु सहस्र आ रजसः पार ईङ्खितम्” १०,१४२,५ । णिचि ईङ्खयति । “स ईङ्खयन्ति पर्वतान्तिरः समुद्रमर्णवम्” ऋ० १,१९,७ । “इङ्खयन्तीरपस्युव इन्द्रं आतमुपासते” ऋ० १०,१५३,१ । “ईङ्खयन् परिजना भविष्यया रघुः ।

**ईग** गतौ इदित् दूमित्र् । ईङ्गति ऐङ्गीत् ईङ्गते इत्येके ।

**ईज** गतौ निन्दायाञ्च भ्वा० आत्म० सक० सेट् । ईजते ऐजत ऐजिष्ट ईजाम्–बभूव आस चक्रे । ईजिता ईजिष्यते ऐजिष्यत ।

**ईज** गतौ निन्दने च इदित् भ्वा० आत्म० सक० सेट् । ईञ्जते ऐञ्जिष्ट । ईञ्जाम्–बभूव आस चक्रे । ईञ्जितम् । अयम् अपाणिनीयः कविकल्पद्रुमे तु पठितः ।

**ईजान** त्रि० यज–ताच्छील्ये कानच् द्वित्वम् । यजमाने यागशीले । “ततोमहद्भिः क्रतुभिरीजानो भरतस्तदा” भा० आ० ९४ अ० । “यः सेतुरीजानानामक्षरं ब्रह्म यत् परम्” कठो० ।

**ईड** स्तुतौ अदा० आत्म० सक० सेट् । ईट्टे ईडिषे ईड्ढ्वे ऐडिष्ट ईडाम्–बभूव आस चक्रे । ईडिता ईडिष्यते ऐडिष्यत । ईड्यः ईडितः ईडनम् ईडा । “अग्निमीडे पुरोहितम्” ऋ० १,१,१ । डकारं लकारतया बह्वृचाः पठन्ति । “अज्मध्यस्थडकारस्य लकारं बह्वृचा जगुः । अज्मध्यस्थढकारस्य ल्हकारं तु यथाक्रममिति” ऋ० भा० वाक्योक्तेः । यजुर्वेदसम्प्रदायस्तु तयोः अज्मध्यस्थयोः डढकारतया पाठः इति भेदः । यास्कस्तु “ईडिरध्येषणकर्म्मा पूजाकर्मा चेत्याह”“गन्धर्वाः सुरसङ्घाश्च यक्षवश्च महर्षयः । अन्तरीक्षं गतं देवं गीर्भिरग्र्याभिरीडिरे” रामा० “नेडिषे यदि काकुत्स्थम्” भट्टिः “ईड्यो देवा इष्टानाम्” ऋ० १०,६६,१४ । “भवन्तमीड्यं भवतः पितेव” । “प्राचीनतामग्रजदीड्यमानः” इति च रघुः । “अग्निः पूर्व्वेभिर्ऋषिभिरीड्योनूतनैरुत” ऋ० १,१,२ । णिचि ईडयति ते ऐडिडत् त ।

**ईडा** स्त्री ईड–भावे अ स्त्रीत्वात् टाप् । स्तुतौ ।

**ईडित** त्रि० ईड–क्त । स्तुते यस्य स्तवः कृतस्तस्मिन् ।

**ईडेन्य** त्रि० ईड–वा० एन्य । १स्तवनीये २पूजनीये च । “ईडेन्यो नमस्यस्तिरस्तमांसि दर्शतः” ऋ० १,१४६,७ ।

**ईण्वत्** त्रि० ईट् अस्त्यस्य मतुप् स्त्रियां ङीप् । तदर्थे ईश्वरवति । ईण्वन्तमाचष्टे णिच् मतोर्लुक् । ईणयति ।

**ईति** पु० ईयते ई–क्तिच् । १डिम्बे, २उत्पादिते त्रि० ३प्रवासे, “अतिवृष्टिरनावृष्टिः शलभाः मूषिकाः खगाः । प्रत्यासन्नाश्च राजानः षडेता ईतयः स्मृता” इत्युक्ते ४कर्षकोपद्रवभेदे च स्त्री । “निरीतिभावं गमितेऽतिवृष्टयः” नैष० “निरातङ्कानिरीतयः” रघुः “ईतयोव्याधयस्तन्द्रीदोषाः क्रोधादयस्तथा । उपद्रवाश्च वर्त्तन्ते आधयः क्षुद्भयं तथा” भा० व० १४९ अ० ।

**ईदृक्ष** त्रि० अयमिव पश्यति इदम्+दृश–कर्मकर्त्तरि क्स ईशादेशः दीर्घः । ईदृशे एतद्रूपदर्शने एवंविधे । “ईदृक्षास एतादृक्षास ऊ षु णः सदृक्षासः” वाजसने० १७,८ ।

**ईदृश्** त्रि० अयमिव पश्यति इदम्+दृश–कर्मकर्त्तरि–क्विन् ईशादेशः दीर्घः । १एतादृशदर्शनवति एवंविधे “ईदृङ् चान्यादृङ् च सदृङ् च प्रति सदृङ्” यजु० १७,८१ । “इमं पुरोडाशं स्वद्योत्ता पश्यतीति ईदृङ् वेददी० व्याख्यानात् २तदर्थेऽपि । तस्य भावः त्व ईदृक्त्वं तद्भावे न० तल् । ईदृक्ता तस्य भावे स्त्री । “विष्णोरिवास्यानवधारणीयमीदृक्तया रूपमियत्तया वा” रघुः ।

सुवीरात्तु न्टपञ्जय:। सर्पञ्जयाद्बहुरथ इत्येते पौरवाः स्मृताः। सत्वाम्युग्रायुधस्तात! दुर्बुद्धिरभवत्तदा। प्रवृद्धचक्रो बलवान्नीपान्तकरणो महान्। स दर्पपूर्णौहत्वाजौ नीपानन्यांश्च पार्थिवान्। पितर्युपरते मह्यं श्रावयामास किल्बिषम्। महामात्यैः परिवृतं शयानं धरणीतले। उग्रायुधस्य राजेन्द्र! दूतोऽभ्येत्य वचोऽब्रवीत्। गन्धकालीं यशस्विनीम्। स्त्रीरत्नं मम भार्यार्थे प्रयच्छ कुरुनन्दन!। एवं राज्यञ्च ते स्फीतं धनानि च न संशयः। प्रदास्यामि यथाकामं मह्यं वै रत्नभाग् भुवि। मम प्रज्वलितं चक्रं निशम्येदं सुदुर्ज्जयम्। शलभो विद्रवन्त्याजौ दर्शनादेव भारत!। राष्ट्रमिच्छसि चेत् स्वस्ति प्राणानां वा कुलस्य वा। शासने मम तिष्ठस्व न हि ते शान्तिरन्यथा। अधःप्रस्तारशयने शयानस्तेन नोदितः। दूतोऽन्तर्हितमेतद्वै वाक्यमग्निशिखोपमम्। ततोऽहं तस्य दुर्बुद्धेर्विज्ञाय मतमच्युत!। आज्ञापयं वै संग्रामे सेनाध्यक्षांश्च सर्वशः। विचित्रवीर्यं बालञ्च मद्भ्रातरमथैव च। दृष्ट्वा क्रोधपरीतात्मा युद्धायैव मनो दधे। निगृहीतस्तदाऽहं तैः सचिवैर्मन्त्रकोविदैः। ऋत्विग्भिर्देवकल्पैश्च सुहृद्भिश्चार्थदर्शिभिः। स्निग्धैश्च शास्त्रविद्भिश्च संयुगस्य निवर्त्तने कारणं श्रावितश्चास्मि युक्तरूपं तदाऽनघ!"। "प्रवृत्तन्तस्य तच्चक्रमधर्मनिरतस्य वै। परदाराभिकामेण सद्यस्तात निवर्त्तितः। नत्वहं तस्य जाने तन्निवृत्तं चक्रमुत्तमम्। हतं स्वकर्म्मणा तन्तु पूर्वं सद्भिश्च निन्दितम्। क्षतशोकः शरो चापो रथो निष्क्रम्य वै पुरात्। कृतस्वस्त्ययनो विप्रैः प्रायोधयमहं रिपुम्। ततः संसर्गमागम्य बलेनास्त्रबलेन च। माहदुग्रस्तद्युद्धं देवासुरमिवाऽभवत्। स मयाऽस्त्रप्रतापेन निर्दग्धोरणमूर्द्धनि। पपाताभिमुखः शूरस्त्यक्त्वा प्राणान्नरिन्दम!। एतस्मिन्नन्तरे तात! काम्पिल्यात् पृषतोऽभ्यगात्। हते नीपेश्वरे चैव हते चोग्रायुधे नृपे। अहिच्छत्रं स्वकं राज्यं पित्र्यं प्राप महाद्युतिः। द्रुपदस्य पिता राजन्मम चैवानुमते तदा" भा० हरिव० २० अ०

२धृतराष्ट्रपुत्रभेदे। तन्नामकीर्त्तने भा०आ० ६७अ०। "उग्रायुधोभीमशरः कनकायुर्दृढायुधः"।

उग्रेश पु० उग्राणामुत्कटरूपाणां प्रमथानामीशः। प्रमथाधिपे शिवे। "शङ्करं भवमीशानं पिनाकशूलपाणिनम्। त्र्यम्बकं शिवमुग्रेशं बहुरूपमुमापतिम्" भा० व० प० १०६ अ०।

उङ्कुण पु० उमिति कृत्वा कुणयते हिंसते कुण कर्म्मणि अच्। र्थेऽक। (उकुण्) उत्कुणे। शब्दमाला।

उच समवाये दि० पर० सक० सेट्। उच्यति इरित् औचत्,—औचीत् उवोच औचिता उच्यात् औचिष्यति औचिष्यत् उचितः उचः। "उवोचिथ हि मघवन् देष्णम्" ऋ० ७,२७,२। उचतिः सेवाकर्मेति माधवः "अभि वा एष एतानुच्यति" तैत्ति०। "नियो दमं पौरुषेयीमुवोच" ऋ० ७,४,२। "तन्न वैदिन्युच्यत सर्वांश्च सातधान्यः" अथ० २,१४,२।

उचथ न० उच्यते स्तूयतेऽनेन वच—कथन्। स्तोत्रे "यद्वां गानाय उचथमवोचन्" ऋ० १,१८२,८। उचथम् स्तोत्रम्" भा०। "एवात इन्द्रोचथमहेम" ऋ० २,१९,७। "कुविन्नो अग्निरुचथस्य" ऋ० १,१४३,६।

उचथ्य त्रि० उचथं स्तोत्रमर्हति यत्। १स्तुत्ये २राजभेदे पु० "उचथ्ये वपुषि यः स्वराट्" ऋ० ८,४६,२८। "उचथ्ये स्तुत्ये। यद्वा उचथ्यो वपुश्च राजानौ" भा०।

उचित त्रि० उच—क्त वच—कितच् वा। १ज्ञाते २परिचिते, ३युक्ते। "अमात्यैरिव नीवारभागधेयोचितैर्मृगैः" "दिनानि दीनोद्धरणोचितस्य" "प्रविश्य भीमासुरशोणितोचितः" महोक्षतां वत्सतरः स्पृशन्निव" "सदृशमुचितं दधत्" "महोभ्रपक्षव्यपरोपणोचितम्" रघुः "धार्त्तराष्ट्रैः पार्थिवैरुचितैः पितुमर्हैःपत्नैः"। "स्वयंसुप्तमुचितं दधच्छिखी" माघः। "वंशोचितत्वादभिमानवत्याः" किरा०।

उच्च त्रि० उत्क्षिप्य बाहू चीयते, उपर्युपरिनिविष्टैरवयवैश्चीयतेऽसौ वा उद्+चि—ड। १उन्नते। "पुरस्तादुच्चम्" कात्या० ७,१,२१। "स तदुच्चकुचौ भवन् प्रभाभर-चक्रभ्रमिमातनोति यत्" नैषधम्। अस्मात् उत्कर्षे तरप् तमप्। "किंस्वित् गुरुतरं भूमेः किं स्विदुच्चतरञ्च खात्" भा०व० ३१३अ०। "उच्चतमम्" कात्या० ७,१, १५। देवयजनवर्णने "परितः समीपदेशवर्त्तिप्रदेशेभ्यो यदतिशयेनोच्चम्" कर्कः। राशिचक्रमध्ये ग्रहविशेषाणां २राशिभेदे, यथा "मेषो वृषो मृगः कन्या कर्कमीनतुलाधराः। भास्करादेर्भवन्त्युच्चाः राशयः क्रमशस्त्विमे" ज्योति०त०। स्पष्टमुक्तं तत्रैव "रविर्मेषे वृषे चन्द्रो गुरुः कर्के बुधः स्त्रियाम्। शनिर्युके (तुलायाम्) मृगे (मकरे)भौमः शुक्रो मीने च तुङ्गिनः"। तेषां राशिभागभेदे परमोच्चतामाह तत्रैव "लिंशद्भागे दिशो (१०) रामाः (३)अष्टविंशतिभिस्तिथिः १५। तथेषुः (५) सप्तविंशञ्च विंशतिश्चोच्चसंज्ञकाः"। तथा च रवेर्मेषस्य दशमे भागे,

शीघ्रगमनदर्शनात् तत्सम्मुखं पूर्वदिशीति तात्पर्य्यार्थः । ईरयेत् पश्चिमाभिमुखभ्रमणशीलप्रागुक्तप्रवहावलम्बनरूपेण चालयतीत्यर्थः । अतः कारणात् ते ग्रहाः पूर्वपश्चिमदिशोराकृष्टाः पृथग्विधां प्रथमावगतैकरूपभिन्नप्रकारावगतां प्रतिक्षणविलक्षणां गतिं गमनक्रियां यान्ति प्राप्नुवन्ति । अवलम्बनाकर्षणाभ्यां प्रतिदिनं ग्रहाणां गतेरव्याहतत्वं तदनुसारेण गृहचारज्ञानं युक्तमिति गृहाणां स्पष्टक्रियोत्पन्नेति भावः । ननु वायुरज्जुभिः कथं गृहाणामाकर्षणं सम्भवति तद्रज्जूनां विरलतया घनीभूतत्वाभावेनाकर्षणायोग्यत्वादित्यत आह । प्रवाहाख्य इति । उच्चदेवताहस्तद्वयस्थितकक्षाकारस्थलं वायुः प्रवहवायुसम्बन्धात् प्रवहसञ्ज्ञो न पश्चिमाभिमुखभ्रमत्प्रवहात्मकस्तान् गृहान् स्वोच्चाभिमुखं स्वोच्चदेवतास्थानसम्मुखमीरयेत् प्रेरयति चालयति । तथाहीच्चस्थानात् पूर्वस्मिन् गृहे वायुः पश्चिमगत्या गृहं चालयति पश्चिमस्थे वायुः पूर्वगत्या गृहं चालयतीत्यर्थः । तथा च कक्षाकारस्थलं तदा तदा तथा तथा भ्रमतीति दैवतैराकृष्ट रज्जुप्रकाराद्युच्यत इति भावः । अत एव गृहाणां स्पष्टक्रियोत्पन्नेत्याह । पूर्वापराकृष्टा इति उच्चदैवतैः पूर्वापरदिशयोराकृष्टा गृहाः पृथग्विधां मध्यमातिरिक्तप्रकारां गतिं गमनक्रियां यान्ति । अतो न केवलं मध्यक्रियया निर्वाहः" २ र०ना० । अथ प्राक् पश्चादपकर्षणस्वरूपमुक्तं विशदयति । "गृहात् प्राग्भगणार्द्धस्थः प्राङ्मुखं कर्षति गृहम् । उच्चसञ्ज्ञोऽपरार्द्धस्थस्तद्वत् पश्चान्मुखं ग्रहम्" ३ सू०सि० । "गृहस्थानात् पूर्वभागस्थराशिषट्कस्थित उच्चसञ्ज्ञो जीवो गृहबिम्बं पूर्व्वदिगभिमुखं स्वाभिमुखं कर्षत्याकर्षति । अपरार्द्धस्थो गृहस्थानात् पश्चिमभागस्थराशिषट्कस्थितउच्चसञ्ज्ञो जीव इत्यर्थः । गृहबिम्बं पश्चान्मुखं पश्चिमदिगभिमुखं स्वाभिमुखं तद्वदाकर्षतीत्यर्थः" ४ र०ना० । "अथ पूर्वोक्तविधं फलितमाह । 'स्वोच्चापकृष्टा भगणैः प्राङ्मुखं यान्ति यद्ग्रहाः । तत् तेषु धनमित्युक्तं पश्चान्मुखेषु तु" सू०सि० ५ । "स्वोच्चजीवाकर्षिता गृहाः पूर्वाभिमुखं भगणैः राशिभिर्भगोलस्थक्रान्तिवृत्तानुकृतस्थानाकाशगोलान्तर्गतक्रान्तिवृत्ते द्वादशराश्यङ्किते यद्राशिविभागैरित्यर्थः । यद् यत्संख्यामितं गच्छन्ति तत् तत्संख्यामितं भागादिकं फलरूपं तेषु पश्चिमगतगृहराश्यादिभोगेषु धनं योज्यम् । पश्चान्मुखेषु पश्चिमाकर्षितगृहपूर्वागतराश्यादिभोगेषु तुकाराद्यत्सङ्ख्यामितं फलरूपं पश्चिमतो गच्छन्ति तदित्यर्थः । ऋणं हीनमिति एतत् पूर्वैः कथितम्" र०ना०५ । सि०शि० "कक्षा भचक्रं क्रमशोऽध्वेन गृहैः सहैतन्नगणादिसंस्थैः । मध्यद्युभवे विषवकला निरुक्तं तदन्तरे च तथा ध्रुवत्वे । ततोऽपरायाभिमुखं भपञ्जरे खेचरे शीघ्रतरे भ्रमत्यपि । तदल्पगत्यैन्द्रदिशं नभश्चरायरन्ति नीचोच्चतरात्मवर्त्मसु" । "यदेतद्भचक्रं गृहैः सह भ्रमदुद्दिष्टते तद्विषवत्कला जगदुत्पादकेन कमलोद्भवेन ब्रह्मणा कल्पादौ कक्षा ततः मध्यद्युमणेऽनवरतभ्रमणे नियुक्तम् । एतदुक्तं भवति । भान्यश्विन्यादीन्यन्यानि विशिष्टानि ज्योतींषि तेषां समूहचक्रं गृहाश्च सूर्य्यादयस्तैः सह सृष्टम् । तानि भानि प्राक्संख्यया यथास्थानं निवेशितानि । गृहास्तु भचक्रादावश्विनीमुखे निवेशितास्त उपर्य्युपरिसंस्थया । तत्रादौ तावदधश्चन्द्रः तदुपरि बुधः, ततः शुक्रः, ततो रविः कक्षाक्रमेण, ततो गुरुः ततः शनिः । सर्वेषामुपरि दूरे भचक्रम् । एतां कक्षाप्रमाणानि कक्षाध्याये प्रतिपादयिष्यन्ते । ननु बहून्योर्द्ध्वस्था गृहास्तदुपरि दूरतो भपञ्जरात् कथं भगणादिसंस्थैर्गृहैरित्युच्यते ? सत्यम् । अत भूमध्ये सूत्रसैकमग्रं बद्ध्वा द्वितीयमग्रं भचक्रेऽश्विनीमुखे किल निबद्धम् । तस्मिन् सूत्रे प्रोता मणय इव चन्द्रादयो गृहाः सृष्ट्यादौ ब्रह्मणा निवेशिताः । भचक्रस्य द्वादशधा विभक्तस्यैवं भूमध्यात् सूत्राणि प्रतिभागं नीत्वा किल यद्यानि तैः सूत्रैः सह गृहकक्षायां ये संपातास्ते तासु कक्षासु राशयः । तद्वत्प्रकारा राशय इति न विस्मर्त्तव्यम् । कक्षाध्याये गोले च किञ्चिद्विशेषो वक्ष्यामः । एवंविधं भचक्रं कृत्वा ब्रह्मणा गगने निवेशितम् । यत्र निवेशितं तत्र प्रवहो नाम वायुः । स च नित्यं प्रत्यग्गतिः । तेन समाहतं भचक्रं खेचरं पश्चिमाभिमुखभ्रमे प्रवृत्तम् । यत् तत्र प्रत्यग्भ्रमणं तच्छीघ्रतरम् । अत एकेनाह्ना भचक्रस्य परिवर्त्तः । एवं तस्मिन् भपञ्जरे खेचरे शीघ्रतरे भ्रमत्यपि खेचरा इन्द्रदिशं चरन्ति पूर्वाभिमुखं व्रजन्ति नीचोच्चतरात्मवर्त्मसु । अनन्तरकथितेषु स्वस्वमार्गेषु तेषां प्राग्भ्रमणम् । तत् तदल्पगत्या, प्रत्यग्गतेर्बहुत्वात् प्रागल्पगत्या व्रजन्तो नोपलक्ष्यन्त इति भावः । तथा तस्य भपञ्जरस्य यो दक्षिणोत्तरावधी तत्र ये तारे ते ध्रुवत्वे

निमुक्ते" प्रशि० । तथा श्रीपतिः । "सव्यापाराद् प्राग्गतिः खचराणामूर्ध्वाधस्ताद्याम्यसौम्यापराणि । गोलाभिज्ञैः यत्र यातानि यानि तेषामुक्तान्यव्यहेतूनि तानि । प्रत्यग्गतिः प्रवहवायुवशेन तेषां नीचोच्चवृत्तजनितोर्ध्वमधश्च वा स्यात् । याम्योत्तरा त्वपमवृत्तविमण्डलाभ्यां षोढा गतिर्निगदितैवमिह ग्रहाणाम्" उच्चता च महत्त्वव्याप्यगुणभेदः । सा च उपर्युपरिसन्निवेशितावयवानां महत्त्वे भवति तस्य गुणघनत्वात् ततः भावेऽर्थे ष्यञ् । औच्च्यम् उच्चतायां न० । त्व । उच्चत्व तत्रार्थे न० तल् । उच्चता स्त्री । "उच्चस्थे गुरुपञ्चके सुरगुरौ सेन्दौ नवम्यां तिथौ लग्ने कर्कटके पुनर्वसुदिने मेषं गते पूषणि । निर्दग्धुं निखिलाः पलाशसमिधः मेध्यादयोध्यारणेराविर्भूतमभूदपूर्वविभवं यत्किञ्चिदेकं महः" तिथित०पु० । "ग्रहैस्ततः पञ्चभिरुच्चसंस्थितैरसूर्यगैः सूचितभाग्यसम्पदम्" रघुः । "सोच्चस्थः स्वगृहेऽपि वा सुहृदां वर्गेऽपि वा" ज्योति०त० ।

**उच्चकैस्** अव्य० उच्चैस्+टेरकच् । १उच्चतायां २तद्विशिष्टे च । "जनितमुदस्यादुच्चकैरुच्छ्रितोरः" "स्थितोदयाद्रेरभितस्तमुच्चकैः" माघः । उत्कर्षार्थे तरबादि उच्चैस्तराम् ।

**उच्चक्षुस्** त्रि० उत्क्षिप्तमुत्पाटितं वा चक्षुर्यस्य प्रा०ब० । १ऊर्ध्वोत्क्षिप्तनेत्रे २उत्पाटितनेत्रे च । ततः च्वि उच्चक्षूकरोति उच्चक्षूभवति उच्चक्षूस्यात् ।

**उच्चटा** स्त्री उद्-चट-अच् । १लशुनभेदे, २गुञ्जायां ३चूडालायाम्, ४भूम्यामलक्याम् ५नागरमुस्तायाञ्च ।

**उच्चण्ड** त्रि० उद्-चडि-अच् । १अत्यन्तोग्रे २अतिकोपने, ३त्वरायुक्ते अविलम्बिते । ४भयरसे पु० ५तद्वति त्रि० ।

**उच्चतरु** पु० कर्म० । १नारिकेले वृक्षे । २उच्चवृक्षमात्रे च ।

**उच्चताल** न० उच्चः तालः हस्ततालो यत्र । १पानगोष्ठ्यां मत्ततया तत्र उच्चैर्हस्ततालदानात्तथात्वम् । २उच्चततालशब्दे च

**उच्चदेव** पु० उच्चः श्रेष्ठो देवः । वासुदेवे त्रिका० । तस्य "सर्वदेवमयो हरिः" इत्युक्तेः सर्वदेवमयत्वात् सत्वप्रधानत्वाच्च उत्कृष्टत्वम् अतएव भागवते "श्रेयांसि तत्र खलु सत्वतनोर्नृणां स्युरिति" सत्वप्रधानत्वात् तस्य श्रेयःसाधनत्वमुक्तम् ।

**उच्चन्द्र** पु० उच्छिष्टः अल्पाऽवशिष्टश्चन्द्रो यत्र प्रादि०ब० शिष्टचन्द्रलोपः । रात्रिशेषे शब्दरत्ना० ।

**उच्चय** पु० उत्तोल्य चयः चि-अच् । १पुष्पादेरुत्तोलने । "पुष्पोच्चयं नाटयति" शकु० । "करिष्यामि शरैस्तीक्ष्णैस्तच्छिरःकमलोच्चयम्" रघुः । "प्रत्युपसदमेकोच्चयेन चपालान्येकप्रमाणप्रभृतीनाम्" कात्या० २२,२,२० । उत्तरेषु पुरुषोच्चयेनैकैकशतविधात् १६, ८,२५ । २नारीकटीवस्त्रग्रन्थौ "नीविः स्यादुच्चयोऽप्ययम्" शब्दर० उत्कर्षश्च । ३द्रव्यसमुदाये च अभ्युच्चयः । "वाक्यं स्याद्योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः" सा०द० । "स निर्दिष्या कृति रामोऽधी मनःशिलोच्चये" रामा० । "एवतः सरितः सर्वाः गङ्गाद्याः सशिलोच्चयाः" भा०व० ८८ अ० । "नैकद्रव्योच्चयवतीं समृद्धविपणापणाम्" भा० अनु०१०अ० । शिलोच्चयोऽपि क्षितिपालमुच्चैः" रघुः । कर्मणि अच् । ४हस्ताभ्यामुत्थापचिते नीवारे" हारा० ।

**उच्चल** न० । उद्+चल-अच् । १मनसि हेमच० तस्य "असंशयं महाबाहो ! मनोदुर्निग्रहं चलम्" गीतोक्तेश्चलस्वभावत्वात्तथात्वम् । २चलस्वभाववति त्रि० ।

**उच्चलित** त्रि० उद्+चल-क्त । गमनोद्यते प्रस्तुते गन्तुमुद्युक्ते

**उच्चललाटा** स्त्री उच्चं ललाटं यस्याः । उन्नतललाटरूपदुर्लक्षणायां स्त्रियाम् । स्त्रीणां च दुर्लक्षणम् कन्याशब्दे वक्ष्यते

**उच्चनीच** त्रि० उच्चैश्च नीचैश्च मयू० समा० । उन्नतावनतप्रदेशादौ "द्रष्टारमुच्चनीचानां कर्मभिर्देहिनां गतिम्" भा० आश्व०१६ अ० ।

**उच्चा** अव्य० उद्+चो-डा । १उच्चैःशब्दार्थे । "अमी य ऋक्षा निहिता स उच्चा" ऋ० १,२४,१० । "उच्चा उच्चैःप्रदेशे" भा० । "उच्चा दिवि दक्षिणावन्तो अस्थुः" ऋ० १०,१०७,२ । "अस्माकं द्युम्नमधि पञ्च कृष्टिषूच्चा" २,२,१० । "उच्चा उच्चैः" भा० । "अवतमुच्चाचक्रं परिज्मानम्" ८,७२,१० । "उच्चाचक्रमुपरिस्थितचक्रम्" भा० उच्चाबुध्नं नीचादुच्चाचक्रथुः पातवे वाः" ऋ० १,११६,२२ । २उन्नतायां स्त्रियां स्त्री "उच्चारवत्पक्षिगणास्तटीस्तम्" माघः ।

**उच्चाटन** न० उद्-चट्-णिच्-ल्युट् । १उत्पाटने स्वस्थानात् २विश्लेषणे "उच्चाटनं स्वदेशादेर्भ्रंशनं परिकीर्त्तितम्" इति शा०ति०उक्ते ३षट्कर्मान्तर्गतेऽभिचारभेदे च । उच्चाट्यतेऽनेन करणे ल्युट् । तन्त्रोक्ते ४तत्साधनकर्मणि । तत्प्रकारे बगलाया अभिचारप्रयोगे कुण्डलक्षणमुपक्रम्य "वश्ये तु चतुरस्रं चाकर्षणे तु त्रिकोणकम् । तथैवोच्चाटने प्रोक्तं षट्कोणे मारणं स्मृतम् । वश्ये मेषासनं श्रेष्ठं कर्षणं व्याघ्रचर्मणि । शान्तौ मृगासनं प्रोक्तं स्तम्भे गोचर्मणि स्मृतः । उष्ट्रासनं तथोच्चाटे विद्वेषे तुरगा-

रात्रौ सन्ध्ययोश्च यथा दिवा"। उच्चारः पुरीषम्। यत्तु यमवचनं "प्रत्यङ्मुखस्तु पूर्व्वाह्णे अपराह्णे च प्राङ्मुखः। उदङ्मुखस्तु मध्याह्ने निशायां दक्षिणामुखः" इति तत् उदङ्मुखेन सहेच्छाविकल्पार्थं सूर्य्याभिमुखनिरासार्थञ्च न तु नियमार्थं देवलवचनविरोधात्। तथा च "सदैवोदङ्मुखः प्रातः सायाह्ने दक्षिणामुखः। विण्मूत्रे आचरेन्नित्यं सन्ध्यायां परिवर्जयेत्" इति। प्रातःसायाह्नशब्दौ दिवारात्रिपरौ पूर्व्वोक्तमनुवचनैकवाक्यत्वात्। सन्ध्यायां परिवर्जयेदिति तु पीडितेतरपरम्। यमः "कृत्वा यज्ञोपवीतन्तु पृष्ठतः कण्ठलम्बितम्। विण्मूत्रे च गृही कुर्य्यात् यद्वा कर्णे समाहितम्"। पृष्ठतः पृष्ठे कण्ठलम्बितं निवीतम्। अत्र लम्बितं निवीतम्। "संवीतं मानुषे कार्य्ये" इति तैत्तिरीयश्रुतेः। मानुषे सनकादितर्पणे। "पृष्ठलम्बितं निवीतम्" इति बौधायनवचनाच्च। तथा च हारवत् कृत्वा पृष्ठलम्बितम् कण्ठे इत्यर्थः। अत्र व्यवस्थामाह शांख्यायनः। "यद्येकवस्त्रो यज्ञोपवीतं कर्णे कृत्वा अवगुण्ठितः" इति कर्णे दक्षिणकर्णे। "पवित्रं दक्षिणकर्णे कृत्वा विण्मूत्रमाचरेत्" इति स्मृतौ तथा दर्शनात्। अवगुण्ठितः कृतशिरोऽवगुण्ठनः। मनुः "छायायामन्धकारे वा रात्रावहनि वा द्विजः। यथासुखमुखः कुर्य्यात् प्राणबाधाभयेषु च" महाभारते। "प्रत्यादित्यं प्रत्यनलं प्रति गाञ्च प्रतिद्विजम्। मेहन्ति ये च पथिषु ते भवन्ति गतायुषः"। प्रतिः सांमुख्ये। मनुः "न मूत्रं पथि कुर्व्वीत न भस्मनि न गोव्रजे। न फालकृष्टे न जले न चित्यां न च पर्व्वते। न जीर्णदेवायतने न वल्मीके कदाचन। न ससत्वेषु गर्त्तेषु न गच्छन्नपि संस्थितः। न नदीतीरमासाद्य न च पर्व्वतमस्तके। वाय्वग्निविप्रानादित्यमपः पश्यंस्तथैव गाः। न कदाचन कुर्व्वीत विण्मूत्रस्य विसर्जनम्"। ससत्वेषु प्राणिमत्सु संस्थितः उत्थितः पर्व्वतमस्तकनिषेधोऽधिकदोषाय। वशिष्ठः। "आहारनिर्हारविहारयोगाः सुसंवृता धर्म्मविदा तु कार्य्याः। वाग्बुद्धिकार्य्याणि तपस्तथैव धनायुषी गुप्ततमे तु कार्य्ये"। निर्हारो मूत्रपुरीषोत्सर्गः विहारः स्त्रीसम्भोगः। योगः समाधिः। वाग्गुप्तिरशुभालापत्यागः। बुद्धिगुप्तिरनिष्टचिन्तात्यागः। हारीतः "आहारन्तु रहः कुर्य्यात् निर्हारञ्चैव सर्व्वदा। गुप्ताभ्यां लक्ष्मीयुक्तः स्यात् प्रकाशे हीयते तथा"। विष्णुपुराणम् "सोमाम्बु[illegible]-वायूनां पूज्यानाञ्च न सम्मुखे। कुर्य्यात् ष्ठीवनविण्मूत्र-त्सर्गञ्च पण्डितः"। आपस्तम्बः "न च सोपानत्को मूत्रपुरीषे कुर्य्यादिति"। दक्षस्तु "करन्धृतोदपात्रेण कृत्वा मूत्रपुरीषके। मूत्रपथ्यन्तु पानीयं पीत्वा चान्द्रायणञ्चरेत्"। भरद्वाजः "अथ निक्षिप्य विण्मूत्रं लोष्ट-काष्ठतृणादिना। उदक्शाखा उत्तिष्ठेद्दृढं विधृतमेहनः" "उदक्शाखा कटिदेशादुत्थितप्रमाणः" आ०त०। "मूत्रोच्चारी च कारयेत्"। "यस्योच्चारं विना मूत्रं सम्यङ् नायुस्स गच्छति" सुश्रु०। "दाने तपसि शौर्य्ये च यस्य न प्रथितं मनः। विद्यायामर्थलाभे च मातुरुच्चार एव सः" हितो०। उच्चस्य चारोगतिः। २ ग्रहादीनां [illegible] सञ्चारे। "[illegible]" "उच्चारे वंशिकाकारैः" वि०रा०त०।

**उच्चारण** न० उच्चार्य्यते कण्ठाद्यभिघातेन चार्य्यते निष्पाद्यते उद्+चर-णिच्-ल्युट्। कण्ठताल्वाद्यभिघातेन शब्दजनके व्यापारे तत्प्रकारस्तु "आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया। मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्। सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः। वर्णान् जनयते तेषां विभागः पञ्चधा मतः" इति शिक्षोक्तदिशाऽवसेयः। वर्णोत्पत्तिस्थानानि चाष्टौ। "अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा। जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च" शिक्षोक्तानि। विवृतिर्वर्णशब्दे दृश्या। यथा च कण्ठताल्वाद्यभिघातेनोच्चारणप्रक्रिया" ईश्वरशब्दे चतुर्था०चिन्ता०१०२६ पृष्ठे दर्शितम्। "उच्चारणज्ञोऽथ गिरां दधानम्" माघः। "वेदोच्चारणकार्य्यार्थमयुक्तं तपसा कृतम्" भा०व०२१३ अ०। "सजातीयोच्चारणानपेक्षोच्चारणविषयत्वं वेदस्यापौरुषेयत्वम्" मीमांसकाः वेदान्तिनश्च प्रतिपेदिरे।

**उच्चारित** त्रि० उच्चार-तारका० इतच्। १कृतविष्ठोत्सर्गे। उद्+चर-णिच्-कर्म्मणि क्त। यस्योच्चारणं कृतं तादृशे वर्णादौ "तत्र यत्नवैकल्यप्रमादालस्यादिभिः। अन्यथोच्चारिताः शब्दा अपशब्दा इतीरिताः" भर्तृह०। उद्+अन्तर्भूतण्यर्थे चर-क्त। उच्चरितोऽप्यत्रार्थे "सकृदुच्चरितः शब्दः सकृदर्थं गमयतीति" तन्त्रार्थपक्षे न्यायः।

**उच्चार्य्य** अव्य० उद्+चर-णिच्+ल्यप्। १कण्ठाद्यभिघातेन उत्पाद्येत्यर्थे। कर्म्मणि यत्। २उच्चारणीये वर्णादौ त्रि०।

**उच्चार्य्यमाण** त्रि० उद्+चर-णिच्-कर्म्मणि शानच्। यस्योच्चारणं क्रियते तस्मिन् वर्णादौ "कथञ्चित् काव्यायोच्चार्य्यमाणो वर्ण इत्यर्थः", मुग्धबो०।

उच्चावच त्रि० उदक् उत्कृष्टञ्च अवाक् अपकृष्टञ्च मयू०नि०। उत्कृष्टापकृष्टात्मके नानाभेदे "उच्चावचैरपि मतेषु महत्सु संख्याम्" माघः "भवन्तु तेन महाभाग्याश्च ततैवोच्चावचं निगच्छति" शत०ब्रा० १४,५,१,१८। "अथ खलूच्चावचा जनपदधर्म्मा ग्रामधर्म्माश्च तान् विवाहे प्रतीयात्" आश्व०गृ० १,७,१। "उच्चावचेषु भूतेषु स्थितं तं व्याप्य तिष्ठतः"। "उच्चावचानि भूतानि सततं चेष्टयन्ति याः" मनुः

उच्चिङ्गट पु० १प्रगण्डमत्स्ये, २कोपनपुरुषे च मेदि०।

उच्चिटिङ्ग पु० विषकीटभेदे (उच्चिङ्गड़े) सुश्रुते "जङ्गमस्य विषस्योक्तान्यधिष्ठानानि षोडश" इत्युपक्रम्य "वृश्चिकविश्वम्भरराजीवमत्स्योच्चिटिङ्गसमुद्रवृश्चिकाश्च विषाः" इत्युक्ता तस्य शूकतुण्डविषत्वमप्युक्तम् "सञ्चालतुण्डोच्चिटिङ्गवरटीशतपदीशूकवलभिकाशृङ्गीभ्रमराः शूकतुण्डविषाः" तेषामुत्पत्तिस्थानमपि तत्रोक्तम् "सर्पाणां शुक्रविण्मूत्रशवपूत्यण्डसम्भवाः। वाय्वग्न्यम्बुप्रकृतयः कीटास्तु विविधाः स्मृताः" इत्युपक्रम्य "उच्चिटिङ्गोऽग्निनामा च चिच्चिटिङ्गो मयूरिका" इत्यादीन् अष्टादश कीटानभिधाय "अष्टादशेति वायव्याः कीटाः पवनकोपनाः" सुश्रु०। [वस्त्रखण्डे।

उच्चूड़(ल) पु० उच्चता चूड़ा यस्य डस्य वा लत्वम्। ध्वजोर्द्धस्थे

उच्चैःशिरस् त्रि० उच्चैरुन्नतं शिरोऽस्य। उन्नतमस्तके महत्तरे "नमत्युच्चैःशिरसा सतीव" कुमा०। वा टेः यत्वम्।

उच्चैःश्रवस् त्रि० उच्चैरुन्नतं श्रवोऽस्य। १उन्नतकर्णे समुद्रजाते श्वेतवर्णे इन्द्रस्य वाहनभूते अश्वमुख्ये २अश्वभेदे पु०। अस्य चोत्पत्तिकथा यथा "तत उच्चैःश्रवा नाम हयोऽभूच्चन्द्रपाण्डुरः" भाग० ७स्क० ७अ०। "स्वर्गतोऽश्वः समुत्पन्नस्तदा नृप बलात् किलेति" भागवतोक्तेरस्य समुद्रोत्पन्नत्वम्। "धन्वन्तरिस्ततो मद्यं श्रीर्देवी कौस्तुभोऽर्णवः। पयाद्रौ विमलश्चापि समुत्तस्थुः समन्ततः। उच्चैःश्रवा हयोरत्नं पीयूषं तदनन्तरमिति" हरिवं० २२० अ०। "उच्चैरुच्चैःश्रवास्तेन हयरत्नमहारि च" कुमा०। "उच्चैःश्रवाजवनिधेरिव जातवालः" "न चिरमुच्चैःश्रवसः पदक्रमम्" माघः। "उच्चैःश्रवसमश्वानाम्" गीतोक्तेः भगवद्विभूतित्वमस्य। "उच्चैःश्रवःसुतानश्वान् बलादश्वानवाहिवः" हरि०१४५अ०। "दिशांगजसुतान्नागान् हयांश्चोच्चैःश्रवोऽन्वयान्" हरि०१५६अ०। अस्य वा विसर्गस्य सत्वे उच्चैश्श्रवा अप्यत्र। अस्य द्विरू० अदन्तत्वमपि। "उच्चैःश्रवसस्तं तत् प्रणिपत्य समर्पितम्" देवीभा०। उच्चैरुच्चकं शब्दं शृणोति श्रु-असुन्। ३बधिरे त्रि०।

उच्चैर्घुष्ट न० घुष-भावे क्त उच्चैर्घुष्टम्। (ठेंढरा) सर्वजनश्राव्यघोषणायाम्।

उच्चैर्घोष पु० घुष-घञ् उच्चैर्घोषः। १सर्वजनश्राव्यशब्दे "यदुच्चैर्घोषस्तनयित्नुरिव दहति" शत०ब्रा०।७अ०। २उच्चैर्घोषान्विते क्रन्दनादौ ईश०। ३रुद्रमूर्त्तिभेदे। "उच्चैर्घोषाय क्रन्दयते" यजु०१६,१९।

उच्चैस् अव्य० उद्+चि-डैसि। १तुङ्गत्वे, २उन्नते ३महति ४अर्द्धदेशजाते "उच्चैरुदात्तः" पा०। "उच्चैरुच्चैःश्रवास्तेन" कुमा० "शिलोच्चयेऽपि क्षितिपालमुच्चैः" रघुः "विपक्षमुच्चैः संहितेषु रुच्चैः" किरा०। "चलता लेखया पादमुच्चैर्मूर्द्धसु विद्विषाम्" माघः। "उच्चैरधःपातिपयोमुचोऽपि" "जनोऽयमुच्चैःपदलङ्घनोत्सुकः" "उच्चैर्हिरण्मयं शृङ्गम्" कुमा०। या वः काले वहति सलिलोद्गारमुच्चैर्विमाना" मेघ०। "उच्चैरपास्त मन्दतामरसताम्" चन्द्रालो०। अस्य शब्दस्य गुणवाचितया प्रकर्षे तरप् तमप् च ततः अद्रव्यप्रकर्षे आमु। उच्चैस्तराम् उच्चैस्तमाम्। कोशातिशये "उच्चैस्तरां वक्ष्यति शैलराजः" कुमा०। द्रव्यप्रकर्षे तु नाम्। उच्चैस्तर उच्चैस्तम अत्युन्नतदेशादौ त्रि०। अप्रियस्योच्चैः कथने उच्चैस्+कृ-क्त्वा णमुल् ल्यप् च। उच्चैःकारम् उच्चैःकृत्वा उच्चैःकृत्य अपि यमावष्टे" सि०कौ०।

उच्छन्न त्रि० उद्+छद-क्त। लुप्तभावे आच्छन्ने। "उच्छन्नप्रच्छन्नवेदशाखामूलत्वेत्यादि विधिवाक्ये मथुरा० यथा च वेदस्य छिन्नमूलप्रच्छन्नतया उच्छिन्नत्वेऽपि अविगीतशिष्टाचारादेव तदनुमानं तथा समर्थनाय शब्दचि० मध्यप्रामाण्ये वादिपूर्वपक्षं निरस्य व्यवस्थापितं यथा। "स्यादेतत् स्मृत्याचारयोर्वेदमूलत्वे तन्मूलोच्छेदादिविवादस्थलेऽस्व तत्सिद्धं तथा हि वेदप्रमाणार्था महाजनपरिगृहीता च स्मृतिः, स्वार्थोपस्थित्यनन्तरं स्मृत्यर्थानुभावकवेदानुमानेऽपि प्रतीतिप्रायस्थात् साध्यप्रसिद्धार्थमुपजीव्यत्वाच्च स्मृतेरेवापूर्व्वादिवाक्यार्थज्ञानमस्तु किं वेदेन, तदर्थस्य स्मृतित एव सिद्धेः अपूर्वस्य शब्दैकवेद्यत्वेन स्मृतितोज्ञानस्य ज्ञापकत्वेनानुवादकतापत्तेश्च वा च स्मृत्यन्तरादिवन्मादिरेव स्मृतिधाराव्यवस्थितौ, अन्यथा मनुस्मृतेः पूर्वं तथापि वेदानुमानं न स्यात्। सर्वा च स्मृतिः स्मृतिजन्यवाक्यार्थप्रमाजनकत्वेन महाजनपरिगृहीतत्वेन च प्रमाणमिति मान्यपरम्परा। प्रथमा च स्मृतिः स्मृतिमूलं नानुमिता अनुमितवेदवत् तस्या अनुभावकत्वात्।

वेदार्थस्मृतिताप्रसिद्धिस्तु प्रसिद्धवेदमूलस्मृतिसाहचर्य्यभ्रमात् प्रत्यक्षवेदाबोधितलोभन्यायमूलस्मृताविव तान्त्रिकाणां लिङ्गाभासजन्यवेदमूलकत्वभ्रमात् सम्भवन्मूलान्तराणां वेदमूलत्वं कल्पयति। अथ स्मृतिनिबद्धवेदमूलकत्वप्रसिद्धिरपि महाजनपरिगृहीता एतस्य वा वेदमूलत्वनियमना अविगीतमहाजनपरिगृहीतवेदमूलत्वप्रसिद्धित्वात् प्रत्यक्षवेदमूलस्मृतौ तत्प्रसिद्धिवत्। एवं वेदार्थस्मृतिताप्रसिद्धिरपि अन्यथा महाजनपरिग्रहाभावे वेदस्मृत्योरपि प्रामाण्यं न स्यादिति चेत् न शूद्रहत्यादिस्मृतेस्तत्प्रसिद्धौ व्यभिचारात् क्लृप्तलोभादित एव तत्सम्भवात् विचारकाणां विप्रतिपत्तेश्च। तत्र तत्प्रसिद्धौ विगानं महाजनानामिति चेत् न तत्रापि मूलान्तरसम्भवाद्विप्रतिपत्तेश्च विगानमेव तेषाम्, अतएव स्मृतीनां न्यायमूलत्वे सम्भवति वेदमूलत्वप्रसिद्धावपि न वेदमूलत्वं, न च वेदमूलेयमिति ज्ञात्वा स्मृतेर्महाजनपरिग्रहात्तन्मूलत्वं वेदमूलेयमिति प्रथमं ग्रहीतुमशक्यत्वात् शक्यत्वे वा किमनुमानेन, न च वेदमूलत्वेन प्रकारेण महाजनपरिग्रहः, असिद्धेः, मन्वादिस्मृतित्वेन पूर्वं महाजनपरिग्रहेणोत्तरेषां परिग्रहादनुमानाद्युपपत्तेः। एवं होलकाचारेऽपि वेदलिङ्गेनैव कर्त्तव्यतानुमानोपपत्तेः किं वेदेन, तदर्थस्य लिङ्गादेवोपपत्तेः, [illegible]लौकिकविषयकशिष्टाचारस्य वेदमूलत्वदर्शनात् वेदानुमाने चाविगीतशिष्टाचारत्वेन भोजनाद्याचारोऽपि वेदमूलः स्यात् वेदं विनापि तत्कर्त्तव्यताधीसम्भवाच्च तदर्थवेद इति इहापि तुल्यम्। आचारकर्त्तव्यतानुमानयोरनादित्वेनाचाराणां कर्त्तव्यतानुमानमूलकत्वानाद्यपरम्परा। न च पूर्व्वानुमानसापेक्षमुत्तरानुमानमिति स्वतन्त्रप्रमाणमूलकत्वाभावात् साध्यव्याप्तिपक्षधर्मताज्ञत्वेन पूर्वेषां स्वतन्त्रप्रमाणत्वात्। नापीतरप्रामाण्याधीनं सर्व्वस्य प्रामाण्यमिति न निरपेक्षत्वं, प्रत्यक्षादेरपि तथात्वापत्तेः। एतेन विवादपदमाचारो निरपेक्षप्रमाणमूलकः अविगीतमहाजनाचारत्वात् प्रत्यक्षवेदमूलाचारवदिति निरस्तम् अनुमानस्य निरपेक्षप्रमाणत्वात् प्रमाणमूलत्वेनैवबुद्धेरुपपत्तेः निरपेक्षत्वस्य गौरवेणाप्रयोजकत्वाच्च। न च सापेक्षत्वेन न प्रमाणता व्याप्त्यादिसत्त्वात् अन्यथा प्रमाणनैरपेक्ष्यस्य वैयर्थ्यात्। नचाचारे वेदमूलकत्वप्रसिद्धेस्तदनुमानम्, अंशे व्यभिचारादनुपपत्तेश्च। न च वेदमूलत्वेन महाजनपरिग्रहात्तथा। न हि वेदमूलोऽयमिति ज्ञात्वा महाजनानां तत्परिग्रहः वेदमूलत्वस्य प्रथमं ज्ञातुमशक्यत्वात् शक्यत्वे वा किमनुमानेन। न च वेदमूलत्वेन महाजनपरिगृहीतोऽयमाचारः इति ज्ञात्वा तत्र महाजनपरिग्रहः, गौरवात् असिद्धेश्च पूर्व्वमहाजनपरिग्रहादेवोत्तरेषां परिग्रहानुमानोपपत्तेः। तादृशस्मृत्याचारयोर्वेदमूलत्वेन व्याप्तेर्वेदमूलत्वसिद्धिरिति चेत् न सम्भवन्मूलान्तरस्योपाधित्वात् अन्यथा लोभन्यायमूलस्मृतेस्तत्प्रसङ्गः। अस्तु स्मृत्याचारयोरनादित्वं न चाचारात् स्मृतिः स्मृत्या चाचारः इत्यन्धपरम्परा मूलीभूतप्रमाणाभावादिति वाच्यं स्मृत्याचारयोरुभयोरपि प्रमाणत्वात्। अन्यथा न ततो वेदानुमानमिति।

उच्यते प्रलये पूर्व्वस्मृत्याचारयोरुच्छेदात् सर्गादौ नित्यसर्व्वज्ञेश्वरप्रणीतवेदमूलत्वं स्मृत्याचारयोः, अन्यथा मूलाभावेनान्धपरम्पराप्रसङ्गः। न च मन्वादीनामतीन्द्रियार्थदर्शित्वं तदुपायश्रवणादेस्तदानीमसत्त्वात् पूर्व्वपूर्व्वसर्गसिद्धसर्व्वज्ञा एव त इति चेत् न प्रमाणाभावात्। स्मृत्याचारयोः प्रमाणमूलकत्वमेव तत्कल्पकमिति चेत् न प्रतिसर्गं तेषामन्यान्यकल्पने गौरवमित्येकस्यैव नित्यसर्व्वज्ञस्य कल्पनात्। न च स्मृतय एव तत्प्रणीताः तासां मन्वादिकर्त्तृकत्वेन स्मृतौ बोधात्, स्मृतावेव स्मृतीनां वेदमूलत्वस्मरणाच्च। एवञ्च स्मृत्याचारयोर्महाजनपरिग्रहाद्वेदमूलत्वसाधकमपि भवति प्रमाणम्। अतएव "प्रतिमन्वन्तरं चैषा श्रुतिरन्याऽभिधीयत" इत्यागमोऽपि। एवञ्च पूर्व्वप्रत्यक्षवेदमूलावेव स्मृताचारौ अपि च कालक्रमेणायुरारोग्यबलश्रद्धाग्रहणधारणादिशक्तेरहरहरपचीयमानत्वात् तदध्ययनविच्छेदात् शाखोच्छेदात् स्मृत्याचाराभ्यामेव कर्त्तव्यतामधिगम्य प्रवृत्तिः। नन्वेवं स्मृतिरस्तु वेदमूला मङ्गलाद्याचारस्तु ईश्वरादेव भविष्यति घटशिल्पादिसम्प्रदायवदिति चेत् न बहुव्यापारघटितस्य तत्तदाचारस्य गुरुत्वेन "मङ्गलमाचरेदित्यादिवाक्यस्यैव लाघवेन कल्पनात्"।

"शिष्टाचारशौचेषु परपाकोपजीविषु उच्छवृत्तिभिक्षुभिक्षुकाश्रमभोजिषु" सुश्रुतः।

**उच्छल** त्रि० उद्+शल+अच्। आधारातिक्रमेण सर्व्वतः प्लुते। धातु। उच्छलत् तत्रैव "घटोच्छलच्छक्रजलानुलेन" माघः "स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटा" काव्यप्र०। ल्युट्। उच्छलन परितः प्लवने न०।

**उच्छादन** न० उद्+छद+णिच्+ल्युट्। आच्छादने

२गन्धद्रव्यहारा देहमार्जने च अमरटी० "स्नापनोच्छादनेन" रामा० ।

उच्छास्त्र त्रि० उद्गतं शास्त्रात् प्रा०स० । १अतिक्रान्तशास्त्रे २शास्त्रविरुद्धेऽधर्मकृते च । उत्क्रान्तं शास्त्रं यस्य । शास्त्रातिक्रमयुक्ते उच्छास्त्रं यथा तथा वर्त्तते उच्छास्त्रवर्त्तिन् शास्त्रातिक्रमेण यथेष्टचारिणि स्त्रियां ङीप् । "न राज्ञः प्रतिगृह्णीयात् क्रूरस्योच्छास्त्रवर्त्तिनः । या० स्मृ० । "इमस्योच्छास्त्रवर्त्तिनः" भाग० ७स्क०अ०

उच्छासन त्रि० उत्क्रान्तः शासनम् । शासनातिक्रान्तरि ।

उच्छिख त्रि० उद्गता शिखा यस्य प्रा०ब० । १उन्नतार्च्चिषि २उद्गतार्चिषि वह्नौ पु० "भास्वत्योत्सर्पवलयिनि पुरः पावकस्योच्छिखस्य" रघुः । ३तक्षकनागकुलजाते नागभेदे पु० "तक्षकस्य कुलेजातान् प्रवक्ष्यामि निबोध तान्" इत्युपक्रम्य "उच्छिखः शरभोभङ्गोबिल्वतेजा विरोहणः" भा० आ०५७ अ० ।

उच्छिङ्खन न० उद्+शिघि आघ्राणे भावे ल्युट् । नासिकावायुनाऽन्तःस्थितकफादिनिःसारणे । "उच्छिङ्खनेन कर्त्तव्योऽदरिमस्तुजः कफः" । "नेत्रे विमल्बिनि विधिर्विहितः पुरस्तादुच्छिङ्खनं शिरसि चार्षमसेवनञ्च" सुश्रु० ।

उच्छित्ति स्त्री उद्+छिद्-भावे क्तिन् । समूलोत्पाटने अत्यन्तमर्दने । "यदा तदो तदुच्छित्तिः प्रवर्धते" का०कलन् । "मङ्गलः सर्ववर्णानां प्रजानोपर्म्मन्कर्म्मेषाम्" । प्रजानामपि चोच्छित्तिर्न्नपश्यमहेतुका" मनु० "अविनाशी वा अरे अयमात्माऽनुच्छित्तिधर्मा" इ० उ०२१ ।

उच्छिन्न त्रि० उद्+क्त । १समूलं नाशिते २छिन्ने ।

उच्छिरस् त्रि० उन्नतं शिरोऽस्य । १उन्नते २महाकुलादिना उन्नतमस्तके महिमान्विते "मैनाकमपि पितृर्व्युच्छिरसोऽभिलाषम्" कुमा० शौर्य्योदार्य्यादिना हि लोक उन्नतशिरा भवति अपकृष्टकर्मणा तु अवनतशिराः प्रसिद्धः

उच्छिलीन्ध्र त्रि० उत्थितं शिलीन्ध्रम् । १कवाके । २विकसितशिलीन्ध्रयुक्ते त्रि० । "उच्छिलीन्ध्रामवन्ध्यामिति" मेघदू० ।

उच्छिष्ट त्रि० उद्+शिष-क्त । १भुक्तावशिष्टे, २त्यक्ते च । अर्था०श्च । ३अशनशेषे भुक्तान्ने । तस्योच्छिष्टस्याभक्ष्यता आपस्तम्बप्रभक्ष्यशब्दे २७८ पृष्ठे उक्ता तत्रायं भेदः वर्णविशेषस्योच्छिष्टभोजने पापतारतम्यात् प्रायश्चित्ततारतम्यं प्रायश्चित्तविवेकादावुक्तं यथा "अनुच्छिष्टस्तु यो भुङ्क्ते सो-भुङ्क्ते वित्तभाजने । एवं वैवस्वतः प्राह भुक्त्वा चान्द्रायणं चरेत्" भक्ष्यविषयनम् । "तत्र ज्ञानाभ्यासविषयमिति" प्रा०वि० । "ब्राह्मणोच्छिष्टभोजने महाव्याहृतिभिरभिमन्त्र्यापः पिबेत्, क्षत्रियोच्छिष्टभोजने ब्राह्मीरसविपक्वेन लघ्वं क्षीरेण वर्त्तयेत्, वैश्योच्छिष्टभोजने त्रिरात्रोपोषितो ब्रह्मवर्चसी पिबेत्, शूद्रोच्छिष्टभोजने सुरामद्योदकपाने च षड्रात्रभोजनं चान्द्रायणं वा अभिमन्त्रितं जलं पीत्वोपवसेत्" यज्ञवि० "प्रतरूपत्वात् एतद्ब्राह्मणस्य ब्राह्मणाद्युच्छिष्टाशनेऽज्ञानतः सकृत् एवं क्षत्रियादेः स्वाधमवर्णोच्छिष्टाशने स्वाधमवर्णोत्तमेनैतदेव यथायथमूह्यम् शूद्रोच्छिष्टाशने तु ब्राह्मणस्य ज्ञानतः सकृद्विषयम् षड्रात्राभोजनम्" प्रा०वि० । यथा पराशरः । "अज्ञानाद्भुञ्जते शूद्रोच्छिष्टं द्विजोत्तमः । त्रिरात्रोपोषितोभूत्वा पञ्चगव्येन शुध्यति" । "एतद्विद्वज्जोत्तमपदाद्ब्राह्मणविषयम् । क्षत्रियादिपरत्वे वक्ष्यमाणविष्णुवचनविरोधात् । एतदपि सकृद्विषयं ज्ञाने च त्रिरात्रेऽघमर्षणमपि जपनीयम्" प्रा०वि० । यथा सुमन्तुः । "शूद्रोच्छिष्टभोजने त्रिरात्रमघमर्षणञ्च जपेत्" "चान्द्रायणन्तूभयत्रैव ज्ञानाभ्यासे क्षत्रियादीनान्तु त्रिपादपादहानिकल्प्या । क्षत्रियस्य च ब्राह्मणोच्छिष्टाशने ब्राह्मणोक्तप्रायश्चित्तार्द्धं, वैश्यस्य ततोऽप्यर्द्धम् । एवं वैश्य शूद्रयोरपि आपेक्षया पूर्व्ववर्णत्वेनोह्यम् उभयो वमने यथाक्रमेण ह्रसितप्रायश्चित्तदर्शनात्" प्रा०वि० । यथा "अन्यानां भुक्तशेषन्तु भक्षितं यैर्द्विजातिभिः । चान्द्रं कृच्छ्रं तदर्द्धञ्च क्रमात्तेषां विशोधनम्" । तथा विष्णुरपि न्यायप्राप्तमेवार्थमाह । "आमश्राद्धाशने त्रिरात्रं, वर्त्तेत ब्राह्मणः शूद्रोच्छिष्टाशने वमनं कृत्वा सप्तरात्रं वैश्योच्छिष्टाशने पञ्चरात्रम्, राजन्योच्छिष्टाशने त्रिरात्रम्, राजन्यः शूद्रोच्छिष्टाशने पञ्चरात्रम् वैश्योच्छिष्टाशने । त्रिरात्रं वैश्यः शूद्रोच्छिष्टाशने च" "जल वमनं कृत्वा ययथा वर्त्तेतेति सर्व्वत्रान्वेति" प्रा०वि० ।

"चण्डालपतितादीनामुच्छिष्टान्नस्य भक्षणे । द्विजः शुध्येत् पराकेण शूद्रः कृच्छ्रेण शुध्यति" अङ्गिराः "एतज्ज्ञानविषयं ज्ञानतो द्विगुणादिकम् प्रा०वि० । मनुनापि शास्त्राभ्यासोक्तप्रकरणे । "शुक्तं पर्य्युषितं चैव शूद्रस्योच्छिष्टमेव च "क्रूरस्योच्छिष्टभोजिन" इति चोक्तम् । शूद्रस्य तु द्विजोच्छिष्टभोजने न दोषः । द्विजोच्छिष्टन्तु भोजनमिति" तत्र मनुना तद्वृत्तित्वोक्तेः । एकपङ्क्तिस्थमध्ये

केनचिदपि भोजनपात्रत्यागे तत्पङ्क्तिस्थानां सर्वेषामुच्छिष्टवत् यथा "अप्येकपङ्क्त्यां नाश्नीयात् संहतः स्वजनैरपि। कोहि जानाति किं कस्य प्रच्छन्नं पातकं महत्। भस्मस्तम्भजलद्वारमार्गैः पङ्क्तिश्च भेदयेत्" व्यासः। जलादिना पङ्क्तिभेदाकरणे तु मनुः "एकपङ्क्त्युपविष्टानां विप्राणां भोजने क्वचित्। यद्येकोऽपि त्यजेत्पात्रं शेषमन्नं विवर्जयेत्। मोहात् भुञ्जीत यः पङ्क्त्यामुच्छिष्टस्य भोजनम्। प्राजापत्यं चरेद्विप्रः बालः सान्तपनन्तथा"। "विड़ालादिभिरुच्छिष्टं दुष्टमन्नं विवर्जयेत्, अन्यत्र हिरण्योदकस्पर्शात्" देवलः अज्ञानादुच्छिष्टादिभोजने तदुत्तार्य्यमित्याह "अभोज्यमन्नं नात्तव्यमात्मनः शुद्धिमिच्छता। अज्ञानाद्भुक्तमुत्तार्य्यं शोध्यं वाप्याशु शोधनैः" वमनपक्षेऽपि अल्पप्रायश्चित्तं भवत्येव "आमश्राद्धाशने त्रिरात्रं पयसा वर्त्तेत ब्राह्मणः, शूद्रोच्छिष्टाशने वमनं कृत्वा सप्तरात्रमुपवसेत्" विष्णुना वमनोत्तरमपि प्रायश्चित्तविधानात् "अन्त्यानां भुक्तशेषन्तु भक्षयित्वा द्विजातयः। चान्द्रं कृच्छ्रं तदर्द्धं तु ब्रह्मक्षत्रविशां विधिः" मिता० आप० वचनन्तु ब्राह्मणस्य सकृद्भ्रानविषयम् बलात्कारानुसारेऽप्यन्तेतरतास्वूलाद्युच्छिष्टपरमिति" प्रा०त० रघु०। अन्त्यजैः बलात्कारिते उच्छिष्टादेर्भोजनेऽपि दोषएव। "दासीकृतोबलान्म्लेच्छचाण्डालाद्यैश्च दस्युभिः। अशुभं कारितः कर्म्म गवादेः प्राणहिंसनम्। उच्छिष्टमार्ज्जनञ्चैव तथा तस्यैव भक्षणम्" इत्याद्यभिधाय "त्र्याहोषिते द्विजातौ तु प्राजापत्यं विशोधनम्। चान्द्रायणन्त्वाहिताग्नेः पराकमथ वा भवेत्" देवलोक्तेः। उच्छिष्टचाण्डालस्पर्शेऽपि दोषः" प्रा० त० उक्तः यथा। "आपस्तम्बः 'भुक्तोच्छिष्टस्त्वनाचान्तश्चाण्डालैः श्वपचेन वा। प्रमादात् स्पर्शनं गच्छेत् तत्र कुर्य्याद्विशोधनम्। गायत्र्यष्टसहस्रन्तु द्रुपदां वा शतं जपेत्। त्रिरात्रोपोषितो भूत्वा पञ्चगव्येन शुध्यति। भुक्तोच्छिष्टोऽन्त्यजैः स्पृष्टः प्राजापत्यं समाचरेत्। अर्द्धोच्छिष्टे स्नातः पादः पाद आचामने तथा"। "प्राजापत्यं स्नाने अर्द्धोच्छिष्टोयेनाद्यग्रासः आस्ये निक्षिप्तः न तु निगीर्णः" प्रा० त० रघु०। काश्यपः 'श्वसूकरान्त्यचाण्डालमद्यभाण्डरजस्वलाः। यद्युच्छिष्टः स्पृशेत्तत्र कृच्छ्रं सान्तपनं चरेत्। "एतज्ज्ञानाभ्यासे सान्तपने धेनुद्वयम्"। प्रा० त० ब्रह्मपुराणे "उच्छिष्टेन तु शूद्रेण विप्रः स्पृष्टस्तु तादृशः। उपवासेन शुद्धिः स्यात् शुना संस्पृष्टएव वा। उच्छिष्टेन तु विप्रेण विप्रःस्पृष्टस्तु तादृशः। उभौ स्नानं प्रकुर्वन्तं सद्य एव समाहितौ"। "अनुच्छिष्टब्राह्मणस्य नक्तमिति" प्रायश्चित्तविवेकः।

"सर्वमन्नमेकतोद्धृत्य उच्छिष्टसमीपे दर्भेषु" श्रा० त० गोभिलः। ३दत्तावशिष्टे च। "उच्छिष्टे सतिलान् दर्भान् दक्षिणाग्रान् विभाजयेत्" श्रा० त० ब्रह्मपु०। "असंस्कृतप्रमीतानां, योगिनां, कुलयोषिताम्। उच्छिष्टं भागधेयं स्यात् दर्भेषु विकिरश्च यः" श्रा० त० ब्रह्मपु०। "प्रेतश्राद्धे यदुच्छिष्टं गृहे पर्य्युषितं च यत्। दम्पत्योर्भुक्तशेषञ्च न भुञ्जीत कदाचन" श्रा० त० स्मृतिः। "उच्छिष्टं पाकपात्रेऽवशिष्टम्, गृहे उपरागे पर्य्युषितं, दम्पत्योराश्रमस्वामिनोर्भोजनानन्तरं पाकस्थाल्यामवशिष्टमिति" श्राद्धचिन्तामणिः। ४मधुनि। मक्षिकोच्छिष्टत्वात्तस्य तथात्वम्। "उच्छिष्टं शिवनिर्माल्यम्—श्राद्धे प्रशस्यते" पु०। उच्छिष्टमोदनः।

**उच्छिष्टगणेश** पु० तन्त्रोक्ते गणपतिभेदे। तस्य मन्त्रध्यानादिकं तत्रैव दृश्यम् "भुक्तोच्छिष्टोजपेद्विद्यां गणेशस्य सदा प्रियः" "उच्छिष्टस्त्वशुचिर्भूत्वा जपपूजनमाचरेत्"। अनुच्छिष्टो न सिध्येत्तु तस्मादेवं समाचरेत्"। "उच्छिष्टोगणेशानो यक्षराजेन धीमता" इति च तत्रैव

**उच्छिष्टचाण्डालिनी** स्त्री तन्त्रोक्ते मातङ्गीदेवीमूर्त्तिभेदे। तस्या मन्त्रध्यानादिकं तन्त्रसारे दृश्यम्। "भोजनानन्तरं देवि! विनैवाचमने कृते" इत्युपक्रम्य "उच्छिष्टेन बलिं दत्त्वा जपेत्सन्नतमानसः। उच्छिष्टेन च कर्त्तव्यो जपोऽस्याः सिद्धिमिच्छता। उच्छिष्टया रामस्य जायन्ते सर्वसिद्धयः" इति च तत्रैव।

**उच्छिष्टभोजन** पु० उच्छिष्टं यज्ञशेषावशिष्टं भोजनमस्य। १यज्ञशेषावशिष्टस्य भक्षके "यज्ञशिष्टाशिनः सन्तोमुच्यन्ते सर्वकिल्बिषैः" गीतया तथा भोजने किल्बिषतारकत्वकीर्त्तनात् तथा भोजनस्य कर्त्तव्यत्वम्। उच्छिष्टं देवनैवेद्यावशिष्टं भोजनमस्य। २देवनैवेद्यभोजके च। "तैर्दत्तानप्रदायैभ्योयो भुङ्क्ते स्तेन एव सः" गीतायां देवानिवेद्य दोषश्रवणात् देवाय दत्त्वैव भोज्यता।

**उच्छिष्टभोजिन्** त्रि० उच्छिष्टं इतरस्य भुक्तावशिष्टं भुङ्क्ते भुज–णिनि। निषिद्धोच्छिष्टभोक्तरि" "क्रूरस्योच्छिष्टभोजिनः" मनुः। [वर्त्तते छद–ल्युट्। (मोम) सिक्थके।

**उच्छिष्टमोदन** न० उच्छिष्टं भ्रमरोच्छिष्टं मधु तेन मोदते

**उच्छिष्य** त्रि० उद्+शिष–वेदे नि० क्यप्। अवशेषणीये

शृम्भितक्षुद्रविमकथितरुदिताद्दीनि विशेषानभिवहन्त्यः शरीरं धारयन्ति "षोडशकरजोगाढः षोच्छ्वासः शिथिलः स्मृतः"। "शीतपादकरोच्छ्वासम्लानश्वासश्च यो भवेत्। काकोच्छ्वासश्च यो मर्त्यस्तं धीरः परिवर्जयेत्" सुश्रु०। "सन्ततोच्छ्वासिनं क्षीणं नरं नाशयति ज्वरः" सुश्रु०। उच्छ्वासश्च दीर्घनिश्वासः स च यावत्कालेन श्वासरूपप्राणक्रिया भवति ततोऽल्पकालेन, दीर्घदेशपर्य्यन्तप्राणवायोर्बहिर्गमने भवति। "उष्णोच्छ्वासं समधिकतरोच्छ्वासिना दूरवर्त्ती" मेघदू०। "तत्रुच्छ्वासोऽव्रतं प्राण भाह्य" श्रात्मा० ४,८,२९।

उच्छ्वासिन् त्रि० उद्+श्वस–णिनि स्त्रियां ङीप्। १ऊर्द्ध्वश्वासयुक्ते २दीर्घनिश्वासयुक्ते। "समधिकतरोच्छ्वासिना" मेघ०। ४उद्गते च "उच्छ्वासिकालाञ्जनरागमक्ष्णोः" कुमा०। "समधिकतरोच्छ्वासिना" मेघ०। "५ऊर्द्ध्वश्वासयुक्ते मुमूर्षौ" "यत्रैतदूर्द्ध्वोच्छ्वासी भवति" बृ०उ० उत्क्रमणशब्दे दृश्यम्।

उछ उच्छे (कणशआदाने) तुदा० इदित् पर०सक०सेट्। उच्छति औच्छीत्। उच्छाम्–बभूव आस चकार। उच्छिता उच्छात् उच्छिष्यति औच्छिष्यत्। उच्छः उच्छनम् उच्छितः। प्र+मार्जने प्रोच्छनं (पोछा) प्रोञ्छितः।

उछ बन्धे समापने च विवासे मा० तुदा०पर०सक०सेट्। उच्छति औच्छीत् उच्छाम् बभूव आस-चकार। उच्छिता उच्छात् उच्छिष्यति औच्छिष्यत्। णिच् उच्छयति ते औतिच्छत् औचिच्छत् त। सनि उतिच्छिषति उचिच्छिषति। ईदित् तेन निष्ठाया नेट्। उष्टः।

उज्जय(यि)नी स्त्री विक्रमादित्यराजधान्याम् अवन्तीपुर्य्याम् अवन्तीशब्दे विवृतिः। "सौधोत्सङ्गप्रणयविमुखो मास्म भूरुज्जयिन्याः" मेघदू०। इयञ्च लङ्कावधिमेरुपर्य्यन्तमध्यरेखास्थपुरीमध्येऽन्यतमा यथाह श्रीपतिः "लङ्का कुमारी नगरी च काञ्ची पानाटमद्रिश्च सितः षडास्यः। श्रीवत्सगुल्मं च पुरी ततश्च माहिष्मती चोज्जयिनी प्रसिद्धा। स्यादाश्रमोऽप्याश्वगरं सुरम्यं ततः पुरं षट्टशिवाभिधानम्। श्रीगर्गराटं च सरोहिताख्यं स्थानेश्वरं शीतगिरिः सुमेरुः। इतीव याम्योत्तरगा धरायां रेखामिमां गोलविदो वदन्ति। अन्यानि रेखास्थितिभाञ्जि लोके स्थानानि तज्ज्ञैः स्फुटभेदनानि"। सू०सि०तु सामान्येनोक्तम् यथा "राक्षसालयदेवौकःशैलयोर्मध्यसूत्रगाः। रोहीतकमवन्ती च तथा सन्निहितं सरः"। "राक्षसालयो लङ्का देवानां स्वरूपः पर्वतो मेरुस्तयोर्मध्ये ऋजुसूत्रं तत्र स्थिता देशा रेखाख्याः। लङ्कादक्षिणस्थलस्यास्त्युपयुक्तात्तत्र मनुष्यागोचरत्वादिति बोध्याः। ग्रामार्थमुदाहरति। रोहीतकमिति। यथा रोहीतकं नगरमवन्त्युज्जयिनी सन्निहितं सरः कुरुक्षेत्रम्। चकारस्तयेतव्यवयवः। तथान्यानि परस्परं सन्निहिततया ज्ञेयानि" र०नाथ०। "यथोज्जयिन्या कुचतुर्थभागे प्राच्यां दिशि स्याद्यमकोटिरेव" सू०सि०।

उज्जयन्त न० उद्+जि–झ। रैवतपर्वते हेम०।

उज्जानक पु० उतङ्कमुनेराश्रमान्तिके समुद्रसविधे मरुभूमिषु वालुकामयदेशभेदे। यत्र हि मधुपुत्रो धुन्धुरुतङ्कप्रार्थितेन कुवलाश्वेन विष्णुतेजसा बंहितवीर्य्येण निपातितः तत्कथा यथा भा०हरिवं० ११अ०। "ममाश्रमसमीपे वै समेषु मरुधन्वसु। समुद्रो वालुकापूर्ण उज्जानक इति श्रुतः। देवानामवध्यश्च महाकायो महाबलः। अन्तर्भूमिगतस्तत्र वालुकान्तर्हितो महान्। राक्षसस्य मधोः पुत्रो धुन्धुर्नाम महासुरः। शेते लोकविनाशाय तप आस्थाय दारुणम्"। इत्युपक्रम्य तद्वधोपाख्यानं तत्तत् कथाधुन्धुमारशब्दे दर्शयिष्यते २उत्तरदेशस्थेऽपि देशभेदे "एतद्द्वारं महाराज! माणसस्य प्रकाशते" इत्युपक्रम्य "एष उज्जानको नाम यवक्रीर्यत्र शान्तवान्" भा०व०१३०अ० देशभेद उक्तः।

उज्जासन न० उद्+जस–णिच्–ल्युट्। १मारणे वधे एतद्योगे कर्मणः संबन्धत्वविवक्षया षष्ठी प्रतिपदविहिततया च तया षष्ठ्या न समासः "चौरस्योज्जासनम्" सि०कौ०। "प्रतिपदविहिता षष्ठी न समस्यते" वार्त्ति०। "प्रोक्ता प्रतिपदा षष्ठी समासस्य निवृत्तये" भर्तृ० तथैवोक्तम्।

उज्जिघ्र त्रि० उद्+घ्रा–श। आघ्राणकर्त्तरि।

उज्जिति स्त्री उद्+जि–क्तिन्। उत्कृष्टजये "अग्नीषोमयोरुज्जितिमनुज्जेषम्" यजु० २,१५। "उज्जितिमनु षष्ठतविप्रेन हविःस्वीकारयुक्तमुत्कृष्टजयम्" वेददी०। "सोमस्योज्जितिमित्यस्मिन्वचसि तिः" कात्या० १०,७,१४। "उज्जितिभ्यो योऽसरो माहेन्द्रः" कात्या० १४,५,२१। अग्नीषोमयोरुज्जितिमनूज्जेषम्। 'अग्नीषोमयोरुज्जितिमनूज्जयति" इन्द्राग्न्योरुज्जितिमनूज्जयति" शत०ब्रा० १,८,२,१,२,२,४। २उज्जयलिङ्गयुक्तमन्त्रकरणकाहुतौ च। "अथोज्जितीः" इत्युपक्रम्य "अग्निरेकाक्षरेण प्राणमुदजयत्तमुज्जेषम्" इत्यादि शत०ब्रा० २,४,१६,१७ उक्तम्।

उज्जिहान त्रि० उद्+हा–शानच्। उद्गच्छति।

धरिन्दमः" "यथोत्तरा च कन्या च स्नुषा मम तदा" "यद्युत्तरोऽयं संग्रामे विजेष्यति महारथान्" इति च। उत्तरा च अभिमन्योः पत्नी तत्कथापि तत्रैव ७१,अ०। "उत्तरां प्रतिगृह्णातु सव्यसाची धनञ्जयः" इति विराटेनोक्ते "प्रतिगृह्णाम्यहं राजन्! स्नुषां दुहितरं तव" "स्नुषार्थे उत्तरां राजन्! प्रतिगृह्णामि ते सुताम्" "तां प्रत्यगृह्णात् कौन्तेयः सुतस्यार्थे धनञ्जयः। सौभद्रस्यानवद्याङ्गीं विराटतनयां तदा। तत्रातिष्ठन् महाराजो रूपमिन्द्रस्य धारयन्। स्नुषां तां प्रतिजग्राह कुन्तीपुत्रो युधिष्ठिरः। प्रतिगृह्य च तां पार्थः पुरस्कृत्य जनार्द्दनम्। विवाहं कारयामास सौभद्रस्य महात्मनः" ७२अ०। २१ अप्रष्टकवचने "अत्रात्र देवी वचनाधिकारिणी तस्योत्तरं दापि! ददासि का सती" नैष०। उत्तरकालभावित्वादुत्तरत्वाङ्गास्य तथात्वमजिज्ञासितावधानतया चास्य निग्रहस्थानत्वं तदभिप्रायेण उक्तश्लोकेन निग्रहार्थकाक्षेपः कृतः।

**उत्तरकाण्ड** न० वाल्मीकिरामायणान्तर्गते सप्तमे काण्डे।

**उत्तरकाल** पु० कर्म्म०। भविष्यत्काले क्रमिकर्म्मणा तस्य गौणकालत्वमाह "एवमागामिवागीयसुखकालादधस्तनः। सकाशादुत्तरोनीचः कालः पूर्वस्य कर्म्मणः" हरिहरः।

**उत्तरकुरु** पु० नववर्षात्मकस्य जम्बुद्वीपस्य वर्षभेदे। वर्षाणां संस्थितिः सि०शि० उक्ता

"लङ्कादेशाद्धिमगिरिरुदग्घेमकूटोऽथ तस्मात् तस्मात्तस्मान्निषध इति ते सिन्धुपर्यन्तदैर्घ्याः। एवं सिद्धादुदगपि पुराच्छृङ्गवच्छुक्लनीलाः वर्षाख्येषां जगुरिह बुधा अन्तरे क्षोणिदेशान्। भारतवर्षमिदं स्मृदगस्मात् किन्नरवर्षमतो हरिवर्षम्। सिद्धपुराच्च तथा कुरु, तस्माद्विदि हिरण्मयरम्यकवर्षे। माल्यवांश्च यमकोटिपत्तनाद्रोमकाच्च किल गन्धमादनः। नीलवन्निषधावधी च तावन्तराचमनयोरिलावृतम्। माल्यवज्जलधिमध्यवर्ति यत् तत्तु भद्रतुरगं जगुर्बुधाः। गन्धशैलजलराशिमध्यगं केतुमालकमिलाकलाविदः। निषधनीलसुगन्धसुमाल्यवैरनिलावृतमावृतमाबभौ। अमरकेलिकुलाकुलमाकुलं रुचिरकाञ्चनचित्रमहीतलम्"। "अत्र भूगोलस्यार्धमुत्तरं जम्बूद्वीपम्। तस्य क्षाराब्धेश्च सन्धिर्निरक्षदेशः। तत्र लङ्का रोमकं सिद्धपुरं यमकोटिरिति पुरचतुष्टयं भूपरिधिचतुर्थांशान्तरं किल कथितम्। तेभ्यः पुरेभ्यो यस्यां दिशि मेरुः सोत्तरा। अतो लङ्काया उत्तरतो हिमवान् नाम गिरिः पूर्वापरसिन्धुपर्यन्तदैर्घ्योऽस्ति। तस्योत्तरे हेमकूटः। सोऽपि समुद्रपर्यन्तदैर्घ्यः। तथा तदुत्तरे निषधः। तेषामन्तरे यथोत्तरम् भारतकिन्नरहरिवर्षाणि। एवं सिद्धपुरादुत्तरतः शृङ्गवान् नाम गिरिः। ततः श्वेतगिरिः। ततो नीलगिरिरिति। तेऽपि सिन्धुपर्यन्तदैर्घ्याः। तेषामन्तरे च वर्षाणि। तत्रादौ कुरुवर्षम्। तदुत्तरे हिरण्मयम्। ततो रम्यकमिति। अथ यमकोटेरुत्तरतो माल्यवान् नाम गिरिः। स तु निषधनीलपर्यन्तदैर्घ्यः। तस्य जलधेश्च मध्ये भद्राश्वं वर्षम्। एवं रोमकादुत्तरतो गन्धमादनः। तस्य जलधेश्च मध्ये केतुमालम्। एवं निषधनीलमाल्यवद्गन्धमादनैरावृतमिलावृतं नाम नवमखण्डम्। सा स्वर्गभूमिः। अतस्तत्र देवक्रीडास्थानानि" प्रमि०। तत्र प्रधानगा नदी भद्राख्या "चक्षुश्च केतुमालञ्च भद्राख्या चोत्तरान् कुरून्"। सि०शि०। भा०उ०प०७अ० तद्वर्णितं यथा "दक्षिणेन तु नीलस्य मेरोः पार्श्वे तथोत्तरे। उत्तराः कुरवो राजन् पुण्याः सिद्धनिषेविताः। तत्र वृक्षा मधुफला नित्यपुष्पफलोपगाः। पुष्पाणि च सुगन्धीनि रसवन्ति फलानि च। सर्व्वकामफलास्तत्र केचिद्वृक्षा जनाधिप!। अपरे क्षीरिणो नाम वृक्षास्तत्र नराधिप। ये क्षरन्ति सदा क्षीरं षड्रसाममृतोपमम्। वस्त्राणि च प्रसूयन्ते फलेष्वाभरणानि च। सर्व्वा मणिमयी भूमिः सूक्ष्मकाञ्चनवालुका। मणिरत्ननिभं रम्यं वज्रवैदूर्य्यसन्निभम्। भूभागं दृश्यते तत्र पद्मरागसमप्रभम्। सर्व्वर्त्तुसुखसंस्पर्शा निष्पङ्का च जनाधिप। पुष्करिण्यः शुभास्तत्र सुखस्पर्शा मनोहराः। देवलोकच्युताः सर्व्वे जायन्ते तत्र मानवाः। शुक्लाभिजनसम्पन्नाः सर्व्वे सुप्रियदर्शनाः। मिथुनानि च जायन्ते स्त्रियश्चाप्सरसोपमाः। तेषान्ते क्षीरिणां क्षीरं पिबन्त्यमृतसन्निभम्। मिथुनं जायते काले समन्तत्र प्रवर्द्धते। तुल्यरूपगुणोपेतं समवेषं तथैव च। एकमेवानुरूपञ्च चक्रवाकसमं प्रभो!। निरामयाश्च ते लोका नित्यं मुदितमानसाः। दशवर्षसहस्राणि दशवर्षशतानि च। जीवन्ति ते महाराज! न चान्योऽन्यं जहत्युत। भारुण्डा नाम शकुनास्तीक्ष्णतुण्डा भयानकाः। तान्निर्हरन्तीह मृतान् दरीषु प्रक्षिपन्ति च। उत्तराः कुरवो राजन्! व्याख्यातास्ते समासतः"। तेषाञ्च पुंस्त्वं क्लीवात्वञ्च उक्तवाक्येभ्यः। भा०स०२७२अ० अर्ज्जुनोत्तरदिग्विजये "इदं पुरं यः प्रविशेद्ध्रुवं न स भवेन्नरः। प्रीयामहे त्वया वीर! पर्य्याप्तो विजयस्तव। न चात्र किञ्चिज्जेतव्य-

ल्गुनात् प्रदृश्यते । उत्तराः कुरवोह्येते नात्र युद्धं प्रवर्त्तते । प्रविष्टोऽपि हि कौन्तेय ! नेह द्रक्ष्यसि किञ्चन । नहि मानुषदेहेन शक्यमत्राभिवीक्षितुम् । अथेह पुरुषव्याघ्र ! किञ्चिदन्यच्चिकीर्षसि । तद्ब्रूहि च करिष्यामो वचनात्तव भारत! । ततस्तानब्रवीद्राजन्नर्जुनः प्रहसन्निव । पार्थिवत्वं चिकीर्षामि धर्मराजस्य धीमतः । न प्रवेक्ष्यामि वो देशं विरुद्धं यदि मानुषैः । युधिष्ठिराय यत् किञ्चित् करपण्यं प्रदीयताम्" । "ततोदिव्यानि वस्त्राणि दिव्यान्याभरणानि च । क्षौमाजिनानि दिव्यानि तस्य ते प्रददुः करम्" । "तेऽवतीर्य्य बहून् देशानुत्तरांश्च कुरूनपि" । भा० स० १४५ अ० । "विजित्य यः प्राज्यमयच्छदुत्तरान् कुरूनकुप्यं वसु वासवोपमः" किरा० ।

उत्तरकोशला स्त्री कर्म० । अयोध्यानाम्न्यां नगर्य्याम् । "यदुपतेः क्व गता मथुरा पुरी रघुपतेः क्व गतोत्तरकोशला । इति विचिन्त्य कुरुष्व मनः स्थिरं न सदिदं जगदित्यवधारय" उद्भटः ।

उत्तरक्रिया स्त्री कर्म० । उत्तरकालकर्त्तव्ये कर्म्मणि "सर्व्वेष्वर्थविवादेषु बलवत्युत्तरा क्रिया । आधौ प्रतिग्रहे क्रीते पूर्व्वा तु बलवत्तरा" या० स्मृ० । "एकमेव क्षेत्रमेकस्याधिं कृत्वा किमपि गृहीत्वा पुनरन्यस्याप्याधाय किमपि गृह्णाति तत्र पूर्व्वस्यैव तद्भवति नोत्तरस्य एवं प्रतिग्रहे क्रये च" मिता० । २वार्षिके पितृकृत्ये च । "प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु । क्रियन्ते याः क्रिया पित्र्याः प्रोच्यन्ते ता नृपोत्तराः" । विष्णु पु० । ३अन्तिमक्रियायाञ्च ।

उत्तरङ्ग न० उत्तरभङ्गम् कर्म्म० शकन्धा० । १द्वारोर्द्धस्थदारुणि । २प्रा० ब० । उद्गततरङ्गे त्रि० । "भागीरथीं शोणइवोत्तरङ्गः" रघुः "अपामिवाधारमनुत्तरङ्गम्" कुमा० ।

उत्तरच्छद पु० कर्म्म० । शय्याया उपर्य्यास्तरणवस्त्रे । "शय्योत्तरच्छदविमर्दकृशाङ्गरागम्" । "सोत्तरच्छदमध्यास्त नेपथ्यग्रहणाय सः" रघुः ।

उत्तरज्योतिष पु० प्रतीचीस्थदेशभेदे भारते स० ३१ अ० नकुलप्रतीचीविजये । "कृत्स्नं पञ्चनदञ्चैव तथैवामरपर्व्वतम् । उत्तरज्योतिषञ्चैव तथा दिव्यकटं पुरम् । द्वारपालञ्च तरसा वशे चक्रे महाद्युतिः । रामठान् हारहूणांश्च प्रतीच्याश्चैव ये नृपाः" ।

उत्तरतन्त्र न० सुश्रुतान्तर्गते ग्रन्थभेदे । "इदानीन्तु प्रवक्ष्यामि तन्त्रमुत्तरमुत्तममिति" सुश्रु० ।

उत्तरतस् अव्य० उत्तर+प्रथमापञ्चमीसप्तम्यर्थेषु तसिल् । उत्तरस्मिन् उत्तरस्मात् उत्तर इत्यर्थे । तत् उत्तरतास्त्य अव्य० ताभ्यां भवार्थे त्यप् । उत्तरतस्त्य उत्तरतत्र तद्भवे त्रि० ।

उत्तरदायक त्रि० उत्तरं ददाति दा+ण्वुल् । १प्रत्युत्तरदायिनि । उत्तरेण वाक्येन दायति शोधयति निजदोषम् दैप्–शोधे–ण्वुल् । स्वामिना स्वकार्य्यप्रमादकथने तद्दोषस्यादोषत्वख्यापनेन निजदोषशोधके भृत्यादौ । "परपुंसि रता नारी भृत्यश्चोत्तरदायकः । ससर्पे च गृहे वासः मृत्युरेव न संशयः" चाण० ।

उत्तरदिक्काल पु० ७त० । "रवावुत्तरतः कालः सोमे वायव्यभागके । भौमे तु पश्चिमे भागे बुधे नैरृतकोणके । जीवे च याम्यदिग्भागे शुक्रे चाग्नेयकोणके । शनौ तु पूर्व्वदिग्भागे कालचक्रं प्रकीर्त्तितम्" रत्नमालोक्ते रविवारे उत्तरदिग्वर्त्तिकालचक्रे । रात्रौ तु वैपरीत्यम् उत्तरदिक्पाशशब्दे दृश्यम् अन्यदिक्कालोऽप्युक्तदिशा ज्ञेयः

उत्तरदिक्पाश पु० ७त० । "रवौ तु दक्षिणे पाशः सोमे चाग्नेयकोणके । भौमे तु पूर्व्वदिग्भागे बुधे ईशानकोणके । जीवे चोत्तरदिग्भागे शुक्रे वायव्यकोणके । शनौ तु पश्चिमे भागे पाशचक्रं प्रकीर्त्तितम् । रात्रावेतौ वैपरीत्यात् पाशकालौ बुधोदितौ" रत्नमा० उक्ते बृहस्पतिवारे उत्तरदिशि यात्रायुद्धादिनिषेधोपयोगिनि पाशचक्रे । एवमन्यदिक्ष्वप्युक्तदिशा पाशोबोध्यः ।

उत्तरदिक्शूल त्रि० उत्तरदिशि शूलमिवास्त्यस्य अच् "ज्येष्ठा पूर्व्वा भाद्रपदा रोहिण्युत्तरफाल्गुनी । पूर्व्वादिषु क्रमाच्छूलाः यात्रादौ मरणप्रदाः । शूलाख्यानि च धिष्ण्यानि शूलसंज्ञाश्च वासराः । शायिनां मृत्युदाः प्रोक्तमथ वा चार्थनाशकाः" भरद्वाजोक्ते उत्तरदिशि यात्रादौ वर्ज्ज्ये १उत्तरफल्गुनीनक्षत्रे २बुधवारे च दिक्शूलवारस्तु दृष्टदिगीशवारः दिगीशाश्च उत्तरदिगीशशब्दे वक्ष्यन्ते । शूला इत्यत्र स्त्रीत्वं ताराविशेषणत्वात् ।

उत्तरदिगीश पु० ६त० । "इन्द्रोवह्निःपितृपतिर्नैरृतोवरुणोमरुत् । कुबेर ईशः पतयः पूर्व्वादीनां दिशां क्रमात्" इत्युक्ते १कुबेरे उत्तरदिक्पालादयोऽप्यत्र । "कुबेरगुप्तां दिशमुष्णरश्मौ" कुमारे "कौवेरदिग्भागमपास्य मार्गम्" माघे च उत्तरदिशः कुबेरसम्बन्धित्वमुक्तम् "सूर्य्यः शुक्रः क्षमापुत्रः सैंहिकेयः शनिःशशी । सौम्यस्त्रिदशमन्त्री च प्राच्यादिक्दिगीश्वराः" इत्युक्ते २बुधे

एतच्च "द्वितीयांशे शुभा बाला पुत्रांशे मरणं ध्रुवम्" इत्युक्तेः उत्तरदिशः पृष्ठीभूतदक्षिणस्यां बुधवारे यात्रानिषेधाच्च "प्राच्यादिककुभां नाथाः यथासंख्यं प्रदक्षिणम् । मेषाद्याः राशयो ज्ञेया स्त्रिराद्यावर्त्तयोगतः" इत्युक्तेषु १कर्कटवृश्चिकमीनेषु राशिषु च तेषु लग्नेषु तत्स्थे चन्द्रे च उत्तरदिग्गमनं प्रशस्तमिति बोध्यम् ।

उत्तरदिग्द्वार न० उत्तरदिशि द्वारं मुखमस्य । "प्राच्यादिषु चतुर्दिक्षु सप्तसप्तानक्षत्रतः" ज्यो० उक्तेषु अभिजिदादाविंशतिनक्षत्रमध्ये २३,२४,२५,२६,२७,१,२ । नक्षत्रेषु तानि च यात्रादिषु तत्र दिशि प्रशस्तानि ।

उत्तरदिग्बलिन् पु० उत्तरस्यां दिशि बली । "प्राच्यां सौम्यसुराचार्यौ याम्यां भास्करभूमिजौ । प्रत्यक् सौरिरुदीच्यान्तु सितेन्दू दिग्बलान्वितौ" ज्यो० त० उक्ते १शुक्रे २चन्द्रे च ।

उत्तरपक्ष पु० कर्म्म० । वादे पूर्व्वपक्षस्य मर्दनक्षमे सिद्धान्तपक्षे । "मापयन् पवनव्याधेर्गिरमुत्तरपक्षताम्" माघः । २उत्तरविकल्पे ३कृष्णपक्षे च शुक्लपक्षस्यैव मासारम्भकत्वात् कृष्णपक्षस्योत्तरत्वात् तथात्वम् ।

उत्तरपट पु० कर्म्म० । १उत्तरीये । ततः "नवोत्तरपटः समुद्भेदः सवेपथुः" भा० ११६अ० । २शय्योत्तरच्छदे च

उत्तरपथ पु० उत्तरः पन्थाः अच् समा० । १उत्तरस्थिते २अव्यवहिते च पथि । उत्तरः उत्तरायणचिह्नितः पन्थाः । ३देवयाने पथि येन हि अर्च्चिरादिमार्गेण विद्यावन्तो ब्रह्मलोकं गच्छन्ति तादृशे मार्गे । तत्र मार्गे च ये तदभिमानिनो देवास्ते अर्च्चिरादिशब्दे ३६४ पृष्ठे उक्ताः तेषाञ्च यथा आतिवाहिकत्वम् तथा आतिवाहिकशब्दे ६५१ पृष्ठे उक्तम् । "उत्तरपथेनाहृतञ्च" पा० । ठञ् । औत्तरपथिक तत्पथेनाहृते त्रि० ।

उत्तरपथिक त्रि० पन्थानं गच्छति "पथः ष्कन्" पा० पथिकः उत्तरः तद्देशभवः पथिकः । उत्तरदेशभवे १पथिके स्त्रियां ङीष् ।

उत्तरपद न० उत्तरमुत्तरवर्त्ति पदम् । १समासचरमावयवपदे २शब्दोत्तरवर्त्तिपदे च । "एकाजुत्तरपदे णः" पा० । ३समासयोग्ये पदे च । "प्राधान्यं हि विधेयस्य प्रतिषेधेऽप्रधानता । पर्य्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्" मीमांसा । भवति च "यजतिषु येयजामहं कुर्य्यात् नानुयाजेषु" इत्यत्र नञः समासयोग्यानुयाजेन साहित्यात् पर्य्युदासपरता तथा रात्रौ श्राद्धं न कुर्वीतेत्यादौ नञो रात्र्या समासयोग्यत्वात्तथात्वम् "अष्टम्यां मांसं नाश्नीयादित्यत्र तु क्रियापदयोगेन तस्य समासयोग्यत्वाभावेन न तस्योत्तरपदयोग इति न पर्य्युदासपरता किन्तु प्रसक्तप्रतिषेधार्थकता "अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता । प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ्" इति मीमांसकोक्तेः । "पदोत्तरपदात्" वार्त्ति० उत्तरपदमधीते वेत्ति वेत्यर्थे ठञ् । उत्तरपदिक तदध्येतरि तद्वेत्तरि च त्रि० ।

उत्तरपश्चिमा स्त्री उत्तरस्याः पश्चिमाया अन्तराला दिक् दिक्स० । १उत्तरपश्चिमयोरन्तरालदिशि नैर्ऋतकोणे । सा विद्यतेऽस्य अच् । २नैर्ऋतदिक्सम्बन्धिनि देशे पु० "उत्तरपश्चिमे गार्हपत्यम्" आश्व० श्र० ४,२,१२ । ३तद्वर्त्तिनि त्रि० ।

उत्तरपाद पु० कर्म्म० । चतुष्पादात्मकस्य व्यवहारस्य द्वितीये पादे "पूर्व्वपक्षः स्मृतः पादो द्वितीयश्चोत्तरः स्मृतः । क्रियापादस्तृतीयः स्याच्चतुर्थो निर्णयः स्मृतः । मिथ्योक्तौ तु चतुष्पात् स्यात् प्रत्यवस्कन्दने तथा । प्राङ्न्याये च स विज्ञेयो द्विपात् संप्रतिपत्तिषु" बृहस्पतिः ।

उत्तरपुरस्तात् अव्य० उत्तरस्याः पूर्व्वस्याश्चान्तराला दिक् उत्तरपूर्व्वा ततः प्रथमापञ्चमीसप्तम्यर्थे अस्ताति पुंवद्भावः पूर्व्वस्य पुरादेशः । ईशानकोणे "उत्तरपुरस्ताद्दाहवनीयस्य प्राग्वंशं मधौ शाला" आश्व० श्र० ४,४,८ ।

उत्तरपूर्व्वा स्त्री उत्तरस्याः पूर्व्वस्या दिशोऽन्तराला दिक् पुंवद्भावः दिक्स० । ईशानकोणे "प्राग्नेयादुत्तरपूर्व्वायाम्" काश्य० २,२,२० । दिङ्नामसमासे वा सर्वनाम कार्य्यम् योत्तरा सा पूर्व्वा यस्य तुण्डस्य एवं बहुव्रीहौ तु न सर्वनामकार्य्यमिति भेदः । तेन तादृशार्थेऽपि अस्य वृत्तित्वे त्रि० । "योत्तरा सा पूर्व्वा यस्याः उक्तम्याकाशस्याः उत्तरपूर्व्वायै" सि० कौ० ।

उत्तरफल्गुनी स्त्री फलति फल-निष्पत्तौ "फलेर्गुक् च" उणा० उनन् गुक् च गौरा० ङीष् कर्म्म० । अश्विन्यादिषु द्वादशे नक्षत्रे तस्याः स्वरूपम् उडुचक्रशब्दे १०७१ पृ० अश्लेषाशब्दे ४९७ पृष्ठे च तदधिदेवादि उक्तम् । फल्गुनशब्दात् स्वार्थे अण् ङीप् । फाल्गुनी कर्म्म० । तत्रैवार्थे । इयं प्रथमान्वर्गता "प्रथमकालीयमुत्तरासि सम्यक्" इत्युक्तेः तथा चास्य फाल्गुनत्वं तथा समर्थितम्" शत० ब्रा० । "फल्गुनीष्वग्नीन् आदधीत एता वा इन्द्रनक्षत्रम् यत् फल्गुन्योऽप्यस्य प्रतिनाम्न्योऽर्जुनो ह वै नामेन्द्रो यदस्य गुह्यं नामार्जुन्यो वै नामैतास्ता एतत्परोक्षमाचक्षते फाल्गुन्य इति योऽस्येतत्प्रार्हति गुह्यं

नाम पत्नीतम्" २,१,२,११ अस्याः प्रथमपादः सिंहराशिः उत्तरपादत्रयं कन्याराशिः प्रमाणं उडुचक्रशब्दे दृश्यम् ।

**उत्तरभाद्रपद्** स्त्री भद्राय हितः भाद्रः पत् पादश्चतुर्थांशो यस्याः ब० ततः कर्म० । अश्विन्यादिनक्षत्रेषु षड्विंशे नक्षत्रे । पदशब्देन समासे टाप् । उत्तरभाद्रपदाप्यत्र । तद्रूपादिकमुडुचक्रशब्दे १०७१ पृष्ठे उक्तम् । अधिपत्यादिकमश्लेषाशब्दे चोक्तम् । इदं ध्रुवगणः "ध्रुवगणस्त्री-ण्युत्तराणि तमूः" इत्युक्तेः मीनराशिघटिता ।

**उत्तरमानस** न० उत्तरत्वृत्तरस्य मानसम् । १तीर्थभेदे "कालोदकं नन्दिकुण्डं तथाचोत्तरमानसम् । अभ्येत्य योजनशताद्भ्रूणहा विप्रमुच्यते" भा० अनु० २५अ० । २गयामध्ये उत्तरदिक्स्थे तीर्थभेदे "उत्तरे मानसे, स्नानं करोम्यात्मविशुद्धये" इति गयाश्राद्धपद्धतिः । दक्षिणमानसमपि तत्रत्यतीर्थभेदः "दिवाकर! करोमीह स्नानं दक्षिणमानसे" इति तत्रैव ।

**उत्तरमीमांसा** स्त्री उत्तरस्य वेदशेषभागस्य उपनिषद्रूपस्य मीमांसा यथाङ्गन्यायोपेतवाक्यसमुदायात्मकोविचारः । "अथातो ब्रह्मजिज्ञासा" इत्यादौ "अनावृत्तिः शब्दात्" इत्यन्ते चतुरध्यायीरूपे षोडशपादात्मके शारीरस्य ब्रह्मात्मत्वप्रतिपादके वेदव्यासरचिते शारीरकसूत्राख्ये ग्रन्थे । तत्र प्रतिपाद्यविषयादि संक्षेपतः वैयासिकमालायां भारतीतीर्थमुनिना दर्शितं यथा "शास्त्रं ब्रह्मविचाराख्यमध्यायाः स्युश्चतुर्विधाः । समन्वयाविरोधौ द्वौ साधनं च फलं तथा" ४ । समन्वये स्पष्टलिङ्गमस्पष्टलिङ्गमुपास्यगम् । ज्ञेयगं पदमात्रं च चिन्त्यं पादेष्वदः क्रमात्" ५ । द्वितीये स्मृतितर्काभ्यामविरोधोऽन्यदुष्टता । भूतभोक्तृश्रुतेर्लिङ्गश्रुतेरप्यविरुद्धता" ६ । तृतीये विरतिस्तत्त्वंपदार्थपरिशोधनम् । गुणोपसंहृतिर्ज्ञानबहिरङ्गादिसाधनम् ७ । चतुर्थे जीवतोमुक्तिरुत्क्रान्तिर्गतिरुत्तरा । ब्रह्मप्राप्तिब्रह्मलोकावाप्तीः पादार्थसंग्रहः" ८ । "अध्यायचतुष्टयात्मकस्य शास्त्रस्य ब्रह्मविचारोऽर्थः सर्वेषां वेदान्तवाक्यानां ब्रह्मणि तात्पर्येण पर्यवसानं प्रथमाध्यायेन प्रतिपाद्यते । द्वितीयेन सम्भावितविरोधः परिह्रियते । तृतीयेन विद्यासाधननिर्णयः । चतुर्थेन विद्याफलनिर्णयः इत्येते अध्यायार्थाः ४ । तत्र प्रथमाध्यायगतपादार्थान् विभजते । समन्वयेति । स्पष्टब्रह्मलिङ्गयुक्तं वाक्यजातं प्रथमे पादे चिन्त्यम् । "अन्तस्तद्धर्मोपदेशात्" इत्यत्र सार्वज्ञ्यसार्वात्म्य-सर्वपापविरहादिकं च ब्रह्मणोऽसाधारणतया स्पष्टब्रह्मलिङ्गम् । अस्पष्टब्रह्मलिङ्गत्वे सत्युपास्यविषयं वाक्यजातं द्वितीयपादे चिन्त्यम् । तद्यथा प्रथमाधिकरणविषये शाण्डिल्योपास्तिवाक्ये मनोमयत्वप्राणशरीरत्वादिकं सोपाधिकब्रह्मणो जीवस्य च साधारणत्वादस्पष्टब्रह्मलिङ्गम् । तृतीयपादे त्वस्पष्टब्रह्मलिङ्गत्वे सति ज्ञेयब्रह्मविषयं वाक्यजातं चिन्त्यं तद्यथा प्रथमाधिकरणे मुण्डकगतब्रह्मवाक्ये द्युभ्वाद्यायतनत्वं सूत्रात्मनः परब्रह्मणश्च साधारणत्वादस्पष्टं ब्रह्मलिङ्गम् । यद्यपि द्वितीयपादे कठवल्ल्यादिगतब्रह्मतत्त्ववाक्यानि विचारितानि । तृतीयपादे दहरोपासनावाक्यं विचारितं तथाप्यवान्तरसंगतिलोभेन तद्विचारस्य प्रासङ्गिकत्वान्न पादार्थयोः साङ्कर्यापत्तिः इत्येवं पादत्रयेण वाक्यविचारः समापितः । चतुर्थपादे त्वव्यक्तपदमजापदं चेत्येवमादिसन्दिग्धपदं चिन्त्यम्५ । द्वितीयाध्यायगतपादार्थान्विभजते द्वितीये इति । प्रथमपादे सांख्ययोगकाणादादिस्मृतिभिः सांख्यादिप्रयुक्ततर्कैश्च विरोधो वेदान्तसमन्वयस्य परिहृतः । द्वितीयपादे सांख्यादिमतानां दुष्टत्वं प्रदर्शितम् । तृतीयपादे पूर्वभागेन पञ्चमहाभूतश्रुतीनां परस्परविरोधः परिहृतः उत्तरभागेन जीवश्रुतीनाम् चतुर्थपादे लिङ्गशरीरश्रुतीनां विरोधः परिहृतः ६ । तृतीयाध्यायगतपादार्थान्विभजते तृतीये इति । प्रथमपादे जीवस्य परलोकगमनागमने विचार्य वैराग्यं निरूपितम् । द्वितीयपादे पूर्वभागेन त्वंपदार्थः शोधितः । उत्तरभागेन तत्पदार्थः । तृतीयपादेन सगुणविद्यासु गुणोपसंहारो निरूपितः निर्गुणे ब्रह्मणि च पुनरुक्तपदोपसंहारश्च । चतुर्थपादे निर्गुणज्ञानस्य बहिरङ्गभूतान्याश्रमयज्ञादीन्यन्तरङ्गभूतशमदमनिदिध्यासनादीनि च निरूपितानि ७ । चतुर्थाध्यायगतपादार्थान्विभजते चतुर्थे इति । प्रथमपादे श्रवणाद्यावृत्त्या निर्गुणमुपासनया सगुणं वा ब्रह्म साक्षात्कृत्य जीवतः पापपुण्यलेपविनाशलक्षणा मुक्तिरभिहिता । द्वितीये पादे म्रियमाणस्योत्क्रान्तिप्रकारो निरूपितः । तृतीयपादे सगुणविदो मृतस्योत्तरमार्गोऽभिहितः । चतुर्थपादे पूर्वभागेन निर्गुणब्रह्मविदो विदेहकैवल्यप्राप्तिरभिहिता, उत्तरभागेन सगुणब्रह्मविदो ब्रह्मलोकप्राप्तिर्निरूपिता" तद्व्या० । मीमांसा च वेदतात्पर्यनिर्णयार्थः न्यायपञ्चकात्मकविचारः । सा च द्विविधा पूर्वमीमांसा उत्तरमीमांसा च तत्र पूर्वमीमांसा जैमिनिप्रणीता "अथातोधर्मजिज्ञासा" इत्यादिका, उत्तरमी-

मांसा दर्शिता । इयमेव च ब्रह्ममीमांसात्वेन प्रसिद्धा

**उत्तररामचरित** न० उत्तरं रामस्य चरितं यत्र । भवभूतिप्रणीते नाटकभेदे ।

**उत्तरवयस** क्लि० उत्तरं वयः नि० वेदे अच् समा० । वृद्धावस्थायाम् "तस्मादुत्तरवयसे पुत्रान् पितोपजीवति" शत० ब्रा० १२,२,३,४ । लोके तु उत्तरवयः इत्येव ।

**उत्तरवस्ति** पु० सुश्रुतोक्ते चिकित्साङ्गे यन्त्रभेदे । तत्स्वरूपप्रयोगप्रकारादि यथा तत्रैव

"वस्तेरुत्तरसंज्ञस्य विधिं वक्ष्याम्यतःपरम् । चतुर्दशाङ्गुलं नेत्रमातुराङ्गुलिसम्मितम् । मालतीपुष्पवृन्ताग्रं छिद्रं सर्षपनिर्गमम् ; नेत्रायाममथान्ये तु केचिदिच्छन्ति तद्विदः । स्नेहप्रमाणं प्रसृतं कुञ्चयाख्यं प्रकीर्त्तितः । पञ्चविंशाद्वर्षाणां विदध्यादूर्ध्वं विकल्पितम् । निविष्टकर्णिकं मध्ये नारीणां चतुरङ्गुलम् । मूत्रस्रोतःपरीणाहमुद्गच्छिद्रं द्व्यङ्गुलम् । तासामपत्यमार्गे तु निदध्याच्चतुरङ्गुलम् । द्व्यङ्गुलं मूत्रमार्गे तु कन्यानामेकमङ्गुलम् । विधेयं चाङ्गुलं तासां विधिवद्वक्ष्यते यथा । स्नेहस्य प्रसृतं चात्र स्वाङ्गुलीमूलसम्मितम् । देयं प्रमाणं परममर्वाग्बुद्धिविकल्पितम् । औरभ्रः शौकरो वापि वस्तिराजश्च पूजितः । तदलाभे प्रयुञ्जीत गलचर्म तु पक्षिणाम् । अलाभे हतेः पादौ मृदुचर्म ततोऽपि वा । अथातुरमुपस्निग्धं स्विन्नं प्रचितासयम् । यवागूं सघृतक्षीरां पीतवन्तं यथाबलम् । निषण्णमाजानुसमे पीठे स्नानान्वितं समे । अभ्यक्तवस्तिमूर्द्धानं तैलेनोष्णेन मानवम् । ततः समं स्थापयित्वा गात्रस्य प्रहर्षितम् । पूर्वं शलाकयाऽन्विष्य ततो नेत्रमनन्तरम् । शनैःशनैर्घृताभ्यक्तं विदध्यादङ्गुलानि षट् । ततोऽवपीडयेद्वस्तिं शनैर्नेत्रं च निर्हरेत् । ततः प्रत्यागते स्नेहमपराह्णे विचक्षणः । भोजयेत् पयसो मात्रां यूषेणाथ रसेन वा । अनेन विधिना दद्याद्वस्तींस्त्रींश्चतुरोऽपि वा । अहर्जातं स्त्रियै दद्यादुत्तानायै विचक्षणः । कल्पेतरसै तस्यायै दद्यात्सुखं पीडितम् । त्रिकर्णिकेन नेत्रेण दद्याद्योनिमुखं प्रति । गर्भाशयविशुद्ध्यर्थं स्नेहेन द्विगुणेन तु । अप्रत्यागच्छति भिषक् वस्तावुत्तरसंज्ञिते । भूयोवर्त्तिं निदध्यात्तु संयुक्तं शोधनैर्गणैः । गुदे वर्त्तिं निदध्याद्वा शोधनद्रव्यसंभृताम् । प्रवेशयेद्वा मतिमान्स्निग्धाहारमसैन्धवीम् । पीडयेद्वाप्यधोनाभेर्बलेनोत्तरमुष्टिना । आरग्वधस्य पत्रेषु निर्गुण्ड्याः सुरसेषु च । कुर्य्याद्गोमूत्रपिष्टेषु वर्त्तीर्वापि यवैश्चवाः । शुक्रं चार्त्तवपयसाः प्रविभज्य वयांसि तु । वस्तेरागमनार्थाय ता निदध्याच्छलाकया । आगारधूमदहतीपिप्पलीफलसैन्धवैः । कृता वा शुक्रगोमलसुरापिष्टैः समागरैः । अतुवानमिश्रिताः वीक्ष्य कर्म प्रयोजयेत् । शर्करामधुमिश्रेण शीतेन मधुकाम्बुना । दह्यमाने तदा वस्तौ दद्याद्वस्तिं विचक्षणः । क्षीरवृक्षकषायेण पयसा शीतलेन च । शुक्रं दुष्टं शोणितं चाङ्गनानां पुष्पोद्रेकं तस्य नाशञ्च कष्टम् । मूत्राघातान् मूत्रदोषान् प्रवृद्धान् योनिव्याधिं संस्थितिं चापरायाः । शुक्रोत्सेकं शर्करामश्मरीञ्च शूलं वस्तौ वङ्क्षणे मेहने च । घोरानन्यान् वस्तिजांश्चापि रोगान् हित्वा मेहानुत्तरो हन्ति वस्तिः । सम्यग्दत्तस्य लिङ्गानि व्यापदः क्रम एव च । वस्तेरुत्तरसंज्ञस्य समानं स्नेहवस्तिना" ।

**उत्तरवादिन्** त्रि० उत्तरमुत्तरपक्षं वदति वद–णिनि । वादे प्रतिवादिनि ( आसामी ) "साक्षिषूभयतः सत्सु भवन्ति पूर्व्ववादिनः । पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः" वा०स्मृ० ।

**उत्तरवेदि** स्त्री कर्म० वा ङीप् । "तरन्तुकारन्तुकयोर्यदन्तरं रामह्रदानाञ्च मचक्रुकस्य च । एतत् कुरुक्षेत्रसमन्तपञ्चकं पितामहस्योत्तरवेदिरुच्यते" भा० व० ८३अ० उक्ते कुरुक्षेत्रान्तर्गते १समन्तपञ्चकरूपे तीर्थे । कुरुक्षेत्रञ्च "उत्तरेण दृषद्वत्या दक्षिणेन सरस्वतीम् । ये वसन्ति कुरुक्षेत्रे ते वसन्ति त्रिविष्टपे" इत्युक्तस्थले तीर्थभेदः । इयमेव ब्रह्मवेदीत्युच्यते "ब्रह्मवेदी कुरुक्षेत्रं पुण्यं ब्रह्मर्षिसेवितम्" तत्रैवोक्तेः । यज्ञेऽग्निस्थापनार्थं २वेदिभेदे तत्स्वरूपादि दानपा० दर्शितं यथा । "तत्र महावेदिपश्चिमरेखामध्यात् पूर्व्वतः, शमित्रयमितां, प्राचीरेखामध्यात् पश्चिमतः शमिन्मात्रां, दक्षिणरेखामध्यात् उत्तरस्यामुत्तररेखामध्यात् दक्षिणस्यां तथैव शमिन्मात्रां भूमिं त्यक्त्वा कुण्डादिमध्ये शमिद्द्वयमितदीर्घविस्तारां समचतुरस्रामुत्तरवेदिमग्निस्थापनाय वेदिमध्ये कल्पयेत्" । "उत्तरवेद्याग्निप्रणयनमन्वग्नपृषदाज्यं वरुणप्रघासादयः" कात्या०५,७,१५ । "दक्षिणेन निर्हृत्य दक्षिणस्यामुत्तरवेदिश्रेणौ निदधाति ८,९,१८ । ७अथात आहदेव नोपकिरन्त्युत्तरवेदिम्" शत० ब्रा० २,४,१,१८ । "तद्द्वे वेदी द्वावग्नी भवतः । तद्यद्द्वे वेदी द्वावग्नी भवतस्तदुभयतस्तदुभयत एवैतत् वरुणपाशात् प्रजाः प्रमुञ्चतीतयोर्ह्युत्तरवाचीस्तस्माद् द्वे वेदी द्वावग्नी भवतः । स उत्तरस्यामेव वेदौ उत्तरवेदिम् उप-

"किरति न दक्षिणस्मात्" शत० ब्रा० २,१,२,१,६ ।

**उत्तरगलङ्कट** पुंस्त्री ६०त० उत्तरस्य गलङ्कटस्य इव० ततः गोत्रप्रत्ययस्य लुक् । उत्तरगलङ्कटगोत्रापत्ये ।

**उत्तरसक्थ** न० उत्तरः सक्थः एकदे०त० टच्समा० । सक्थ्न उत्तरभागे

**उत्तरसाक्षिन्** त्रि० "साक्षिणामपि यः साक्ष्यं उपर्युपरि भाषताम् । श्रवणाच्छ्रावणाद्वापि स साक्ष्युत्तरसंज्ञक" इति नारदोक्ते साक्षिभेदे ।

**उत्तरसाधक** त्रि० उत्तरः सन् साधयति सिध–णिच् साध्यादेशः ण्वुल् । सहाये सहकारिणि । स हि इतरसाधकोक्तस्य तदुत्तरवर्त्ती सन् कार्य्यं साधयति ।

**उत्तरा** अव्य० उत्तर+प्रथमापञ्चमीसप्तम्यर्थे आच् । उत्तरस्यां दिशि स्थिते देशे कालाद्यर्थे । १प्रवयाञ्चरोत्तरा:" भा०व० २९अ० । २उत्तरस्यां दिशि ३विराटकन्यायां स्त्री । "प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु । क्रियन्ते याः क्रियाः पित्र्याः प्रोच्यन्ते उत्तरा हि ताः" इत्युक्तासु सपिण्डीकरणोत्तरासु मासिकश्राद्धक्रियासु च स्त्री ।

**उत्तरात्** अव्य० उत्तर+दिग्देशकालवृत्तेः आति । उत्तरस्मादुत्तरस्मिन्नित्यर्थे । "पश्चादोत्तरादधरादापुरस्तात्" ऋ० ६,१९,९ । "त्वं नः पश्चादधरादुत्तरात् पुरः" ऋ० ८,६१,१६ ।

**उत्तरात्तात्** अव्य० उत्तरात्+स्वा० वेदे० नि० ताति । उत्तरादित्यर्थे । "यत्र वीरासोऽधरादुदायन्तरोत्तरात्तात् समजग्मिरन्" ऋ० १०,२७,१५ । "पुरस्तात् सवितोत्तरात्तात् सविताधरात्तात्" १०,३६,१४ ।

**उत्तराधर** त्रि० कर्म० उत्तरश्च अधरश्च । "उत्तराधरा इव भवन्त्योषधि" शत० ब्रा० ५,२,३,२१ । उपरित नीचे पु० "पुनर्द्दिवसुः स्फुरितोत्तराधर" कुमा० ।

**उत्तराधिकारिन्** त्रि० उत्तरं पूर्व्वस्वामिस्वत्वोपरमानन्तरमधिकरोति तद्धने स्वत्वमाप्नोति अधि+कृ–णिनि । पूर्व्वस्वामिस्वत्वोपरमे तद्धने स्वामित्वप्राप्ते पूर्व्वस्वामिनः सम्बन्धिपुत्रादौ स्त्रियां ङीप् । तत्र अपुत्रधने तस्याधिकारः । तत्र तावत् बङ्गदेशप्रचलितदायभागमतानुसारिक्रमोऽभिधीयते तत्र तद्ग्रा० श्रीकृष्णेनोक्तम् यथा । "अथायं मृतधनाधिकारिक्रमः । तत्र प्रथमं पुत्रः तदभावे पौत्रः तदभावे प्रपौत्रः, मृतपितृकपौत्र-मृतपितृपितामहकप्रपौत्रयोस्तु पुत्रेण सह युगपदधिकारः । प्रपौत्रपर्य्यन्ताभावे पत्नी सा च प्राप्तभर्त्तृदाया भर्त्तृकुलं तदभावे पितृकुलं वा समाश्रिता सती शरीररक्षार्थं भर्त्तृदायं भुञ्जीत तथा भर्त्तुरुपकारार्थं यथाकथञ्चिद्दानादिकमपि कुर्व्वीत न तु स्त्रीधनवत् स्वच्छन्दं विनियुञ्जीत । तदभावे दुहिता तत्र प्रथमं कुमारी तदभावे वाग्दत्ता, तदभावे ऊढा सा च पुत्रवती सम्भावितपुत्रा च ते द्वे युगपदेवाधिकारिण्यौ, वन्ध्या पुत्रहीना विधवा च नाधिकारिण्यौ । ऊढायाश्चाभावे दौहित्रः । तदभावे पिता । तदभावे माता, तदभावे भ्राता, तत्रापि प्रथमं सोदरः तदभावे वैमात्रेयः, भ्रातॄणां भ्रातृसंसृष्टत्वे तु सोदरमात्रविषये प्रथमं संसृष्टसोदर एवाधिकारी तदभावे चासंसृष्टसोदरः, एवं वैमात्रेयमात्रविषये प्रथमं संसृष्टवैमात्रेयः तदभावे चासंसृष्टवैमात्रेयः, यदा तु संसृष्टो वैमात्रेयः सोदरश्चासंसृष्टः तदा तावुभौ तुल्यवदधिकारिणौ । भ्रातॄणामभावे भ्रातृपुत्रः, तत्रापि प्रथमं सोदरभ्रातृपुत्रः तदभावे वैमात्रेयभ्रातृपुत्रः, संसर्गे तु सोदरभ्रातृपुत्रमात्रविषये प्रथमं संसृष्टसोदरभ्रातृपुत्रः तदभावे चासंसृष्टसोदरभ्रातृपुत्रः, वैमात्रेयभ्रातृपुत्रमात्रविषये प्रथमं संसृष्टवैमात्रेयभ्रातृपुत्रः तदभावे चासंसृष्टवैमात्रेयभ्रातृपुत्रः, यदा तु सोदरभ्रातृपुत्रोऽसंसृष्टो वैमात्रेयभ्रातृपुत्रस्तु संसृष्टः तदा द्वौ भ्रातृवत् तुल्याधिकारिणौ । भ्रातृपुत्राभावे भ्रातृपौत्रः तत्रापि भ्रातुः सोदरासोदरक्रमः संसर्गासंसर्गक्रमश्च बोध्यः । तदभावे पितृदौहित्रः स च सोदरभगिनीपुत्रः वैमात्रेयभगिनीपुत्रश्च, तदभावे पितामहः, तदभावे पितामही, तदभावे पितुः सोदरः तदभावे पितृवैमात्रेयः । तदभावे पितृसोदरपुत्रपितृवैमात्रेयपुत्रपितृसोदरपौत्रपितृवैमात्रेयपौत्राणां क्रमेणाधिकारः । तदभावे पितामहदौहित्रः तत्रापि पितृसोदरभगिनीपुत्रः पितृवैमात्रेयभगिनीपुत्रश्च, अयमेव क्रमः प्रपितामहदौहित्राधिकारेऽप्येवम्, तदभावे प्रपितामहः तदभावे प्रपितामही तदभावे पितामहसोदरभ्रातृतद्वैमात्रेयभ्रातृतत्पुत्रपौत्रप्रपितामहदौहित्राः क्रमेणाधिकारिणः । एतावत्पर्य्यन्तानां धनिभोग्यपिण्डदातॄणामभावे धनिदेयपिण्डदातॄणां मातामहमातुलादीनामधिकारः तत्रापि प्रथमं मातामहस्तदभावे मातुलतत्पुत्रपौत्राणां क्रमेणाधिकारः तदभावे चाधस्तनसकुल्यानां धनिभोग्यलेपदातॄणां प्रतिप्रपौत्रप्रभृतिपुरुषत्रयाणां क्रमेणाधिकारः, तदभावे पुनरूर्द्ध्वतनसकुल्यानां धनिदेयलेपभुग्वृद्धप्रपिता-

चर्ह्यादितत्पुत्रान्तानां सपिण्डानां क्रमेणाधिकारः, तदभावे समानोदकानामधिकारः । तेषामभावे आचार्य्यस्य तदभावे शिष्यस्य तदभावे सब्रह्मचारिणोऽधिकारः, तदभावे वेदपारगस्वगोत्रसमानप्रवरयोः क्रमेणाधिकारः । उक्तापर्य्यन्तानां सर्व्वेषां सम्बन्धिनामभावे ब्राह्मणधनवर्ज्जं राजा गृह्णीयात्, ब्राह्मणधनन्तु वेदविद्यादिगुणयुक्ता ब्राह्मणा गृह्णीयुः । एवं वानप्रस्थधनं आचार्य्यत्वेनानुमतोऽपरवानप्रस्थ एकतीर्थी गृह्णीयात् । तथा यतिधनं सच्छिष्यः । नैष्ठिकब्रह्मचारिधनमाचार्य्यः उपकुर्व्वाणस्य तु ब्रह्मचारिधनं पित्रादिर्गृह्णीयादिति सङ्क्षेपः"।

दायक्रमसंग्रहे भ्रातृदौहित्रपितृव्यदौहित्रपितामहसोदरदौहित्राणामप्यधिकारोऽभिहितः । विवादभङ्गार्णवमते पुत्रपौत्रदौहित्रयोरप्यधिकारः । एतन्तु बोध्यं पितृधनविभागे जनन्याः पुत्रतुल्यांशेऽधिकारः । पितामहधनविभागे च पितुर्जनन्याः पौत्रतुल्यांशेऽधिकारः । जीवद्भागे तु पित्रा पितामहेन वा भागद्वयं ग्राह्यम् अप्राप्तस्त्रीधनानां सर्व्वासां स्वपत्नीनां पुत्रस्य मृतपितृपौत्रस्य चैकैकोऽंशो देयः, अनेकपितृकाणां तु पितृतो भागकल्पना एवं मातृधने पितामहीधनेऽपि पितृतो भागकल्पना इति । स्थावरे तु विशेषः "अविभक्तं स्थावरं यत् सर्व्वेषामेव तद्भवेत्" इत्यादिवचनात् तुल्यरूपाणां सोदरासोदराणां समाधिकारः । स्त्रीधने विशेषस्त्वेव । "अथ स्त्रीधनाधिकारिक्रमनिर्णयः । तत्र कन्याधने प्रथमं सोदरभ्रातुस्तदभावे मातुस्तदभावे पितुरधिकारः । वरदत्तातिरिक्तवाग्दत्ताधनेष्वेवं, वरदत्तधने तु वरस्याधिकार इति । ऊढाया यौतकधने प्रथमं कुमारी, तदभावे वाग्दत्ताऽधिकारिणी, एतयोरभावे ऊढयोः पुत्रवतीसम्भावितपुत्रयोर्युगपदधिकारः । एकस्या अभावेऽपरायाः, एतयोरभावे वन्ध्याविधवयोस्तुल्याधिकारः, एकाभावे चापरायाः, । ततः पुत्रदौहित्रपौत्रप्रपौत्रसपत्नीपुत्रपौत्रप्रपौत्राणां क्रमेणाधिकारः । ब्रह्मलग्ने तु सपत्नीपुत्रात्प्रागेव दौहित्रस्याधिकार इति विशेषः । ततो ब्राह्मादिविवाहचतुष्कलब्धयौतकधने भर्त्ता, भ्राता माता पिता चेति क्रमः, आसुरादिविवाहत्रयलब्धयौतकधने माता पिता भ्राता भर्त्ता चेति क्रमः । ततो देवरः ततो देवरपुत्रभ्रातृपुत्रौ, ततो भगिनीपुत्रः, ततो भर्त्तुर्भागिनेयः, ततो भ्रातृपुत्रः ततो जामाता, ततः श्वशुरः, भ्रातृश्वशुरः, । ततश्चासन्नत्वक्रमेण सपिण्डाः ततः सकुल्याः, ततः समानोदका इति । यौतकातिरिक्तेऽपि पितृदत्ते प्रथमं कुमारी, ततः पुत्रः, ततः पुत्रवतीसम्भावितपुत्रे, ततः पौत्रदौहित्रप्रपौत्रसपत्नीपुत्रपौत्रप्रपौत्राः । ततो वन्ध्या विधवा च युगपदधिकारिण्यौ, ततो ब्राह्मादिक्रमेणैव पूर्व्ववत् क्रमः । पितृदत्तातिरिक्ते अयौतकधने तु पुत्रकुमार्य्योर्युगपदधिकारः, तयोरभावे पुत्रवतीसम्भावितपुत्रयोः, ततः पौत्रदौहित्रप्रपौत्रसपत्नीपुत्रपौत्रप्रपौत्राः क्रमेणाधिकारिणः । ततो वन्ध्या विधवा च युगपदधिकारिण्यौ ततः पूर्व्ववत् ब्राह्मादिक्रमः"। अत्र सर्व्वत्र प्रमाणं दायभागेऽनुसन्धेयम् ।

चिन्तामणिमते पुत्रमृतपौत्रमृतपितापितामहकप्रपौत्राधिकारं दायभागमतवत् सप्रपञ्चं निरूप्य अपुत्रधने विशेषोऽभिहितो यथा ।

"अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत्" मनुः । "आपस्तम्बः अपुत्रधनाधिकारी आसन्नसपिण्डस्तदभावे व्यवहितस्तदभावे आचार्य्यस्तदभावेऽन्तेवासी" । याज्ञवल्क्यः "पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा । तत्सुतो गोत्रजो बन्धुः शिष्यः सब्रह्मचारिणः । एषामभावे पूर्व्वस्य धनभागुत्तरोत्तरः । स्वर्य्यातस्य ह्यपुत्रस्य सर्व्ववर्णेष्वयं विधिः"। पितरावित्यत्र क्रमाकाङ्क्षायामादौ माता तदभावे पिता विष्णुवाक्यैकमूलत्वात् । तत्सुतो भ्रातृपुत्रः अपुत्रस्य पुत्रपौत्रप्रपौत्रशून्यस्य । कात्यायनः "विभक्ते संस्थिते द्रव्यं पुत्राभावे पिता हरेत् । भ्राता वा जननी वापि माता वा तत्पितुः क्रमात्" । पितार्ज्जितं पिता, भ्रात्राद्यर्ज्जितं भ्रात्रादिरिति व्यवस्थितोविकल्पः । पैठीनसिः "अपुत्रस्य स्वर्य्यातस्य भ्रातृगामि धनं तदभावे पितरौ लभेताम्"। देवलः "ततो दायमपुत्रस्य विभजेरन् सहोदराः । तुल्या दुहितरो वापि ध्रियमाणः पितापि वा । सवर्णा भ्रातरो माता भार्य्या चेति यथाक्रमम् । एषामभावे गृह्णीयुः सकुल्याः सहवासिनः" । तुल्याः सहोदरा एव सवर्णाभ्रातरोऽत्र वैमात्रेयाः । अत्र च देवलोक्तक्रमेण सह विष्णुयाज्ञवल्क्योक्तक्रमयोर्विरोधमाशङ्क्य यथाक्रममिति पदं देवलीयं याज्ञवल्क्योक्तक्रमानतिक्रमेणेति हलायुधेन व्याख्यातम् । देवलवचनलिखनानन्तरं विष्णुयाज्ञवल्क्योक्तवचने लिखितवतः कल्पतरुकृतोऽप्येवमेवाशयः । एतच्च न मनोरमं न हि श्लोकक्रममात्रेण परोक्तक्रमो यथाकल्पित श्लोकस्यार्थो भवितुमर्हतीति उपस्थितविषयानुपस्थितपरित्यागगौरवात् एवमपि पैठीनसिवचनविरोधापरीहाराच्च । तस्मात् संसृष्टार्ज्जितधने विष्णु-

याज्ञवल्क्योक्तक्रमस्तदन्यधने तु पैठीनस्याद्युक्तक्रम इति रत्नाकरः। बौधायनः "अपितृकाभावे सकुल्यः तदभावे आचार्य्यः अन्तेवासी ऋत्विग्वा हरेत् तदभावे राजा"। सगोत्रजाभावे बन्धुः याज्ञवल्क्यवचनात् स च आत्मबन्धुः पितृबन्धुः मातृबन्धुश्च। "आत्मपितुःष्वसुः पुत्रा आत्ममातुःष्वसुः सुताः। आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः। पितुः पितुःष्वसुः पुत्राः पितुर्मातुःष्वसुः सुताः। पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः। मातुः पितुःष्वसुः पुत्रा मातुर्मातुःष्वसुः सुताः। मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः"। एतेषां क्रमेणाधिकारः। तदयं संक्षेपः। आदौ पुत्रस्तदभावे पौत्रस्तदभावे प्रपौत्रस्तदभावे साध्वी भार्य्या तदभावे दुहिता तदभावे माता तदभावे पिता तदभावे दौहित्रस्तदभावे भ्राता तदभावे तत्पुत्रस्तदभावे आसन्नसपिण्डस्तदभावे यथाक्रमं व्यवहितसपिण्डस्तदभावे आसन्नसकुल्यस्तदभावे व्यवहितसकुल्यस्तदभावे मातुलपुत्रादिः सर्वाभावे अब्राह्मणधनपर्य्यन्तं राजगामि ब्राह्मणधने तु ब्राह्मणान्तरमेव धनग्रहणाधिकारीति। याज्ञवल्क्यः "वानप्रस्थयतिब्रह्मचारिणामृक्थभागिनः। क्रमेणाचार्य्यसच्छिष्यधर्म्मभ्रात्रेकतीर्थिनः"। क्रमेण प्रतिलोमक्रमेण तेन ब्रह्मचारिणो गुरुकुलस्थस्याचार्य्यः, यतेः सच्छिष्यः, वानप्रस्थस्य भ्रातृत्वेनाभिमतोऽपरो वानप्रस्थएव"।

अधिकारिक्रमे पितृदौहित्रादेरकीर्त्तनात् तस्य नाधिकार इति विशेषः।

स्त्रीधने विशेषः "तत्र मनुः जनन्यां संस्थितायान्तु समं सर्व्वे सहोदराः। भजेरन्मातृकं रिक्थं भगिन्यश्च सनाभयः। यास्तासां स्युर्दुहितरस्तासामपि यथार्हतः। मातामह्या धनात् किञ्चित् प्रदेयं प्रीतिपूर्व्वकम्"। समम् अविषमांशम्, सनाभयः सहोदराः, भगिन्यः कुमार्य्य एव समांशाः तदाह वृहस्पतिः "स्त्रीधनं स्यादपत्यानां दुहिता च तदंशिनी। अप्रत्ता चेत्समूढा तु लभते मानमात्रकम्"। अपत्यानां पुत्राणां तदंशिनीति विशेषान्तुल्या समस्य लाभः समूढा विवाहिता मानमात्रकं श्रद्धानुसारेण किञ्चित्। गौतमः "स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानाञ्च"। 'अप्रतिष्ठिता अनपत्या निर्धनभर्त्तृका दुर्भगा' चेति रत्नाकरादयः। एता अपुत्रा अपि पुत्रवन्मातृधनभाजः। मनुः "मातुश्च यौतकं यत्स्यात् कुमारीभाग एव सः"। यौतकं विवाहकाले पित्रादितो लब्धम्। वशिष्ठः "मातुः पारिणाय्यं स्त्रियो विभजेरन्"। पारिणाय्यं परिच्छदादर्पकभूतिकादि। याज्ञवल्क्यः "मातुर्दुहितरः शेषमृणात्ताभ्य ऋतेऽन्वयः"। मातृधनं तदृणाच्छेषं ऋणशोधनावशेषं दुहितरो भजेरन्, ताभ्य ऋते दुहितॄणामभावेऽन्वयः दौहित्रीदौहित्रौ मनुवचनानुरोधात्। ब्राह्मादिवैवाहिकं परिच्छदादिकञ्च यन्मातृधनं तद्विषयमेतत्। कात्यायनः "दुहितॄणामभावे तु ऋक्थम्पुत्रेषु तद्भवेत्। बन्धूनामप्यभावे तु भर्त्तृगामि तत् स्मृतम्। भगिन्यो बान्धवैः सार्द्धं विभजेयुः सभर्त्तृकाः। स्त्रीधनस्येति धर्म्मोऽयं विभागस्तु प्रकल्पितः"। दुहितॄणामिति पारिणाय्यं विवाहकाले यौतकलब्धं पितृदत्तञ्च यन्मातृधनं तत्तस्याः पुत्र्यभावे पुत्रगामि भवतीत्यर्थः तदतिरिक्तन्तु स्त्रीधनं तस्या अभावे पुत्रीपुत्रोभयगामि इत्युक्तमेव प्राक्। बन्धुदत्तमिति पितृव्यतिरिक्तेन दत्तं बन्धुभ्रातृभगिन्यौ किन्तु कन्या तत्समांशा विवाहिता तु किञ्चिन्मानभागिनीति भगिन्य इत्यादेरर्थः। अभावे पुत्रीपुत्राद्यभावे स्त्रियाधनं पतिगामीत्यर्थः मनुः "ब्राह्मदैवार्षगान्धर्व्वप्राजापत्येषु यद्धनम्। अतीतायामप्रजायां भर्त्तुरेव तदिष्यते। यत्त्वस्याः स्याद्धनं दत्तं विवाहेष्वासुरादिषु। अतीतायामप्रजायां मातापित्रोस्तदिष्यते"। अप्रजायामनपत्यायाम्। गौतमः "भगिनीशुल्कं सोदर्य्याणामूर्द्ध्वं मातुः पूर्व्वं चेत्येके"। आसुरादिविवाहलब्धशुल्कविषयमेतत्। बौधायनः "रिक्थं मृतायाः कन्याया गृह्णीयुः सोदराः स्वयम्। तदभावे भवेन्मातुस्तदभावे भवेत्पितुः" वि॰चि॰। अत्र यस्य भर्त्तृगामित्वमुक्तं तदभावे तत्सपिण्डानामासत्तिक्रमेणाधिकारः। यत्र तु पितृगामित्वोक्तं तत्र तदभावे तत्प्रत्यासन्नसपिण्डा अधिकारिण इति बोध्यम्।

मिताक्षरामते तु जन्माधीनस्वत्वाङ्गीकारेण पैतामहे पितृ-च धने पितापुत्रयोः पितामहपौत्रयोश्च तुल्याधिकारः। पितुः पितामहस्य चोपरमे पुत्रस्य, पौत्रस्य च अपितृयोर्व्येऽप्यधिकारः। जीवद्विभागे तु स्वार्ज्जिते पितुर्द्व्यंशहारिता पैतामहे तुल्यांशिता। धनिकृतविभागे तदुपरमे पुत्रादिकृतविभागे च धनिपत्नीनामेकैकांशेऽधिकारः। दुहितॄणान्तु प्रत्येकं सजातीयकल्पितभागचतुर्थांशभागिता। दायदयितस्वत्वाङ्गीकारेण च भ्रात्रादीनामपुत्रादीनामपि भक्तत्वे संसृष्टत्वे च एकस्य मरणे इतरस्य स्वत्वस्थितेः तत्र पत्न्यादीनां न स्वत्वमुत्पद्यते तथा च विभक्तासंसृष्टधनएव पत्न्यादीनामधिकारः। पत्नीदुहितरश्चैवेत्यादि या॰ वचनात्

तत्र वचनं चिन्तामणिमते ११००पृष्ठे दर्शितम् तस्य वचनस्य व्याख्यायाम् मिता॰ तत्क्रमोदर्शितो यथा "तस्मादपुत्रस्य स्वर्यातस्य विभक्तस्यासंसृष्टिनः परिणीता स्त्री संयता सकलमेव धनं गृह्णातीति स्थितम्। तदभावे दुहितरः। दुहितर इति बहुवचनं समानजातीयानामसमानजातीयानाञ्च समविषमांशप्राप्त्यर्थम्। तथा च कात्यायनः। "पत्नी भर्त्तुर्धनहरी या स्यादव्यभिचारिणी। तदभावे तु दुहिता यद्यनूढा भवेत्तदेति" बृहस्पतिरपि "भर्त्तुर्धनहरी पत्नी तां विना दुहिता स्मृता" अङ्गादङ्गात्सम्भवति पुत्रवद्दुहिता नृणाम्। तस्मात्पितृधनं त्वन्यः कथं गृह्णाति मानवः" इति। तत्र चोढानूढासमवायेऽनूढैव गृह्णाति। "तदभावे तु दुहिता यद्यनूढा भवेत्तदेति" विशेषस्मरणात्। तथा प्रतिष्ठिताऽप्रतिष्ठितासमवायेऽप्रतिष्ठिता तदभावे प्रतिष्ठिता "स्त्रीधनं दुहितॄणाम् अप्रत्तानामप्रतिष्ठितानाञ्चेति" गौतमवचनस्य पितृधनेऽपि समानत्वात् सर्वैतत् पुत्रिकाविषयमिति मन्तव्यम्। "तत्सुतः पुत्रिकासुतः" इति पुत्रिकायास्तत्सुतस्य चौरससमत्वेन पुत्रप्रकरणेऽभिधानात्। अथवा दुहित्रभावे दौहित्रो धनभाक् यथाह विष्णुः। "अपुत्रपौत्रसन्ताने दौहित्रा धनमाप्नुयुः। पूर्वेषां तु स्वधाकारे पौत्रा दौहित्रकाः समा" इति मनुरपि। "अकृता वा कृता वापि यं विन्देत्सदृशात्सुतम्। पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनमिति"। तदभावे पितरौ मातापितरौ धनभाजौ। यद्यपि युगपदधिकरणवचनतायां द्वन्द्वस्मरणात् तदपवादत्वादेकशेषस्य धनग्रहणे पित्रोः क्रमो न प्रतीयते। तथापि विग्रहवाक्ये मातृशब्दस्य पूर्वनिपातादेकशेषाभावपक्षे च मातापितराविति मातृशब्दस्य पूर्वश्रवणात्पाठक्रमावगमाद्ग्रहणसम्बन्धेऽपि क्रमापेक्षायां प्रतीतक्रमानुरोधेनैव प्रथमं माता धनभाक्, तदभावे पितेति गम्यते। किञ्च पिता पुत्रान्तरेष्वपि साधारणो माता तु न साधारणीति प्रत्यासत्त्यतिशयात् "अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेदिति" वचनान्मातुरेव प्रथमं धनग्रहणं युक्तं न च सपिण्डेष्वेव प्रत्यासत्तिर्नियामिका अपि तु समानोदकादिष्वप्यविशेषेण धनग्रहणे प्राप्ते प्रत्यासत्तिरेव नियामिकेत्यादेव वचनादवगम्यत इति। मातापित्रोर्मातुरेव प्रत्यासत्त्यतिशयात् धनग्रहणं युक्ततरम्। तदभावे पिता धनभाक्। पित्रभावे भ्रातरो धनभाजः। तथा च मनुः। "पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वेति" अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात्। मातर्यपि च वृत्तायां पितुर्माता हरेद्धनमिति" मनुवचनाज्जीवत्यपि पितरि मातरि वृत्तायां पितुर्माता पितामही धनं हरेत् न पिता। यतः पितृगृहीतधनं विजातीयेष्वपि पुत्रेषु गच्छति। पितामही गृहीतं तु सजातीयेष्वेव गच्छतीति पितामह्येव गृह्णातीति। एतदस्माचार्य्यैर्नानुमन्यते। विजातीयपुत्राणामपि धनग्रहणस्योक्तत्वात् "चतुस्त्रिद्व्येकभागिनः" इत्यादिनेति। यत्तु मनुः "अहार्य्यं ब्राह्मणद्रव्यं राज्ञा नित्यमिति स्थितिः" इति मनुवचनम् तन्नृपाभिप्रायं न पुत्राभिप्रायम्। भ्रातृष्वपि सोदराः प्रथमं गृह्णीयुर्भिन्नोदराणां मातृविप्रकर्षात्। "अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेदिति" स्मरणात्। सोदराणामभावे भिन्नोदरा धनभाजः। भ्रातॄणामप्यभावे तत्पुत्राः पितृक्रमेण धनभाजः। भ्रातृभ्रातृपुत्रसमवाये भ्रातृपुत्राणामनधिकारः भ्रात्रभावे भ्रातृपुत्राणामधिकारवचनात्। यदा त्वपुत्रे भ्रातरि स्वर्याते तद्भ्रातॄणामविशेषेण धनसम्बन्धे जाते भ्रातृधनविभागात्प्रागेव यदि कश्चिद्भ्राता मृतस्तदा तत्पुत्राणां पितृतोऽधिकारे प्राप्ते तेषां भ्रातृणाञ्च विभज्य ग्रहणे पितृतोभागकल्पनेति युक्तम्। भ्रातृपुत्राणामप्यभावे गोत्रजा धनभाजः गोत्रजाः पितामहादयः सपिण्डाः समानोदकाश्च तत्र पितामही प्रथमं धनभाक्। "मातर्यपि च वृत्तायां पितुर्माता धनं हरेदिति" मात्रनन्तरं पितामह्या धनग्रहणे प्राप्ते भिन्नादीनां भ्रातृसुतपर्यन्तानां बहुक्रमत्वेन मध्येऽनुप्रवेशाभावात् पितुर्माता धनं हरेदित्यस्य धनग्रहणाधिकारप्राप्तिमात्रपरत्वादुत्कर्षे तत्सुतानन्तरम् पितामही गृह्णातीत्यविरोधः। पितामह्याश्चाभावे समानगोत्रजाः सपिण्डाः पितामहादयो धनभाजः भिन्नगोत्राणां सपिण्डानां बन्धुशब्देन ग्रहणात्। तत्र च पितृसन्तानाभावे पितामही पितामहः पितृव्यास्तत्सुताश्च क्रमेण धनभाजः पितामहसन्तानाभावे प्रपितामही प्रपितामहस्तत्सुतास्तत्सूनव इत्येवमासप्तमात्समानगोत्राणां सपिण्डानां धनग्रहणं वेदितव्यं तेषामभावे समानोदकानां धनसम्बन्धः। ते च सपिण्डानामुपरि सप्त वेदितव्या जन्मनामज्ञानावधिका वा। यथाह बृहन्मनुः। "सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते। समानोदकभावस्तु निवर्त्तेताचतुर्दशात्। जन्मनाम्नोः स्मृतेरेके तत्परं गोत्रमुच्यत" इति।

गोत्रजाभावे बन्धवो धनभाजः। बन्धवश्च त्रिविधा आत्मबन्धवः पितृबन्धवो मातृबन्धवश्चेति। यथोक्तम्। "आत्मपितृष्वसुः पुत्रा" इत्यादि विज्ञानेश्वरमते ११०१ पृ० दर्शितम् तत्र चान्तरङ्गत्वात् प्रथममात्मबन्धवो धनभाजस्तदभावे पितृबन्धवस्तदभावे मातृबन्धव इति क्रमो वेदितव्यः। बन्धूनामभावे आचार्यस्तदभावे शिष्यः "पुत्राभावे यः प्रत्यासन्नः सपिण्डस्तदभावे आचार्यः आचार्याभावेऽन्तेवासी" इत्यापस्तम्बस्मरणात्। शिष्याभावे सब्रह्मचारी धनभाक् येन सहैकस्मादाचार्यादुपनयनाध्ययनतदर्थज्ञानप्राप्तिः स सब्रह्मचारी तदभावे ब्राह्मणद्रव्यं यः कश्चिच्छ्रोत्रियो गृह्णीयात् "श्रोत्रिया ब्राह्मणस्यानपत्यस्य रिक्थं भजेरन्निति" गौतमस्मरणात्। तदभावे ब्राह्मणमात्रम् यथाह मनुः "सर्वेषामप्यभावे तु ब्राह्मणा रिक्थभागिनः। त्रैविद्याः शुचयो दान्तास्तथा धर्मो न हीयते" इति। न कदाचिदपि ब्राह्मणद्रव्यं राजा गृह्णीयात् "अहार्यं ब्राह्मणद्रव्यं राज्ञा नित्यमिति स्थितिरिति" मनुवचनात्। नारदेनाप्युक्तम् "ब्राह्मणार्थस्य तन्नाशे दायादश्चेन्न कश्चन। ब्राह्मणायैव दातव्यमेनस्वी स्यान्नृपोऽन्यथेति"। क्षत्रियादिधनं सब्रह्मचारिपर्य्यन्तानामभावे राजा हरेन्न ब्राह्मणः। यथाह मनुः। "इतरेषान्तु वर्णानां सर्वाभावे हरेन्नृपः" इति। "पुत्राः पौत्राश्च दायं गृह्णन्ति। तदभावे पत्न्यादय इत्युक्तमिदानीन्तदुभयापवादमाह। "वानप्रस्थयतिब्रह्मचारिणां रिक्थभागिनः। क्रमेणाचार्यसच्छिष्यधर्मभ्रात्रेकतीर्थिनः" याज्ञ०। "वानप्रस्थस्य यतेर्ब्रह्मचारिणश्च क्रमेण प्रतिलोमक्रमेणाचार्य्यः सच्छिष्यो धर्मभ्रात्रेकतीर्थी च रिक्थस्य धनस्य भागिनः। ब्रह्मचारी नैष्ठिकः उपकुर्वाणस्य धनं मातादय एव गृह्णन्ति। नैष्ठिकस्य धनमाचार्यो गृह्णाति इत्युच्यते। यतेस्तु धनं सच्छिष्यो गृह्णाति। सच्छिष्यः पुनरध्यात्मशास्त्रश्रवणधारणतदर्थानुष्ठानक्षमः दुर्वृत्तस्याचार्यादेरपि भागानर्हत्वात्। वानप्रस्थधनन्त्वर्धभ्रात्रेकतीर्थी गृह्णाति धर्मभ्राता एकतीर्थ्योऽत्र धर्मभ्रातासौ एकतीर्थी च धर्मभ्रात्रेकतीर्थी। एतेषामाचार्यादीनामभावे पुत्रादिषु सत्स्वप्येकतीर्थ्येव गृह्णाति" मिता०। "सोदरस्यांशं हरेत् वैमात्रेयस्य च संसृष्टत्वे तद्धनाधिकारः। अत्रेदं बोध्यं "अपुपौत्रकाभावे" इति वदता विष्णुना प्रपौत्रस्याप्यधिकारः सूचितः तस्यापि तत्पुत्रतुल्यत्वात् सपिण्डत्वाच्च अन्यथा अधिकारिषु प्रपौत्रस्योपरितनानामेव कीर्त्तनात् तस्यानधिकारतापत्तेः। अतएव श्राद्धदानप्रकरणे तत्सुतः पौत्रसुतः प्रपौत्र अत्र पौत्रतनयः प्रपितामहतत्पर्य्यन्तं न दद्यादिति वदता मिताक्षराकृता प्रपौत्रस्याधिकारः सूचितः। तदधस्तनसन्तानस्य च प्रपितामहपौत्रपर्य्यन्ताभावेऽधिकारः तेषामसपिण्डत्वेऽपि गोत्रजसमानोदकत्वाविशेषात् सपिण्डाधिकारे अधस्तनानामेव प्रथमपञ्चनात् गोत्रजाधिकारेऽपि अधस्तनानामेव अर्द्धतनापेक्षया प्रथमं पञ्चनौचित्यादिति एतन्मते च असगोत्रसपिण्डमध्ये, दौहित्रस्यैव पञ्चनात् पितामहदौहित्रादेर्नाधिकारः। बन्धुशब्दस्य असगोत्रसपिण्डपरत्वेऽपि बन्धुशब्दस्य पारिभाषिकपरत्वेन तेन कीर्त्तनादिति बहवः। वीरमित्रोदये तु विशेषविधिभिया मातुलादीनामधिकारो व्यवस्थापितः तन्मते तेषां बन्धुपदेन ग्रहणात् इति भेदः। तथा दायलब्धधने पत्न्यायत्ते दानभोगादावधिकारः इति मिता० वीर० मते तु स्थावरे उपकाराभावे मठादौ दानेऽनधिकार इति भेदः। "आधिवेदनिकाद्यञ्चेति" याज्ञवल्क्यवचनेन स्त्रिया यत्पृथग्विभागकालादिलब्धधनमात्रस्य स्त्रीधनत्वं व्यवस्थाप्य तद्विभागः मिता० दर्शितो यथा "अतीतायामप्रजसि बान्धवास्तदवाप्नुयुः" या०। तत्पूर्वोक्तं स्त्रीधनमप्रजसामनपत्यायां दुहितृदौहित्रपुत्रपौत्ररहितायां स्त्रियामतीतायां बान्धवा भर्त्रादयो वक्ष्यमाणा गृह्णीयुः। सामान्येन बान्धवा धनग्रहणेऽधिकारिणो दर्शिताः। इदानीं विवाहभेदेनाधिकारिभेदमाह। "अप्रजःस्त्रीधनं भर्त्तुर्ब्राह्मादिषु चतुर्ष्वपि। दुहितॄणां प्रसूता चेच्छेषेषु पितृगामि तत्" या०। अप्रजःस्त्रियाः पूर्वोक्तायां ब्राह्मदैवार्षप्राजापत्येषु चतुर्षु विवाहेषु भार्य्यात्वं प्राप्ताया अतीतायाः पूर्वोक्तधनं प्रथमं भर्त्तुर्भवति। तदभावे तत्प्रत्यासन्नानां सपिण्डानां भवति। शेषेष्वासुरगान्धर्वराक्षसपैशाचेषु विवाहेषु तदप्रजःस्त्रीधनं पितृगामि। माता च पिता च पितरौ तौ गच्छतीति पितृगामि एकशेषनिर्दिष्टाया अपि मातुः प्रथमं धनग्रहणं पूर्वमेवोक्तम्। तदभावे तत्प्रत्यासन्नानां धनग्रहणम्। सर्वेष्वेव विवाहेषु प्रसूताऽपत्यवती चेत् दुहितॄणां तद्धनं भवति। अत्र दुहितृशब्देन दुहितृदुहितर उच्यन्ते। साक्षाद्दुहितॄणाम् "मातुर्दुहितरःशेषम्" इत्यत्रोक्तत्वात्। अतश्च मातृधनं मातरि वृत्तायां प्रथमं दुहितरो गृह्णन्ति। तत्र चोढानूढासमवायेऽनूढा गृह्णाति। तदभावे परिणीता तत्रापि प्रतिष्ठिताऽप्रतिष्ठितासमवायेऽप्रतिष्ठिता गृह्णाति तदभावे प्रतिष्ठिता। यथाह गौतमः "स्त्रीधनं

दुहितॄणामप्रत्तानामप्रतिष्ठितानां चेति" । तत्र चप्रत्ता-
नुप्रतिष्ठितानाञ्च । अप्रतिष्ठिता अनपत्या निर्धना वा ।
एतच्च युद्धव्यतिरेकेण । युद्धकन्तु सोदर्य्याणामेव "भगि-
नीशुल्कं सोदर्य्याणामूर्द्ध्वं मातुरिति" गौतमवचनात् ।
सर्वासां "दुहितॄणां प्रसूता चेत्" इत्यादिवचनात् तासां
भिन्नमातृकाणां समवाये दौहित्रीणां किञ्चिदेव दात-
व्यम् । यथाह मनुः "स्त्रीणां सुदुहितृणामपि
यथार्हतः । मातामह्या धनात् किञ्चित् प्रदेयं प्रीतिपूर्वक-
मिति" । दुहितॄणामप्यभावे दौहित्रा धनहारिणः ।
यथाह नारदः । "मातुर्दुहितरोऽभावे दुहितॄणां तद-
न्वयः" इति तच्छब्देन सन्निहितदुहितृपरामर्शात् । दौहि-
त्राणामभावे पुत्रा गृह्णन्ति । "ताश्च सुते अन्वयः" इत्यु-
क्तत्वात् मनुरपि दुहितॄणां पुत्राणाञ्च मातृधनसम्बन्धं
दर्शयति । "जनन्यां संस्थितायां तु समं सर्वे सहोदराः ।
भजेरन्मातृकं रिक्थं भगिन्यश्च सनाभयः" इति मातृकं रि-
क्थं सर्वे सहोदराः समम्भजेरन् सनाभयो भगिन्यश्च समं
भजेरन् इति सम्बन्धः न पुनः सहोदरा भगिन्यश्च संभूय
भजेरन् इति इतरेतरयोगस्य द्वन्द्वप्रयोगाभावाद-
प्रतीतेर्विभागवाक्यत्वाच्चैवेनापि समस्योपपत्तेर्यथा देव-
दत्तः कर्षिं कुर्य्याद्यज्ञदत्तश्चेति । समपदञ्च सदारवि-
भागनिरासार्थम् । सोदरपदञ्च भिन्नोदरनिरासार्थम् ।
अनपत्यहीनजातिस्त्रीधनन्तु भिन्नोदराप्युत्तमजातीयसप-
त्नीदुहिता गृह्णाति तदभावे तदपत्यं तथा च मनुः
"स्त्रियास्तु यद्भवेद्वित्तं पित्रा दत्तं कथञ्चन । ब्राह्मणी
तद्धरेत् कन्या तदपत्यस्य वा भवेदिति" । ब्राह्मणीपदञ्च
उत्तमजात्युपलक्षणम् । अतश्चानपत्यवैश्याधनं क्षत्रिया
कन्या गृह्णाति । पुत्राणामभावे पौत्राः पितामहीधन-
हारिणः । "ऋणमात्मीयवत् प्रतिकुर्य्युरिति" गौतमवच-
नात् "पुत्रपौत्रैर्ऋणं देयमिति" पौत्राणामपि पिताम-
ह्यृणापाकरणेऽधिकारात् । पौत्राणामप्यभावे पूर्वोक्ताभ-
र्त्तादयो बान्धवा धनहारिणः" । अत्रापि पुंधनवत्
स्त्रीधनेऽपि प्रपौत्राधिकारो वेदितव्यः अगृहीतवित्तस्य
प्रपौत्रस्य ऋणापाकरणनिषेधेन पुंधन इव स्त्रीधनेऽपि
तदधिकारस्य कल्पितत्वात् इति वक्तव्यम् ।

उत्तरापथ पु० उत्तरा उत्तरस्यां पन्थाः अच् समा० ।
१उत्तरस्यां दिशि स्थिते पथि २देशभेदे च । "उत्तर
पथजन्मानः कीर्त्तयिष्यामि तानपि । यौनकाम्बोजगा-
न्धाराः किरातबर्बरैः सह" । महार्थचि० हरा० ।

उत्तरापरा स्त्री उत्तरस्याः अपरस्याश्च दिशोऽन्तराला दिक्
दिग्नाम स० । वायुकोणे "उत्तरापराभिमुखोऽस्य सम-
दिग्मानस्थलदर्शनात्" आ०त०सांख्या०टी० । "उत्तरा-
पराभिमुखः वायुकोणाभिमुखः" रघु० ।

उत्तराभास पु० उत्तरमिवाभासते आ+भास–अच् । दुष्टो-
त्तरे उत्तरशब्दे १०८० पृष्ठे तल्लक्षणादि ।

उत्तराम् अव्य० उद्+अत्यर्थे तरप् आम् । अतिशयेनोत्
अर्थे "उदेनमुत्तरां नयाग्ने घृतेनाहुत" यजु०१७
५० । "अतिशयेन उत् उत्तराम्" वेददी० । एवम्
तमप् आम् । उत्तमामप्यत्र अव्य० ।

उत्तरायण न० उत्तरा उत्तरस्यामयनं सूर्य्यादेः "पूर्वपदात्
संज्ञायाम्" पा० णत्वम् । सूर्य्यादेः १उत्तरदिग्ग-
मने अभेदोपचारात् ७त० वा । वर्षमध्ये सूर्य्यस्य
दक्षिणत उत्तरदिग्गमनरूपाद्ये २षण्मासात्मके काले
सूर्य्यादेः दक्षिणोत्तरयोरयनस्य अयनसंक्रान्तिशब्दे २२८
पृ० उक्तम् तथा च सूर्य्यस्योत्तरायणसंक्रमादधि षण्मासाः
उत्तरायणकालः । "कर्कटादिस्थिते भानौ दक्षि-
णायनमुच्यते । उत्तरायणमप्युक्तं मकरस्थे दिवा-
करे" म०त० विष्णुपु० । "एतन्मकरकर्कटादिसंक्रमे-
णायननिरूपणम् श्रौतस्मार्त्तकर्म्मार्थं धनुरादौ सू-
र्य्यसिद्धान्ताभिहितोदगयनादिनिरूपणन्तु रविगत्यनुसा-
रेण दिनमानादिज्ञानार्थम्, इत्यनयोर्न वि-
रोधः" म० त० रघु० । "ततश्च मकरस्थिरसंक्रा-
न्त्यवधिषण्मासाः सूक्ष्मउत्तरायणं कर्कटसंक्रान्त्य-
वधि तु सूक्ष्ममिति भेदः । अस्य प्रशंसाऽपि "स यत्रो-
दगावर्त्तते देवेषु तर्हि भवति देवांश्च इति गोपायति"
शत०ब्रा०२,१,३,३ । "षडुत्तरायणं यज्ञदैवानाम् दक्षि-
णायनं रात्रिः संवत्सरोऽहोरात्रः" विष्णुः "अग्निर्ज्योति-
रहः शुक्लः षण्मासा उत्तरायणम्" गीता । यथा चास्य कौट-
त्वं तथाऽयनशब्दे २२५ पृ० काकभाषवीयधृतप्रमाणादिना
व्यवस्थापितम् । उपचारात् ३तदागमनारम्भसंक्रान्तौ
"मृगकर्कटसंक्रान्ती द्वे तूदग्दक्षिणायने" सूर्य्य०सि० । तत्र
पुण्यकालताविषये "यावदि भक्ता भुक्ता तत्पुण्यं चोत्त-
रायणे" "मिश्रे च भास्करे दृष्टे दिनान्तं दक्षिणायने"
म०त०भवि०पु० "भविष्यत्ययने पुण्यमतीते चोत्तरायणे"
इति ति०त० देवीपु० । रात्रिसंक्रान्त्यभिप्रायमिदं
वचनम् इति रघुनन्दनादयः । माधवादयस्तु अत्र
संक्रान्तिपरत्वं तत्र विशेषपुण्यकालत्वं व्याकुर्वते । तत्र

अयनसंक्रान्तिशब्दे ९२८दर्शितम् । उत्तरायणकालाभिमानिनि कृतविद्यप्राणिनां ब्रह्मादिलोकप्रापणाय अतिवाहनायेश्वरनियुक्ते चेतने ४पुरुषभेदे "आतिवाहिकास्तल्लिङ्गात्" शा० सू० भाष्ययोस्तथा व्यवस्थापितं तच्च आतिवाहिकशब्दे ६५१ पृ० दर्शितम् । तत्र तत्रैव अग्निर्ज्योतिरित्यादिगीताव्याख्याने "अग्न्याद्यस्तदभिमानिनोदेवा" इति श्रीधरोक्तम् ।

उत्तरार्क पु० काश्यास्थे उत्तरस्यां दिशि वर्करकुण्ड सन्निधौ सूर्य्यमूर्त्तिभेदे । तद्विवृतिर्यथा "इति काशी प्रभावज्ञो जगच्चक्षुस्तमोपहः । कृत्वा द्वादशधात्मानं काशीपुर्य्यां व्यवस्थितः । लोलार्क उत्तरार्कश्च साम्बादित्यस्तथैव च । चतुर्थो द्रुपदादित्यो मयूखादित्य एव च । खखोल्कश्चारुणादित्यो वृद्धकेशवसंज्ञकौ । दशमो विमलादित्यो गङ्गादित्यस्तथैव च । द्वादशश्च यमादित्यः काशीपुर्य्यां घटोद्भव! ।" ४६ अ० इति द्वादशसूर्य्यभेदानभिधाय तत्स्थानानि तत्र क्रमशोऽभिहितानि ।"अथोत्तरस्यामाशायां कुण्डमर्काख्यमुत्तमम् । तत्र नाम्नोत्तरार्कश्च रश्मिमाली व्यवस्थितः" ४७ अ० ।

उत्तरार्द्ध न० उत्कृष्टमर्द्धम् उत्तरमर्द्धस्य एक दे० त० वा । देहपूर्व्वार्द्धे । तस्योत्कृष्टत्वात्तथात्वम् "व्यूढ स्थितः किञ्चिदिवोत्तरार्द्धम्" रघुः । कर्म्म० । २शेषार्द्धे च "अथ मध्यं नैवोत्तरार्द्धेनाध्यवस्यति" शत०ब्रा० १,२,१,१२

उत्तराशा स्त्री कर्म्म० । उत्तरस्यां दिशि । उत्तराशाधीशादयः उत्तरदिगीशशब्दे पृ० १०८२ दृश्याः ।

उत्तराश्मन् पु० कर्म्म० । उत्तरप्रसिद्धप्रस्तरभेदे ततः अश्मा० चतुरर्थ्याम् र । उत्तराश्मर तत्सन्निहितदेशादौ त्रि० ।

उत्तराषाढा स्त्री कर्म्म० । अश्विन्यादिनक्षत्रेषु एकविंशतितमे नक्षत्रे "उग्रः पूर्व्वमघान्तकाश्च ध्रुवगणश्चोत्तराश्च समूः" ज्यो० उक्तेरियं ध्रुवगणः । तस्याः अष्टपादि उडुपशब्दे १०७१ पृष्ठे उक्तम् एवं विश्वदेवताका अस्येति नक्षत्रशब्दे ४९७४० उक्ता ।

उत्तरासङ्ग पु० उत्तरे ऊर्द्धभागे आसज्यते आ+सन्ज कर्म्मणि घञ् । उत्तरीयवस्त्रे "शुक्लोत्तरासङ्गभृतो वियद्भ्राम्" भट्टिः "त्वगुत्तरासङ्गवतीमधीतिनीम्" कुमा० । "अभ्रोत्तरासङ्गवम् विदधद्वौतपट्टिकाम्" माघः । उत्तरस्यां दिशि २आसङ्गे च ।"शिशिरसमयसख्यं शिव इवोत्तरासङ्गम्" काद० । रवेस्तु यथा शिशिरसमये माघादौ उत्तरस्यां दिशि गतिस्तथोत्तरायणशब्दे ११०४ पृष्ठे उक्तम् ।

उत्तरासद् पु० उत्तरा उत्तरस्यां दिशि सीदति सद-क्विप् । उत्तरदिशि भागार्हेषु १मित्रावरुणप्रधानेषु २मरुत्प्रधानेषु च देवेषु "देवा मित्रावरुणनेत्रा मरुन्नेत्रा वोत्तरासद्भ्यः स्वाहा" मित्रावरुणनेतृभ्यो मरुन्नेतृभ्यो वा देवेभ्य उत्तरासद्भ्यः स्वाहा" यजु० ९,२६,२७ ।

उत्तराह पु० उत्तरमनन्तरमहः टच् समा० । अनन्तरदिने

उत्तराहि अव्य० उत्तर+प्रथमाद्यर्थे दिग्देशकालवित्तेः आहि । उत्तरस्मिन् उत्तरस्मात् उत्तरं इत्यर्थे । "आहि च दूरे" पा० उक्तेः दूरएवास्य प्रवृत्तिः । "उदीचीमेव दिशम् प्राजनंस्थानादुत्तराहि वाग्वदति" शत०ब्रा० २,२,२,१५ । "अव्ययात्त्यप्" पा० "अमेहक्वतसित्रेभ्य एव" इति वार्त्तिके नियमात् अतो भवार्थे अपेव । औत्तराहिक तद्भवे त्रि० ।

उत्तरिक त्रि० उत्तरं उत्प्लवनमस्त्यस्याः ठन् । १उत्तार्य्यनद्यादौ २नदीभेदे स्त्री ।"अनुव्रातश्च भरतो वाहिनीः चतुरङ्गिणीः । ततः शीघ्रतरं प्रायादुत्तीर्य्योत्तरिकां नदीम्" रामा० ।

उत्तरीय न० उत्तरस्मिन् देहभागे भवः गहा० छ । ऊर्द्धदेहार्य्ये वस्त्रे "धौतोत्तरीयप्रतिमच्छवीनि" माघः "अनुत्तरीयाणि भवन्ति वाचाम्" "अथास्य रत्नग्रथितोत्तरीयम्" रघुः । प्रतिनिधिपर्य्यन्तोत्तरीयधारणावश्यकतोक्ता आ० त० यथा । "विकच्छोऽनुत्तरीयश्च नग्नश्चावस्त्र एव च । श्रौतं स्मार्त्तं तथा कर्म्म न नग्नश्चिन्तयेदपि" भृगु० तद्धारणप्रकारश्च "यथा यज्ञोपवीतन्तु धार्य्यते च द्विजोत्तमैः । तथा संधार्य्यते यत्नादुत्तरासङ्गकं शुभम्" स्मृतिः । "स्नायात् वाससी धौते अक्लिन्ने परिधाय च । अभावे धौतवस्त्रस्य शाणक्षौमाविकानि च । कुतपो योगपट्टं वा द्विवासा येन वा भवेत्" आ०त० । "येन केति उपवीतेन तत्प्रतिनिधीभूतेन कुशरज्ज्वादिना" आ०त० रघु० । "यज्ञोपवीते द्वे धार्य्ये श्रौतस्मार्त्तेषु कर्म्मसु । तृतीयञ्चोत्तरीयार्थे वस्त्राभावातिदिश्यते" स्मृतिः । वस्त्रमाह "न स्यूतेन न दग्धेन पारक्येण विशेषतः । मूषिकोत्कीर्णजीर्णेन कर्म्म कुर्य्याद्विचक्षणः" आ० त० भारतम् । "न रक्तमुल्बणं वासो न नीलञ्च प्रशस्यते । मलाक्तं च दशाहीनं वर्जयेदम्बरे बुधः" नर० सिं० पु० । "दशाहीनेन वस्त्रेण कुर्य्यात् कर्म्माण्यभावतः" उश० । "नग्नं काषायकं वासो न रक्तं मलिनं तथा । जीर्णं नाऽपदशं चैव नेतं धार्य्यं प्रयत्नतः" विष्णुध०पु० ।

चम्। ततो होममेवं समाप्याप्योऽवगाहनम् इत्यर्थः नारा० “एता एव तद्देवतास्तर्पयन्ति” २१ सू०। “प्राता साविताद्या नव अग्निमीळे इत्याद्याच विंशतिं तर्पयन्तीत्यर्थः। ऋग्देवता आदिश्य तर्पयेयुः। द्वितीयान्तं कृत्वा तर्पयामीत्येकादशविंशद्वाक्यानि कृत्वा तावत्कृत्वस्तर्पयेयुः” ना० वृ०। “आचार्यान् ऋषीन् पितॄंश्च” २२सू०। यश्च मनुष्यताक्तं तर्पणमुक्तं तदेतद्वृत्तेनेदानीमपि कार्यमित्यर्थः। चशब्दो देवतातर्पणसमुच्चयार्थः। तेन प्रजापत्याद्या अपि तर्प्याः। देवतास्तर्पयन्तीत्यत्र देवताग्रहणमत्रापि समुच्चयार्थम् क्रमश्च तन्त्रोक्त एव” ना० वृ०। “एतदुत्सर्जनम्” २३सू०। “अस्येयं संज्ञा। ततः पक्षिणान् षडङ्गान्यधीयीत। शुक्लपक्षानधीयीतेत्यारभ्य एवमन्ता धर्मा षडङ्गाध्ययन एतेत्याहुरेके। अन्ये त्वविशेषेणेत्याहुः” ना० वृ०। उत्सर्गशब्दे दर्शितेन वाक्येनास्य विकल्पः शाखाभेदेन व्यवस्थाप्यः “पौषे तु छन्दसां कुर्याद्बहिरुत्सर्जनं बुधः” मनुः। [कूने च

**उत्सर्पण** न० उद्+सृप्–ल्युट्। १उत्क्रम्य पुरतोगतौ, २उन्न-

**उत्सर्पिन्** त्रि० उत्सर्पति णिनि। उत्पतिष्णौ “पयोधरोत्सर्पिषु शीर्य्यमाणः” रघुः। “उत्सर्पिभिः प्रांशुभिर्वांशुजालैः” किरा० २अतिशयिते स्त्रियां ङीप्। “उत्सर्पिणी खलु महतां प्रार्थना” शकु० सा च हेमचन्द्रोक्ते कालचक्रान्तर्गते ३कालगतिभेदे “सागर कोटिकोटीनां विंशत्या च समाप्यते। अवसर्पिण्यां षड़रा उत्सर्पिण्यां तएव विपरीताः। एवं द्वादशभिररैर्विवर्त्तते कालचक्रमिदम्” हेम०। [पद्मादौ गवि जटा०

**उत्सर्य्या** स्त्री उद्+सृ–यत्। १ऋतुमत्यां गर्भयोग्यावस्था-

**उत्सव** पु० उद्+सू–अप्। आनन्दजनकव्यापारे विवाहादौ। “कृतिमत्समधिकर्द्धिरुत्सवः पूर्व्वमुत्सवमपोहदुत्तरः” “स कृत्वा विरतोत्सवान्” रघुः। “धर्मसेतुसमाकीर्णां यज्ञोत्सववतीं शुभाम्” “हृष्टपुष्टजनाकीर्णां नित्योत्सवसमाकुलाम्” भा० प० २०६ अ०

**उत्सवसङ्केत** पु० उत्सव आनन्दजनकः सङ्केतः स्त्रीपुंसयोरत्यर्थमनुरागादाह्वानम् यस्य। अस्त्येवं स्त्रीत्येवं दाम्पत्यनियमशून्ये स्त्रीपुंसयोरनुरागमात्रहेतुकसैरविहारशालिनि पार्वतीये जातिभेदे। भा० स० अर्जुनस्योत्तरदिग्विजये “पौरवं युधि निर्ज्जित्य दस्यून् पर्वतवासिनः। गणानुत्सवसङ्केता नजयत् सप्त पाण्डवः,

२६अ० अत्र नीलक० दर्शितरीत्यैव व्याख्या। तद्वर्णके प्रतीचीस्थेऽपि जातिभेदे “गणानुत्सवसङ्केतान् अजयत् पुरुषर्षभः” नकुलस्य प्रतीचीविजये ३१अ० “शरैरुत्सवसङ्केतान् स कृत्वा विरतोत्सवान्” रघुः।

**उत्सादन** उद्+सद–णिच्–ल्युट्। १उत्सारणे,२उद्वर्त्तने कषायद्रव्येण क्लेदाद्यपसारणे ३उच्छेदकरणे “उत्सादनार्थं लोकानां राक्षी भ्रमन्ति कर्मीनिक” भा० व० १०२ अ०। “उत्सादनार्थं लोकानां युञ्जुनीम महासुरः” भा० व०१००अ०। “न हि दैत्यवने किञ्चित् विद्यतेऽन्यत् प्रयोजनम्। उत्सादनकृते तेषां वनस्थानां महाद्युते!” भा० व० २२७ अ०। स्थानान्तरनयने “अथ प्रवेद्यारम्भण प्रवर्ग्यौत्सादनेत्या०” कात्या० १४,१,१२, “उपसदन्ते प्रवर्ग्यौत्सादनम्” कात्या० १८,२,१०। उत्साद्यतेऽत्र उद्+सद–णिच् आधारे ल्युट्। महावीरादिपरित्यागदेशे। “उत्सादनदेशं गच्छन्ति साममानामन्तरम्” कात्या० २६,७,१०, उत्सादनदेशं प्रति प्रागच्छन्ति उत्सादनं महावीराणां परित्यागः स यत्र देशे विहितः सूत्रे” कर्क०

**उत्सादनीय** त्रि० उद्+सद–णिच्–कर्मणि अनीयर्। १उच्छेद्ये २उद्वर्त्तनीये उत्सर्त्तनीये कषायादिद्रव्ये। “कुष्ठकुङ्कुमोत्सादनीयानि सर्पींष्या लेपनानि” च सुश्रु०।

**उत्सादि** पु० अपत्याद्यर्थे “उत्सादिभ्योऽञ्” पा० अञ् प्रत्ययप्रकृतिभूतगणे। स च उत्स उदपान विकर विनद महानद महानस महाप्राण तरुण तलुन (वष्कयाऽसे) पृथिवी धेनु पङ्क्ति जगती त्रिष्टुप् अनुष्टुप् जनपद भरत उशीनर ग्रीष्म पीलुकुण(उदः स्थानदेशे) पृषदंश भल्लकीय रथन्तर मध्यन्दिन बृहत् महत् सत्वत् कुरु पञ्चाल इन्द्रावसान उष्णिह् ककुभ् सुवर्ण देव (ग्रीष्मादच्छन्दसि) औत्स तद्भवे त्रि०।

**उत्सादित** त्रि० उद्+सद–णिच्–क्त। उन्मूलिते उद्वर्त्तिते च “अक्रासनेपूपविष्टः परिधायाम्बरं शुभः। स्नातो चन्दनसंयुक्तैः माल्यैरभिमन्त्रितैः। उत्सादितः कषायेण चतुर्भिः सुचिचितैः” भा० द्रो० ८२अ०।

**उत्सारक** पु० उद्+सृ–णिच्–ण्वुल्। द्वारपाले हेमच० तेन हि प्रभुद्वारतो जना दूरीक्रियन्ते इति तस्य तथा त्वपसारके त्रि०। [२चालने, ३स्थानान्तरकरणे च।

**उत्सारण** न० उद्+सृ–णिच्–ल्युट्। १दूरीकरणे,

**उत्सारित** त्रि० उद्+सृ–णिच्–क्त। दूरीकृते चालिते “गुणान्त्यमङ्कं गुणकेन हन्यादुत्सारितेनैवमुपान्तिमादीन्” लीला०

**उत्साह** पु० उद्+सह–घञ्। १उद्यमे,२अध्यवसाये, कर्त्तव्य

कार्य्येषु ३स्थिरतरे प्रयत्ने "उत्साहो मन्त्रमूलं स्यादिति नीतिविदां मतम्। प्रभुशक्तिर्मन्त्रमूला तस्मादुत्साहवान् भवेत्" इत्युक्ते राज्ञां ४गुणविशेषे, "चारेणोत्साहयोगेन क्रियया चैव कर्मणाम्" मनुः। "सोताविरोत्साहगुणेन सम्यक्" कुमा०।५कल्याणे, मङ्गलाचारे ६सूत्रे, मेदिनी "कार्य्यारम्भेषु संरम्भः स्थेयानुत्साह उच्यते" सा०द० उक्तलक्षणके वीररसस्य ७स्थायिभावे। स च वीररसस्य स्थायी भावः "रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा। जुगुप्सा विस्मयश्चेत्यष्टौ प्रोक्ताः शमस्तथा" स्थायिनो विभक्तस्य "उत्तमप्रकृतिर्वीरः उत्साहस्थायिभावकः" तत्रोक्तेः। तत्र उद्यमार्थे "मन्दोत्साहः कृतोऽस्मि मृगयापवादिना माधव्येन" शकु०। "मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः" गीता "महोत्साहः स्थूललक्ष्यः कृतज्ञोवृद्धसेवकः" या०स्मृ० अस्त्यर्थे मत्वा०मतुप् इनि वा उत्साहिन् उत्साहवत् तद्विशिष्टे त्रि० स्त्रियां ङीप्।

**उत्साहक** त्रि०उद्+सह–ण्वुल्। उत्साहान्विते "हव्यकाभ्यामिति" पा० षष्ठीनिषेधेऽपि याजका० षष्ठी समासः। कार्य्योत्साहकः।

**उत्साहन** न० उद्+सह–णिच्–ल्युट्। उत्साहजनने

**उत्साहवर्द्धन** पु०उत्साहं वर्द्धयति वृध–णिच्–ल्यु। वीररसे। वृध–ल्युट् ६त०। उत्साहस्य वृद्धौ न०।

**उत्साहशक्ति** स्त्री उत्साहरूपशक्तिर्वलम्। राज्ञां विक्रमहेतौ बले। "षड्गुणाः शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः" अमरः। "कर्त्तव्येषु कार्य्येषु स्थेयान् प्रयत्न उत्साहः" भक्ति०।

**उत्सिक्त** त्रि० उद्+सिच–क्त। १उद्रिक्ते अतिशयिते २दृप्तियुक्ते ३उद्धते गर्व्विते च। "आनीवादस्थिरा वाचमुत्सिक्तमनसां तथा" मनुः।

**उत्सुक** त्रि० उत्सुवति सु प्रेरणे भित्वा०दि० उ कन्। १इष्टार्थाप्रवे कालक्षेपासहिष्णौ २इष्टार्थोद्युक्ते च"दिनावसानोत्सुकबालवत्सा" "सुत्वा रामः प्रियोदन्तं मेने तत्सङ्गमोत्सुकः" "वत्सोत्सुकापि स्तिमिता सपर्य्याम्" "आयद्धोत्सुकसारसां चित्रकूटस्थलीं जहौ" रघुः। उत्सुकस्य भावः ष्यञ्। औत्सुक्य तद्भावे न०। "इष्टानवाप्तेरौत्सुक्यं कालक्षेपासहिष्णुता। चित्ततापत्वरास्वेददीर्घनिश्वसितादिकृत्" सा० द०। "औत्सुक्येन कृतत्वरा सहभुवा व्यावर्त्तमाना ह्रिया" रत्ना०। भवा०

अभूततद्भावार्थे क्यङ्। उत्सुकायते उत्सुकायमाना "यस्योत्सुकायमाना त्वं न प्रतोपायसेऽन्तिके" भट्टिः

**उत्सूत्र** त्रि० उत्क्रान्तः सूत्रम् अत्या० स०। विधानसूत्रातीते "अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना" माघः।

**उत्सूर** पु० उत्क्रान्तः अतिक्रान्तः सूरं सूर्य्यम् अत्या० स०। दिनात्यये हेमच०उत्सूर्य्योदयोऽप्यत्र। "ओत्सूर्य्यमन्वानुत्सापयाव्युषम्"। अथ०४,५,७, "उत्सूर्य्यायिनयावन् सर्व्वे वायन् प्रगे निशा" भा०शा०२२८अ०

**उत्सृज्य** अ० उद्+सृज–ल्यप्। १त्यक्त्वेत्यर्थे "ल्यडुपलात् कर्म्मणि क्यप्। २त्यक्तव्ये त्रि०

**उत्सृष्ट** त्रि०उद्+सृज–क्त। १त्यक्ते २दत्ते च। "ब्राह्मणानाह यत्किञ्चित् यथोत्सृष्टं स निर्ज्जने। तत् कश्चिदन्यो न नयेत् विभाज्यत्वं यथाक्रमम्। न वाह्यं न च तत्क्षीरं पातव्यं केनचित् क्वचित्"। मत्स्य पु०। "महोक्षोत्सृष्टपशवः सूतिकागन्तुकादयः" या०स्मृ०।

**उत्सेक** पु० उद्+सिच–घञ्। १गर्व्वे, "उपदा विविशुः शश्वत् नोत्सेकाः कोशलेश्वरम्" रघुः। "नोत्सेकमगमन्नेदं कदाचिदिह नः कुलम्" भा० आ० ११०अ०। २उद्रेके "पातव्यं श्रावकामस्य सोमोत्सेके गतस्पृहे" सुश्रु०। ३ऊर्द्ध्व वहिः सेचने च।

**उत्सेकिन्** त्रि० उत्सेक+अस्त्यर्थे इनि। १अतिशयिते २गर्व्वयुक्ते च स्त्रियां ङीप्।"भाव्येषूत्सेकिनी" शकु०

**उत्सेचन** न०उत्क्रम्य आधारमतिक्रम्य सेचनम्। आधारातिक्रमेण प्लवने (उपचान)

**उत्सेध** पु० उत्सेधति कारणमतिक्रम्य वर्द्धते उद्+सिध–गत्याम् अच्। १देहे तस्य शुक्रशोणितरूपस्वकारणातिक्रमेण वर्द्धमानत्वम्। भावे घञ्। २उन्नतौ तस्य तदभिहितभावत्वात् "पुत्रवित्तार्ज्जनात् पितेत्यादौ, पुत्रार्जितवित्त इव उन्नत्यात्रयेऽपि वृत्तिः तथात्वेऽपि विशेषणसमासे ब्राह्मणश्रमणादिवत् परनिपातः हिमनिष्यन्दपाण्डर इत्यादिवदिति भेदः। यथा "पयोधरोत्सेधनिपातचूर्णिताः इति कुमा० "तस्य प्रमाणमाहुर्वाहिपञ्चमोत्सेधमुपदिशन्ति" सुश्रु०। "उत्सेधनिर्जितमहीधरां ध्वजैः"माघः "तस्याश्चासमा दीर्घाः मारेशाचस्तरक्षवः। तथैवोत्सेधतोऽज्ञेयाश्चतुरस्रास्तु इत्यपि" छन्दोगप० "पयोधरोत्सेधविशीर्णसंहति" कुमा०। कर्त्तरि अच्। ३उच्चे त्रि०। "वायव्यं चेत् पुच्छे उत्सेधमेव तं कुरुते तस्मादुत्सेधं प्रजाभयेऽभि संच-

सुखदा भवेत् । मृगस्तु कामभोगाय सुखदं रुद्रदैवतम् । आदित्यर्क्षं सुखं दद्यात् पुष्यं सुखवर्द्धनम् । अश्लेषा शुभनाशाय शोकाय मघा मता । वैधव्यं फल्गुनीहस्ते हस्तः सुतविवर्द्धनः , चित्रा चित्रतरं नारीं कुरुते नात्र संशयः । स्वाती शुभाय नारीणां विशाखा सुखनाशिनी । अनुराधार्थभोगाय ज्येष्ठा भर्तृवियोगदा । शुभदाप्यशुभं मूलं पूर्व्वाषाढार्थनाशिनी । सुखदा चोत्तराषाढा श्रवणः सुखवर्द्धनः । धनिष्ठापञ्चकं स्त्रीणां प्रथमर्त्तौ सुखप्रदम् । तिथिरेकगुणा प्रोक्ता नक्षत्रं च चतुर्गुणम् । वारः षड्गुणो ज्ञेयो मासश्चाष्टगुणः स्मृतः । वस्त्रं दशगुणं विद्याद्दर्शनं च ततोऽधिकम् । अशुभं चेद्रजः स्त्रीणां प्रथमर्त्तौ हि दृश्यते । विधानं तत्र कर्त्तव्यमरिष्टघ्नं विशेषत" इति । अथ योगादिफलम् । परिघस्य तु पूर्व्वार्द्धे व्यतीपाते च वैधृतौ । व्याघातशूलयोर्विष्टावशुभं प्रथमार्त्तवम्"। विष्टिर्विष्टि भद्रेत्यर्थः । अन्यत्रापि । "अमा संक्रान्तिविष्ट्यादौ व्यतीपाते च वैधृतौ । परिघस्य तु पूर्व्वार्द्धे षट् च गण्डातिगण्डयोः । व्याघाते नव, शूले तु नाद्याः पञ्चदशैव तु । वैधव्यमर्थहानिश्च सुतनाशं महत् भयम् । वैधव्यं पतिहानिश्च दारिद्र्यं चोपजीवनम् । तेजोहानिं समायाति एषु पुष्पवती क्रमात् । अथ राशिफलम् । "मेषे सव्यभिचारा स्याद्वृषे परभोगिनी । मिथुने धनभोगाढ्या कर्कटे व्यभिचारिणी । पुष्पाढ्या सिंहराशौ तु कन्यायां श्रीमती तथा । विलक्षणा तुलायां तु वृश्चिके तु पतिव्रता । दुश्चारिणी धनुःपूर्वे त्वपरे च पतिव्रता । मकरे मानहीना च कुम्भे निर्द्धनसन्तता । मीने विलक्षणा कन्ये पञ्चसंस्था विवाहवत्"। अथ लग्नफलम् नारसिंहीये । "लग्नस्य सप्तमस्थाने क्रूरो वैधव्यकारकः । शुभशान्तिकरस्तारो बुधः सत्सुतदो भवेत् । इज्यस्तिथिर्नायुष्यं शुक्रः सापत्न्यकारकः । शनैश्चरे च वन्ध्या स्याद्राहौ तु मरणं ध्रुवम्" । अथ गुरुशुक्रोदयफलम् ।"आयुः श्रीः प्रीतिरारोग्यमुदिते गुरुभार्गवे । मन्दोदये विरोधः स्यात् क्रोधः स्यात्तामसोदये । तामसो राहुः । अन्यत्र । "संमार्जनीकाष्ठतृणाग्निशूर्पान् हस्ते दधाना कुलटा तदा स्यात् । तस्योपयोगे समधिष्ठिता चेद्दृष्टं रजो भाग्यवती तदा स्यात्"इत्यादि सर्व्वं ज्योतिःशास्त्रतोऽवगन्तव्यम् ।

अथ कालस्वरूपम् । "नाभिसूत्रे स्थितं पुष्पशुक्रदर्शसमन्वितम् । तावत् द्रवीय दधते गर्भस्थापनकारणम् । अधोवक्त्रं स्थितं स्त्रीणां तच्च शुक्रावहति । मासात् परस्य प्राप्तौ शुक्रं विकसद्भवेत् । ऋतुपुष्पं कुसुमं स्त्रीणां स्वभावात् प्रस्रवेद्रजः । तदा प्रभृति सर्व्वासां नाभि नाडिकागर्भवेदिति" । अथ प्रथमर्त्तौ मङ्गलाचारः प्रयोगपारिजाते स्मृतिचन्द्रिकायाम् ।"प्रथमर्त्तौ तु प्रविष्टाः पतिपुत्रवती स्त्रियः । अक्षतैरासनं कुर्य्यात्तस्मिंस्तामुपवेशयेत्। हरिद्रागन्धपुष्पादीन् दद्यात्ताम्बूलकज्जलः । आशिषोवाचयेयुस्ताः पतिपुत्रवती भव । दीपैर्नीराजनं कुर्य्याद्रत्नदीपे वासयेद्गृहे । ताः सर्व्वाः पूजयेत्तत्र गन्धपुष्पाक्षतादिभिः । लवणापूपमुद्गादि दद्यात्ताभ्यः स्वशक्तितः"। अन्यत्राह दक्षः । "आर्त्तवाभिप्लुता नारी नैका वेश्मनि संविशेत् । न संसर्गं व्रजेदद्भिः स्नात्वा पापात् प्रमुच्यते । अञ्जनाभ्यञ्जने स्नानं प्रवासं दन्तधावनम् । न कुर्य्यादार्त्तवा नारी ग्रहाणामीक्षणं तथा । नखानां कृन्तनं रज्जुमाकर्षणादिवल्कनम्"। नेत्यनुक्तौ स एव "दग्धे शरावे भुञ्जीत पेयं चाञ्जलिना पिबेत्" । अथ रजस्वला स्पर्शशुद्धिविधानम् स्मृतिरत्नावल्यां दक्षः "उदक्ये द्वे सगोत्रे वा सवर्णे वाऽथवा पुनः । तयोः स्नानं मिथः स्पर्शे पञ्चगव्यं ततः पिबेत् । सवर्णे योनिसम्बन्धे सगोत्रे च रजस्वले । मिथः संस्पृशतोऽमत्या स्नानमात्रेण शुद्ध्यतः । मत्यैकरात्रं नाश्नीतः पञ्चगव्यं पिबेत्ततः । उदक्ययोर्यदान्योन्यमसम्बन्धः सवर्णयोः । स्पृशेदमत्या स्नात्वा च तत्त्रिरात्रात् शुचिर्भवेत्" । तत्रैव स्मर्त्तदिने ।"मत्या तु नाऽऽद्यादाशुद्धेर्भुक्त्वा चेत् प्रतिवासरम् । उपोषणं तदा केचिदाशुद्धिदिनसंख्यया । उपवासेष्वशक्ता चेत्तत्समं दानमाचरेत् । सम्भाषेतां स्पृशेतां वा ब्राह्मण्यौ च रजस्वले । आस्नानकालान्नाश्नीतोभे मत्या मिथः क्वचित् । स्नात्वोपवासं कुर्य्यातां पञ्चगव्येन शुध्यतः । एवमप्यसतत्वाच्च प्रायश्चित्तं समाचरेत् । मत्या रजस्वलान्योन्यं श्वपचीं ब्राह्मणी स्पृशेत् । आस्नानकालान्नाश्नीयादतिकृच्छ्रं समाचरेत् । चाण्डालं वार्त्तवा नारी संस्पृशेत् भोजनान्तरे । थान्यतः वहिरात्रीणाऽऽस्नानकालादुपोषणम् । प्राजापत्यं चरेत् पश्चात् पञ्चगव्यं ततः पिबेत् । विप्रान् द्वादशसंख्याकान् भोजयित्वा विशुध्यति । पुष्पिणी संस्पृशेत्काकादकं वा नरं स्थितम् । स्नानादर्वाक् न भुञ्जीत भुक्त्वा कृच्छ्रं समाचरेत् । स्पृष्टोदक्या पञ्चनखान् द्विशफैकशफान् पशून् । अण्डजानि च सर्व्वाणि नाद्यादा स्नानमाचरात्" । परा-

परः । "रजस्वला यदा दष्टा शुना जम्बुकरासभैः । पञ्चरात्रं निराहारा पञ्चगव्येन शुद्ध्यति । ऊर्द्ध्वं तु द्विगुणं नाभेर्वक्त्रे तु त्रिगुणं तथा । चतुर्गुणं स्मृतं मूर्द्ध्नि दंशेऽप्यनामता भवेदिति" ।

तथा नैमित्तिकस्नानशुद्धिस्नानप्रकारश्चैव दर्शितः यथा । तत्र नैमित्तिकस्नानप्रकारस्तु स्मृत्यर्थसारे । "स्नाने नैमित्तिके प्राप्ते रजोदर्शने पात्रान्तरिततोयेन स्नात्वाद्भिः सिञ्चमाना साङ्गोपाङ्गं वस्त्रं च निष्पीड्यान्यवस्त्रधारणं कृत्वा गृहकर्म कुर्य्यादिति" । अथ शुद्धिस्नानं स्मृत्यर्थसारएव । "रजस्वला चतुर्थदिवसे शौचं कृत्वा वस्त्रं प्रक्षाल्य दन्तधावनपूर्ब्बकं संगवे स्नायात्" इति । अथ स्नानानन्तरमपि रजःस्रावे विशेषोऽभिधीयते । कात्यायनेन "रजस्वला यदा नारी त्रिरात्रमशुचिर्भवेत् । प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी । तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुद्ध्यति । भर्त्तुः शुद्धा चतुर्थेऽह्नि स्नाता नारी रजस्वला । दैवे कर्म्मणि पित्र्ये च पञ्चमेऽहनि शुद्ध्यती"त्युक्त्याधिहितम् । "रागजं रोगजञ्चैव द्रव्यजं कालजं तथा । यद्रागरोगद्रव्योत्थं चतुष्कं प्राह भार्गवः । कालजं तु रजःसंज्ञं तस्मात् तत्रैव चाऽशुचिः" । एषां लक्षणानि । "स्वर्णात् प्रकृतेरल्पत्वं भेदो बव्याद्रूपाच्च यत् । तद्रागजमिति प्रोक्तं मनोद्रेकसमुद्भवम् । रोगेण यद्रजः स्त्रीणामन्वहं संप्रवर्त्तते । नाऽशुचिः स्त्री ततस्तेन यतो वैकारिकं मतम् । व्याध्यादिदोषवैषम्यादसकृत् प्रवर्त्तते । रोगजं तत्समुद्दिष्टम् द्रव्यजमुच्यते । द्रव्यजं धातुवैषम्यौषधद्रव्योपयोगजमिति" । "सौरस्य चान्द्रवदिनादेकविंशतिवासरे । प्राक्तदूर्द्ध्वं रजोवत् स्यात् कालजमुदाहृतम् । रजस्वला यदा नारी पुनरेव रजस्वला । सा विंशतिदिनादूर्द्ध्वं त्रिरात्रमशुचिर्भवेत्" । ततः पूर्व्वं तु "रजस्वला यदि स्नाता पुनरेव रजस्वला । अष्टादशदिनादर्व्वागशुचित्वं न विद्यते । एकोनविंशतेरर्व्वागेकाहं स्यात् ततो द्व्यहम् । विंशत्प्रभृत्युत्तरेषु त्रिरात्रमशुचिर्भवेदिति" । काश्यपस्तु । 'रजस्वला यतो नारी पुनरेव रजस्वला । अष्टादशाहात् प्राक्नास्ति अशुचिः स्यात्त्रिरात्रकम् । त्रयोदशदिनादूर्द्ध्वं रजसा युज्यते यदा । अष्टादशाहात् तत्राऽपि त्रिरात्रमिति निश्चयः । एकादशेऽह्न्यहोरात्रं त्रिरात्रं द्वादशेऽहनि । ऊर्द्ध्वं त्रिरात्रं विद्वद्भिरिति कुल्लूकविवोदितमित्यादि' परस्परविरुद्धवचनम् जातिशुचयोऽत्याद्देशभेदेन व्यवस्थापनीयम्" । स्नानकालोत्तराद्युत्तरत्वेन अवस्थेति एवं० । रजःकालाज्ञाने प्रजापतिराह "अविज्ञाते मते वा च पतिवद्वहुता यदि । स्तनं गेहेषु पुष्पं स्यात् त्रिरात्रा; त्रिरात्रतः । रजः प्राप्तकालसंदेहेऽपि स एवाह । "निःसंदेहे परिज्ञाने स्नानं वै शुद्धिकारणम् । संदेहमात्रे स्नानं स्यादित्युवाच प्रजापतिरिति" । अथ रात्रौ रजोदर्शने विशेषः । "अर्द्धरात्रपर्य्यन्तं पूर्व्वदिनमित्यपरे परदिनमथवा वा त्रिभागायां रात्रेर्भागद्वयं पूर्व्वदिनान्तर्गतमित्यन्ये । सूर्य्योदयावधि पूर्व्वदिनमित्यपरे । तदाह काश्यपः । "उदिते तु यदा सूर्य्ये नारीणां दृश्यते रजः । जननं वा विपत्तिर्वा यस्याहस्तस्य शर्व्वरी । अर्द्धरात्रावधिः कालः सूतकादौ विधीयते । रात्रिं कुर्य्यात्त्रिभागां तु द्वौ भागौ पूर्व्वगामिनौ । उत्तमोऽंशः प्रभातेन युज्यते ऋतुसूतके । रात्रावेव समुत्पन्ने मृते रजसि सूतके । पूर्व्वमेव दिनं ग्राह्यं यावन्नाभ्युदितो रविरिति" । अत्रापि देशाचारादिना व्यवस्था द्रष्टव्या । अथ रजस्वलाया ज्वरादिरोगसंभवे शुद्धिविधानं स्मृत्यर्थसारे । "रजस्वलां ज्वरितां चतुर्थेऽहनि सचेलस्नानासहायस्य दशकृत्वो द्वादशकृत्वो वा स्नात्वा तां स्पृष्ट्वाचामेदिति" । उशनापि "ज्वराभिभूता या नारी रजसापि परिप्लुता । कथं तस्या भवेच्छौचं शुद्धिः स्यात् केन कर्म्मणा ? । चतुर्थेऽहनि संप्राप्ते स्पृशेदन्या तु तां स्त्रियम् । सा सचेलावगाह्यापः स्नात्वा स्नात्वा पुनः स्पृशेत् । दशद्वादशकृत्वो वा आचामेच्च पुनः पुनः । अन्ते च वाससां त्यागस्ततः शुद्धा भवेत्तु सा । दद्याद्दानं ततो दानं पुण्याहेन विशुध्यति । आतुराणां तु सर्व्वासामेव शुद्धिर्विधीयते" इति । अथोदक्यास्पृष्टानां चेतनानां सचेलं स्नानम् अचेतनपीठादीनां प्रक्षालनं, तत्रोदक्यादिस्पृष्टचेतनस्पर्शे आचमनम् "उदक्याऽशुचिभिः स्नायात् स्पृष्टस्तैरुपस्पृशेदिति" याज्ञवल्क्यवचनात् उदक्यादिस्पृष्टचेतनस्पर्शे तु द्वितीयस्यापि स्नानमेव यथाह मनुः. "दिवाकीर्त्तिमुदक्याञ्च पतितं सूतिकां तथा । शवं तत्स्पृष्टिनं चैव स्पृष्ट्वा स्नानेन शुद्ध्यति" तृतीयस्य त्वाचमनं यथाह संवर्त्तः "तत्स्पर्शिनं स्पृशेद्यस्तु स्नानं तस्य विधीयते । ऊर्द्ध्वमाचमनं प्रोक्तं द्रष्टव्यानां प्रोक्षणं तथा" एतदमतिविषयं बुद्धिपूर्व्वस्पर्शे तु तृतीयस्यापि स्नानमेव "पतितचण्डालसूतिकोदक्याशवस्पृष्टितत्स्पृष्ट्युपस्पर्शने सचेलजलोपस्पर्शनाच्छुद्धिरिति" गौतमवचनात् । चतुर्थस्याचमनं यथाह देवलः "उप-

"प्रतिप्रस्थाता च संस्रावभागधवनीयाद्गुह्णतोदञ्चनेन चमसेन वा" कात्या० १०,५,१। भावे ल्युट्। २जलक्षेपणे। कर्त्तरि ल्यु। ३उत्क्षेपके त्रि०। "वसुपतिर्विन्दाश्मानूधः स धिवामुदञ्चनः" ऋ०५,४४,१२। "उदञ्चन जर्द्ध्वं-उन्नमयिता" भा०।

उदञ्चित त्रि० उद्-अन्च-पूजायां क्त १पूजिते। चिच्-क्त। २जर्द्ध्वंगमिते ३उत्क्षिप्ते। हेम० "उदञ्चिताम्भोऽञ्चि तदञ्चिणोवः" भट्टिः।

उदञ्च् त्रि० उद्+अन्च-उञ्। उन्नतिर्यते। बाहु० अ-पत्ये इञ्। औदञ्चि तदपत्ये पुंस्त्री०।

उदण्डपाल पु० उद्दण्डमण्डं पलति गच्छति कारयतया पल-गतौ अण् उप०स०। १मत्स्ये २सर्पे च मेदि० तयोर पुच्छोद्देशेन जातत्वात्तथात्वम्। [र्थधि०।

उदधा स्त्री उद्+अद-धा० यत्। तैलपिपीलिकायां शब्दा-

उदधान पु० उदकं धीयतेऽत्र आधारे ल्युट्। उदादेशः। १कुम्भे २मेघे च।

उदधि पु० उदकानि धीयन्तेऽस्मिन् धा-आधारे कि उदा-देशः। १समुद्रे,२घटे च। "उदधेरिव निम्नगाशतैः" "चन्द्रोदय इवोदधेः"रघुः।"तैः कृतः सर्व्वभक्षोग्निरपेयश्च महोदधिः" मनुः। समुद्रसामान्यस्येयं संज्ञा तत्तत्-पदसमभिव्याहारे तु विशेषस्य बोधः। यथा क्षारोदधिः क्षीरोदधिः सुरोदधिः। ३मेघे च। "हृदय मप्सुगुरपो हृतोदधिं भिन्न" यजु० १८,५४। ४उदकधानकर्त्तृ सूर्ये च "संचर्य्येण दिव्युतदुदधिर्निधिः" यजु०३८,२२ सूर्यस्य च जलपूर्णाकृताभिर्नाडीभिर्जलाकर्षणेन तद्धारकत्वात्तथात्वं यथा च तस्याकृताधायकत्वम्" तथा-ऽन्यत्रापि ३२२ पृष्ठे उक्तम्।

उदधिक्रा त्रि० उदधिं क्रामति क्रम-वि ङीप्। समुद्र-क्रामके।

उदधिमल पु० उदधेर्मल इव। समुद्रफेने राजनि०।

उदधिमेखला स्त्री उदधिर्मेखलेव यस्याः। मध्यस्थाने समुद्रवेष्टितायां पृथिव्याम्। भूगोले "भूमेरर्द्धं क्षारसिन्धोरुदक्स्थं जम्बूद्वीपं प्राहुराचार्य्यवर्याः। अर्द्धेऽन्यस्मिन् द्वीपषट्कस्य याम्ये क्षारक्षीराद्यम्बुधीनां निवेशः" सि०शि० उक्तेः याम्यार्द्धे एवाम्बुधीनां निवेशात् तेषां पृथिवी मध्यवेष्टकतया मेखलातुल्यत्वम्।

उदधिसुता स्त्री ६त०। १लक्ष्म्याम् तस्या उदधिजातत्वात् तथात्वम्। उदधितनयादयोऽप्यत्र २चन्द्रे पु०।

उदन् न० उन्द+कनिन्। उदके। "उदकस्याद्देशोऽयमि-त्यन्ये अप्प्रत्ययं मध्ये छन्दपरे। "धारावर्मैरोदभि र्बुन्दन्ति भूम" ऋ०,१,८५,५ "अव त्मना भरते केतवे-दन्" ऋ०१,१०४,२, । उदन् उदनीत्यर्थः परमे व्योमन् इति वत् सप्तम्या लुक् नलोपाभावश्च

उदन्त पु० उद्गतोऽन्तोनिर्णयो यस्मात्। १वार्त्तायाम् वृत्तान्ते कुशलादिकथने, । "श्रुत्वा रामः प्रियोदन्तम्" रघुः "कान्तोदन्तः सुहृदुपनतः सङ्गमात् किञ्चिदूनः" मेघ० "एवंप्रायेण चास्योदन्तेन" काद०। २साधौ,मे स्वार्थे कन्। तत्रैव उद्गतोऽन्तोऽस्य पाकस्यात् प्रा०ब०नलोपः। ३पाकस्यात् प्राप्तान्ते त्रि० "स्तनयदिति तदाहुर्यत्र-दन्तं तर्हि जुहुयादिति तद्वेगोदन्तं कुर्य्यादुप ह दर्शेद्वदुदन्तं कुर्व्वादप्रमाद्य ऐतेत उपदग्धं तथाचोदन्तं कुर्य्यात्" शत०ब्रा०२,२,१,१४, "अधिश्रितं ब्राह्मणमुदन्तं पौष्णम्" कात्या० २५,२,१,

उदन्तिका स्त्री उदन्तमुन्नतान्तं करोति उदन्त+णिच्+ण्वुल् टाप् अत इत्। तृप्तौ हारा०।

उदन्य नामधातु अतिगार्द्ध्येनोदकमिच्छति क्यच् निपा०उद-न्यति औदन्यीत् उदन्याम्-बभूव आस चकार। उदनिता-उदन्यिता उदन्या।

उदन्या स्त्री अतिगार्द्ध्येन उदकमिच्छति क्यजन्तात् अ। १पिपासायाम्। "अजहादुदन्यां शिशिरैः पयोभिः" भट्टिः वेदे० वा०क्यजर्थेऽपि क्यच्। २उदकनयने च "अथ-यत्रैतत्पुरुषः पिपासतिनाम तेज एव तत्पीतं नयते तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येव तत्तेज आचष्ट उदन्येति" छा०उ० यथा च पुरुषस्य पिपासा भवति तद्भाष्ये समर्थितं यथा

"यत्र यस्मिन् काले एतन्नाम पिपासति पातुमिच्छतीति पुरुषो भवति। अशिशिषतीतिवदिदमपि गौणमेव नाम भवति। द्रवीकृतस्याशितस्यान्नस्य नेतार आपोऽन्नशुङ्गदेहं क्लेदयन्त्यःशिथिलीकुर्य्युरब्धाहुल्याद्यदि तेजसा न शोष्यन्ते। नितराञ्च तेजसा शोष्यमाणास्वप्सु देहभावेन परिणममानासु पातुमिच्छा पुरुषस्य जायते तदा पुरुषः पिपासति नाम तदेतदाह। तेजएव तत्तदा पीतमबादि शोषयेद्देहगतलोहितप्राणभावेन नयते परिणमयति। तद्यथा गोनाय इत्यादि समानमेव। तत्तेज आचष्टे लोकः। उदन्येति उदकं नयतीत्युदन्या उदन्येतीति छान्दसम्"। पिपासा च प्राणस्य धर्म्मः यथाह

चन्द्राः १६७० । इत्याद्युक्तेषामैक्यं कृत्वा भुज्यमान राशेर्ये भुक्तभागास्तांस्तदुदयासुभिः सङ्गुण्य त्रिंशता ३० विभज्य लब्धासवोऽपि तत्र क्षेप्याः एवं मध्यार्कभुक्तासवः स्युः । यद्दिनान्तादूर्ध्वं तावत्प्रमितके काले लङ्कायां मध्यमस्यार्कस्योदयः । तत्काले हि ग्रहाः साध्याः अथ चाहर्गणेन ये सिद्धास्ते मध्यमार्ककलामितेऽस्वात्मके काले गतदिनान्तादूर्ध्वं जाताः, अतोऽसूनां कलानां च यदन्तरं तेनार्कोदयोऽन्तरितः । अतस्तदुदयान्तराख्यं कर्मोच्यते तदन्तरासुभिर्गतिं सङ्गुण्यार्कसावनाहोरात्रासुभि २१६५९ विभज्य लब्धकला ग्रहे धनं कार्याः यदि कलाभ्योऽसवोऽल्पकाः स्युः, अन्यथा ऋणं, यदि तु स्वदेशोदये मध्यमार्कभुक्तासूनानीयेदं कर्म कृतं तदौदयिकानां ग्रहाणां चरकर्मापि कृतं स्यात् यदि तु स्फुटार्कभुक्तासून् स्वोदयासुभिरानीयेदं कर्म कृतं तदोदयान्तरभुजान्तर चरकर्माणि त्रीण्यपि कृतानि स्युः तर्हि कथमिदमुदयान्तराख्यं कर्माचार्यैर्न कृतं तदाह यतोऽन्तरं तत्खलु अल्पकत्व उर्व्यक्षयान्तेषु चतुर्ष्वपि चान्तराभावः तन्मध्येष्वन्तरस्य वृद्धिः(?) त्वो । इदानीं देशान्तरस्वरूपमाह" प्रमि० "येऽनेन समोदयकालिकास्ते देशान्तरेण स्वपुरोदये स्युः । देशान्तरं प्रागपरं तथान्यद्याम्योत्तरं तच्चरसंज्ञकम्" शि० । "ये उदयान्तरकर्मणा लङ्कायामौदयिका ग्रहा जातास्ते देशान्तरकर्मणा स्वपुरौदयिकाः स्युः । तत्र देशान्तरं द्विविधम् एकं पूर्वापरं,अन्यद्याम्योत्तरं तच्चरसंज्ञकं तत्र तावत् पूर्वापरमाह" प्रमि० । "यल्लङ्कोज्जयिनीपुरोपरिकुरुक्षेत्रादिदेशान् स्पृशत् सूत्रं मेरुगतं बुधैर्निगदिता सा मध्यरेखा भुवः । आदौ प्रागुदयोऽपरत्र विषये पश्चाच्च रेखोदयात् स्यात्तस्मात् क्रियते तदन्तरभवं खेटेष्वृणं स्वं फलम्" शि० ।"लङ्कातो मेरुगामिनी लीयमाना या रेखा उज्जयिनीकुरुक्षेत्रादिदेशान् स्पृशन्ती याति सा मध्यरेखेत्युच्यते । रेखायां यदार्कोदय स्तत्कालात् पूर्वमेव पूर्वदेशे भवति रेखोदयकालादनन्तरं पश्चिमदेशेऽर्कोदयः । तदन्तरकालस्तदन्तरयोजनैः स्पष्टभूवेष्टनाद्यनुपातेन ज्ञायते यदि स्फुटपरिधियोजनैः षष्टि ६० घटिका लभ्यन्ते तदा रेखास्वपुरयोरन्तरयोजनैः किमितीति त्रैराशिकेन देशान्तरघटिका लभ्यन्ते मध्यमाद्याऽथ चानीता ताभिरनुपातः यदि घटीषष्ट्या ग्रहस्य गतिकला लभ्यन्ते तदा देशान्तरघटीभिः किमिति अथ योजनैरेवानुपातः । यदि स्फुटपरिधियोजनैर्गतिः प्राप्यते तदा देशान्तरयोजनैः किमिति फलं कलाः प्राग्धनं, यतस्तत्रादावुदयः पश्चादृणं यतस्तत्र रेखोदयादनन्तरमर्कोदय इत्युपपन्नम् । इदानीं भूगोले स्फुटपरिधिप्रदेशं स्फुटतानुपातं चाह" प्रमि० "स्वदेशमेर्वन्तरयोजनैर्यल्लम्बांशजैर्मेरुगिरेः समन्तात् । वृत्तं स्फुटो भूपरिधिर्यतः स्यात्त्रिज्याहृतो लम्बगुणः कृतोऽस्मात्" शि० "स्वपुरस्य मेरुमध्यस्य चान्तरे यावन्ति योजनानि तावन्ति लम्बांशजानि यतो निरक्षदेशस्वपुरान्तरयोजनान्यक्षांशजानि, भागेभ्यो योजनानि च व्यस्तमित्युपपद्यत इत्यर्थः; तैर्लम्बांशजैर्योजनैर्मेरुगिरेः समन्ताद्यद्वृत्तमुत्पद्यते स स्फुटं भूपरिधिः यो मध्यपरिधिः पठितः स निरक्षदेशोपरि । अयन्तु स्वपुरोपरि,अतः किञ्चिन्न्यूनो भवति अथ तदानयनं मध्यपरिधेरभीष्टत्रिज्यातुल्यं व्यासार्धं प्रकल्प्य तस्मिन् व्यासार्धे स्वपुरे यावती लम्बज्या तावत् स्फुटपरिधेर्व्यासार्धं भवितुमर्हतीति अतस्तेन त्रैराशिकं यदि त्रिज्याव्यासार्धे मध्यमः परिधिर्लभ्यते तदा लम्बज्यामिते कः इति फलं स्फुटपरिधिरित्युपपन्नम्" प्रमिताक्षरा ।

इत्यादौ लम्बाद्यानयनम् अक्षभाशब्दे ५।१६९४ लग्नोदयप्रमाणदर्शनपूर्वकमुक्तप्रायम् विशेषस्तु शि० शि० । "तात्कालिकार्केण युतस्य राशेरभुक्तभागैर्गुणितोदयात् स्यात् । भोग्यासवः खाग्निहृतादवाप्ता भुक्तासवो भुक्तलवैः खरेषम् । इष्टासुराशेरपनीय भोग्यांस्तदग्रतो राश्युदयांश्च शेषम् । अपास्य शेषं खगुणं लवाद्यमशुद्धपूर्वैर्भवनैर्विभाज्य । युक्तं तनुः स्यादयनांशहीनमिष्टासवोऽल्पा यदि भोग्यकेभ्यः । त्रिंशद्गुणाः स्वोदयभाजितास्ते लवादियुक्तो रविरेव लग्नम्" शि० । "यस्मिन् काले लग्नं ज्ञेयं तस्मिन् काले तात्कालिकोऽर्कः सायनांशः कार्यः । तेनार्केण युतस्य राशेर्ये भोग्यांशास्ते तदुदयासवो गुणास्त्रिंशता भाज्याः । ये लब्धास्ते भोग्यासवः स्युः । अथेष्टासुभ्यो भोग्यासून् विशोध्य तदग्रतो यावन्त उदयाः शुध्यन्ति तावन्तः शोध्याः । ततः शेषात् खगुणादशुद्धोदयेन भक्ताद्यल्लब्धमंशाद्यं तदशुद्धोदयात् पूर्वं यावन्तो मेषाद्य उदयास्तावद्भी राशिभिर्युतमयनांशैश्च रहितं तल्लग्नं स्यात् । अथ यदीष्टासवो भोग्येभ्योऽल्पः तदेष्टासवस्त्रिंशद्गुणास्तदुदयासुभिर्भाज्याः । फलेनांशाद्येन युतो रविर्लग्नं स्यात्" प्रमि० लग्नांशादिना कालानयनं तत्रैव दर्शितं यथा "अर्कस्य भोग्यस्तनुभुक्तयुक्तो मध्योदयाढ्यः समयो विलग्नात् । यदैकभे लग्नरवी तदा तद्भागान्तरघ्नोदयखाग्निभागः । लग्नेऽल्पके तु द्युनिशात् से भोग्यकालादि-

कालादयलग्नं कालः । चेत् सायनाः प्रष्टुरभीष्टकालस्त-दैव तात्कालिकतिग्मरश्मेः । भागैर्यदैष्टघटिका वि-लग्नं कालश्च तत्रौदयिकात् सलग्न” शि० । “अर्कस्य प्राग्वल्लो-भ्यकालः साध्यः । लग्नस्य सायनांशस्य भुक्तकालः साध्यः तयोरैक्यमर्कोदयतो लग्नपर्यन्तं ये मध्ये राशयस्तेषा-मुदयाश्च क्षेप्यास्तत एव । एवं लग्नात् कालो भवति । अथ यद्येकराशौ लग्नार्कौ भवतस्तदा तयोरन्तरांशैः स्वो-दयं सङ्गुण्य त्रिंशता भजेत् फलमिष्टकालः स्यात् । परं यद्यर्काल्लग्नमधिकम् । यद्यल्पं तदा स कालोऽहोरात्राच्छो-ध्यः । शेषमिष्टकालः स्यात् । अत्रेष्टकालसाधनेऽर्कस्य भोग्यमौदयिकादेव क्रियते । यतः कालज्ञानात् तात्का-लिकत्वमर्कस्य कार्यम् । अतः स्थूलः काल आयाति । अनेन कालेन तात्कालिकमर्कं कृत्वा मुहुः कालः साध-यितुं युज्यते । परं यदि प्रष्टुः सावनघटिका इष्टाः । एतदुक्तं भवति । उदयानन्तरमेतावतीष्वर्कसावनघटिकासु कीदृग् लग्नं भवतीत्येतदभीष्टं तदैव तात्कालिकार्काल्लग्नं साध्यते तदैव च लग्नादसकृत् कालः । यदा पुनरिष्टघटिका आर्क्षास्तदौदयिकादेवार्काल्लग्नं लग्नात् कालः सकृत् । अत्रोपपत्तिः सुगमा । तात्कालिकीकरणकारणता गोले क-थिता व्याख्याता च । इदानीं विलोमेन लग्नसाधनमाह” प्रमि० । “भुक्तासु शुद्धे विपरीतलग्नं भुक्तांशगेष्वाप्तलवोनि-तोऽर्कः” शि० “यदोदयात् पूर्वघटीषु लग्नमिष्टं तदा शेषासुभ्यो विशोध्य तत्कालिकमर्कं कृत्वा तस्य भुक्तासवः साध्यास्तानिष्टासुभ्यो यावन्त उदया विशुध्यन्ति तावतो विलोमेन विशोधयेत् । शेषात् खरामगुणितादविशुद्धो-दयभक्ताद् ये लब्धा अंशास्तैरशुद्धभुक्तांशैश्च तथा विशुद्धोदयलग्नैराशिभिश्चोनितो रविर्लग्नं भवति” प्रमि० । होराद्रेक्काणोदयसाधनमपि तत्रैव यथा “मेषाद्यानां स्थूलत्वात् स्थूला उदया भवन्ति राशीनाम् । सूक्ष्मार्थी होराणां कुर्याद्द्रेक्काणकानां वा” शि० “यथा राश्युदयाः साधितास्तथा होरोदया अपि साध्याः । त-द्यथा पञ्चदशादिपञ्चदशभागोत्तरभागानां क्रान्तिः होरा-ज्याः षड् भवन्ति । ताभिर्निघ्नान्त्यद्युज्या २१४१ पृथक् पृथग्गुणा लम्बज्याया भाज्याः । फलानां धनूंष्यधो-ऽधः शुद्धानि । यथात् पञ्चमं पञ्चमाच्चतुर्थमित्यादि । शेषाणि होरोदयासवो भवन्ति । एवं दशादिदशोत्तरभा-गैर्द्रेक्काणोदया भवन्ति । ते च नव । तथा होरांशा-नाञ्च षट् चराणि । तान्यधोऽधः शुद्धानि यानि तेषां चरखण्डानि तैः क्रमोत्क्रमस्थैः क्रमोत्क्रमस्था ऊनयुताः सन्तः स्वदेशे होरोदया भवन्ति । मेषादीनां द्वादश, ते च व्यस्तास्तुलादीनाम् । एवं चतुर्विंशतिः २४ । एवमेव द्रेक्काणोदयाः षट्त्रिंशत् । तथा चार्कस्य सायनांशस्य भागाः पञ्चदश १५ हृता गता होराः स्युः । शेषांशास्ते भुक्तास्ते पञ्चदशभ्यः शुद्धा भोग्यांशाः स्युः । भोग्यां-शघ्नः स्वदेशहोरोदयः पञ्चदशहृताः फलं भोग्यासवः स्युस्ता-निष्टासुभ्यो विशोध्य तदग्रतो होरोदयांश्च शोधयेत् । शेषं पञ्चदशगुणमशुद्धहोरोदयेन भजेत् फलं लवाः । अशु-द्धपूर्वाणां होरोदयानां संख्यया गुणितैः पञ्चदशभि-र्युताः सन्तो लग्नांशा भवन्ति । एवं लग्नात् कालसाध-नेऽपि । एवमेव द्रेक्काणोदयैरपि लग्नसाधनम् । तत्र पञ्चदशस्थाने दश १० गुणने भजने च कल्प्याः । एवं होरोदयैर्द्रेक्काणोदयैश्च साधितं लग्नादिकमुदयान्तराख्यं कर्म च सूक्ष्मं भवति अन्यथा स्थूलम्” प्रमि० ।

चक्रार्धोदयान्तरकर्म तत्रोक्तम् “भानोः फलं गुणि-तमर्कभुजस्य राशेर्व्यस्तोदयेन खखनागमही १८०० विभ-क्तम् । गत्या पलस्य गुणितं द्युनिशासु भक्तं स्वर्णं चले-ऽर्कवदिदं तु भुजान्तराख्यम्” शि० । “अर्कस्य यद्भुजफलं यस्मिन् राशौ रविर्वर्त्तते तस्य राशेः सम्बन्धी यो निरक्षोदयस्तेन सङ्गुणितराशिकलाभिः १८०० भक्तं पुनर्गत्या गुणितमहोरात्रासुभिः २१६५८ भक्तं यत् फलं तद्ग्रहेऽर्कवत् धनर्णं कार्यम् । यद्यर्कस्य भुजफ-लम् धनं, तदा स्वर्णसाम्येनैव धनम् । यदि ऋणं तदा ऋणमित्यर्थः । अत्रोपपत्तिः । ये मध्यमार्कौ-दयिकास्ते स्फुटार्कौदयिकाः क्रियन्ते । तत्रार्कफलस्यासु-करणायानुपातः । यदि राशिकलाः१८०० निरक्षोद-यासुभिरुपलभ्यन्ते तदा फलकलाः कतिभिरिति । लब्धं भास्वत्फलोत्था असवो भवन्ति । अथान्योऽनु-पातः । यदि द्युनिशासुभिर्गतिकला लभ्यन्ते तदैभिः किमिति । ताः कला ऋणं धनं च यतो मध्यमार्कोद-यात् प्राक् स्फुटार्कोदयः स्यादृणे तत् फले स्वं यतोऽनन्त-रमित्युपपन्नम् । इदानीमुदयान्तरमाह” प्रमि० । “युक्तायनां-शस्य तु मध्यमस्य भुक्तासवोऽर्कस्य निरक्षदेशे । मेषादि-भुक्तोदयसंयुता ये यथायनांशाञ्चितमध्यभानोः । लिप्ता-गणस्तद्विवरेण निघ्नी गतिर्ग्रहस्य द्युनिशासुभक्ता । स्वर्णं ग्रहे चेदसवोऽधिकोना इदं ग्रहाणामुदयान्तराख्यम्” शि० “मध्यमार्कस्य सायनांशस्य ये राशेर्भुक्तभागास्तैस्तदुदयं

निरक्षदेशीयं संगुणलिंप्तता विभजेत् फलं तस्य राशेर्भुक्तासवः। अथ मेषाद्या येऽर्केण भुक्ता राशयस्तेषां च निरक्षोदयासवस्तान् योजयेत् मेषादिभुक्तोदयासवः स्युः। अथ मध्यमार्कस्य सायनांशस्य कलाः कार्याः। तासां कलानां तेषामसूनां च यदन्तरं तेन चक्रगति-गुणस्य द्युनिशासुभिर्भक्त्वा लब्धाः कला चरे धनं कार्याः यदि कलाभ्योऽसवोऽधिकाः स्युः, यदि न्यूनास्तदा ऋणम्। अत्रोपपत्तिः। इह यः पूर्वमहर्गणः कृतः स मध्यमसावनमानेन स्फुटसावनस्य चलत्वात्। रविमध्यगतिकलातुल्यासुभिः सहिता नाक्षत्राः षष्टिघटिकाः ६०,५९,८। इदं मध्यमसावनम्। ता गतिकला यैरसुभिरुद्गच्छन्ति तद्युताः षष्टिघटिकाः स्फुटसावनम्। तच्चलम्। गतेश्चलत्वात् प्रतिमासं राश्युदयान्यत्वाच्च। तादृशोऽहर्गणः कर्त्तुं नायातीति मध्यमः कृतः। तेन मध्यमार्कोदये घटिका न भवन्ति कदाचिदर्कोदयात् प्राक् कदाचिदनन्तरम्। अत एव प्रागुक्तम्। "दशशिरःपुरि मध्यमभास्करे क्षितिजसन्निधिगे सति मध्यमः" सि० इति। अथ स्फुटमध्याहर्गणयोरन्तरानयनम्। मेषादेरारभ्य येऽर्कभुक्ता राशयस्ते यैरसुभिरुद्गच्छन्ति त एकीकृताः। तावत्स्वासुषु काले भदिनान्तादूर्द्ध्वमहर्गणेन भवितव्यम्। अथ च मेषादिभुक्तकलातुल्येऽन्तरे कृतः। अतोऽसूनां कलानां च यदन्तरं तावद्भिरसुभिरहर्गणोऽन्तरितः। यद्यहोरात्रासुभिर्गतिर्लभ्यत एतैरन्तरासुभिः किमिति। फलं चरे धनं यद्यसवोऽधिकाः। अन्यथा ऋणमित्येतदुक्तं युक्तमेव"। इदानीं येऽत्रोदयान्तरस्य वासनां न बुध्यन्ति तेषां प्रतीत्यर्थमन्यदप्याह" प्रमि०। "चेत् स्वोदयैः स्फुटरवेरसवः कृताश्चे लिप्तीकृताश्च यदि मध्यरवेः कलाभिः। तासन्तराख्यमुदयान्तरकं चराख्यं कर्मत्रयं विहितमौदयिके तदा स्यात्" सि०। "यदि स्फुटरवेः स्वोदयेन भुक्तासवः कृता मेषादिस्वोदयैश्च युतास्तेषामसूनां मध्यमार्ककलानां च यदन्तरं तेन भुक्तिर्गुणिता द्युनिशासुभिर्भक्ता यद्यसवोऽधिकास्तदा फलं चरे धनम्। अन्यथा ऋणम्। एवं कृते सति भुजान्तरमुदयान्तरं चराख्यं च कर्मत्रयमपि कृतं स्यादौदयिके चरे। इदानीं प्रकारान्तरेणौदयिककर्माह" प्रमि०। "मध्याद्रवेरयनभागयुताद्धि निघ्नाद्दोर्ज्या कयुग्मगतिगुणा खनगाश्वि २७० भक्ता। स्वर्णं चरे युगयुजोः पदयोर्विवस्वानेवं स्फुटं खलु भवेदुदयान्तरं वा" सि०। "मध्यमार्कस्य सायनांशस्य द्विगुणितस्य या

चगुणस्यार्कदोर्ज्या तया गुणिता चक्रगतिः खनगाश्वि २७० हृता फलं विकलादि चरे धनम्। एवं युग्मपदस्थितेऽर्के। अयुग्मपदस्थिते तु ऋणम्। अत्रोपपत्तिः। क्रान्तिवृत्तस्य चत्वार्यपि पदानि पृथक् पृथक् पञ्चदशभिः पञ्चदशभिर्घटिकाभिरुद्गच्छन्ति। परं नैकैको राशिः पञ्चभिरत उदयान्तरकर्म पदमध्यं यावदुपचीयते ततोऽपचीयते। अत एव पदान्तरेषु तस्याभावः। पदमध्येषु परमता। यदत्र निरक्षोदयैः कर्म दर्शितं तद्वासनाबोधार्थम्। तत् स्थूलम् उदयानां स्थूलत्वात्। अत एवाच्यखाद्यादिभिः सूक्ष्मत्वार्थं दशघ्नोदयाः पठिताः"। इदमुदयान्तरं कर्म यथा सम्भवति तथोच्यते। मध्यमार्कस्य सायनांशस्य दोर्ज्यां द्युज्यां च कृत्वा तया द्युज्यया या दोर्ज्या भाज्या त्रिज्यान्तद्युज्यया गुणनीया। तस्याः धनुषो येऽवयवास्ते मध्यमार्कस्य सायनांशस्य भुजकला ऊनाः असवः स्फुटा अन्तरासवो भवन्ति। तैरन्तरेऽन्तरित इत्यर्थः। एवं पदमध्ये षड्विंशतिः पलानि किञ्चिदधिकानि भवन्ति। तानि ज्याप्रकारेण साधयितुमर्को द्विगुणितः। द्विगुणितस्यार्कस्य यावद्भुजः क्रियते तावत् पदमध्ये राशित्रयं भवति। तद्दोर्ज्यया लभ्यन्ते षड्विंशत्या चानुपातः। यदि त्रिज्यामितया दोर्ज्यया षड्विंशतिर्लभ्यते तदाभीष्टया किमिति। अत्र षड्विंशत्या त्रिज्या अपवर्त्तिता गुणकस्थाने रूपम् १। हरस्थाने साद्धर्चत्वारः। फलं पानीयपलानि। पुनरन्योऽनुपातः। यदि पानीयपलषष्ट्या गतिकलातुल्या विकला लभ्यन्ते तदेभिः किमिति। पूर्वं लब्धो दोर्ज्या गुणः साद्धर्चत्वारो हरः। इदानीं षष्टिर्हरः अतो चक्रगतेर्दोर्ज्या गुणः। हरयोर्घातो हरः खनगाश्विनः २७० इत्युपपन्नम्। ओजपदेऽसवः कलाभ्य ऊना एव भवन्त्यतस्तत्र ऋणम्। युग्मपदे त्वधिका अतस्तत्र धनम्" प्रमि०

ग्रहाणां दृश्यादृश्ययोः चन्द्रे विशेषस्य च निरूपणं तत्रैव "निशीष्टलग्नादुदयाख्यलग्ने न्यूनाधिके यस्य खगः स दृश्यः। दिनेऽपि चन्द्रो रविसन्निधानात्ताकं गतश्चेत् सति दर्शने भा" सि०। "दिनकरेऽस्तंगते यदिष्टकाले लग्नं तदिष्टलग्नम्। तस्माद्ग्रहस्योदयाख्यलग्नं न्यूनमस्ताख्यं चाधिकं यदि भवति तदा ग्रहो दृश्यः इतोऽन्यथा चेददृश्यः। एवं सत्ये सति चन्द्रो दिवसेऽपि दृश्यः। यदि ग्रहो दृश्यस्तदा ग्रहस्य छाया साध्या" प्रमि०।

ताराग्रहाणामुदयास्तमयनोपायः यथा सू०सि० रङ्गना०। "अथोदयास्तमययोः परिज्ञानं प्रकीर्त्यते। दिवा-

**उद्ध्यान** न० उद्धमति वह्निरत्र उद्+ध्मा-ल्युट् । १ चुल्ल्याम्

**उद्र** पु० उन्द-रक् "स्फिगोद्रो मद्गे" पा०नि० । मत्स्यभेदे "कूर्मं निद्योद्रग्रहविभौ" भट्टिः "तोयदागमइवोद्ध्यभिद्ययोः" रघुः ।

**उद्बन्धक** पु० । (धोपा) वर्णसङ्करभेदे । "आयोगवेन विप्रायां जातास्ताम्रोपजीविनः । तस्यैव नृपकन्यायां जातः सूनिक उच्यते । सूनिकस्य नृपायान्तु जाता उद्बन्धकाः स्मृताः। निर्णेजयेयुर्वस्त्राणि अस्पृश्याश्च भवन्त्यतः" उशना ।

**उद्बन्धन** न० उद्+बन्ध-भावे ल्युट् । ऊर्द्ध्वतः पाशादिना गलादिबन्धने । "उद्बन्धनमृता ये च गतिर्येषां न विद्यते । तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम्" वायु पु० गयामाहात्म्ये "विषमुद्बन्धनं चैव शस्त्रमग्निप्रवेशनम् । करिष्ये न हि तावत्त्वां पुनर्द्रष्टुमिहोत्सहे" भा०व० ७अ० । "जलाग्न्युद्बन्धनभ्रष्टाः प्रव्रज्यानशनच्युताः । विषप्रपतनप्रायशस्त्रघातच्युताश्च ये । सर्वे ते प्रत्यवसिताः सर्वधर्मबहिष्कृताः । चान्द्रायणेन शुद्ध्यन्ति तप्तकृच्छ्रद्वयेन वा" प्रा०वि०यमः । भावे घञ् उद्बन्धोऽप्यत्र पु० ।

**उद्बा(द्वा)हु** त्रि० उत्तोलितो(वा)बाहुर्येन प्रा०ब०। उत्तोलितबाहौ "प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः" रघुः ।

**उद्बुद्ध** त्रि० उद्+बुध-क्त । १विकसिते न्यायादिमते ज्ञातवस्तुनः संबन्धिज्ञानादिना २कृतोद्दीपने संस्कारे च । यथा हस्तिदर्शनात् अनुभूतहस्तिपकसंस्कारस्य उद्बोधरूपे उद्दीपने कृते हस्तिपकः स्मर्य्यते इति । ३प्रबुद्धे ४जागरिते च "उद्बुद्धां च जगद्धात्रीं पूजयेद्दीपमालया" ति०त०पु० येन येन वस्तुना संस्कार उद्बुध्यते तथा उद्बोधकमुच्यते । "उद्बुद्धं कारणैः स्वैः स्वैर्बहिर्भावं प्रकाशयेत्" सा०द०

**उद्बोध** पु० उद्+बुध घञ् । १किञ्चिद्बोधे न्यायादिमते स्मृतिजननाय २संस्कारोद्दीपने च । "उत्साहादिसमुद्बोधः साधारण्याभिमानतः" ननु कथं रामादिरत्याद्युद्बोधकारणैः सीतादिभिः सामाजिकानां रत्युद्बोधः" इति "रत्याद्युद्बोधका लोके विभावाः काव्यनाट्ययोः" इति च सा०द० ।

**उद्बोधक** त्रि० उद्बोधयति उद्+बुध-णिच्-ण्वुल् । १उद्दीपके २उद्बोधकारके ३सूर्य्ये पु० तदुदयेन सर्वेषां प्रबोधकत्वात्तस्य तथात्वम् । उद्बोधकानि च न्यायसूत्रतट्टीकयोर्दर्शितानि यथा "प्रणिधाननिबन्धाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रितसम्बन्धानन्तर्य्यवियोगैककार्य्यविरोधातिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्म्माधर्म्मनिमित्तेभ्यः" सू० "स्मरणमित्यनुवर्त्तते निमित्तशब्दस्य द्वन्द्वात्परं श्रुतस्य प्रत्येकमभिसम्बन्धेनान्वयः। प्रणिधानं मनसो विषयान्तरसञ्चारवारणम् । निबन्ध एकग्रन्थोपनिबन्धनं यथा प्रमाणेन प्रमेयादिस्मरणम् । अभ्यासः संस्कारबाहुल्यम् एतस्य यद्यपि नोद्बोधकत्वं तथापि तादृशे तीव्रसुद्बोधकसमवधानं स्यादित्याशयेन तदुपन्यासः । अभ्यासोऽदृष्टसंस्कारः उद्बोधकत्वेनोक्त इति केचित् । लिङ्गं व्याप्यं व्यापकस्य स्मारकम् । लक्षणं यथा कपिध्वजादि अर्जुनादेः । सादृश्यं देहादेः । परिग्रहः स्वीकारस्तस्य स्वस्वामिभावोऽर्थः तदेकतरेणान्यतरस्मरणम् । आश्रयाश्रितौ राजादितत्परिजनौ परस्परस्मारकौ । सम्बन्धो गुरुशिष्यभावादिः गोवृषन्यायात् पृथगुक्तः । आनन्तर्य्यं मोक्षणावघातादेः । वियोगो यथा दारादेः । एककार्य्यान्तेवासिप्रभृतयः परस्परस्मारकाः । विरोधादहिनकुलादेरन्यतरेणापरस्मरणम् । अतिशयः संस्कारउपनयनादिराचार्य्यादिस्मारकः । प्राप्तिर्धनादेर्दातारं स्मारयति । व्यवधानमावरणं यथा खड्गादेः कोषादि । सुखदुःखयोरन्यतरेणापरस्य ताभ्यां तत्प्रयोजकस्य वा स्मरणम् । इच्छाद्वेषौ यद्विषयकतया गृहीतौ तस्य स्मारकौ । भयं मरणादेर्भयहेतोर्वा स्मारकम् । अर्थित्वं दातुः । गात्रादेः क्रिया शाख्यादेः, रागात्प्रीतेः पुत्रादेः स्मरणं, धर्म्माधर्म्माभ्यां जन्मान्तरानुभूतसुखदुःखसाधनयोः प्रागनुभूतसुखादेश्च स्मरणमिति उक्तेषु च किञ्चित्सदसत्किञ्चिच्च ज्ञातमुद्बोधकं शिष्यव्युत्पादनाय चास्य प्रपञ्चः" वृ० ।

**उद्भट** पु० उद्+भट-करणे-अच् । तरङ्गादेः प्रस्फोटनहेतौ १कूर्मे, तदाकारत्वात् २कच्छपे, ३श्रेष्ठाशये महाशये, ४प्रवरे, च "पदेपदे सन्ति भटारणोद्भटाः" नैष० उद्गतो भटात् अन्यात्" निरा०त०। अल्पवहिर्भूते लोकप्रसिद्धेऽज्ञातवक्तृके श्लोके ।

**उद्भव** पु० उद्+भू-भावे अप् । १उत्पत्तौ । "सर्वेषां चतुर्वर्णानां पञ्चमे योषितोद्भवः" या०स्मृ०। कर्त्तरि अच् । २उत्पत्तिमति । "दिलीपसूनुर्मणिराकरोद्भवः" "सोमोद्भवायाः सरितो नृसोमः" रघुः । "सुप्रावृद्दोषोऽस्मिन्नपतेन कच्छे सोमोद्भवायाः सुरनिम्नगायाः" सा०। "विष्णुपादोद्भवा गङ्गा" पुरा० "सत्त्वमात्रोद्भवत्वात्ते भिन्ना अप्यनुभावतः" सा०द०। अपादाने अप् । ३उत्पत्त्युपादाने । "अहमन्तश्च भूतानामुद्भवश्च भविष्यताम्" गीता । उद्गतो भवात् निरा० स० । ४संसारातीते ५विष्णौ पु० । "उद्भवः क्षोभणो देवः" विष्णुस० "प्रपञ्चोत्पत्त्युपादानकारणत्वात् उद्भवः, उद्गतः संसारादिति वा" भा० उभयथा वाच्यम् ।

३उद्धृतत्वे विशेषगुणगते जातिभेदे उद्भूतशब्दे विवृतिः ।

उद्भावन न० उद्+भू—णिच्-ल्युट् । १कल्पने, २उत्पादने च उद्+नु०भू०ल्युट् । ३चिन्तने ४उत्प्रेक्षणे च "उद्भावनमकुर्वन्तो विदुरस्य मते स्थिताः" भा०आ०१४१अ० ।

उद्भास पु० उद्+भास—भावे घञ् । उद्दीप्तौ । ततः वा स्वार्थे "नैकाक्षाराद्गुरुतो जातेः ष्यङन्यायान्न तौ स्मृतौ" शाक्ति० वचनेऽन्यत्राप्याकाराद् इनेरप्राप्तौ वाचा० पाठात् मतुप् इनि वा । उद्भासवत् उद्भासिन्—तद्युक्ते त्रि० । "विभूषणोद्भासि पिनद्धभोगि वा" कुमा० स्त्रियां ङीप् ।

उद्भिज्ज पु० उद्भिनत्ति क्विप् उद्भित् तथा सन् जायते जन-ड कर्त्त०। भूमिमुद्भिद्य जाते १तरुगुल्मादौ "उद्भिज्जाः स्थावराः सर्वे वीजकाण्डप्ररोहिणः" इति मनुः । पदा० योगार्णवे । "देहश्चतुर्विधो जन्तोर्ज्ञेय उत्पत्तिभेदतः । उद्भिज्जः स्वेदजोऽण्डोत्थश्चतुर्थश्च जरायुजः । उद्भिद्य भूमिं निर्गच्छन्नुद्भिदः स्थावरश्च यः" इति विभज्य तदुत्पत्तिप्रकारस्तत्र दर्शितः "उद्भिज्जाः स्थावरा ज्ञेयास्तृणगुल्मादिरूपिणः । तत्र सिक्ता जलैर्भूमेरूष्मभिश्च विपाचिताः । वायुना धूयमानास्तु वीजत्वं प्रतियन्ति ते । तथाचोप्तानि वीजानि संसिक्तान्यम्भसा पुनः । उच्छूनतां मृदुत्वं च मूलभावं प्रयान्ति च । तन्मूलादङ्कुरोत्पत्तिरङ्कुरात् पर्णसम्भवः । पर्णात्मकस्ततःकाण्डः काण्डाच्च प्रसरः पुनः" । एतेषां च यथा पापभोगायतनत्वात् देहत्वं तथाऽयोनिजशब्दे ३४७पृष्ठे उक्तम् "शरीरजैः कर्मदोषैर्याति स्थावरतां नरः" या० स्मृतौ शारीरपापेन तेषां देहोत्पत्तिश्रवणात् भोगायतनदेहत्वमवसेयम् । अतएव सुश्रुतव्याख्याभृत् चेष्टाश्रयत्वं शरीरलक्षणमुक्त्वा "वृक्षादीनामपि चेष्टावत्त्वान्नाव्याप्तिः । न च वृक्षादीनां शरीरित्वे किं मानम् ? इति वाच्यम् आध्यात्मिकवायुसम्बन्धस्य प्रमाणत्वात् तत्रैव किं मानम् ? इति चेत् भग्नक्षतसंरोहणादिना तदनुमानात्" इत्युक्तम् । यथा च स्थावराणां स्वकर्मोपात्तदेहत्वं तथाऽशरीरशब्दे ४४० पृष्ठे शा०सू०भाष्ये च दर्शितम् । तेषां विभागोऽन्यायकन्दल्याम् दर्शितं यथा "स्थावरास्तृणौषधिलतावतानवनस्पतय इति" भा० । "तृणमुलपादिः ओषधयः फलपाकान्ता गोधूमादयः, ये न पुष्पफलास्ते वृक्षाः कोविदारप्रभृतयः लता [illegible] । अवतन्वन्ति अवतानाः विटपाश्चहलन्तः केतकी जम्बूराद्यः ये विना पुष्पं फलन्ति ते वनस्पतय औदुम्बरादयः" । न्या०क० । २भूमिमुद्भिद्यजातमात्रे त्रि० स्थावरादिविभागे सुश्रुतः "भूम्यादि पुनरौषधयस्ताश्चद्विविधाः स्थावरा जङ्गमाश्च । तासां स्थावराश्चतुर्विधाः । वनस्पतयो वृक्षा वीरुध ओषधय इति । तास्वपुष्पाः फलवन्तो वनस्पतयः पुष्पफलवन्तो वृक्षाः । प्रतानवत्यः स्तम्बिन्यश्च वीरुधः । फलपाकनिष्ठा ओषधय इति । जङ्गमा अपि चतुर्विधा जरायुजाण्डजस्वेदजोद्भिज्जाः । तत्र पशुमनुष्यव्यालादयो जरायुजाः । खगसर्पसरीसृपप्रभृतयोऽण्डजाः । कृमिकीटपिपीलिकाप्रभृतयः स्वेदजाः । इन्द्रगोपमण्डूकप्रभृतय उद्भिज्जाः" ।

उद्भिद् पु० भूमिमुद्भिनत्ति उद्+भिद्—क्विप् । १वृक्षलतागुल्मवल्लीलतारूपे पञ्चविधे स्थावरभेदे उद्भिज्जशब्दे उदा० । उद्भिनत्ति पशून् । २यागभेदे 'उद्भिदा यजेत' श्रुतिः उद्भिदादिशब्दानां यथा कर्मनामधेयता व्युत्पत्तिसहितं जै०सू०भाष्ययोस्तया दर्शितं यथा

'उक्तं समाम्नायैदमर्थ्यं तस्मात् सर्वं तदर्थं स्यात्' १,४,१, सू० । 'उद्भिदा यजेत' 'बलभिदा यजेत' 'अभिजिता यजेत' 'विश्वजिता यजेत' इति समामनन्ति, तत्र सन्देहः, किमु उद्भिदादयो गुणविधयः, आहोस्वित् कर्मनामधेयानि इति । कुतः संशयः ? उभयथाऽपि प्रतिभाति वाक्यात्, उद्भिदा इत्येष शब्दो यजेतेत्यनेन संबध्यते, स किं वैयधिकरण्येन संबन्धमुपैति, उद्भिदा द्रव्येण यागमभिनिर्वर्त्तयेदिति, उत सामानाधिकरण्येन, उद्भिदा यागेन यजेत इति द्वेधाऽपि एतस्मिन् प्रतिभाति वाक्ये, अतो भवति संशयः ।

किं तावत् प्राप्तम् ? उक्तमस्माभिः, समाम्नायस्यैदमर्थ्यं, कश्चिदस्य भागो विधिः, योऽविदितमर्थं वेदयति, यथा 'सोमेन यजेत' इति कश्चिदर्थवादः, यः प्ररोचयन् विधिं स्तौति, यथा 'वायुर्वै क्षेपिष्ठा देवता' इति, कश्चित् मन्त्रः, योऽविहितमर्थं प्रयोगकाले प्रकाशयति, यथा 'बर्हिर्देवसदनं दामि' इत्येवमादि, तस्मादुद्भिदादयोऽमीषां प्रयोजनानामन्यतमस्य प्रयोजनाय भवेयुः, तत्र तावन्नार्थवादः, वाक्यभेदो हि न भवति विधातव्यस्य, न च मन्त्रः, एवंजातीयकस्य प्रकाशयितव्यस्य अभावात्, पारिशेष्यात् गुणविधिः, उद्भिद्वता यागस्य विधीयते प्रसिद्धेरनुग्रहात्, गुणविधेरर्थवत्त्वात्, प्रवृत्तिविशेषकरत्वाच्च । न च, एषां यागार्थता लोकेऽवगम्यते ! न च, वेदेन परिभाष्यते ! अतो गुणविधयः । 'यदि गुणविधिः, न तर्हि कर्म विधीयते, अविहिते च कर्मणि

तत्र गुणविधानमनर्थकम् । न इति ब्रूमः, प्रकृतौ ज्योतिष्टोमे गुणविधानमर्थवद्भविष्यति,यदि नामधेयं स्यात्, यावदेव यजेत इति, तावदेव उद्भिदा यजेत इति, न प्रवृत्तौ कश्चित् गुणविशेषः स्यात् । गुणविधौ च गुणसंयोगात् अभ्यधिकमर्थं विदधत उद्भिदादयः शब्दा अर्थवन्तो भविष्यन्ति तस्मात् गुणविधय इत्येवं प्राप्तम्" भा० "अपि वा नामधेयं स्यात् यदुत्पत्तावपूर्व्वमविधायकत्वात्" १,४,२,सू० "अपि वा इति पक्षो विपरिवर्त्तते । नामधेयं स्यात् इति प्रतिजानीमहे, एवमविहितमर्थं विधास्यति ज्योतिष्टोमात् यागान्तरं, श्रुतिश्चैवं यागमभिधास्यति, इतरथा श्रुतिरुद्भिदादीन् वदन्तो उद्भिदादिमतो लक्षयेत् ! उद्भिद्वता यागेन कुर्यादिति । यागेन कुर्यात् इति यजेतेत्यस्यार्थः करणं हि यागः । उद्भिदाद्यपि तृतीयानिर्देशात् करणं, तत्र उद्भिदा यागेन इति कर्मनामधेयत्वेन सामानाधिकरण्यसामञ्जस्यं, द्रव्यवचनत्वे मत्वर्थलक्षणया सामानाधिकरण्यं स्यात् । श्रुतिलक्षणाविषये च श्रुतिर्ज्यायसी । तस्मात् कर्मनामधेयम् । 'ननु प्रसिद्धं द्रव्यवचनत्वमपह्नुवीत, अप्रसिद्धं कर्मवचनत्वं प्रतिपादयेत्' उच्यते, तृतीयानिर्देशात् कर्मवचनता । कुतः ? करणवाचिनो हि प्रातिपदिकात् तृतीया भवति, करणं च यागः, तेन यागवचनमिममनुमास्यामहे ।

"नैतद्युक्तं,यदि तृतीयानिर्देश इति उद्भिदादिभ्यः शब्देभ्यो यागे बुद्धिरुत्पद्येत, स्यादेतदेवं, न हि नो बुद्धिरुत्पद्यते, तस्मात् अयुक्तम् । तृतीयावचनम् अन्यथा नोपपद्यते" इति चेत् । कामं नोपपादि, न जातुचित् अनवगम्यमानेऽपि यागवचनो भविष्यति, तस्मात् गुणविधयः । लक्षणेति चेत्, परं लक्षणा कल्पिता, न यागाभिधानं, लौकिकी हि लक्षणा, हठोऽप्रसिद्धकल्पनेति । अपि च यदि नामधेयं विधीयते, न यागः,अथ यागः, न नामधेयम्, उभयविधाने वाक्यभेदः" इति । उच्यते, न नामधेयं विधायिष्यते, अनुवादा हि उद्भिदादयः । कुतः प्राप्तिः ? इति चेत् । ततोऽभिधीयते, उच्छब्दसामर्थ्यात् भिच्छब्दसामर्थ्याच्च उद्भिच्छब्दः क्रियावचनः, उद्भेदनं प्रकाशनं पशूनामनेन क्रियते इत्युद्भित् यागः, एवमाभिमुख्येन जयात् अभिजित्, विश्वजयात् विश्वजित्, एवं सर्वत्र । अतः कर्मनामधेयम् । यत्त्वप्रवर्त्तिविशेषकरोऽनर्थकः इति, नामधेयेऽपि गुणफलोपबन्धेनार्थवत्, तस्मात् कर्मनामधेयान्येवञ्जातीयकानि—इति सिद्धम्" भा० गवामयने यज्ञे सप्तममासिकोत्तमाभिप्लविकस्थाने १एकादशे दिने । "सप्तमस्य मासस्योत्तमयोरभिप्लवयोः स्थाने त्रिवृद्व्यूहोदयरात्र उद्भिद्बलभिदौ" आश्व०श्रौ० १२, १,५,"सप्तमस्य मासस्य ये तयोऽभिप्लवाः तेषां यौ उत्तमाभिप्लवौ तयोः स्थाने त्रिवृत्स्तोमको व्यूहोदयरात्रः उद्भिद्बलभिदौ च द्वे अहनी इत्येतानि द्वादशाहानि" नारा०वृ० । गवामयनशब्दे विवृतिः ।

उद्भिद् पु० उद्+भिद–क । १वृक्षादौ पञ्चविधे स्थावरे । २उद्भेदके त्रि० "होता यक्षत्तनूनपातमुद्भिदम्" यजु० २८,२५ "उद्भिदं यज्ञफलानामुद्भेत्तारम्" वेददी० ।

उद्भिन्न त्रि० उद्+भिद–क्त । १उत्पन्ने कर्मणि क्त । २द्विधाकृते दलिते च । "यौवनोद्भिन्नशैशवा" ।

उद्भूत त्रि० उद्+भू–क्त । १उत्पन्ने "शिवविष्णुतयोद्भूतः कोटिसूर्य्यसमप्रभः" ति०त० पु० "समुद्रमथनोद्भूतः" कालसन्मः न्यायमते २प्रत्यक्षयोग्ये "उद्भूतरूपं नयनस्य गोचरः" उद्भूतस्पर्शवद्द्रव्यं गोचरः सोऽपि च त्वचः" भाषा० । उद्भूतत्वञ्च उद्भवापरपर्य्यायो रूपादिविशेषगुणगतो जातिभेदः यथा० सूत्रवृत्तौ उक्तः यथा "अनेकद्रव्यसमवायात् रूपविशेषाच्च रूपोपलब्धिः" क०सू० । "तेन रसगन्धस्पर्शेषु ज्ञानं व्याख्यातम्" सू० । "रूपगतो विशेषो रूपविशेषः तच्चोद्भूतत्वमनभिभूतत्वं रूपत्वञ्च तस्माद्रूपस्योपलब्धिः । नन्वेवं परमाणोर्द्व्यणुकस्य च रूपं गृह्येतेत्यत उक्तमनेकद्रव्यसमवायादिति अनेकपदं भूयस्त्वपरं तेनानेकानि भूयांसि द्रव्याणि आश्रयतया यस्य तदनेकद्रव्यं त्रसरेणुप्रभृति तत्समवायात्, घटादयोऽप्यवयवद्वयारब्धाः परम्परयाऽनेकद्रव्याश्रया एव, रसस्पर्शादौ रूपत्वविरहात् चाक्षुषत्वाभावः चाक्षुषे तेजसि च उद्भूतत्वविरहात् । उद्भवः रूपादिविशेषगुणगतो जातिविशेष एव रूपत्वादिव्याप्यः । नन्वेवं शुक्लत्वमधुरत्वसुरभित्वकटुत्वादिभिरपि परस्परभावानुपपत्तिरेव तत्तद्व्याप्यतत्तन्नानात्वकल्पने तु कल्पनागौरवम् उद्भवपदस्य नानार्थत्वञ्चेति चेन्न बाह्यैकैकेन्द्रियग्रहणयोग्यगुणत्वस्यैवोपाधेरुद्भवत्वात् तदुपाधिविरहस्यैवानुद्भवत्वात् । अनुद्भवाभाव एव उद्भव इति केचित् । तद्भिन्नम् अनुद्भवस्याप्येवं व्यवस्थापयितुमशक्यत्वात् । अतीन्द्रियविशेषगुणत्वमनुद्भूतत्वमिति चेत् एवं तर्हि ऐन्द्रियकविशेषगुणत्वस्यैवोद्भवत्वापत्तेः । ऐन्द्रियकत्वावच्छेदकं किमिति चेत् तुल्यम्, विशेषगुणेष्वैकैवोद्भूतत्वं जातिः गुणगतजातौ परस्पर-

भावानुपपत्तिर्न दोषायेत्यपि वदन्ति । तेनेति रूपप्रत्यक्षानेनेत्यर्थः यथा रूपविशेषात् रूपत्वानभिभूतत्वोद्भूतत्वलक्षणात्, रूपोपलब्धिस्तथा रसविशेषात् रसत्वानभिभूतत्वोद्भूतत्वलक्षणात् रसोपलब्धिः एवमितरत्रापि योज्यम् । अनेकद्रव्यसमवायवाविशेषः । घ्राणरसनत्वगिन्द्रियाणामनुद्भूतरूपरसस्पर्शानामग्रहणम् पाषाणादावनुद्भूतगन्धरसयोः। तद्ग्रहणे तयोरुपलम्भात् तयोः पाषाणादावुपलम्भ एव न तु सान्द्र इत्येके । विभक्तावयवाप्यद्रव्यरूपानुद्भूतत्वात्तदग्रहणम् एवं रसस्यापि । उष्णजले तेजोरूपस्यानुद्भूतत्वात् स्पर्शस्य चाभिभवात् वितप्तकर्पूरकस्तूर्यादौ रूपरसस्पर्शानामनुद्भूतत्वादनुपलम्भः । कनकादौ रूपमुद्भूतमेव शुक्लत्वभास्वरत्वे परमभिभूते । रूपमप्यभिभूतमित्येके कनकग्रहणन्तु रूपान्तरग्रहणादिति । अभिभवश्च बलवत्सजातीयग्रहणकृतमग्रहणं न तु बलवत्सजातीयसम्बन्धमात्रम्, बलवत्सजातीयसम्बन्धस्याग्रहणनिरूप्यतया अग्रहणस्यैवोपजीव्यत्वात् तथाग्रहणप्रयोजकत्वेन बलवत्सजातीय एवोपजीव्यः, अग्रहणस्य ग्रहणप्रागभावस्य तदत्यन्ताभावस्य वा तदप्रयोज्यत्वात् ग्रहणध्वंसस्य च तत्रासम्भवात् । तथापि तर्हि बलवत्सजातीयग्रहणकृतमग्रहणमनुपपन्नमेवेति चेत् सत्यमेवं तथापि सजातीयस्य बलवत्त्वे दुर्बलत्वे वा तादृशसम्बन्धवत्त्वे वा ग्रहणाग्रहणे एव प्रयोजके भवेतेति स एवाभिभवपदार्थः"।

**उद्भूति** स्त्री० उद्+भू–क्तिन् । १उत्पत्तौ । उत्कृष्टा भूतिः । २उत्तमविभूतौ ३वृद्धौ च । "उमा वधूर्भवान् दाता याचितार इमे वयम् । वरः शम्भुरलं ह्येष त्वत्कुलोद्भूतये विधिः" कुमा० ।

**उद्भेद** पु० उद्+भिद–घञ् । १रोमाञ्चे । भावे घञ् । २उद्भिद्योत्पत्तौ ३प्रकाशे च । "उमास्तनोद्भेदमनु प्रवृद्धः" कुमा० । "तं यौवनोद्भेदविशेषकान्तम्" रघुः । "पुष्पोद्भेदं सह किसलयैर्भूषणानां विशेषात्" मेघ० । "कन्दोद्भेदा वेद्रुमा वारिणीव" माघः । "इषितं इयाचाशो यौवनोद्भेदयन्त्रः" "महोऽपि यत्नोद्भेदसदागमनहेतवः" सा० द० । ३भेदने च "नखोद्भेदं यथापाद्य निरालोपोषितोनरः" भा० व० ८४ अ० । ल्युट् । उद्भेदनमप्यत्र न० । "वनोद्भेदनं विप्रास्तत्रापि कथयन्त्युत" भा० व० ८८ अ० । "उद्भेदनं प्रकाशनम्" उद्भिद्यस्य गदरभा० ।

**उद्भ्रम** पु० उद्+भ्रम–करणे घञ् न वृद्धिः । १उद्वेगे भावे घञ् । २समन्तात् भ्रमणे । भावे ल्युट् । उद्भ्रमणमप्यत्र न० ।

**उद्भ्रान्त** न० उद्+भ्रम–भावे क्त । १उद्भ्रमणे खड्ग० स्वार्थे कन् । मूर्च्छितगतौ शब्द० । अन्तर्भूतण्यर्थे भावे क्त । २वाकुमुद्यम्य सन्तृणभ्रामणे । उद्+भ्रम–कर्त्तरि क्त । ३भ्रान्तियुक्ते ४अर्द्ध भ्रमणकर्त्तरि च त्रि० । "मारीचोद्भ्रान्तहारीताः" रघु० ।

**उद्य** त्रि० वद–क्यप् । कथनीये "अनृतोद्यं न तत्रास्ति" भट्टिः सुप्युपपद एवास्य साधुत्वम् न पृथक्प्रयोग इति ।

**उद्यत्** त्रि० उद्+या–शतृ । उद्गच्छति "उद्यता जयिनि कामिनीस्तने तेन साहसमनुष्ठितं पुनः" का० प्र० "उद्यन् वलद्रादुत वा पुरीषात्" यजु० २९,१२ । "नेक्षेतोद्यन्तमादित्यम्" मनुः । स्त्रियां ङीप् । सा च २विष्टुतिभेदे च सा च ताण्ड्य० ब्रा० दर्शिता

"तिसृभ्योहिङ्करोति स प्रथमया, तिसृभ्योहिङ्करोति स मध्यमया, तिसृभ्योहिङ्करोति स उत्तमयोद्यती त्रिवृतो विष्टुतिः" । "एकैकस्य साम्नः पञ्च विभक्तयः प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनाख्याः, तत्र हिङ्कारस्त्रिभिरुद्गातृभिः सर्वैश्च कर्त्तव्यः अतएव छन्दतोऽच्यते "साम्ने साम्ने हिङ्कुर्युरिति" तिसृभ्य इति "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" पा० कर्मणि चतुर्थी तिसृभ्यो गातुं हिङ्कुर्यात् एकवचनमतन्त्रम् उद्गातेव हेतोः" अतस्रयोऽप्युद्गातारो हिङ्कुर्युरित्यर्थः । एवमुत्तरत्रापि हिङ्कारविधायकेषु वाक्येषु योजना । स हिङ्करोति स हिङ्कर्त्ता प्रथमया त्रिकया गायेत् अयं प्रथमः पर्यायः । तिसृभ्यो हिङ्करोति स हिङ्कर्त्ता मध्यमया त्रिकया गायेत् अयं द्वितीयः पर्यायः, पुनरपि तिसृभ्यो हिङ्करोति स हिङ्कर्त्ता उत्तमया अन्त्या तया त्रिकया गायेत् एषः तृतीयः पर्यायः । अनेन पर्यायेण त्रिवृत्स्तोमः सम्पद्यते उक्तप्रकारेण त्रिधा वर्त्तत इति त्रिवृत् स्तोमः तस्य विष्टुतिरेषा उद्यती ऊर्द्ध्वं गच्छन्ती उक्तेषु पर्यायेषु प्रथममध्यमोत्तमक्रमेण ऊर्द्धगमनादन्वर्थसंज्ञैषा त्रिवृतः प्रथमा विष्टुतिः" भा० सामसं० भाष्ये सायणेनउद्यतीनामकविष्टुतेः प्रकारः सम्यक् दर्शितो यथा "पठितानां नवानामृचां गानं त्रिभिः पर्यायैः कर्त्तव्यम् तत्र प्रथमपर्याये तिसृषु ऋक्षु आद्यास्तिस्रः, द्वितीये पर्याये मध्यमाः, तृतीये पर्याये चोत्तमाः । तिसृभ्य इति तृतीयार्थे पञ्चमी, हिङ्करोति गायतीत्यर्थः । सेयं यथोक्तप्रकारोपेता गीतिस्त्रिवृत्स्तोमस्य विष्टुतिः (स्तुति-प्रकार-विशेषः), अस्याः विष्टुतेरुद्यती नामेति, भा० पञ्चदशस्तोमेऽपरा उद्यती विष्टुतिः ता० ब्रा० दर्शिता यथा

"तिसृभ्यो हिङ्करोति स पराचीभिः, पञ्चभ्यो हिङ्करोति स एकया स तिसृभिस्स एकया, सप्तभ्यो हिङ्करोति स तिसृभिस्स एकया स तिसृभिरुद्यती पञ्चदशस्य विष्टुतिः" ब्रा० "त्रिषु पर्य्यायेषूत्तरोत्तरसंख्योत्कर्षमेत्युद्यती पञ्चदशस्य विष्टुतिरिति। त्रिषु पर्य्यायेषूत्तरोत्तरसंख्योत्कर्षमेतीत्युद्यतीत्युच्यते" भा०।

सप्तदशस्तोमस्यापराप्युद्यती तत्रैव दर्शिता "अथोद्यत्याख्यां सप्तदशस्तोमस्यापरां विष्टुतिमाह" भा०। "तिसृभ्यो हिङ्करोति स पराचीभिः, पञ्चभ्यो हिङ्करोति स एकया स तिसृभिस्स एकया, नवभ्यो हिङ्करोति स तिसृभिस्स तिसृभिस्स तिसृभिरुद्यती सप्तदशस्य विष्टुतिः" ब्रा०। "तिसृभ्यः पञ्चभ्यो नवभ्य इति क्रमेण संख्याया अर्द्धगमनादुद्यती अर्द्धं गच्छन्ती एतन्नाम्ना एषा सप्तदशस्तोमस्य विष्टुतिः" भा०।

अयं संक्षेपः गवामयने त्रिवृदादयः स्तोमाः विहिताः तेषां त्रिवृदादिस्तोमानां तिस्रो विष्टुतयः (सविशेषविशेषरूपेण स्तवनानि) तत्र बहिष्पवमानसाधनस्य त्रिवृत्स्तोमस्य तिस्रो विष्टुतयः उद्यती कुलायिनी परिवर्त्तिनी चेति तत्राद्या दर्शिता अन्ये तत्तच्छब्दे वक्ष्येते।

**उद्यत** त्रि० उद्+यम–कर्त्तरि–क्त। १उद्यमयुक्ते कृतोद्यमे "आततायी वधोद्यतः" अमरः। भावे क्त। २उद्यमे न०। यमेर्नियमनार्थत्वे कर्मणि क्त। ३उत्तोलिते ४उद्यमिते "महकस्तेज उद्यत आभिनः" यजु०२९.५। "उद्यम्यते स्त्रुद्यतः" वेददी०। "पर्य्यायोद्यतकार्मुकौ" रघुः।

**उद्यति** स्त्री उद्+यम–भावे क्तिन्। उद्यमे। "वैश्वदेवानि जुहोत्यश्वमेधस्योद्यत्यै" शत०ब्रा० १२,१,८,१।

**उद्यम** पु० उद्+यम–घञ् न वृद्धिः। १प्रयासे यत्नभेदे २उद्योगे। "नियमय चैतां तपसि कृतोद्यमाम्" "यथाक्षेमा न नियन्तुमुद्यमात्" कुमा०। ३उत्तोलने च "विप्रदण्डोद्यमे कृच्छ्रमतिकृच्छ्रं निपातने" या०स्मृ०।

**उद्यमन** न० उद्+यम–णिच्–ल्युट्। १उत्क्षेपणे २उत्तोलने।

**उद्यमित** त्रि० उद्+यम–णिच्–क्त। १उत्तोलिते २उद्यमाय प्रेरिते। "आत्मनोऽभ्युदयमुद्यमितानाम्" किरा०।

**उद्यान** पुं न० उद्यायतेऽत्र उद्+या–आधारे ल्युट् अर्द्धर्चादि। आरामे। तत्करणप्रकारादि आरामशब्दे ८०१पृ० उक्तम्। "बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या" "उद्यानानां नवजलकणैर्यूथिकाजालकानि" मेघ०

**उद्यानपाल** त्रि० उद्यानं पालयति पाल–अण् उप०स०। (माली) उद्यानरक्षके "उद्यानपालसामान्यमृतवस्तमुपासते" कुमा०। ण्वुल्। उद्यानपालकोऽप्यत्र। स्त्रियां टाप् अत इत्वम्। "ततः प्रविशति उद्यानपालिका" मालविकाग्निमित्रनाटकम्।

**उद्यापन** पुं न० उद्+या–णिच्–ल्युट् अर्द्धर्चादि। व्रतादिसमापने व्रतप्रतिष्ठायाम्। हेमाद्रौ व्रतखण्डे "उद्यापनं प्रवक्ष्यामि" इत्युपक्रम्य व्रतभेदे प्रयोगः। "प्रतिज्ञा च कर्मान्तरं न तदङ्गमिति" रघु०। अस्येतिकर्त्तव्यतासामान्यप्रकारः व्रततत्त्वादौ अनुसन्धेयः। विशेषतस्तु तत्तद्व्रतोक्तविधायकवाक्येभ्योऽवसेयः विस्तरस्तु हेमाद्रौ व्रतखण्डे द्रष्टव्यः। तत्र तिथि० त० व्रतारम्भप्रतिष्ठयोर्वर्ज्यकालमाह ज्योतिषे "गुरोर्भृगोरस्तगयोश्च बाल्ये वार्धके सिंहगे गुरौ। वक्रिजीवाष्टविंशेऽह्नि गुर्वादित्ये दशाहिके। पूर्वराशावनायातातिचारिगुरुवत्सरे। मासाधिमलजीवस्य चातिचारे त्रिपक्षके। कम्पाद्यद्भुतसप्ताहे गोचरस्थेऽपि सिंहगे। भानुलङ्घितके मासि पापे राहुयुते गुरौ। पौषादिकचतुर्मासे परयाहित वर्षके। एकेनाक्रान्तदिने द्वितीयेन दिनत्रये। तृतीयेन तु सप्ताहे माङ्गल्यानि शुभान्विताः। विद्यारम्भकर्णवेधौ चूडोपनयनोद्वाहान्। तीर्थस्नानमनाद्यन्तं तडागादिसुरेक्षणम्। परीक्षाऽऽरामयज्ञांश्च पुरश्चरणदीक्षणे। व्रतारम्भप्रतिष्ठा च गृहारम्भप्रवेशने। प्रतिष्ठारम्भणे देवकूपादेर्वर्जयन्ति च। हानिं यद्विवशाभावे जीवस्य भार्गवस्य च। ह्रासप्रतिभैक्ष्यस्य पादाक्षे द्वादश क्रमात्। अस्तात् प्राक् परयोः पक्षं गुरोर्बाल्यं विनाशते। पक्षं ह्रीनकालेऽत्र भृगुर्बालोदयाह्निकः। पादाद्ये तु दशाहानि वृद्धः शुक्रो दिनत्रयम्"। एवं व्रतारम्भप्रतिष्ठयोर्वर्ज्यकालोक्तेः सिंहस्थगुरौ तदकर्त्तव्यताकथनं साहसमेव हरितालिकादिव्रते तद्वर्जनस्याभावात् तस्य सिंहस्थगुरविकल्पेनैव निमित्तत्वात् तच्च हरितालिकाशब्दे वक्ष्यते। सिंहस्थगुरविकालस्याशुद्धिबोधकवाक्यस्य व्रतारम्भप्रतिष्ठाव्यतिरिक्तविषयकत्वेनाप्युपपत्तेः। "पूर्वे काले व्रतानां तु प्रतिष्ठां विधिवच्चरेत्। न तत्र कालनियमस्तत्र विप्रे पराविदके इति" वचनात् पूर्वकाले न समयाशुद्धिर्बाधिकेति केचित्। एतद्वचनस्यामूलकत्वमाहुरन्ये।

**उद्याम** पु० उद्यम्यतेऽनेन उद्+यम–करणे घञ् वा वृद्धिः। अर्द्धनियमनसाधने रज्ज्वादौ। "शिक्यपाशं प्रतिमुञ्चते

षड्द्याम' विश्वाह्वपाप्नोति" कात्या० १६,५,६, उद्गृह्य यम्यते नियम्यते यैस्ते उद्यामाः षड्द्यामारज्जवः जर्णाकर्षणहेतवोयस्य" यजु० १२,१० मन्त्रव्या० वेददी० "षड्द्यामं भवति षड्ढि दिशो मौञ्जं त्रिवृत्" "संवत्सर एषोऽग्निर्ऋतवः षिक्यमृतुभिर्हि संवत्सरः शक्नोति स्थातुं यच्छक्नोति तस्माच्छिक्यमृतुभिरेवैनमेतद्बिभर्त्ति षड्द्यामं भवति षडृतवः" शत० ब्रा० ६,७,१,१६,१८,

**उद्याव** पु० उद्+यु– अप् बाधित्वा "उदि श्रयतियौतिपृद्रुवः" पा० घञ्। ऊर्द्ध्वतोमिश्रणे अनुदि तु अवेव।

**उद्यास** पु० उद्+यस–घञ्। १उद्यमे कर्त्तरि संज्ञायां घञ्। २देवभेदे पु०। "आयासाय स्वाहा प्रयासाय स्वाहा संयासाय स्वाहा वियासाय स्वाहोद्यासाय स्वाहा" यजु० २२,११, "आयासादयो देवविशेषाः" वेददी०।

**उद्योग** पु०न० उद्+युज–घञ् अर्द्धर्चादि। १उद्यमे कर्म्मकरणार्थं प्रयासभेदे "उद्योगादनिवृत्तस्य सुसहायस्य धीमतः। छायेवानुगता तस्य नित्यं श्रीः सहचारिणी" नीति०। "मल्लादिविषयोद्योगकर्म्म च। मनसा गिरा" या० स्मृतिः। "उद्योगं सर्व्वसैन्यानां दैत्यानामादिदेश ह" देवीमा०। भीजसेनवत् उत्तरपदलोपे २उद्योगपर्व्वणि च। "उद्योगः सैन्यनिर्याणं श्वेतोपाख्यानमेव च" भा०आ० १अ० "उद्योगे भरतश्रेष्ठः सर्व्वकामगुणान्वितम्। भोजनं भोजयेद्विप्रान् गन्धमाल्यैरलङ्कृतान्" भा०स्वर्गा० ६अ०

**उद्योगपर्व्वन्** न० उद्योगस्य प्रतिपादकं पर्व्व। व्यास रचितभारतान्तर्गते पञ्चमे पर्वणि। "उद्योगपर्व्व विज्ञेयमतऊर्द्ध्वं महाद्भुतम्"। "उद्योगपर्व्व विज्ञेयं पञ्चमं शृण्वतः परम्" तत्सङ्ग्रहवृत्तान्तमुपवर्ण्य। "उद्योग पर्व्व निर्द्दिष्टं सन्धिविग्रहसम्मितम्" भा०आ० १अ०।

**उद्योगिन्** त्रि० उद्+युज–घिणुन्। उद्योगयुक्ते। "उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीर्दैवेन देयमिति कापुरुषा वदन्ति। दैवं निहत्य कुरु पौरुषमात्मशक्त्या यत्ने कृते यदि न सिध्यति कोऽत्र दोषः" हितो०।

**उद्योजक** त्रि० उद्+युज–ण्वुल्। प्रवर्त्तके।

**उद्र** पु० उनत्ति क्लिद्यति उन्द–रक्। जलविडाले। (उद्बिराल)

**उद्रङ्क(ङ्ग)** पु० सौभपुरे व्योमचारिपुरभेदे जटाधरः।

**उद्रथ** पु० उद्गतोरथो यस्मात्। १रथकीले। उद्गतरथतुल्यः पक्षो यस्य। ताम्रचूडविहगे। मेदिनिः।

**उद्रपारक** पु० "धृतराष्ट्रकुले जातान् शृणु नागान् यथातथम्" इत्युपक्रम्य "भैरवोमुण्डवेदाङ्गः पिशङ्गश्चोद्रपारकः" भा०आ०५७अ० सर्पसत्रे हतनागभेदाः। [च

**उद्रिक्त** त्रि० उद्+रिच–क्त। १अतिशयिते, २अधिके, ३स्फुटे

**उद्रेक** पु० उद+रिच–घञ्। १वृद्धौ, २अतिशये, ३उपक्रमे च। "गतोभक्त्युद्रेकः परिणतिमसौ चक्रवपुषा" पुष्पदन्तः। "प्रक्षीयते धनोद्रेको जनानामविजानताम्" भा०व० १९२ अ०। "स्नेहोरागश्च तन्द्रा च मोहोद्रेकश्च केवलः" भा०अनु०२अ०। ४महानिम्बे स्त्री राजनि०।

**उद्दंशीय** न० सामभेदे। "तदाहुरीर्म्म एव वा एषा होत्रा यदच्छावाक्या यदच्छावाकमनुशन्तिषत ईश्वरेमां भवितोरिति यद्युक्थं स्यात्स्वकुभस्वोद्दंशीयस्यान्ततः प्रतिष्ठाप्ये वीर्य्यं वा एते सामनी वीर्य्यएवान्ततः प्रतितिष्ठन्ति"। ब्रा० "अतो यदीयमुक्थम् उक्थसंस्थं स्यात् उक्तदोषपरिहाराय स्वैकुभं चोद्दंशीयं चोभे सामनी अन्ततस्तृतीयसवनस्यान्ते प्रतिष्ठाप्ये स्वैकुभं ब्रह्मसाम उद्दंशीयमच्छावकसामेत्येवं कर्त्तव्ये इत्यर्थः" ता०ब्रा०भा०।

**उद्वत्** त्रि० उद्, उत्कर्षितस्वभावोऽस्त्यस्य वा मतुप् मस्य वः। १उत्कृष्टे २उन्नते च। "स उद्वतोनिवतोयाति वेविषत्" ऋ० ३,२,१०। "उद्वतः उच्छ्रायवतः" भा० "उद्वत्स्वस्मा अकृणोतना" १,१६१,११। "उद्वत्सून्नतेषु" भा०।

**उद्वत्सर** पु० उत्क्रान्तोरविसंक्रान्तिं चान्द्रोमासोयत्र प्रा०व०। वत्सरपञ्चकान्तर्गते वत्सरभेदे इदावत्सरशब्दे विवृतिः उदावत्सरोऽप्यत्र।

**उद्वपन** न० उद्+वप–ल्युट्। १दाने २उत्तोलने (तोला)। "उखायामस्योद्वपनमस्तमिते पात्रे" "अनुदिते भस्मोद्वपनादि" कात्या० १६,६,१,२। उत्क्रान्तोवपनम् अत्या० स०। ३उत्पाटने च।

**उद्वमन** न० उद्+वम–ल्युट् उदुपसर्गस्य धात्वर्थानुगमात्मत्वात्। वमने। उद्गारशब्दे विवृतिः।

**उद्वयस्** त्रि० उद्गतं वयोऽन्नं यस्मात् प्रा०व०। अन्नोत्पादके वायौ "अपां रसमुद्वयसं सूर्य्ये सन्तं समाहितम्" यजु० ९,३, "उद्गतं वयोऽन्नं यस्मात् वायोः स उद्वया वायुः वायुनैव हि धान्यानि निष्पद्यन्ते" वेददी०। उत्क्रान्तो वयः कालिकावस्थाम् अत्या०स०। अतिक्रान्त वयसि वृद्धे त्रि०।

**उद्वर्त्त** पु० उद्+वृत–घञ्। १अतिशये २आधिक्ये च। (उवटान) णिच्–घञ्। चूर्णविशेषैः २देहस्य मलाद्यपसारणव्यापारे।

**उद्वर्त्तन** न० उद्वर्त्त्यतेऽनेन उद्+वृत–णिच् करणे–ल्युट्।

१शरीरनिर्मलीकरणद्रव्यादौ। चूर्णैरुद्वर्त्तनैः पार्लौ तैला-ल्लामवचूर्णयेत्” सुश्रु०। “नाकमेद्रक्तविण्मूत्रश्लेष्मोद्व-र्त्तनादि च” या०स्मृतिः। भावे ल्युट्। २द्रव्यभेदैः स्नेहा-द्यपहारार्थे व्यापारे च। ‘उद्वर्त्तनं वातहरं कफमेदो-विनाशनम्। स्थिरीकरणमङ्गानां त्वक्प्रसादकरं परम्’ “यवात्मगन्धावच्चाङ्गं किलेशोद्वर्त्तनं हितम्। शतावर्य्यश्व गन्धाभ्यां पयस्यैरण्डजीवनैः” “ततोऽस्य बलातैलमभ्य-ङ्गार्थेऽवचार्य्यम् यवपिष्टमुद्वर्त्तनार्थे” सुश्रु०। ३विलेपने, ४घर्षणे च। उद्+वृत-ल्युट्। ५उत्पतने ६उत्प्लवने च ‘गात्रस्योत्तनञ्चैव हितं संवाहनानि च” सुश्रु० “घटुलयफरोद्वर्त्तनप्रेक्षितानि” मेघ०।

**उद्वर्त्तनीय** त्रि०उद्वर्त्तनाय हितम् छ। उद्वर्त्तनसाधने द्रव्ये ‘इदमुद्वर्त्तनीयं गोधूमयचूर्णमिति” दुर्गार्चापद्धतिः।

**उद्वर्द्धन** न० उद्+वृध-ल्युट्। १अन्तर्हासे त्रिका०। णिच्-ल्युट्। २वृद्धिसम्पादने। ल्यु। ३वृद्धिसम्पादके त्रि०।

**उद्वर्हण** न०उद्+वर्ह-ल्युट्। १उन्मूलने २उत्पाटने ३उद्ध-रणे। क्त। उद्वर्हित उन्मूलिते त्रि०

**उद्वह** पु०उद्वहति ऊर्द्ध्वं नयति उद्+वह-अच्। पुत्रे “पुन्ना-म्नो नरकाद्यस्मात् पितरं त्रायते सुतः” श्रुतेस्तस्य नरक त्राणकर्त्तृत्वात् तथात्वम् २वंशकारके‘उदयमस्तमतश्च रघू-द्वहात्” “पार्थिवोद्वहरघूद्वहः”रघुः ३कन्यायां स्त्री ऊर्द्ध्वं प्रवहवायोरुपरिवहति अच्। वायुमार्गते ४तृतीयस्क-न्धस्थे वायौ पु०। आवहशब्दे विवृतिः“आवहः प्रवहश्चैव विवहश्च समीरणः। परावहः संवहश्च उद्वहश्च महाबलः। तथा परिवहः श्रीमानुत्पातभयशंसिनः। इत्येते क्षुभिताः सप्त मारुता गगनेचराः” हरि०२२६अ०। वा० भावे अप। ५विवाहे ‘चूडोपनयनोद्वहान्” राजमा०।

**उद्वहन** न० उत्तोल्य वहनम्। उत्तोल्य स्कन्धादिना वहने। ‘क्षणेन देहोद्वहनाय खेदः” कुमा० “कैलास-नाथोद्वहनाय भूयः” “आपीनभारोद्वहनप्रयत्नात्” रघु० २विवाहे च ‘भुवः प्रयुक्तोद्वहनक्रियायाः” रघुः। “ऋषिभ्यः पितादद्यात् सुतसंस्कारकर्मसु। पिण्डान्नो-द्वहनात्तेषां तदभावेऽपि तत्क्रमात्” स्मृतिः।

**उद्वादन** न० उद्+वद-णिच्-ल्युट्। १उच्चैरावेदने। “उप-दीक्षी सोऽग्निषु नखनिकृन्तनाद्युद्वादनान्तं साविपाति-कम” कात्या०२५,१४,२, “उपदीक्षो नेदिष्ठः सानग्नीन् निहृत्य नखनिकृन्तनाद्युद्वादनान्तं साविपातिकं कर्म कुर्य्यात्’ कर्कः। उद्वादनप्रकारश्च शत०ब्रा० ३,२,१,२९, दर्शि-तोयथा “अथैक उद्वदति दीक्षितोऽयं ब्राह्मणोदीक्षितोऽयं ब्राह्मण इति निवेदितमेवैनमेतत्सन्तं देवेभ्यो निवेदयत्ययं महावीर्य्योयोयज्ञं प्रापदित्ययं युष्माकैकोऽभूत्तं गोपायते त्येवैतदाह त्रिष्कृत्वाह”। “उद्वदति उच्चैरावेदयति” भा० २उच्चैर्वाद्यकरणे च उद्+वच-णिच् -ल्युट्। उद्वावचनमप्यत्र न० ‘यथेन्द्र उद्वाचनं लब्ध्वा चक्रे अधस्पदम्” अथ० ५,८,८,

**उद्वान** पु० उद्+वन-संभक्तौ घञ्। १उद्वमने णिच्-कर्मणि अच्। २उद्वमिते त्रि० रायमुकुटः।

**उद्वान्त** न० उद्+वम-क्त। कृतोद्वमने उद्गीर्णे अमरः।

**उद्वाप** पु० उद्+वप-भावे घञ्। १उन्मूलने २उद्धरणे। ३शूर्पस्य परिपरित्यागे पश्चात् ‘आवापोद्वापाभ्याम्’ मुक्ता०। कर्मणि घञ्। उद्वाप्य सन्धीयमाने ४भस्मादौ। “कपालानि भस्मोद्वापे कुर्य्यात्” कात्या० ५,२,६, भस्मोद्वापशब्देन प्रत्यहं गार्हपत्यादिकरेभ्यो भस्मोद्धृत्य यो राशिः क्रियते सउच्यते कर्कः”। णिच्-भावे अच्। ५मुण्डने।

**उद्वाय** पु० उद्+वा-घञ्। १उद्वासने २उपशमे। तत आ-चारे क्विप्। उद्वायति। “वायुर्वाव संवर्गोयदा वा अग्निरुद्वायति वायुमेवाप्येति” छा०उ०। ‘उद्वायति उद्वासनं प्राप्नोत्युपशाम्यति” भा०। गणव्यत्ययोवात्र।

**उद्वास** पु० उद्+वस-घञ्। स्वस्थानातिक्रमेण अन्यप्राप्तौ “अमरावत्यादीनां पुरीणां द्विगुणोत्तरोत्तरेण कालेनो-द्वासः” छा०उ०भा०। ततः बलादि०इनि मतुप् वा। उद्वासिन् उद्वासवत् तद्वति त्रि० स्त्रियां ङीप्।

**उद्वासन** न० उद्+वस-ल्युट्। १मारणे उद्+वस+णिच्-ल्युट्। २विसर्जने। स्रुगादीनाम् उद्धोत्तलनेनान्यत्र स्था-पनरूपे अन्वाधानाङ्गे ३संस्कारभेदे ‘अथ उपस्पृश्य यावाद्वार्थं परिस्तरणकृत्संवादनप्रोक्षणाज्यनिर्वपणाधि-श्रयणस्रुक्संमार्जनोद्वासनावेक्षणानि कृत्वाग्नीन् उत्पूय पश्चादाज्यग्रहणम्”कात्या०६,१,२, “धृतोद्वासनमाहवनीय आयिष्यः २,७,८, “आज्याधिश्रयणस्रुक्संमार्जनोद्वास-नावेक्षणानि” कात्या० ८,६,२१, ४स्थानान्तरनयने च “दक्षिणतोऽधिश्रयणोद्वासने”२५,८,६,भस्मानि अधिश्रय-णमुद्वासनं च गार्हपत्याहवनीययोर्दक्षिणस्यां दिशि कुर्यात्”कर्कः।

**उद्वास्य** अव्य० उद्+वस-णिच्-ल्यप्। विसृज्येत्यर्थे “उद्वास्य देवं सेधाग्निं” तन्त्रम्। २स्थानान्तरं नीत्वेत्यर्थे च कर्मणि यत्। ३उत्तोलनीये ४उद्धरणीये च त्रि०।

उद्वाह पु० उद्+वह घञ्। विवाहे स च स्नानविशेष इति रघु० येन स्नानेन ममेयं भार्य्या, ममायं पतिरिति व्यवहारो भवति तादृशं स्नानम्। तच्च सम्बन्धभेदेनोभयनिष्ठम्। चरमसंस्कार इति नव्यनैयायिकाः। चरमत्वञ्च संस्कारप्रागभावासहचरितत्वम्। द्वितीयविवाहस्य संस्कारत्वाभावात् तत्प्रागभावसत्त्वेऽपि आद्यविवाहे चरमत्वाक्षतिः। तत्र च स्त्रियाः संस्काररूपतया विवाहत्वव्यवहारः। यद्वा पुरुषस्य विवाहात् प्रागेव चूडादिषु जातेषु चरमम् तत्र पुरुषे चूडादौ संस्कारप्रागभावासहचरितत्वात् अतिव्याप्ते र्नैतत् साधनम्। किन्तु शास्त्रविहितसंस्कारान्तिमत्वमेव चरमत्वमिति युक्तम्। शास्त्रेषु च संस्कारेषु विवाहस्यैवान्तिमतया विधानादितरेषामुपान्तिमत्वादिनेति नातिप्रसङ्गः। यूपाहवनीयादौ यथा संस्कारादेव तत्तच्छब्दप्रवृत्तिः एवं शास्त्रविधिना कृतसंस्कारयोरेव दम्पत्योस्तच्छब्दप्रवृत्तिः। संस्कारस्यालौकिकत्वात् तत्तत्कर्मसाध्य इति न आदानमात्रेण तत्सिद्धिः। अतएव "अविप्लुतब्रह्मचर्य्यो लक्षण्यां स्त्रियमुद्वहेदिति" या० स्मृतौ "उद्वहेत द्विजोभार्य्याम्" इत्यादौ च विधिश्रवणम्, आदानमात्रस्य प्रमाणान्तरप्राप्ततया तदंशे विधित्वासम्भवात् अप्राप्तप्रापकस्यैव विधित्वात् अतएव "पाणिग्रहणिकामन्त्रा नियतं दारलक्षणम्। तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे" इति मनुना मन्त्रविशेषाणामेव भार्य्यात्वरूपसंस्कारप्रयोजकत्वमभिहितम्। आदानमात्रस्य विवाहत्वे तस्य च लौकिकत्वात् स्वहीतेतरद्रव्यवत् तद्दानविक्रयापत्तिःस्यात् "न निष्क्रयविसर्गाभ्यां भर्त्तुर्भार्य्या विमुच्यते" इति कात्यायनेन दानविक्रयाभ्यां भार्य्यात्वविगमाभावं वदता च विवाहस्य लौकिकत्वं निरासितम्। किन्तु विवाहसंस्कारस्य वैधत्वे यथाविधानमेव तत्र प्रवर्त्तितव्यम्। विधानातिक्रमे च कर्त्तुः प्रत्यवायोऽनिष्टं च फलं भवतीति गम्यते। तद्विधानप्रकारश्च आश्व०गृ० १,४, कण्डिकादौ दर्शितः अन्योऽपि प्रकारस्तत्तद्गृह्यकारैरुक्तः। स च ततोऽवसेयः। उद्वाहे वर्ज्जनीयकन्याः स्मृतिषु दर्शिता यथा। "असपिण्डा च या मातुरसगोत्रा च या पितुः सा प्रशस्ता द्विजातीनां दारकर्म्मणि मैथुने" मनुः। असपिण्डाश्च असपिण्डशब्दे ५४१पृ० मतभेदेनोक्ताः। "अनन्यपूर्व्विकां कान्तामसपिण्डां यवीयसीम्। अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम्" याज्ञ०। अन्यपूर्व्वाश्च। "सप्त पौनर्भवाः कन्या वर्ज्जनीयाः कुलाधमाः। वाचा दत्ता मनोदत्ता कृतकौतुकमङ्गला। उदकस्पर्शिता या च या च पाणिगृहीतिका। अग्निं परिगता या च पुनर्भूप्रभवा च या। इत्येताः काश्यपेनोक्ता दहन्ति कुलमग्निवत्" काश्य०। "तत्र सपिण्डासगोत्रासमानप्रवरासु भार्य्यात्वमेव नोत्पद्यते रोगिण्यादिषु भार्य्यात्वे उत्पन्नेऽपि दृष्टदोष एव" मिता० एवमेव रघुनन्दनादयः। समानार्षेयाश्च आर्षेयशब्दे ८१२ पृष्ठे दर्शिताः। "सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्म्मणि। जन्मनाम्नोरविज्ञाने उद्वहेताविशङ्कितः" इति उ०त० व्यासः। "मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च। समानप्रवरां चैव गत्वा चान्द्रायणं चरेत्" मिता० सु०। "आ सप्तमात् पञ्चमाच्च बन्धुभ्यः पितृमातृतः। अविवाह्या सगोत्रा च समानप्रवरा तथा। पञ्चमे सप्तमे वापि येषां वैवाहिकी क्रिया। ते च सन्तानिनः सर्वे पतिताः शूद्रतां गताः" नारदः। बन्धवश्च उत्तराधिकारशब्दे १०९९पृ० दर्शिताः। "सगोत्रां चेदमत्योपयच्छेन्मातृवदेनाम् बिभृयात् असमानार्षेयां विवाह्य चान्द्रायणं चरेत्" सुमन्तुः। "समानगोत्रप्रवरां समुद्वाह्योपगम्य च। तस्यामुत्पाद्य चाण्डालं ब्राह्मण्यादेव हीयते" आप०। "सर्व्वाः पितृपत्न्यो मातरस्तद्भ्रातरो मातुलास्तदपत्यानि भगिन्यस्तदपत्यानि भागिनेयानि ता अन्यतोऽविवाह्याः अन्यथा सङ्करकारित्वमध्यापयितृरिति" सुमन्तुः। "अध्यापयितुरेतद्विवाहमन्त्रपाठयितुरेतत् सङ्करकारित्वमिति" रत्नाकरादयः। अध्यापयितुर्गुरोः कन्या अविवाह्येति रघुनन्दनेनोक्तम् "समानप्रवरा याऽपि शिष्यसन्ततिरेव च। प्रज्ञादातुर्गुरोश्चैव सन्ततिः प्रतिषिध्यते" गरुडपु०। "मातुर्यन्नाम गुह्यं स्यात् तत्पितुश्चापि वा। तन्नाम्नी या भवेत् कन्या सादृङ्नाम्नीं प्रचक्षते। प्रमादात् यदि गृह्णीयात् प्रायश्चित्तं समाचरेत्। ततश्चान्द्रायणं कृत्वा तां कन्यां परिवर्ज्जयेत्" मत्स्यपु०। तथा स्वान्तिकाउनत्या अपि पुत्रस्थानिकतया अविवाह्यत्वमुक्तं दत्तकमी० दृश्यम्। अत्र सपिण्डविषयेऽपवादः "सन्निकर्षेऽपि कर्त्तव्यं त्रिगोत्रात् परतो यदि" मत्स्यपु०। "असम्बन्धा भवेद्यास्तु पिण्डे नैवोदकेन वा। सा विवाह्या द्विजातीनां त्रिगोत्रान्तरिता च या"। मनुः। शूद्राणान्तु अतिदिष्टादिष्टगोत्रभागित्वेन सगोत्राविवाहो न निषिद्धः इति रघुनन्दनादयः। "द्विजानामसवर्णासु कन्यासूपयमस्तथा" इत्यु०भा० उक्तेः कलौ असवर्णाविवाहनिषेधात्तद्विशेषो न लिखितः। द

निकृष्टां मातुलकन्योद्वाहस्तु शिष्टैरपि क्रियते तस्य स्मृतिविरुद्धत्वेऽपि किञ्चित् श्रौतं लिङ्गमास्थाय तेषां तदाचारत्वमिति बहवः। तच्च श्रौतलिङ्गस्यान्यार्थपरता पराशर माधवादौ दर्शिता। अतएव द्वारकापदर्शितदेशवासिनां तथाचरणे भाग०१०स्कन्धे। "बद्ध्वाप्यनुस्मरन् वैरं रुक्मी कृष्णावमानतः। व्यतरत् भागिनेयाय सुतां कुर्वन् स्वसुः प्रियम्"। "रौक्मिणेयायानिरुद्धाय पौत्रीं रुक्म्याददद्धरेः। रोचनां बद्धवैरोऽपि स्वसुः प्रियचिकीर्षया जानन्नधर्मं तद्यौनं स्नेहपाशानुबन्धनः"। अधर्मं जानन्निति तेन तस्याधर्मत्वम्। "मातुलस्य सुतामूढ्वेति प्रागुक्तवचनात्तस्याधर्मत्वम् स्पष्टमेव। स च विवाहोऽष्टविधः "ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽऽसुरः। गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः" मनुः एतेषां लक्षणं तत्तच्छब्दे दृश्यम्। "तेन भार्या कृता पूर्वं मनोहारा परस्य वै" हरिवं०।

उद्वाहन न० उद्+वह–णिच्–ल्युट्। १पुत्रादेरुद्वाहसम्पादने २उन्नयने ३स्थानान्तरनयने। उद्वाह्यते स्थानान्तरं नीयतेऽनेन उद्+वह–णिच्–करणे ल्युट्। ४उद्धारणसाधने "उद्घाटनं घटीयन्त्रं सलिलोद्वाहने प्रहेः" अमरः। उद्+वह–स्वार्थे णिच्–भावे ल्युट्। ५विवाहे। वाहनस्य कृताकर्षणस्योपरि वाहनं कर्षणं यत्र। ६द्विहल्ये क्षेत्रे यत्र प्रथममेकवारं हला पुनः कर्षणं क्रियते तादृशे क्षेत्रे हेम०। [ टङ्के (कड़ि) हेम०।

उद्वाहनी स्त्री उद्वह्यते स्वार्थे णिच्–कर्मणि ल्युट्। वरा-

उद्वाहिक त्रि० उद्वाहः प्रयोजनमस्य ठक् संज्ञापूर्वकविधेरनित्यत्वात् न वृद्धिः। विवाहसाधने मन्त्रादौ "नोद्वाहिकेषु मन्त्रेषु विधवावेदनं क्वचित्" मनुः। वृद्धौ औद्वाहिकोऽप्यत्र त्रि०।

उद्वाहित पु० स्त्री उद्वाहो जातोऽस्य तारका० इतच्। जातविवाहे "जाते हस्ते तर्पणाख्ये मते च द्वैलक्षण्यमिति। उद्वाहितायां कन्यायां द्वयोरेकत्रायनम्" राजमा०।

उद्वाहिनी स्त्री उद्वाहः उद्धरणं साध्यतयाऽस्त्यस्याः इनि ङीप्। रज्जौ मेदिनिः।

उद्विग्न त्रि० उद्+विज–कर्त्तरि क्त। उद्वेगयुक्ते, "निमज्जोद्विग्नसंक्षुब्धैः घर्मे दीनैव मेदिनी" भट्टिः। दुःखपरिहाराक्षमतया २व्याकुलचित्ते, ३क्षुभिते च।

उद्वीक्षण न० उद्+वि+ईक्ष–भावे ल्युट्। १ऊर्द्ध्वदृष्टौ। करणे ल्युट्। २तत्साधने नेत्रे "सरोजनेत्रोद्वीक्षणकौतुहलम्" रघुः।

उद्वीत त्रि० उद्+वि+इ–क्त। विशेषेणोद्गते। (अपसामिश्रवीता) समन्तात् व्याविते "ततो युधिष्ठिरानीकमुद्वीतार्त्तवनिस्वनम्" भा० द्रो० १६अ०।

उद्वृत्त त्रि० उद्गतो वृत्तात् निरा० स०। १दुर्वृत्ते। उद्+वृत–क्त। २उत्क्षिप्ते ३भुक्तोज्झिते। ४अधिके। "उद्वृत्तोऽपि धन्यः सर्वधिकफलमावहे" व्या० न्यायः। "कलशयोद्वृत्तमिवार्णवाम्भः" भा० आ० प० ७। ५क्षुभिते च "उद्वृत्तनक्रात् सहसोन्ममज्ज" रघुः।

उद्वेग पु० उद्+विज–घञ्। १व्याकुलचित्ततायाम् २विरहजन्ये दुःखोद्गमे, "मनोभिः सोद्वेगैः प्रणयविहतिध्वस्तरुचः" किरा०। "सहसोद्वेगमियं व्रजेदिति" रघुः। "शान्तोद्वेगस्तिमितनयनं दृष्टभक्तिर्भवान्याः" मेघ०। "कोकिलारावं श्रूयते उद्वेगं जनयति शिरोऽन्ध्रीते नासिकाञ्च आयपति स कटुकः" सुश्रु०। "वक्त्रोऽवेष्यत्युद्वेगो माधुर्यं परिकीर्त्तितम्" सा० द०। ३भये च। ४गुवाकफले न०। उद्गतो वेगोऽस्मात्। ५निश्चले, ६स्तिमिते ७शीघ्रगामिनि च त्रि०।

उद्वेजन त्रि० उद्+विज–भावे ल्युट्। १उद्वेगे अमरः "परदाराभिमर्षेषु प्रवृत्तान् नृ महीपतिः। उद्वेजनकरैर्दण्डैश्छिन्नयित्वा प्रवासयेत्" मनुः तस्मै साधु छ। उद्वेजनीय उद्वेजके त्रि० "परिहरेदुद्वेजनीयाः कथाः" सुश्रु०।

उद्वेजित त्रि० उद्+विज–णिच्–क्त। जातोद्वेगे "उद्वेजिता वृष्टिभिराश्रयन्ते" कुमा०।

उद्वेदि त्रि० उद्गता वेदिर्यस्य प्रा० ब० समासान्तः। उन्नतवेदिके। "विमानं नवमुद्वेदि चतुःस्तम्भप्रतिष्ठितम्" रघुः

उद्वेप पु० उद्+वेप–भावे घञ्। १उत्कम्पने। कर्त्तरि अच्। २तद्युक्ते त्रि०। ततः तेन निर्वृत्तमित्यर्थे अंह्वा० अण्। औद्वेप तन्निर्वृत्ते त्रि०। स्त्रियां ङीप्।

उद्वेल त्रि० उत्क्रान्तो वेलाम् अत्या० स०। १वेलातिक्रान्ते २मर्यादातिक्रान्ते "भयमप्रलयोद्वेलादाचख्युर्नैर्ऋतोदधेः" रघु

उद्वेष्टन न० उद्+वेष्ट–ल्युट्। १करपादयोर्बन्धने, २उपवेष्टने च। "सक्ते मधुरता सम्प्रत्युत्कर्षोद्वेष्टनं भवः" "हृदयोद्वेष्टनं तस्मा वाचाह्णतिरोधकः" सुश्रु०। उद्गतं वेष्टनात् निरा० त०। २उन्मुक्तबन्धने त्रि०। "बद्धापिद्धवेष्टनवान्तमाला" रघुः कुमारश्च

उद्वोढृ पु० उद्+वह–तृच्। परिणेतरि। "उद्वोढापि भवेत् पापी स वर्णात् कुलनाशिके!। वेश्यागमनजं पापं तस्य दुःखोदिनेदिने" महानि०त०।

उभ्रस उम्भे क्र्या० पर० सक० सेट्। उभ्नाति औम्भीत्

स्नानादिविषयकं ज्ञानम् । चेष्टा शारीरम् । आदिशब्देनाभिभाषादि गृह्यते । विकृतः यथास्वमाचरितव्यादिभिः । तन्निमित्तः उन्मादः । तत्र देवाविष्टस्य लक्षणमाह । “सन्तुष्टः शुचिरतिदिव्यमाल्यगन्धो निस्तन्द्रीरवितथसंस्कृतप्रभाषी । तेजस्वी स्थिरनयनो वरप्रदाता ब्रह्मण्यो भवति नरः स देवजुष्टः”। अतिदिव्यमाल्यगन्धः अतिशयो दिव्यमाल्यस्येव गन्धो यस्य सः । निस्तन्द्रः निद्रारहितः । अवितथं सत्यम् । ब्रह्मण्यः ब्राह्मणभक्तः। दैत्याविष्टमाह । “संस्वेदी द्विजगुरुदेवदोषवक्ता जिह्माक्षो विगतभयो विमार्गदृष्टिः । सन्तुष्टो भवति न चान्नपानजातैर्दुष्टात्मा भवति स दैत्यजुष्टः”। विमार्गदृष्टिः कुमार्गरतः । दुष्टात्मा दुष्टस्वभावः । गन्धर्वाविष्टमाह । “हृष्टात्मा पुलिनवनान्तरोपसेवी स्वाचारः प्रियपरिगीतगन्धमाल्यः । नृत्यन् वै प्रहसति चारु चाल्पशब्दं गन्धर्वग्रहपरिपीडितो मनुष्यः”। हृष्टात्मा हृष्टजीवात्मा । पुलिनं तोयोत्थितं तटम् वनान्तरं वनमध्यम् तयोः सेवी । स्वाचारः अनिन्दिताचारः । प्रियाणि यदि समन्ततोभावेन गीत गन्धमाल्यानि यस्य स तथा । चारु चाल्पशब्दमिति नृत्यनक्रियाया विशेषणम् । यक्षाविष्टमाह । “ताम्राक्षः प्रियतनुरक्तवस्त्रधारी गम्भीरो द्रुतगतिरल्पवाक् सहिष्णुः । तेजस्वी वदति च किं ददामि कस्मै यो यक्षग्रहपरिपीडितो मनुष्यः” । पित्राविष्टमाह । “प्रेतानां स दिशति संस्तरेषु पिण्डान् शान्तात्मा जलमपि चापसव्यवस्त्रः । मांसेप्सुस्तिलगुडपायसाभिकामस्तद्भक्तो भवति पितृग्रहाभिजुष्टः”। प्रेतानां मृतानां पितॄणाम्। दिशति ददाति । अपसव्यवस्त्रः दक्षिणस्कन्धधृतोत्तरीयः । नागाविष्टमाह ।“यस्तूर्व्यां प्रसरति सर्पवत् कदाचित् सृक्किण्यौ पुनरपि जिह्वयावलेढि । क्रोधालुर्गुडमधुदुग्धपायसेप्सुर्विज्ञेयः स खलु भुजङ्गमेन जुष्टः” । प्रसरति सर्पवत् उरसा चलति । सृक्किण्यौ ओष्ठप्रान्तौ । राक्षसाविष्टमाह ।“मांसासृग्विविधसुराविकारलिप्सुर्निर्लज्जो भृशमतिनिष्ठुरोऽतिशूरः । क्रोधालुर्विपुलबलो निशाविहारी शौचद्विड् भवति स राक्षसैर्गृहीतः” । अतिनिष्ठुरोऽतिनिर्दयः ब्रह्मराक्षसाविष्टमाह । ‘देवविप्रगुरुद्वेषी वेदवेदाङ्गविच्छुचिः । आत्मपीडाकरोऽहिंस्रो ब्रह्मराक्षससेवितः । अहिंस्रः अहिंसाशीलः । पिशाचाविष्टमाह । ‘उद्ध्वस्तः कृशपरुषो चिरप्रलापी दुर्गन्धो भृशमशुचिस्तथातिलोलः । बह्वाशी विजनवनान्तरोपसेवी व्याचेष्टन् भ्रमति रुदन् पिशाचजुष्टः” । उद्ध्वस्तः नग्नः । दिगम्बर इति विदेहवचनात् । ( सु०सुश्रु० उद्धत इति पाठः ) कृशो निर्मांसः । परुषो रूक्षः । अतिलोलः सर्वत्र अन्नपाने लोलुपः । व्याचेष्टन् विरुद्धमाचेष्टन् । ग्रहा हिंसाक्रीडापूजार्थं गृह्णन्ति । अतएवोक्तम् । “ग्रहणं निजमर्यादं यत् वा यदि माऽचतम् । हिंस्रु हिंसाविहारार्थं सत्कारार्थमथापि वा । तत्र हिंसार्थं गृहीतस्य लक्षणमाह । ‘स्थूलाक्षो द्रुतमटनः फेनवामी निद्रालुः पतति च कम्पते च योऽति । यश्चाद्रिद्विरदनगादिविच्युतः स्यात् सोऽसाध्यो भवति तथा त्रयोदशेऽब्दे । यश्चाद्रीत्यादि यः पर्वतादिपतितः सन् ग्रहैर्गृहीत उन्मत्तः । आदिशब्देन भित्तिप्रासादादयो गृह्यन्ते त्रयोदशेऽब्दे सर्व एव देवादिगृहीतोऽसाध्यः । देवादीनां आवेशसमयमाह ।“देवग्रहाः पौर्णमास्यामसुराः सन्ध्ययोरपि । गन्धर्वाः प्रायशोऽष्टम्यां यक्षाश्च प्रतिपद्यपि । पितरः कृष्णपक्षे च पञ्चम्यामपि चोरगाः । रक्षःपिशाचा रात्रौ च चतुर्दश्यां विशन्ति हि” । कृष्णपक्षे अमावास्याम् । प्रायशःपदादन्यत्रापि । तिथ्यभिधानप्रयोजनं बलिदानार्थं तत्र तिथौ बलिदानार्थं च । ननु यदि देवादयो विशन्ति तदा विशन्तस्ते दृश्यन्ते कथं नेत्यत आह । “दर्पणादीन् यथा छाया शीतोष्णं प्राणिनो यथा । स्वमणिं भास्करार्चिश्च यथा देहञ्च देहधृक् । विशन्ति च न दृश्यन्ते ग्रहास्तद्वच्छरीरिणम्” । दर्पणादीनित्यादि शब्देनान्यदपि निर्मलद्रव्यं गृह्यते । छाया प्रतिबिम्बम् । स्वमणिं सूर्यमणिम् । देहधृक् जीवात्मा” । भा०प्र० । एतानि च वाक्यानि सुश्रुतोत्तरतन्त्रस्थानि । तत्र हि “गुह्यानागतविज्ञानमनवस्था सहिष्णुता । क्रिया वाऽमानुषी यस्मिन् स ग्रहः परिकीर्त्यते” इति ग्रहमर्द्दं परिभाष्य “अमंख्या ग्रहगणा ग्रहाधिपतयश्च ये । अस्यन्ते विविधाकाराभिद्यन्ते ते तथाष्टधा देवास्तथा शत्रुगणाश्च तेषां गन्धर्वयक्षाः पितरो भुजङ्गाः । रक्षांसि या चापि पिशाचजातिरेषोऽष्टधा देवगणग्रहाख्यः” इति विभज्य “संतुष्टः शुचिरित्यादिना तज्जुष्टानां लक्षणान्याह । तानि भा०प्र० धृतवाक्योदाहृत व्याख्यातानीति द्रष्टव्यम् । अन्तं च प्रकृतदेवादीनां न कथित् प्रवेशः किन्तु तत्परिचारकाणामेव देवाद्याचरवतां प्रवेश इत्युक्तं यथा सुश्रु० उत्त० ।‘तपांसि तीव्राणि तथैव दानं व्रतानि धर्मो नियमश्च सत्यम् । गुणास्तथाष्टावपि तेषु नित्या व्यस्ताः समस्ताश्च

यथाप्रभावम् । न ते मनुष्यैः सह संविशन्ति न वा मनुष्यान् क्वचिदाविशन्ति । ये वा विशन्तीति वदन्ति मोहात्ते भूतविद्याविषयादपोह्याः । तेषां ग्रहाणां परिचारका ये कोटीसहस्रायुतपद्मसंख्याः । असृग्वसामांसभुजः सुभीमा निशाविहाराश्च समाविशन्ति । निशाचराणां तेषां हि ये देवगणसंस्कृताः । ते तु तत्सत्त्वसंसर्गाद्विज्ञेयास्तु तदङ्गनाः । देवग्रहा इति पुनः प्रोच्यन्ते शुचयश्च ये । देववच्च नमस्यन्ते प्रत्यर्च्यन्ते च देववत् । सान्निध्यीकक्रियाचाराः क्रमशएव सुरादिषु । नैर्ऋतेया दुहितरस्तासां च प्रवरः स्मृतः । सत्यवादपरस्तेषु इत्यस्तेषां मघैः कृता । हिंसाविहारा ये केचिद्दिव्य भावमुपाश्रिताः । भूतानीति कृता संज्ञा तेषां संज्ञा प्रवक्तृभिः । ग्रहसंज्ञाभिभूतानि यस्माद्वेत्त्यनया भिषक् । विद्यया भूतविद्यात्वमतएव निरुच्यते”।

अथोन्मादस्य सामान्यचिकित्सा

‘वातिके स्नेहपानं प्राक् विरेकः पित्तसम्भवे । कफजे वमनं कार्य्यं परे वस्त्यादिकक्रमः । यच्चोपदेक्ष्यते किञ्चिदपस्मारे चिकित्सितम् । उन्मादे तच्च कर्त्तव्यं सामान्याद्दोषदूष्ययोः । जलाद्रिद्रुमशैलेभ्यो विषमेभ्यश्च तं सदा । रक्षेदुन्मादिनं यत्नात् सद्यः प्राणहरा हि ते । ते जलादयः” । विशेषचिकित्सा भा०प्र०आदौ दृश्या । सचायं रोगः। महापातककर्मविपाकजः । “उन्मादस्त्वगदोषो राजयक्ष्मेत्यादि” शु० त० भारदोक्ते: “चित्तसंमोह उन्मादः कामशोकभयादिभिः” । सा०द० उक्ते २व्यभिचारिभावभेदे ।

**उन्मादक** पु० उद्+मद-णिच्-ण्वुल् । उन्मादजनके धुस्तूरादौ । [ उन्मादकारके त्रि०।

**उन्मादन** पु०उद्+मद-णिच्-ल्यु । १कन्दर्पबाणभेदे त्रिका०।

**उन्मादवत्** त्रि० उन्मादोऽस्त्यस्य मतुप् मस्य वः । उन्मादयुक्ते स्त्रियां ङीप् । [ न्मादिनं यत्नात्”सुश्रु० ।

**उन्मादिन्** त्रि० उद्+णिनि स्त्रियां ङीप् । उन्मत्ते “रक्षेदु-

**उन्मान** न०उद्+मा—भावे ल्युट् । ऊर्द्धमाने तच्च प्रचितगुरुत्वेन पलादिमितपाषाणादिना तुलाधारफलके एकपार्श्वे स्थितेन अन्यपार्श्वस्थस्वर्णादेरुन्नमनादिना गुरुत्वविशेषज्ञापनव्यापारः (ओजनकरा)“ऊर्द्धमानं किलोन्मानम्” यार्त्तिकोक्ते २ऊर्द्धतः प्रमाणे च । अभिनेयार्थे “प्रमाणे द्वयसज्दघ्नञ्मात्रचः” पा०“प्रथमश्च द्वितीयश्च ऊर्द्धमाने मतौ मम”वार्त्तिकोक्तेः द्वयसच् दघ्नच् । ऊरुद्वयसः ऊरुदघ्नः“गजपतिद्वयसीरिति” माघः । सामान्यप्रमाणे तु मात्रजेव । ऊरुमात्रं प्रस्थमात्रम् । ४करणे ल्युट् । ५तुलादौ । ६द्रोणपरिमाणे पु० वैद्यकम् ।

**उन्मार्ग** त्रि०उत्क्रान्तः मार्गात् निरा०स० । मार्गातिक्रान्ते मार्गेच पन्थाः रीतिश्च” “कामयति च दिङ्मोहनिबोन्मार्गः” काद० । २विरुद्धपथे च “मदोन्मत्तस्य भूपस्य कुञ्जरस्य च गच्छतः । उन्मार्गं वाच्यतां यान्ति महामात्राः समीपगाः;” पञ्चतन्त्रम् । उन्मादशब्दे उदा० ।

**उन्मिति** त्रि० उद्+मद-क्तिन् । ऊर्द्धमाने ।

**उन्मिष** त्रि०उद्+मिष—क । १प्रफुल्ले २किञ्चित्प्रकाशयुक्ते च

**उन्मिषित** त्रि० उद्+मिष-क्त । १प्रफुल्ले, विकसिते २किञ्चित् प्रकाशिते च ।“ व्यलोकयदुन्मिषितैस्तडिन्मयैः” कुमा०।

**उन्मीलन** न०उद्+मील—ल्युट् । १विकाशे २चक्षुरादेः पुटविभेदे (ताकान) “ज्ञानाञ्जनशलाकाभिर्नेत्रोन्मीलनकारकः” भा०व्रा०८४अ० । “ समोलनोन्मीलनयो तथैव” सि० शि० । भावे घञ् उन्मीलोऽप्यत्र पु० ।

**उन्मीलित** त्रि० उद्+मील—क्त । १विकसिते “ते चोन्मीलित मालतीसुरभयः प्रौढाः कदम्बानिलाः;” सा०द०। २प्रकाशिते च णिच्—कर्मणि क्त । ३प्रकाशिते ‘उन्मीलितं तूलिकयेव चित्रम्”कुमा०। ४भेदितसदृशे नेत्रादौ “अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया । चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः” गुरुनतिमन्त्रः ।

**उन्मुक्त** त्रि० उद्+मुच—क्त । बन्धनरहिते

**उन्मुख** त्रि० उद्+ऊर्द्ध मुखमस्य । १ऊर्द्धास्ये,२उद्युक्ते च । “उन्मुखहाःसमीक्षिताः”कुमा०। “तस्मिन् संयमिनामाद्ये जाते परिणयोन्मुखे” कुमा० । “विपुलतरोन्मुखलोचनावकाशम्” “दन्ताग्रनिर्भिन्नपयोदनुन्मुखाः” माघः । “अथो मरस्यः मरणोन्मुखानाम्” “या नीतपौरा स्वपदोन्मुखेन” । “मनोऽभिरामाः शृण्वन्तौ रथनेमिस्वनोन्मुखैः” रघुः स्त्रियां ङीप् । “चूतयष्टिरिवाभ्यासे मधौ परभृतोन्मुखी” कुमा०“प्रतिपन्नापि कैकेय्या लक्ष्मीरिव गुणोन्मुखी” “पतिः प्रतीतः प्रसवोन्मुखीं प्रियाम्” “अद्रेः शृङ्गं हरति पवनः किंस्विदित्युन्मुखीभिः” “इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा” मेघ० ।

**उन्मुद्र** त्रि०उद्गता मुद्रा यस्मात् प्रा०ब०।१व्यक्तमुद्रे,२विकसिते च

**उन्मूल** नामधा०मूलात उत्पाटयति उद्+मूल-णिच्। उन्मूलयति ते “उन्मूलयन् महावृक्षान्” भा०व०१४६अ०

**उन्मूलन** न० उन्मूल+णिच्-ल्युट् । उत्पाटने उद्धृतमूलकरणे । “न पादपोन्मूलनशक्ति रंहः” रघुः !

**उन्मूलित** त्रि॰ उन्मूलि—नामधा॰ क्त। उत्पाटिते "उन्मूलिता कुलधरेव पदाघातैः" उद्भटः "दूरे फलानि फल भवता तन्मूलमुन्मूलितम्" उद्भट॰।

**उन्मृजावमृजा** स्त्री उन्मृज अवमृज इत्युच्यते यस्यां क्रियायां मयू॰ स॰। उन्मार्जनावमार्जनार्थनिर्देशक्रियायाम्।

**उन्मृश्य** त्रि॰ उद्+मृश–क्यप्। "हस्तमुत्तोलस्पृश्ये। "इत्यु-न्मृश्या इव वीरास" शत॰ब्रा॰ १,४,१,२२, ल्यप्। २उद्धृतः स्पृष्ट्वेत्यर्थे अव्य॰।

**उन्मेय** त्रि॰ उद्+मा–यत्। १परिमेये "आचितः शकटोन्मेये" सिद्धा॰। २उन्मानमेये सुवर्णादौ च।

**उन्मेष** पु॰ उद्+मिष–घञ्। १चक्षुरादेरुन्मीलने, किञ्चित्प्रकाशे च। "खकिरणपरिवेषोन्मेषशून्याः प्रदीपाः" रघुः। "दीर्घिकाकमलोन्मेषो यावन्मात्रेण साध्यते" कुमा॰ "विद्युदुन्मेषदर्शिस" मेघ॰। भावे ल्युट्। उन्मेषणमप्यत्र न॰ "मन्मथोन्मेषणातिविस्तीर्णा शोभैव कान्तिः" सा॰द॰।

**उन्मोचन** न॰ उद्+मुच–ल्युट्। बन्धनात् उद्धृत्य विश्लेषणे। "उन्मोचनप्रमोचने उभे वाचो वदामि" अ॰५,३०,१,

**उप** अव्य॰ वप–क। १अधिकार्थे, २हीने, ३आसन्ने, ४सामीप्ये, ५सादृश्ये, ६प्रतियत्ने सतो गुणान्तराधाने, ७व्याप्तौ, ८पूजायाम् ९यत्नौ, १०आरम्भे, ११दाने, १२दोषाख्याने, १३आचार्यकरणे १४अध्ययने, १५निदर्शने च। गणरत्ने "उप सामीप्यसामर्थ्यव्याप्त्याचार्यकृतिक्षतिदोषदानक्रियावीप्सारम्भाध्ययनपूजनेषु" इति उपार्थानुक्त्वा क्रमेणोदाजहार तत्र सामीप्ये उपकूपम्। सामर्थ्ये उपकरोति। व्याप्तौ उपकीर्णम्। आचार्यकृतौ उपदिशति। क्षतौ उपरतः, दोषे उपघातः (इन्द्रियाणां स्वस्वार्थग्रहणासामर्थ्यम्) दाने उपहरति। क्रियाभेदे उपचरति। वीप्सायां देवं देवमुपचरति। आरम्भे उपक्रमते भोक्तुम्। अध्ययने उपाध्यायः। पूजने उपचरितः पिता पुत्रेण" इति। प्रतियत्ने (संस्कारे) "उप त्वा नेष्ये समिधमाहरेति" छा॰उ॰सार्थ्ये "उपोपविश्य प्राणान् संस्मृत्य" त॰त॰गो॰। सादृश्ये उपदेवः उपधातुः। "उपोऽधिके च" पा॰ "१ईश्वाधिक्ये "उप च त्रयोदश मासः" शत॰ब्रा॰ ६,२,२, अस्य हीनेऽधिक्ये च कर्मप्रवचनीयता तत्र हीनार्थयोगे तत्सम्बन्धिनि द्वितीया। उप हरिं सुराः–हरेर्हीना इत्यर्थः। अधिकार्थयोगे सप्तमी। उप परार्द्धे हरेर्गुणाः–परार्द्धादधिका इत्यर्थः। सामीप्येऽव्ययीभावः उपकुम्भम् उपकूपम्। "उपसर्गाः क्रियायोगे" पा॰ क्रियायोगे उपसर्गता अन्यत्र गतिता ततः भवार्थे त्यकन् उपत्यका।

**उपक** पु॰ उप+संज्ञायां कन्। १ऋषिभेदे ततः नडा॰ फक्। औपकायनः तस्य अद्वन्द्वे द्वन्द्वे च बहुत्वे वा लुक्। अद्वन्द्वे औपकाः औपकायनाः। द्वन्द्वे उपकलमकाः औपकायनलामकायनाः। अनुकम्पितः उपेन्द्रदत्तादिः "प्राचामुपादेरडज्वुचौ" पा॰ वुच् "ठाजादावूर्ध्वं द्वितीयादचः" पा॰ इन्द्रदत्तलोपे। उपक २अनुकम्पिते उपेन्द्रदत्तके पु॰। पक्षे अडच् उपडः। चात् ठच् घन् इलच् च। तत्र ठचि उपिकः घनि उपियः इलचि उपिलः। तत्रार्थे पु॰ अजादावित्युक्तेः कनि न लुक्। उपेन्द्रदत्तकः। एवमन्यस्यापि उपपूर्वकस्य संज्ञाशब्दस्य रूपं बोध्यम्। तेन तत्रापि उपकादिशब्दव्युत्पत्तिः।

**उपकण्ठ** त्रि॰ उपगतः कण्ठम् अत्या॰ स॰। १निकटे, २कण्ठासन्ने च "तस्योपकण्ठे घननीलकण्ठः" कुमा॰। "आकण्ठ चापं श्रवणोपकण्ठे" "उपकण्ठं महोदधेः" रघुः ३ग्रामान्ते ४अश्वानामास्कन्दितगतौ च न॰। विभक्त्यर्थे सामीप्ये वा अव्ययी॰। ५कण्ठ इत्यर्थे "रथाङ्गभर्त्रेऽभिनववरस्य यस्याः पितेव प्रतिपादितायाः। प्रेम्णोपकण्ठं मुहुरङ्कभाजो रत्नावलीरम्बुधिराबबन्ध" माघः। उपकण्ठम्–कण्ठे पर्यन्तिके इत्यर्थः ६कण्ठसामीप्ये च अव्य॰

**उपकनिष्ठिका** स्त्री उपगता कनिष्ठिकाम् अत्या॰ स॰। अनामाङ्गुलौ "अप्रच्छिन्नाग्रावनन्तर्गर्भौ प्रादेशमात्रौ कुशानामन्तयोर्ऊर्ध्वं गृहीत्वाङ्गुष्ठोपकनिष्ठिकाभ्याम्" आ॰गृ॰सू॰ १,३,२ "अङ्गुष्ठोपकनिष्ठिकाभ्यामेकैकमस्त्यश्च संह्रादयन्तः" ४,५,४।

**उपकन्या** स्त्री उपगता कन्याम् अत्या॰ स॰। कन्यासख्यादौ अस्य गौरा॰ पाठात् उपादृह्रस्वत्वेऽपि नान्तोदात्तता।

**उपकरण** न॰ उपक्रियतेऽनेन उप–कृ–ल्युट्। १प्रधानसाधकेऽङ्गे यथान्नभोजनादौ व्यञ्जनादि, शयने खट्वादि, स्नानेऽनुलेपनादि, पूजायां पुष्पादि यागे पश्वादि। "यच्च वेश्म शुभं दद्यात् सर्वोपकरणान्वितम्" शु॰त॰नन्दिपु॰। "भक्तावकाशाग्न्युदकमन्त्रोपकरणव्ययान्" या॰ स्मृ॰। २नृपादीनां छत्रचामरादिपरिच्छदे च। उपगतः करणम् अत्या॰ स॰। ३इन्द्रियानुगते त्रि॰ विभक्त्यर्थे सामीप्ये वाऽव्ययी॰। ३करणे इत्यर्थे ४इन्द्रियसामीप्ये च अव्य॰।

**उपकर्ण** अव्य॰ विभक्त्यर्थे सामीप्ये वा अव्ययी॰। १कर्णे इत्यर्थे २श्रोत्रसामीप्ये च। तत्र प्रायभवः ठक् औपकर्णिकः तत्र प्रायभवे त्रि॰ "यःस्वामी मम कान्तानामौपकर्ण्यकलोपनः" भट्टिः।

**उपकर्त्तृ** त्रि॰ उप+कृ–तृच् स्त्रियां ङीप्। उपकारके आनुगुण्यकारके “उपकर्त्रारिणा सन्धिर्न मित्रेणापकारिणा” माघः। “हीनान्यनुपकर्त्तृणि प्रवृद्धानि विकुर्वते” रघुः।

**उपकलाप** अव्य॰ विभक्त्यर्थे सामीप्ये वाऽव्ययी॰। १कलापे इत्यर्थे २तत्सामीप्ये च ततो भवार्थे परिमुखा॰ ञ्य। औपकलाप्य तद्भवे त्रि॰।

**उपकल्प** त्रि॰ उपगतः कल्पम् अत्या॰स॰। कल्पोपगते। गौरा॰ पाठात् उपात् द्व्यच्कत्वेऽपि माद्योदात्तता।

**उपकल्पन** न॰ उप+कॢप–णिच्–ल्युट्। १सम्पादने २आयोजने च “वक्ष्याम्यतः परं सम्यगाहारस्योपकल्पनम्” सुश्रु॰ युच्। तत्रैव स्त्री। “एवं विज्ञाय मतिमान् भोजनस्योपकल्पनाम्” सुश्रु॰।

**उपकादि** पु॰ द्वन्द्वेऽद्वन्द्वे च बहुत्वे गोत्रप्रत्ययलुग्निमित्ते पाणिन्युक्ते गणसमूहे। स च उपक लमक भ्रष्टक कपिष्ठल कृष्णाजिन कृष्णसुन्दर चूडारक आडारक गडुक उदङ्क सुधायुक अबन्धक पिङ्गलक पिष्ट सुपिष्ट मयूरकर्ण खरीजङ्घ शलाथल पतञ्जल पदञ्जल कठेरणि कुषीतक काशकृत्स्न निदाघ कलशीकण्ठ दामकण्ठ कृष्णपिङ्गल कर्णक पर्णक जटिलक बधिरक जन्तुक अनुलोम अनुपद प्रतिलोम अपजग्ध प्रतान अनभिहित कमक वटारक लेखाभ्र कमन्दक पिञ्जूलक वर्णक मसूरकर्ण मदाघ कवन्तक कमन्तक कदामत्त।

**उपकार** पु॰ उप+कृ–भावे घञ्। प्रधानस्यानुगुण्यसंपादने, उपकृतौ “उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः” माघः। “कृतोपकारेव रतिर्बभूव” कुमा॰ “उपकारो महांस्तात कृतोऽयं मम खेचरैः” भा॰व॰१५॰अ॰। तस्योपकार्य्यारचितोपका(चा)रा” रघुः। उपकारश्च सहकारिभिः कारणस्य कार्य्योत्पादनार्थमानुगुण्यभेदः यथा दर्शादियागस्य प्रधानापूर्व्वसाधनेऽङ्गादीनां प्रयाजादीनां कलिकापूर्व्वसाधनद्वारा तदानुगुण्यम्। स च बौद्धैः कुर्व्वद्रूपतारूपस्य बीजादेरङ्कुरजनकत्वस्य सम्पादनरूपातिशयाधानमुच्यते सर्व्व॰ दर्श॰। “तथाहि सहकारिभिः सलिलपवनादिभिः पदार्थसार्थैराधीयमाने बीजस्यातिशये बीजमुत्पादकमभ्युपेयम् अपरथा तदभावेऽप्यतिशयः प्रादुर्भवेत्। बीजस्यातिशयमादधानं सहकारिसापेक्षमेवाधत्ते अन्यथा सर्व्वदोपकारापत्तौ अङ्कुरस्यापि सदोदयः प्रसज्येत; तस्मादतिशयार्थमपेक्षमाणैः सहकारिभिरतिशयान्तरमाधेयं बीजे, तस्मिन्नप्युपकारे पूर्व्वन्यायेन सहकारिसापेक्षस्य बीजस्य जनकत्वे सहकारिसम्पाद्यबीजगतातिशयानवस्था प्रथमा व्यवस्थिता। अथोपकारः कार्य्यार्थमपेक्ष्यमाणोऽपि बीजादिनिरपेक्षं कार्य्यं जनयति तत्सापेक्षो वा। प्रथमे बीजादेरहेतुत्वमापतेत्। द्वितीये अपेक्ष्यमाणेन बीजादिना उपकारे अतिशय आधेयः एवं तत्र तत्रापीति बीजादिजन्यातिशयनिष्ठातिशयपरम्परापात इति द्वितीयानवस्था स्थिरा भवेत्। एवमपेक्ष्यमाणेनोपकारेण बीजादौ धर्म्मिण्युपकारान्तरमाधेयमित्युपकाराधेयबीजातिशयाश्रयातिशयपरम्परापातइति तृतीयानवस्था दुरवस्था स्यात्। अथ भावादभिन्नोऽतिशयः सहकारिभिराधीयत इत्यभ्युपगम्यते तर्हि प्राचीनो भावो ऽनतिशयात्मा निवृत्तः अन्यश्चातिशयात्मा कुर्व्वद्रूपादिपदवेदनीयो जायत इति फलितम्।

**उपकारक** त्रि॰ उप+कृ–ण्वुल्। १उपकारकर्त्तरि। “आगन्तवोऽपि कदाचिदुपकारका दृश्यन्ते” हितो॰। स्त्रीत्वे टापि अतइत्त्वे उपकारिका। सा च २गृहपालये, ३पटनिर्म्मिते गृहे च। ४कारणमात्रे त्रि॰। “सर्वस्त्वगिन्द्रियग्राह्यस्त्वच: स्यादुपकारक:” भाषा॰ णिनि। उपकारिन् उपकारके त्रि॰। “तदुपकारीणि शारीरकसूत्राणीति” वेदा॰ सा॰। “दातव्यमिति यद्दानं दीयतेऽनुपकारिणे” गीता “मातापित्रोर्गुरौ मित्रे विनीते चोपकारिणि” दक्षः। स्त्रियां ङीप्।

**उपकार्य्य** त्रि॰ उप+कृ–ण्यत्। १उपकारयोग्ये। २राजालये, ३पटनिर्म्मितराजसदने च स्त्री टाप्। “तस्योपकार्य्या रचितोपका(चा)रा” रघुः। “तीरोपकार्य्यां गतमात्र एव” “मत्प्रतिविहितोपकार्य्यमार्य्यः” रघुः राजभवने “रम्यां रघुप्रतिनिधिः स नवोपकार्य्याम्”। “उपकार्य्या राजसद्मन्युपकारचितेऽन्यवदिति विश्वोक्तेः ४उपचारव्याप्ते त्रि॰।

**उपकिरण** न॰ उप+कॄ–ल्युट् णि॰ इत्त्वम्। १व्याप्तौ २समन्तात् विक्षेपे च “आस्तृतारोत्किरणं वा” कात्या॰ २५,१०,२३। समीप्यादौ अव्ययी॰। ३किरणसामीप्यादौ अव्य॰।

**उपकीचक** पु॰ उपगतः कीचकम् अत्या॰स॰। विराटश्यालककीचकानुजे विराटसैन्यभेदे “समवेतेषु सर्व्वेषु तामूचुरुपकीचकाः। हन्यतां शीघ्रमसती यत्कृते कीचको हतः”। ते च पञ्चाधिकशतमिताः कीचकत्वेनापि प्रसिद्धाः “एवं ते निहता राजन्! शतं पञ्च च कीचकाः। स च सेनापतिः पूर्वमित्येतत् सूतषट्शतम्” भा॰वि॰२२,२३अ॰।

**उपकुञ्चि** स्त्री उप+कुन्च–इ। कृष्णजीरके।

**उपकुञ्चिका** स्त्री उप+कुञ्च–ण्वुल् अतइत्त्वम्। १तुत्थायां

(इँते) २क्लृप्तेँ कायाञ्च । खार्थे कन् । ३कणजीरके ।

उपकुर्व्वाण पु० उपकरुते गुरोर्दक्षिणादानादिना उप+कृ-शानच् । समावर्त्तनयोग्ये खाध्यायग्रहणावधिकब्रह्मचर्य्यवति १ब्रह्मचारिणि "न पूर्व्वं गुरवे किञ्चिदुपकुर्व्वीत धर्म्मवित् । स्नास्यंस्तु गुरुणाऽऽज्ञप्तः शक्त्या गुर्व्वर्थमाहरेत्" मनुना स्नातएव गुरूपकारविधानेन ततः पूर्व्वमुपकारकर्त्तृत्वनिषेधेन चास्यैवोपकर्त्तृत्वाचयात्वम् । ब्रह्मचारी हि द्विविधः नैष्ठिक उपकुर्वाणश्च । यो निरवधिमरणान्तम् उपनयनादूर्द्ध गुरौ वसति स नैष्ठिकः । यस्तु खाध्यायग्रहणान्तं गुरौवसन् गुरुणानुज्ञातः गुरोरुपकारं कृत्वा स्नानगार्हस्थ्यं करोति स उपकुर्व्वाणः । स्नातो दक्षिणा च मनुनोक्ता यथा "क्षेत्रं हिरण्यं गामश्वं छत्रोपानहमासनम् । धान्यं शाकञ्च वासांसि गुरवे प्रीतिमावहेत्" । आश्व० ग्र० ३,८,१,२ उ "अथैतान्युपकल्पयीत समावर्त्तमाने मणिं कुण्डले वस्त्रयुगं छत्रमुपानद्युगं दण्डं स्रजमुद्धर्षणमनुलेपनमाञ्जनमुष्णीषमित्यात्मने चाचार्य्याय च" "यद्युभयोर्न विन्देताचार्य्यायैव" । एकादश द्रव्याण्युक्तानि एतच्चोपलक्षणं गुरोरभिलषितं दद्यादित्यत्रैव तात्पर्य्यम् अत एव या० स्मृ० "गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया" तद्वरदानमेवोक्तम् "गुरवे पूर्वोक्ताय वरमभिलषितं यथाशक्ति दत्त्वा स्नायात् तदशक्तौ तदनुज्ञयाऽदत्तवरोऽपि" मिता० । संज्ञायां कन् तत्रैव । "उपकुर्वाणकास्तु खाध्यायग्रहणार्थाः" छा० उ० भा० । ताच्छील्ये चानश् । २उपकारशीले त्रि० ।

उपकुल्या स्त्री उप+कुल-क्यप्-अमरा० नि० । १पिप्पल्याम् ( पिपुल ) अम० "हरिद्रोपकुल्याविषावेत्यादि" सुश्रु० तत्पर्य्यायगुणादि भा० प्र० दर्शितं यथा

"पिप्पली मागधी कृष्णा वैदेही चपला कणा । उपकुल्योषणा शौण्डी कोला स्यात् तीक्ष्णतण्डुला । पिप्पली दीपनी वृष्या खादुपाका रसायनी । अनुष्णा कटुका स्निग्धा वातश्लेष्महरा लघुः । पित्तला रेचनी हन्ति श्वासकासोदरज्वरान् । कुष्ठप्रमेहगुल्मार्शःप्लीहशूलाममारुतान् । आर्द्रा कफप्रदा स्निग्धा शीतला मधुरा गुरुः । पित्तप्रशमनी सा तु शुष्का पित्तप्रकोपिनी । पिप्पली मधुसंयुक्ता मेदः कफविनाशिनी । श्वासकासज्वरहरी वृष्या मेधाग्निवर्द्धिनी । जीर्णज्वरेऽग्निमान्द्ये च शस्यते गुडपिप्पली । कासाजीर्णारुचिश्वासहृत्पाण्डुकृमिरोगनुत् । द्विगुणः पिप्पलीचूर्णाद्गुडोऽत्र भिषजां मते" । उपगतः कुल्याम् अत्या० स० । कुल्योपगते त्रि० । २सामीप्यादौ अव्ययी० । ३कुल्यासामीप्यादौ अव्य० ।

उपकुश पु० सुश्रुतोक्ते १मुखरोगभेदे । "मुखरोगाः सप्तस्वायतनेषु" इत्युपक्रम्य ओष्ठादीनि सप्तायतनानि उक्त्वा "दन्तमूलगतास्तु शीतादो दन्तपुप्पुटको दन्तवेष्टकः शौषिरो महाशौषिरः परिदर उपकुशोदन्तवैदर्भो वर्द्धनोऽधिमांसो नाड्यः पञ्चेति" दन्तमूलगतानुक्त्वा "वेष्टेषु दाहः पाकश्च तेभ्योदन्ताश्चलन्ति च । आघट्टिताः प्रस्रवन्ति शोणितं मन्दवेदनाः । आध्मायन्ते स्रुते रक्ते मुखं पूति च जायते । यस्मिन्नुपकुशः स स्यात् पित्तरक्तकृतोगदः" । सुश्रुतः । "शङ्खोष्ठोभयतः कार्य्यं शिरश्चोपकुशे तथा" सुश्रु० । सामीप्यादौ अव्ययी० । २कुश इत्यर्थे ३कुशसामीप्ये च अव्य० । उपगतः कुशम् अत्या० स० । ४कुशोपगते त्रि० ।

उपकूप त्रि० उपगतः कूपं अत्या० स० । १कूपोपगते देशे सामीप्यादौ अव्ययी० । २कूपसामीप्ये ३कूप इत्यर्थे च अव्य० ।

उपकूल न० कूले कूलस्य समीपं वा अव्य० । १कूलेइत्यर्थे । २तीरसामीप्ये च अव्य० । "उपकूलं स कालिन्द्याः पुरीं पौरवभूषणः" रघुः ततो भवादौ अण् "अव्ययो भावाच्चेति" पा० "परिमुखादिभ्य एवेति" वार्त्तिके नियमनात्त्र ञ्य । औपकूलः तद्भवादौ त्रि० ।

उपकृत त्रि० उप+कृ-क्त । १कृतोपकारे यस्योपकारः कृतस्तस्मिन् । भावे क्त । २उपकारे न० "उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम्" सा० द० । उपकृतमनेन इष्टा० इनि । उपकृतिन् येनोपकारः कृतस्तस्मिन् त्रि० स्त्रियां ङीप् ।

उपकृष्ण त्रि० उपगतः कृष्णम् अत्या० स० । १कृष्णोपगते उपादुद्व्यच्कत्वेऽपि गौरा० पाठात् नान्तोदात्तता । सामीप्यादौ अव्ययी० । २कृष्णसामीप्यादौ अव्य० । [समर्थे च ।

उपक्लृप्त त्रि० उप-क्लृप-क्त । १निर्मिते २विन्यस्ते ३उपभोगाय-

उपकोसल पु० कमलापत्ये ऋषिभेदे । "उपकोसलोह कामलायनः सत्यकामे जाबाले ब्रह्मचर्य्यमुवास" छा० उ० "उपकोसलोनामतः कमलस्यापत्यं कामलायनः" भा० ।

उपक्रम पु० उप-क्रम-घञ् न वृद्धिः । १उपायज्ञानपूर्वकारम्भे, २प्रथमारम्भे "ज्योतिरुपक्रमास्तु सर्वाध्यापक ऋषिः" "समानाञ्चाख्यायुपक्रमादन्तत्वं चानुपोध्य" पा० सू० । "तत्र च प्रतिकुर्व्वन्ति यदि पश्यन्त्युपक्रमात्" भा० व० २३५ अ० । "उपक्रमोपसंहारौ—ऐक-

स्तात्पर्य्यनिर्णये" वेदान्तिमते तात्पर्य्यनिर्णायके २हेतुभेदे तत्र उपक्रमोपसंहाराभ्यां द्वाभ्यामेव तात्पर्य्यं निर्णीयते नत्वेकैकेनेति बोध्यम् । करणे घञ् ।३सामाद्युपाये "सामादिभिरुपक्रमैः" मनुः । "उपक्रमैरस्खलितैश्चतुर्भिः" रघुः । कर्म्मणि घञ् । ४आरभ्यमाणे पु० तदादित्वविवक्षायाम् तदन्ततत्पुरुषस्य क्लीवता "नन्दोपक्रमं द्रोणः" भा० भा० "रामोपक्रममाचख्यौ रक्षःपरिभवं नवम्" रघुः । करणे घञ् । ५चिकित्सायाम् सुश्रुते भूरिप्रयोगः ।

**उपक्रमण** न० उप+क्रम–भावे ल्युट् । १आरम्भे करणे ल्युट् । २तत्साधने सुश्रुतोक्ते दीर्घायुष्ट्वादिज्ञानपूर्व्वकचिकित्सायाम् ३भूमिकायां स्त्री ङीप् । स्वार्थे कन् अत इत्वम् । उपक्रमणिका । ग्रन्थप्रस्तावने सुखबन्धे ।

**उपक्रमणीय** त्रि० उप+क्रम-अनीयर् । १आरम्भणीये । उपक्रमणे साधु–छ । २चिकित्साङ्गे दीर्घायुष्ट्वादिज्ञानसाधने लक्षणभेदे । आतुरचिकित्सार्थं यथोपक्रमणं कर्त्तव्यं तद्वेदके ३ग्रन्थे च । तत्प्रकारादि सुश्रुते दर्शितं यथा । "अथात आतुरोपक्रमणीयमध्यायं व्याख्यास्यामः । आतुरमुपक्रममाणेन भिषजाऽऽयुरेवादौ परीक्षेत । सत्यायुषि व्याध्यृत्वग्निवयोदेहबलसत्त्वसात्म्यप्रकृतिभेषजदेशान् परीक्षेत । तत्र महापाणिपादपार्श्वपृष्ठस्तनाग्रदशनवदनस्कन्धललाटदीर्घाङ्गुलिपर्वोच्छ्वासप्रेक्षणबाहुं विस्तीर्णभ्रूस्तनान्तरोरस्कं ह्रस्वजङ्घामेढ्रग्रीवं गम्भीरसत्त्वस्वरनाभिमनुच्चैर्बद्धस्तनमुपचितमहारोमशकर्णं पश्चान्मस्तिष्कं स्नातानुलिप्तं मूर्द्धानुपूर्व्व्या विशुष्यमाणशरीरं पश्चाच्च विशुष्यमाणहृदयं पुरुषं जानीयाद्दीर्घायुः खल्वयमिति । तमेकान्तेनोपक्रमेत् । एभिर्लक्षणैर्विपरीतैरल्पायुर्मिश्रैर्मध्यमायुरिति । गूढसन्धिशिरास्नायुः संहताङ्गः स्थिरेन्द्रियः । उत्तरोत्तरसुक्षेत्रो यः स दीर्घायुरुच्यते । गर्भात् प्रभृत्यरोगो यः शनैः समुपचीयते । शरीरज्ञानविज्ञानैः स दीर्घायुः समासतः । मध्यमस्यायुषो ज्ञानमत ऊर्द्ध्वं निबोध मे । अधस्तादक्षयोर्यस्य लेखाः स्युर्व्यक्तमायताः । द्वे वा तिस्रोऽधिका वापि पादौ कर्णौ च मांसलौ । नासाग्रमूर्द्ध्वञ्च भवेदूर्द्ध्वं लेखाश्च पृष्ठतः । यस्य स्युस्तस्य परममायुर्भवति सप्ततिः । जघन्यस्यायुषो ज्ञानमत ऊर्द्ध्वं निबोध मे । ह्रस्वानि यस्य पर्व्वाणि सुमहच्चापि मेहनम् । तथोरस्यवलीढानि न च स्यात् पृष्ठमायतम् । ऊर्द्ध्वञ्च श्रवणौ स्थानान्नासा चोच्चा शरीरिणः । हसतो जल्पतो वापि दन्तमांसं प्रदृश्यते । प्रेक्षते यश्च विभ्रान्तं स जीवेत्पञ्चविंशतिम् । अथ पुनरायुषो विज्ञानार्थमङ्गप्रत्यङ्गप्रमाणसारानुपदेक्ष्यामः । तत्राङ्गान्यन्तराधिसक्थिबाहुशिरांसि तदवयवाः प्रत्यङ्गानीति । तत्र स्वैरङ्गुलैः पादाङ्गुष्ठप्रदेशिन्यौ द्व्यङ्गुलायते । प्रदेशिन्यास्तु मध्यमाऽनामिका कनिष्ठिका यथोत्तरं पञ्चमभागहीना । चतुरङ्गुलायते पञ्चाङ्गुलविस्तृते प्रपदपादतले । पञ्चचतुरङ्गुलायतविस्तृता पार्ष्णिः । चतुर्द्दशाङ्गुलायतः पादः । चतुर्द्दशाङ्गुलपरिणाहानि पादगुल्फजङ्घाजानुमध्यानि । अष्टादशाङ्गुला जङ्घा जानूपरिष्टाच्च द्वात्रिंशदङ्गुलमेवं पञ्चाशत् । जङ्घायामसमावूरू । द्व्यङ्गुलानि वृषणचिबुकदशननासापुटभागकर्णमूलनयनान्तराणि । चतुरङ्गुलानि मेहनवदनान्तरनासाकर्णललाटग्रीवोच्छ्रायदृष्ट्यन्तराणि । द्वादशाङ्गुलानि भगविस्तारमेहननाभिहृदयग्रीवास्तनान्तरमुखायाममणिबन्धप्रकोष्ठस्थौल्यानि । इन्द्रवस्तिपरिणाहांसपीठकूर्परान्तरायामः षोडशाङ्गुलः । चतुर्विंशत्यङ्गुलो हस्तः । द्वात्रिंशदङ्गुलपरिणाहौ भुजौ । द्वात्रिंशदङ्गुलपरिणाहावूरू । मणिबन्धकूर्परान्तरं षोडशाङ्गुलम् । तलं षट्चतुरङ्गुलायामविस्तारम् । अङ्गुष्ठमूलप्रदेशिनीश्रवणापाङ्गान्तरमध्यमाङ्गुल्यौ पञ्चाङ्गुले । अर्द्धपञ्चाङ्गुले प्रदेशिन्यनामिके । सार्द्धत्र्यङ्गुलौ कनिष्ठाङ्गुष्ठौ । चतुर्विंशतिविस्तारपरिणाहं मुखग्रीवम् । त्रिभागाङ्गुलविस्तारा नासापुटमर्य्यादा । नयनत्रिभागपरिणाहा तारका । नवमस्तारकांशो दृष्टिः । केशान्तमस्तकान्तरमेकादशाङ्गुलम् । मस्तकादवटुकेशान्तो दशाङ्गुलः । कर्णावट्वन्तरं चतुर्द्दशाङ्गुलम् । पुरुषोरःप्रमाणविस्तीर्णा स्त्रीश्रोणिः । अष्टादशाङ्गुलविस्तीर्णमुरः । तत्प्रमाणा पुरुषस्य कटी । सविंशमङ्गुलशतं पुरुषायाम इति । भवन्ति चात्र पञ्चविंशे ततो वर्षे पुमान् नारी तु षोडशे । समत्वागतवीर्य्यौ तौ जानीयात् कुशलो भिषक् । देहः स्वैरङ्गुलैरेव यथावदनुकीर्त्तितः । युक्तः प्रमाणेनानेन पुमान् वा यदि वाऽङ्गना । दीर्घमायुरवाप्नोति वित्तञ्च महदृच्छति । मध्यमं मध्यमैरायुर्वित्तं हीनैस्तथाऽवरम् । अथ सारान् वक्ष्यामि । स्मृतिभक्तिप्रज्ञाशौर्य्यशौचोपेतं कल्याणाभिनिवेशं सत्वसारं विद्यात् । स्निग्धसंहतश्वेतास्थिदन्तनखं बहुलकामप्रजं शुक्रेण । अकृशमुत्तमबलं स्निग्धगम्भीरस्वरं सौभाग्योपपन्नं महानेत्रञ्च मज्ज्ञा । महाशिरःस्कन्धदृढदन्तहन्वस्थिनखमस्थिभिः । स्निग्धमूत्रस्वेदस्वरं बृहच्छरीरमायासासहिष्णुं मेदसा । अच्छिद्रगात्रं गूढास्थिसन्धिं मांसोप-

चितञ्च मांसेन । स्निग्धताम्रनखनयनतालुजिह्वौष्ठपाणिपादतलं रक्तेन । मृदुप्रसन्नमृदुत्वग्रोमाणं त्वक्सारं विद्यादित्येषां पूर्व्वं पूर्व्वं प्रधानमायुःसौभाग्ययोरपि । भवति चात्र सामान्यतोऽङ्गप्रत्यङ्गप्रमाणादथ सारतः। परीक्ष्यायुः सुनिपुणो भिषक् सिध्यति कर्म्मसु ।

व्याधिविशेषास्तु प्रागभिहिताः सर्व्व एवैते त्रिविधाः साध्या याप्याः प्रत्याख्येयाश्च तत्रैतान् भूयस्त्रिधा परीक्षेत किमयमौपसर्गिकः प्राक्केवलोऽन्यलक्षण इति । तत्रौपसर्गिको यः पूर्व्वोत्पन्नं व्याधिं जघन्यकालजातो व्याधिरुपसृजति स तन्मूल एवोपद्रवसंज्ञः । प्राक्केवलो यः प्रागेवोत्पन्नो व्याधिरपूर्व्वरूपोऽनुपद्रवश्च । अन्यलक्षणो यो भविष्यद्व्याधिख्यापकः स पूर्व्वरूपसंज्ञः । तत्र सोपद्रवमन्योन्याविरोधेनोपक्रमेत बलवन्तमुपद्रवं वा प्राक्केवलं यथास्वं प्रतिकुर्व्वीत । अन्यलक्षणे त्वादिव्याधौ प्रयतेत । भवति चात्र । नास्ति रोगो विना दोषैर्यस्मात्तस्माद्विचक्षणः । अनुक्तमपि दोषाणां लिङ्गैर्व्याधिमुपाचरेत् ।

प्रागभिहिता ऋतवः । शीते शीतप्रतीकारमुष्णे चोष्णनिवारणम् । कृत्वा कुर्य्यात् क्रियां प्राप्तां क्रियाकालं न हापयेत् । अप्राप्ते वा क्रियाकाले प्राप्ते वा न कृता क्रिया । क्रियाहीनाऽतिरिक्ता वा साध्येष्वपि न सिध्यति । या ह्युदीर्णं शमयति नान्यं व्याधिं करोति च । सा क्रिया न तु या व्याधिं हरत्यन्यमुदीरयेत् ।

प्रागभिहितोऽग्निरन्नस्य पाचकः (अग्निशब्दे) स चतुर्व्विधो भवति दोषानभिपन्न एको विक्रियामापन्नस्त्रिविधो भवति विषमो वातेन, तीक्ष्णः पित्तेन, मन्दः श्लेष्मणा, चतुर्थः समः सर्व्वसाम्यादिति तत्र यो यथाकालमुपयुक्तमन्नं सम्यक् पचति स समः, समैर्दोषैः । यः कदाचित् सम्यक् पचति कदाचिदाध्मानशूलोदावर्त्तातिसारजठरगौरवान्त्रकूजनप्रवाहणानि कृत्वा स विषमः । यः प्रभूतमप्युपयुक्तमन्नमाशु पचति स तीक्ष्णः, स एवाभिवर्द्धमानोऽत्यग्निरित्याभाष्यते स मुहुर्मुहुः प्रभूतमप्युपयुक्तमाशुतरं पचति पाकान्ते च गलताल्वोष्ठशोषदाहसन्तापान् जनयति । यः स्वल्पमप्युपयुक्तमुदरशिरोगौरवकासश्वासप्रसेकच्छर्दिगात्रसदनानि कृत्वा महता कालेन पचति स मन्दः । विषमो वातजान् रोगान् तीक्ष्णः पित्तनिमित्तजान् । करोत्यग्निस्तथा मन्दो विकारान् कफसम्भवान् । तत्र समे परिरक्षणं कुर्व्वीत विषमे स्निग्धाम्ललवणैः क्रियाविशेषैः प्रतिकुर्व्वीत तीक्ष्णे मधुरस्निग्धशीतैर्व्विरेकैश्च । एवमेवात्यग्नौ विशेषेण माहिषैश्च क्षीरदधिसर्पिर्भिर्मन्दे कटुतिक्तकषायैर्वमनैश्च । जाठरो भगवानग्निरीश्वरोऽन्नस्य पाचकः । सौक्ष्म्याद्रसानाददानो विवेक्तुं नैव शक्यते । प्राणापानसमानैस्तु सर्व्वतः पवनैस्त्रिभिः। ध्मायते पाल्यते चापि स्वे स्वे स्थाने व्यवस्थितैः।

वयस्तु त्रिविधं बाल्यं मध्यं वृद्धमिति । तत्रोनषोडशवर्षा बालास्तेऽपि त्रिविधाः क्षीरपाः क्षीरान्नादा अन्नादा इति तेषु संवत्सरपराः क्षीरपा द्विसंवत्सरपराः क्षीरान्नादाः परतोऽन्नादा इति । षोडशसप्तत्योरन्तरे मध्यं वयस्तस्य विकल्पो वृद्धिर्यौवनं सम्पूर्णता हानिरिति । तत्रा विंशतेर्वृद्धिरात्रिंशतो यौवनमा चत्वारिंशतः सर्व्वधात्विन्द्रियबलवीर्य्यसम्पूर्णता । अत ऊर्द्धमीषत् परिहाणिर्य्यावत्सप्ततिरिति । सप्ततेरूर्द्धं क्षीयमाणधात्विन्द्रियबलवीर्य्योत्साहमहन्यहनि वलीपलितखालित्यजुष्टं कासश्वासप्रभृतिभिरुपद्रवैरभिभूयमानं सर्व्वक्रियास्वसमर्थं जीर्णागारमिवाभिवृष्टमवसीदन्तं वृद्धमाचक्षते । तत्रोत्तरोत्तरासु वयोऽवस्थासूत्तरोत्तरा भेषजमात्राविशेषा भवन्त्यृते च परिहाणेस्तत्राद्यापेक्षया प्रतिकुर्व्वीत । भवन्ति चात्र । बाले विवर्द्धते श्लेष्मा मध्यमे पित्तमेव तु । भूयिष्ठं वर्द्धते वायुर्वृद्धे तद्वीक्ष्य योजयेत् । अग्निक्षारविरेकैस्तु बालवृद्धौ विवर्ज्जयेत् । तत्साध्येषु विकारेषु मृद्वीं कुर्य्यात् क्रियां शनैः ।

देहः स्थूलः कृशो मध्य इति प्रागुपदिष्टः । कर्शयेद्बृंहयेच्चापि सदा स्थूलकृशौ नरौ । रक्षणञ्चैव मध्यस्य कुर्व्वीत सततं भिषक् ।

बलमभिहितगुणं दौर्ब्बल्यन्तु स्वभावदोषजरादिभिरवेक्षितव्यम् । यस्माद्बलवतः सर्व्वक्रियाप्रवृत्तिस्तस्माद्बलमेव प्रधानमधिकरणानाम् । केचित् कृशाः प्राणवन्तः स्थूलाश्चाल्पबला नराः। तस्मात् स्थिरत्वव्यायामैर्बलं वैद्यः प्रतर्कयेत् ।

सत्त्वन्तु व्यसनाभ्युदयक्रियादिस्थानेष्वविक्लवकरम् । सत्त्ववान् सहते सर्व्वं संस्तभ्यात्मानमात्मना । राजसः स्तभ्यमानोऽन्यैः सहते नैव तामसः ।

प्रकृतिं भेषजं चोपरिष्टाद्वक्ष्यामः ( प्रकृतिं शारीरस्थाने, भेषजं तत्तत्प्रकरणे ) ।

सात्म्यानि तु देशकालजात्यृतुरोगव्यायामोदकदिवास्वप्नरसप्रभृतीनि प्रकृतिविरुद्धान्यपि यान्यबाधकराणि भवन्ति । यो रसः कल्पते यस्य सुखायैव निषेवितः । व्यायामजातमन्यद्वा तत् सात्म्यमिति निर्द्दिशेत् ।

देशस्त्वानूपो जाङ्गलः साधारण इति । तत्र बहूदकनि-

स्तोकतनदीवर्षगहनो मृदुशीतानिलो बहुमहापर्व्वततरुर्मृदुसुकुमारोपचितशरीरमनुष्यप्रायः कफवातरोगभूयिष्ठश्चानूपः। आकाशसमः प्रविरलाल्पकण्टकिवृक्षप्रायोऽल्पवर्षप्रस्रवणोदपानोदकप्राय उष्णदारुणवातः प्रविरलाल्पशैलः स्थिरकृशशरीरमनुष्यप्रायो वातपित्तरोगभूयिष्ठश्च जाङ्गलः। उभयदेशलक्षणः साधारण इति। भवन्ति चात्र। समाः साधारणे यस्माच्छीतवर्षोष्णमारुताः। दोषाणां समता जन्तोस्तस्मात्साधारणो मतः। न तथा बलवन्तः स्युर्जलजा वा स्वजाहृताः। स्वदेशे निचिता दोषा अन्यस्मिन् कोपमागताः। उचिते वर्त्तमानस्य नास्ति देशकृतं भयम्। आहारस्वप्नचेष्टादौ तद्देशस्य गुणे सति देशप्रकृतिसात्म्यर्त्तुविपरीतोऽचिरोत्थितः। सम्पत्तौ भिषगादीनां बलसत्त्वायुषां तथा। केवलः समदेहाग्नेः सुखसाध्यतमो गदः। अतोऽन्यथा त्वसाध्यः स्यात् कृच्छ्रो व्यामिश्रलक्षणः। क्रियायास्तु गुणालाभे क्रियामन्यां प्रयोजयेत्। पूर्व्वस्यां शान्तवेगायां न क्रियासङ्करो हितः। गुणालाभेऽपि सपदि यदि सैव क्रिया हिता। कर्त्तव्यैव तदा व्याधिः कृच्छ्रसाध्यतमो यदि। य एवमेनं विधिमेकरूपं बिभर्त्ति कालादिवशेन धीमान्। स मृत्युपाशान् जगतोगदौघान् छिनत्ति भैषज्यपरश्वधेन"।

**उपक्रान्त** त्रि॰ उप+क्रम–क्त। १आरब्धे २विसृते यथार्थचि॰

**उपक्रिया** स्त्री उप+कृ–भावे श। उपकारे "तमपीह गुरुं विद्यात् श्रुतोपक्रियया तया" मनुः।

**उपक्रोश** पु॰ उप–क्रुश–घञ्। निन्दायाम्। "नाहं बिभेत्युपक्रोशादधर्म्माद्वा सुरोत्तमः" भा॰ आ॰ १४५ अ॰ "राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलीमसैर्वा" रघुः अत्या॰ स॰। २उपगतक्रोशे आसन्नक्रोशे त्रि॰। अव्ययी॰। ३क्रोशसमीपे अव्य॰। भावे ल्युट् उपक्रोशनमप्यत्र। "वाग्दण्डपारुष्यैर्लोकोपक्रोशनैः" दशकु॰। "कुलोपक्रोशनकरी कुलाङ्गारी निराश्रया" हरि॰ १७६ अ॰। [स्त्रियां ङीप्।

**उपक्रोष्टृ** पु॰ उप+क्रुश–तृच्। १गर्द्दभे। २निन्दके त्रि॰।

**उपक्लेश** पु॰ उपक्लिश्नाति अनेन उप+क्लिश–करणे घञ्। मदादिषु। [ घञ्पक्षे अप्। वीणानिनादे।

**उपक(क्वा)ण** पु॰ उप+क्वण–शब्दे "क्वणो वीणायाञ्च" पा॰ वा

**उपचय** पु॰ उप+चि–अच्। १अपचये हानौ। सामीप्यादौ अव्ययी॰। २निवाससमीपादौ, अव्य॰। ३उपगतः चयम् अत्या॰ स॰। ३चयं प्राप्ते त्रि॰। तत्पुरुषे उपादुद्द्वाच्कत्वादन्तोदात्तता।

**उपक्षित्** त्रि॰ उप+क्षि–क्विप्। समीपनिवासिनि। "यस्य ते अग्ने अन्ये अग्नय उपक्षितो वया इव" ऋ॰ ८, १९, ३३। [ २तत्कार्य्योद्यसामर्थ्यं प्राप्ते च।

**उपक्षीण** त्रि॰ उप+क्षि–क्त तस्य न, दीर्घश्च। १अपचयप्राप्ते

**उपक्षेप** पु॰ उप+क्षिप–भावे घञ्। १आक्षेपे, "कर्णनासाच्छेदोपक्षेपभीषिताभ्याम्" दशकु॰। २समीपे निक्षेपणे च।

**उपक्षेपण** न॰ उप+क्षिप–ल्युट्। शूद्रस्वामिकान्नस्य विप्रकृते पाकार्थं समर्पणे। "उपक्षेपणधर्म्मेण यत्तु पाचयते द्विजैः। अभोज्यं तद्भवेदन्नम्" शाम्ब॰ पु॰। "उपक्षेपणधर्म्मेण शूद्रस्वामिकान्नस्य पाकार्थं ब्राह्मणकृते समर्पणरूपेणेति" कल्पतरुः। २समर्पणमात्रे च।

**उपखात** अव्य॰ सामीप्यादौ अव्ययी॰ १खातसामीप्ये २खाते इत्यर्थे च। उपगतः खातम् अत्या॰ स॰। ३खातानुगते। उपादुद्द्वाच्कत्वेन तत्पुरुषपक्षे अन्तोदात्ततेतिभेदः

**उपग** त्रि॰ उप+गम–ड। उपगन्तरि "ओषध्यः फलपाकान्ता बहुपुष्पफलोपगाः" मनुः। "त्रेतायां भावसंकल्पाः क्रियादानफलोपगाः" भा॰ व॰ १४९ अ॰। "केन्द्रोपगा नवमपञ्चमगाश्च सर्वे" ज्यो॰ त॰।

**उपगण** त्रि॰ उपगतो गणो येन प्रा॰ ब॰ संख्यावचनत्वेऽपि "अबहुगणादिति" पा॰ निषेधात् न डच्। प्राप्तसमुदाये वर्त्ति तु चित्त्वात् अन्तोदात्तता स्यात्। अतस्तस्य पूर्वपदप्रकृतिस्वरार्थं डचो निषेधः। "डचातिप्रसङ्गाभावेऽपि स्वरभेदार्थमेव पर्य्युदासः" सि॰ कौ॰ स्थितम्।

**उपगत** त्रि॰ उप+गम–क्त। १स्वीकृते, २उपस्थिते, ३ज्ञाते ४प्राप्ते च "सर्व्वो हि नोपगतमप्यपचीयमानं वर्द्धिष्णुमाश्रयमनागतमभ्युपैति" माघः भावे क्त। ५प्राप्त्यादौ न॰ उपगतं प्राप्तिः शून्यत्वेनास्त्यस्य अच्। ६प्राप्तिसूचके पत्रे च (रसिद)। "धनी वोपगतं दद्यात् स्वहस्तपरिचिह्नितम्" या॰ स्मृ॰। "उपगतं प्राप्तमिति यद्वा उपगतम् प्रवेशपत्रं स्वहस्तलिखितचिह्नितमधमर्णायोत्तमर्णो दद्यात्" मिता॰।

**उपगति** स्त्री उप+गम–क्तिन्। १प्राप्तौ २ज्ञाने ३स्वीकारे च

**उपगन्तृ** त्रि॰ उप+गम–तृच्। १प्राप्तरि २स्वीकर्त्तरि ३ज्ञातरि च।

**उपगम** पु॰ उप+गम–भावे घञ् अवृद्धिः। १समीपगमने, २अङ्गीकारे ३ज्ञाने, च "सीमन्ते च त्वदुपगमजं यत्र नीपं वधूनाम्" मेघ॰। "व्याव ्योपगमात् कुमारी" न्वगघनोपगममप्यनेनमभ्युत्" । भावे ल्युट्। उपगमन

मध्यत । "यथा कर्म्म शुभं कृत्वा स्वर्गोपगमनं ध्रुवम्" भा० आ० १०२अ० ।

**उपगम्य(त्य)** अव्य० उप+गम—ल्यप् वा मलोपे तुक् । १समीपं गत्वेत्यर्थे । कर्म्मणि यत् उपगम्य । २सामीप्येन गम्ये त्रि० ।

**उपगहन** पु० ऋषिभेदे "महार्षिश्च कपिलस्तथर्षिस्ताड़कायनः । तथैव चोपगहनस्तथर्षिश्चासुरायणिः" भा० आ० ४अ० ।

**उपगा** पु० उप+गै—क्विप् । यज्ञे १उपगातरि ऋत्विग्भेदे । भावे अङ् । २उपगाने स्त्री "उपगादर्शनाच्च" कात्या० ६,७,२, "उपगानदर्शनाच्चैवमवसीयते कर्कः ।

**उपगातृ** पु० उपगायति उप+गै—तृच् । यज्ञे उद्गातुः समीपे १गातरि ऋत्विग्भेदे "बृहस्पतिरुद्गाता विश्वेदेवा उपगातारः" तैत्ति० । "ऋत्विग्भ्यातिरिक्तानामुपगातृत्वमनुपलभ्यमानत्वादृत्विज एवोपगातारः" कात्या० ६,७,२, कर्कः । "स यदेवा उपरन्धन्ति संयिङ्क्ते वयोपगातार उपगायन्ति" शत० ब्रा० १२,२,२,२ । समीपगानकर्त्तरि त्रि० (दोयार) स्त्रियां ङीप् । [गन्तरि २स्तोकर्त्तरि ३ज्ञातरि च

**उपगामिन्** त्रि० उप+गम—णिनि स्त्रियां ङीप् । १समीप-

**उपगिर (रि)** अव्य० सामीप्यादौ अव्ययी० वा अच्समा० । १पर्व्वतसामीप्ये २पर्व्वते इत्यर्थे च । गिरिमुपगतः अत्या० स० । उत्तरदिक्स्थे गिरिसन्निकृष्टे देशभेदे पु० "प्रययावुत्तरां तस्माद्दिशं धनदपालिताम् । अन्तर्गिरिञ्च कौन्तेयस्तथैव च बहिर्गिरिम् । तथैवोपगिरिञ्चैव विजिग्ये पुरुषर्षभः" भा० स० २६ अ० । अन्तोदात्तोऽयम् ।

**उपगीति** स्त्री "आर्य्याद्वितीयकार्द्धे यद्गदितं लक्षणं तत् स्यात् । यद्युभयोरपि दलयोरुपगीतिं तां मुनिर्ब्रूते" वृ० र० उक्ते मात्रावृत्तभेदे ।

**उपगु** त्रि० उपगतो गौरस्य कुस्तः गोस्त्र्योर्ह्रस्वः । १प्राम्(?)किरबादौ २गोपाले च "उपगोरिदम् अण् । औपगव तत्सम्बन्धिनि त्रि० । "सामीप्येऽव्ययी० । २गोः सामीप्ये अव्य० । [स्त्रियां गौ० ङीष् ।

**उपगुध** त्रि० उप+गुध—रोधने क । सामीप्येन रोधके ।

**उपगुरु** पु० उपगतः सादृश्येन गुरुम् अत्या० स० अन्तोदात्तः । तन्त्रोक्ते गुरुसदृशे उपदेशादिकारके । सामीप्यादौ अव्ययी० । २गुरोः सामीप्ये ३गुराविस्यर्थे च अव्य० ।

**उपगूढ** न० उप+गुह—भावे क्त । १आलिङ्गने "उपगूढानि सवेपथूनि च" कुमा० । "विभ्रमार्थमुपगूढमजस्रम्" माघः । कर्म्मणि क्त । २आलिङ्गिते त्रि० । ततः ऋश्या० चतुरर्थ्यां क । उपगूढक तत्सन्निकृष्टदेशादौ त्रि० ।

**उपगूहन** न० उप+गुह—ल्युट् ओत्त्वम् । आलिङ्गने "परस्परं कुन्दाक्षमुपगूहनं पुनः" भा० व० ५अ० ।

**उपगोह्य** त्रि० उप+गुह—ण्यत् ऊत्त्वविधौ अच एव ग्रहणात् ऊत्त्वम् । १आलिङ्ग्ये, २गोप्ये च । भावे ण्यत् । २आलिङ्गने । पक्षे क्यप् उपगुह्यमप्यत्र ।

**उपगौर** त्रि० उपगतो गौरम् अत्या० स० । गौरवर्णोपगते उपादि द्व्यच्कत्वेऽपि गौरादिपर्य्युदासात् नान्तोदात्तता

**उपग्रह** पु० उप+ग्रह—अप् । १कारावन्धने, २वन्दीकरणे, ३उपयोगे, ४आनुकूल्ये च । कर्मणि घञ् । ५कारावद्धवन्द्याम् । उपगतो ग्रहं सादृश्येन अत्या० स० । ज्योतिषोक्ते ग्रहतुल्ये ज्योतिः पदार्थे राहुकेत्वादौ "ग्रहाः सोपग्रहाश्चैव ऋक्षाः परिषदां गणाः । एते चान्ये च बहवो घोराश्छिदिवचारिणः । परिवार्य्य महासेनं स्थिता मातृगणैः सह" भा० व० २२६अ० "उपग्रहाः राहुप्रभृतयः" नीलक० "सूर्य्यभात् पञ्चमं धिष्ण्यं ग्रमे विद्युन्मुखाभिधम् । शून्यन्त्वष्टमं प्रोक्तं सन्निपातं चतुर्दशम् । केतुरष्टादशं प्रोक्तमुल्का स्यादेकविंशतिः । द्वाविंशतितमं कम्पस्त्रयोविंशश्च वज्रकम् । निर्घातश्चतुर्विंशमुक्ता अष्टावुपग्रहाः" ज्यो० त० उक्ते सूर्य्याक्रान्तनक्षत्रात् पञ्चमादिषु विद्युन्मुखादिसमाह्वयेषु ७नक्षत्रेषु । तत्फलञ्च "प्रस्थाने विपदः प्रोक्ताः सर्वकार्य्येषु सर्वदा क्रूरेषु समायोगे यस्योपग्रहसम्भवः । तस्य मृत्युर्न सन्देहो रोगाद्वाऽथ रणादपि ज्यो० त० । ८उपग्रहणशब्दार्थे च ।

**उपग्रहण** न० उप+ग्रह—ल्युट् । १सामीप्येन ग्रहणे २स्वीकारे "वेदोपग्रहणार्थाय तावग्राहयत प्रभुः" रामा० कात्यायनोक्ते आज्याधारकरणभेदे । "एकद्रव्ये साज्ये वेदेनोपग्रहणम्" कात्या० १,१०,६, "दक्षिणहस्तस्थस्य साज्यस्रुकद्रव्यस्य हस्तकम्पनादिनास्कन्दनावरणार्थं सव्यहस्तस्थीतवेदेनाधारकरणमुपग्रहणमुच्यते" कर्कः । अप् उपग्रहोऽप्यत्र । "न सव्येन वेदोपग्रहः" तत्रैव कर्कः ।

**उपग्राह** पु० उप+ग्रह—णिच्-अच् । १उपढौकने उपहारे (भेटदेओया) कर्म्मणि घञ् । २उपहारद्रव्ये देये "उग्रावधानुपग्राहान् राजभिः प्रापितान् बहून्" भा० स० ५१अ० "उपग्राह्यान् उपहारान्" नीलक० ।

**उपग्राह्य** त्रि० उप+ग्रह—णिच्-यत् । समीपे ग्राहयितुमुपस्थाप्ये १उपढौकनीयद्रव्ये(भेटी) भावे यत् । २उपहारे न० ।

**उपघात** पु० उप+हन—घञ् । १नाशने, २कर्म्मायोग्यतासम्पादने

विशिष्टबुद्धित्वं ज्ञानलक्षणयास्तु विशिष्टप्रत्यक्षत्वमिति न स्वरूपेण निर्वाहः, एवं चात्र ज्ञानलक्षणया स्वविषयकत्वविशेष्यकं ज्ञानं तत्र विशेषणज्ञानकारणतया न निर्वाह इत्यत आह एवमिति ज्ञानलक्षणया ज्ञानलक्षणयैव । तत्र धूमत्वज्ञानरूपसामान्यलक्षणायाः स्वविषयधूमत्वाश्रयत्वसम्बन्धेन धूमोपस्थितेऽभावेन सामान्यलक्षणयानुव्यवसाये धूमोपस्थितभानासम्भवादिति भावः” । उपनयेन निर्वृत्तः ठक् । औपनयिक ज्ञानलक्षणाजन्ये अलौकिके प्रत्यक्षे “अथ सार्वो यदि भवेत्तर्हि प्रत्यक्ष एवौपनयिके” शब्दश०

**उपनयन** न० उप+नी–ल्युट् । स्वगृह्योक्ते संस्कारभेदे १उपनयार्थे २समीपप्रापणे च । तत्रोपनयसंस्कारविभागकालादि दर्श्यते । स च संस्कारः त्रिविधः नित्यःकाम्योनैमित्तिकश्च । तत्र द्विजातीनामधिकारः । तत्र नित्यः अष्टमवर्षादिकाले विहितः, ब्रह्मवर्चसादिकामस्य पञ्चमादिवर्षे विहितः काम्यः, नैमित्तिकस्तु पुनःसंस्काररूपोऽवकपापापनोदनार्थं प्रायश्चित्तात्मकः । तत्र नित्यस्य कालोऽपि द्विविधः मुख्योगौणश्च । तेषु मुख्यकालः “गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम् । राज्ञामेकादशे सैके विशामेके यथाकुलम्” मनुः । “गर्भादिस्तस्य सर्वत्रानुषङ्गः यथाह आपस्तम्बः “गर्भाष्टमेषु ब्राह्मणमुपनयेत् गर्भैकादशे राजन्यम् गर्भद्वादशे वैश्यम्” । अत एव “अष्टमे वर्षे ब्राह्मणमुपनयेत् १गर्भाष्टमे वा२ । एकादशे क्षत्रियम्३ । द्वादशे वैश्यम्४ । आश्व०गृह्य सूत्रे “जन्मप्रभृत्यष्टमे वर्षे ब्राह्मणमुपनयेत्१ । गर्भप्रभृत्यष्टमे वा२ । जन्मप्रभृति गर्भप्रभृति वा एकादशवर्षे क्षत्रियमुपनयेत्३ । जन्मप्रभृति गर्भप्रभृति वा द्वादशे वर्षे वैश्यम्४इति नारायणोपाध्यायः । यमोऽप्याह । “गर्भाष्टमाब्दे कर्त्तव्यं ब्राह्मणस्योपनायनम् । गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः” । तत्रापि गर्भाष्टमादिरेव मुख्यःकालः अत एव मनुना यथाकुलमित्यनेन जन्मतोऽष्टमादीनां कुलानुसारेण व्यवस्थामात्रमुक्तम् । तेनास्य कुलानुसारेण उभयोरपि मुख्यत्वमपरे आहुः । अतएवानयोः प्रशंसापि दृश्यते । “प्राप्ते गर्भाष्टमे वर्षे शुद्धिर्यस्य न विद्यते । तस्योपनयनं कार्यं चैत्रे मीनगते रवौ” ज्योतिषचमत्कारः । “शुचिर्नैव गुरुर्यस्य वर्षे प्राप्तेऽष्टमे यदि । चैत्रे मीनगते भानौ तस्योपनयनं शुभम्” नि०सि० धृ० । अत्र शुद्धिश्च “रविगुरुशुद्धौ व्रतोद्वाहौ” इत्युक्ता रविगुर्वोर्गोचरशुद्धिः । किन्तु “अष्टमैकादशे चैव द्वादशाब्दे व्रतस्य च । मुख्यं कालं विजानीयाद् ब्रह्मक्षत्रविशां क्रमात्” वचने अष्टमादिवर्षाणां वर्णभेदेन मुख्यत्वमाह । “गर्भाष्टमेषु ब्राह्मणमुपनयेत गर्भैकादशेषु क्षत्रियस्य गर्भद्वादशेषु वैश्यम्” गोभिलः “व्यक्तमाह याज्ञवल्क्यः “व्रतबन्धविवाहे च वत्सरपरिगणन माहुराचार्याः । आधानपूर्व्वमेके प्रसूतिपूर्वं वदन्त्ये तु” । काम्यकालः । “ब्रह्मवर्चसकामस्य कुर्य्याद्विप्रस्य पञ्चमे । राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे” मनुः । “षष्ठे तु धनकामस्य विद्याकामस्य सप्तमे । अष्टमे सर्वकामस्य, नवमे कान्तिमिच्छतः” नि०सि० विष्णुः । अथ काम्यानि, सप्तमे ब्रह्मवर्चसकामम्, अष्टमे आयुष्कामं नवमे तेजस्कामं दशमेऽन्नाद्यकामम्, एकादशे इन्द्रियकामम्, द्वादशे पशुकामम् उपनयेत्” पैठी० । गौणकालोऽपि द्विविधः मध्यमोऽधमश्च स्वल्पाधिकप्रायश्चित्तनिमित्तताभेदात् । ब्रह्मक्षत्रियविशामुपक्रमे “द्वादश षोडश विंशतिश्चेदतीता अवरकाला भवन्ति” पैठी० । ब्राह्मणस्य द्वादशवर्षात् क्षत्रस्य षोडशाब्दात् वैश्यस्य विंशत्यब्दात् उत्तरं अवरकालतादोषश्रवणात् तत्र महाव्याहृतिहोमरूपं प्रायश्चित्तं विप्रादेः षोडशाद्यतीतत्वे चान्द्रायणादि गुरु प्रायश्चित्तमिति भेदः एवमेव सं० त० रघु० । तथा च गौणकालमध्ये द्वादशात् षोडशो मध्यः तदुत्तरमधम इति भेदः तत्राधमगौणस्तु । “आषोडशात् ब्राह्मणस्य सावित्री नातिवर्त्तते । आ द्वाविंशात् क्षत्रबन्धोरा चतुर्विंशतेर्विशः” मनुः “आ षोडशाब्दात् द्वाविंशाच्चतुर्विंशाच्च वत्सरात् । ब्रह्मक्षत्रविशां काल औपनायनिकः परः” या०स्मृ० । तत्र आ इत्यस्य सर्वत्रान्वयः आङ् चात्राभिविधौ न मर्यादायाम् “षोडशाब्दो हि विप्रस्य राजन्यस्य द्विविंशतिः । विंशतिः सचतुर्थी च वैश्यस्य परिकीर्त्तिता” विष्णुध०उक्तेः । अतः षोडशाद्यब्दानामुपनयनकालता । “अत ऊर्द्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः । सावित्रीपतिताः व्रात्या भवन्त्यार्य्यविगर्हिताः” मनुः । अत्र सर्वत्र गर्भाधिको-क्त्यादव्याप्याः “सावित्री पतिता यस्य दश वर्षाणि पञ्च च । ब्राह्मणस्य विशेषेणेति” यमवचने पञ्चदशवर्षातिक्रमे गुरुप्रायश्चित्तविधानात्” एतच्च जन्मावधिपरं तेन षोडशाब्दादिभिः समन्वयविरुद्धम् एवमेव सं०त०रघु० । पञ्चदशपदञ्च द्विमासाधिकपञ्चदशपरमिति कल्प्यते सर्वसामञ्जस्यात् अतएव “पञ्चदशवर्षादूर्द्धमपि कियत्कालातिक्रमे तद्दोषकृतमिति” वदता मिताक्षराकृता तथैव सूचितम् । एवं तत्तद्वर्णभेदेन सामान्यकाले निरूपिते इदानीं शुभसूचक

विशेषकालोऽभिधीयते । तत्रादौ वर्णभेदेन कालभेदस्य मुख्यता यथा च प्रमि० काश्यपः । "ऋतौ वसन्ते विप्राणां ग्रीष्मे राज्ञां शरद्यथो । विशां मुख्यश्च सर्व्वेषां द्विजानाञ्चोपनायनम्" । नारदः "शरद्वसन्तग्रीष्माख्येष्वृतुषु व्युत्क्रमाद् द्विजन्मनाम् । मुख्यं साधारणं तेषां व्रतं माघादिपञ्चसु" । नि० सि० गर्गः । "विप्रं वसन्ते क्षितिपं निदाघे वैश्यं घनान्ते व्रतिनं विदध्यात् । माघादिशुक्रान्तकपञ्चमासाः साधारणं वा सकलद्विजानाम्" । शुक्रो ज्यैष्ठः । माघादिमासप्राशस्त्यमाह हेमाद्रौ ज्योतिषे" । "माघादिषु च मासेषु मौञ्जी पञ्चसु शस्यते" । अन्यत्रापि । "ब्राह्मणक्षत्रवैश्यानां माघादिष्वपि पञ्चसु । साधारणं तु सर्व्वेषां व्रतोपनयनं विदुः" । तत्र मासभेदे फलभेदः यथाह व्यव० च० सुरेश्वरः"। "माघे मासि महागुणो धनपतिः प्राज्ञो धनी फाल्गुने मेधावी भवति व्रतोपनयने चैत्रे च वेदान्वितः । वैशाखे सुभगः सुखी पटुमतिर्ज्यैष्ठे वरिष्ठो बुधोऽप्याषाढेऽपि महाविपक्षविजयी सत्रासी महापण्डितः" । कृत्यचि० "माघे द्रविणवानाढ्यः फाल्गुने च दृढव्रतः । चैत्रे भवति मेधावी वैशाखे कोविदो भवेत् । ज्यैष्ठे गहनमीतिज्ञ आषाढे क्रतुभाजनम् । शेषेष्वन्येषु रात्रिः प्रावृषिषु निषिद्धं च व्रतम्"। निषिद्धमिति विप्रक्षत्रियविषयं न वैश्यपरं तस्य "शरदि वैश्यमिति" श्रुत्या प्रागुक्तकाश्यपेन च शरद्युपनयनविधानात् । यत्तु "विप्रस्य क्षत्रियस्यापि व्रतं स्यादुत्तरायणे । दक्षिणे च विशां कार्य्यं नानध्याये न संक्रमे" इति गर्गवचने चकारात् विप्रक्षत्रयोर्दक्षिणायने उपनयविधानं तत् प्रायश्चित्तोपनयनपरमिति स० त० रघु० । वस्तुतः चस्त्वर्थे दक्षिणायने तु वैश्यस्य मुख्योपनयनपरम् "उदगयने आपूर्य्यमाणपक्षे कल्याणे नक्षत्रे चूडोपनयनगोदानविवाहाः" आश्व० सूत्रं तु विप्रक्षत्रविषयम् । प्रायश्चित्तोपनयनपरत्वे "नानध्याये न संक्रमे" इति पर्य्युदासानुपपत्तिः अपि प्रदर्शयिष्यमाणगर्गवचनेन प्रायश्चित्तोपनयनस्यानध्यायेऽपि कर्त्तव्यतावगमात् । "जन्मलग्नजन्ममासराशिषु उपनयननिषेधमाह" कृत्यचि० मन्त्रः । "जन्मोदये जन्मसु तारकासु मासेऽथवा जन्मनि जन्मभे वा । व्रतेन विप्रो न बहुश्रुतोऽपि विद्याविशेषैः प्रथितः पृथिव्याम्"। "विवाहे मेखलाबन्धे जन्ममासं विवर्ज्जयेत् । विशेषाज्जन्मपक्षन्तु वशिष्ठाद्यैरुदाहृतम्" गर्गवाक्यं तु क्षत्रियवैश्यपरम् न तु ब्राह्मणविषयं वह्नुवाक्यविरोधात्" । अथ पक्षनिर्णयः ज्यो० त० । "श्रेष्ठं पक्षमुशन्ति शुक्लमसितस्याद्यं त्रिभागं तथा रिक्तां प्रोज्झ्य तिथिं तथा त्वयनयोः सन्धिश्च शेषाः शुभाः" इति आपूर्य्यमाणे पक्षे इत्यादिप्रागुक्ताश्वलायनसूत्रम् "पक्षे च कृष्णेतरे" भुजबलभीमः । तिथिनिर्णयः । निर्णयसा० "तृतीयैकादशी षष्ठी पञ्चमी द्वादशी तथा" । "द्वितीये रुद्ररविदिक्प्रमिते तिथौ च कृष्णादिमत्रिलवकेऽपि न चापराह्णे" मु० चि० । निर्णयसि० व्य० सम० । "न च षष्ठ्यामथाष्टम्यां पञ्चदश्यां न पर्व्वणि । रिक्तासु च न कर्त्तव्यं त्र्यहस्पृग्दिवसे तथा" । अष्टमीपञ्चदश्योरनध्य । यत्वेऽपि पृथगुपादानं नैमित्तिकविषयमेवमन्येऽपि । "षष्ठ्यामस्तुचिर भार्य्यो रिक्तासु बहुदोषभाक्" सं० त० । "रिक्तायामर्थहानिः स्यात् पौर्णमास्यामथैव च । प्रतिपद्यपि चाष्टम्यां कुलवृद्धिविनाशनमिति" । अन्यत्रापि "सप्तम्यामष्टम्याञ्च यदि रिक्तात्रयोदश्याम् । आयुर्विद्यानाशो व्रतबन्धे पञ्चदश्याञ्च"। "द्वितीया पञ्चमी षष्ठी सप्तमी दशमी तथा । त्रयोदशी तृतीया च शुक्ले श्रेष्ठाः प्रकीर्त्तिताः" इत्यत्र सप्तमीत्रयोदश्योर्यत् प्राशस्त्यमुक्तं तद्वसन्ताभिप्रायेण । नि० सि० नारदेन व्यतिरेकमुखेन वसन्ते गलग्रहादिप्रतिप्रसवोक्तेः । यथा "विना वसन्तेन कृष्णपक्षे गलग्रहे । अपराह्णे चोपनीतः पुनः संस्कारमर्हति" । गलग्रहमाह मदनरत्ने नारदः । "कृष्णपक्षे चतुर्थी च सप्तम्यादिदिनत्रयम् । त्रयोदशी चतुष्कञ्च अष्टावेते गलग्रहाः" । रा० मा० "आरम्भानन्तरं यत्र प्रत्यारम्भो न विद्यते । गर्गादिमुनयः सर्व्वे तमेवाहुः गलग्रहम्" । दैवज्ञमनोहरे । "प्रदोषे निश्यनध्याये सन्ध्यागर्ज्जे गलग्रहे । मधु विनोपनीतस्तु पुनः संस्कारमर्हति" । एवं दिवाचतुर्द्दशीसप्तम्योरष्टम्यां यदा भवेत् । द्वादशी तत्र वर्ज्ज्या स्यात् गलग्रहतया मतेति ज्यो० वचनात् तादृशद्वादश्या वर्ज्यता । वृद्धगर्गः । "प्रतिपूर्वामनध्यायान् सप्तमीञ्च त्रयोदशीम्" वर्जयेदित्यनुषङ्गः । तत्रानध्यायप्रदोषकालौ अनध्यायशब्दे १४५ पृ० दर्शितौ "अनध्यायेऽपि कर्त्तव्यं यत्र नैमित्तिकं भवेत्" वृद्धगर्गवचनात् "प्रायश्चित्तोपनयनेऽनध्यायस्य न दूषकताऽधिकारात् कृष्णपक्षगलग्रहादौ समुच्चयः । "गो जीवाच्चातिचारे सितगुरुदिवसे काव्यगुर्व्वो व्रतं सत्" दीपिकोक्तेः समयाशुद्धिमात्रं वर्ज्जनीयम् । गुरुशुक्रास्तादिरूपसमये दोष-

माह तत्रैव । "अस्तङ्गते दैत्यगुरौ गुरौ वा बाल्येऽपि वा पापयुतेऽप्ययुक्ते । व्रतोपनीतो द्विजः प्रयाणं प्रयाति देवैरपि रक्षितोऽपि" । नक्षत्रनिर्णयः सं०त०मुहूर्त० "स्वातीशक्रधनाश्विमित्रकरभे पौष्णे त्र्यधिष्ण्ये हरिध्विन्दौ तोयपतौ भगे दितिसुते भाद्रद्वये चाग्रे" १५,१८,२१, १,१७,१३,२७,८,१४,२२,५,२४,११,१२, २५,२६,२० एतत्संख्यकेषु सप्तदशसु नक्षत्रेषु उपनयनं शस्तम् । सं०चि० प्रमि० विशेषः "क्षिप्रध्रुवाहिचरमूलमृदुत्रिपूर्वारौद्रेऽर्कविद्गुरुसितेन्दुदिने व्रतं सत्" अस्य व्याख्या प्रमि० "प्राजापत्यादि चतुष्कं भगत्रीद्दिषु पञ्चक । मूलादिदशके चैव वसैते व्रतबन्धनम्" । तेन २२ द्वाविंशतिर्नक्षत्राणि विहितानि । अत्र पुनर्वसूपनयनं क्षत्रियवैश्यविषयं न तु ब्राह्मणविषयम् "पुनर्वसौ कृतोविप्रः पुनः संस्कारमर्हतीति राजमा० । "मन्त्रहृत्स्वपि मते वापि शूद्रत्वमधिगच्छति । पुनर्वसौ कृतोविप्रः पुनः संस्कारमर्हतीति" सारसंग्रहे च विप्रोपनयननिषेधात् । तथा च "भरणीकृत्तिकाम-घाविशाखाज्येष्ठाऽऽस्वुपनयनं न कार्य्यम् एतानि नक्षत्राणि च सर्वशाखासाधारणानि यथोक्तं तत्रैव "भरणी कृत्तिकामघाविशाखाज्येष्ठकभानि च । सर्वशाखासमं प्रोक्तं व्रतं तत्र विवर्जयेत्" । वेदभेदे नक्षत्रभेदो यथा ज्योतिर्निबन्धे व्य०च०च । "मूलहस्तात्रये सार्पे श्रवे पूर्वात्रये तथा । "ऋग्वेदाध्यायिनां कुर्य्यात् मेखलाबन्धनं बुधैः"१९, १३, १४, १५, ९, ६, ११, २०, २५, एतन्मितानि ऋग्वेदिविषयाणि "पुष्ये पुनर्वसौ पौष्णे २७हस्ते मैत्रे१७ मृगाह्वये । श्रुतेषु १२, २१, २६, ४ च प्रशस्तं स्याद्यजुषां मौञ्जीबन्धनम्"। पुष्यादिव २२हस्ता-श्विन्यार्द्र कर्णोत्तरात्रयम् २२,१२,२१,२६। प्रशस्तं मेखलाबन्धे बटूनां सामगायिनाम्"। भगो ११मैत्रा१७ श्विनीहस्तारेवत्यदिति ७रावसम् २३। अथर्वपाठिनां श-कोऽभगयोऽयं व्रतार्थके" । नि०सि०।"पूर्वा ११,२०,२५, हस्तात्रये१३,१४,१५, सार्पे ९श्रुतिमूले"च २२,१९,ऋक्-शाम् । यजुषां पौष्णमैत्रार्कादित्यपुष्याश्विचन्द्रभैः । साम-गानां हरोत्तरार्कपुष्योत्तराश्विनी । धनिष्ठादितिमैत्रार्क-चन्द्रपौष्णेऽथर्वणाम् "५,२७, । अन्यत्रापि । "पूर्वा-हस्तत्रयाऽऽश्लेषामित्रमूलानि भानि च । ऋग्वेदाध्यायिनां शस्तमान्याद्रव्रतबन्धने । उत्तरारोहिणीयुग्मपुष्याश्वौष्याक-रादितौ । मैत्रे यजुर्विदाञ्चोपनयनन्तु प्रशस्यते । उत्तरा-श्रवणार्द्राश्विपुष्याहस्ताधनेषु च । सामगानां व्रतं शस्त-मिति वेदविदोविदुः । अश्विनी रेवती हस्ता मृगमैत्र-धनादितौ । अथर्ववेदिनाञ्चोपनयनन्तु शुभावहमिति" प्रमि०धृतप्रागुक्तवचने ज्येष्ठायामनुक्तत्वेनोक्तावपि प्रागुक्तमुहूर्त-चन्द्रादिवचने "अश्विनीमृगचित्रासु हस्ते स्वात्याञ्च यमभे । पुष्ये च पूर्वफल्गुन्यां श्रवणे पौष्णभे तथा । वासवे शततारासु व्रतबन्धः प्रशस्यते" श्रीपतिवचने च ज्येष्ठायाश्चाप्यत्यन्तापद्विषयम् । वेदभेदेन विहित-नक्षत्रेषु तस्याः अकीर्त्तनेऽपि वेदभेदेन प्राशस्त्यमात्रस्य प्रतीतेस्तदलाभेऽन्यवेदिविहितनक्षत्रस्यापि ग्रहणार्थं मुहू० चि०द्वाविंशतिनक्षत्राणां सामान्यतो ग्रहणवदत्रापि तथेति बोध्यम् ।ज्येष्ठायास्त्वत्यन्तापद्विषय एव ग्राह्यता केष्वपि वेदिषु तदनुक्तेः व्य०च०गुरुः।"त्रिपूत्तरेषु रोहिण्यां हस्ते मैत्रे च वासवे । त्वाष्ट्रे सौम्यपुनर्वस्वोरुत्तमं ह्यौपनायनम् । वारुणे वैष्णवे पुष्ये वायव्ये पौष्णभे तथा । आश्विन्यां षट्सु मेषूक्तं मध्यमं तु चतुर्मुखैः । शेषेषु सर्ववेदी-नां द्विजानामौपनायनम्" अत्यान्येषां वर्ज्योक्तैरपि अनापद्विषया" एतदतिरिक्तनक्षत्राणां प्रागुक्तवचनैर्विहि-तत्वात् । ज्योतिर्निबन्धे नारदः । "ज्येष्ठाय्यर्कत्रयान्त्येज्य-रुद्रादित्युत्तरात्रयम् । विष्णुत्वष्ट्राश्विमित्राजयोनिभान्यु-पनायने" । वर्जनीययोगानाह व्य०च०गुरुः। "व्याघातं परिघं वज्रं व्यतीपातञ्च वैधृतिम् । गण्डातिगण्डौ शू-लञ्च विष्कुम्भञ्च विवर्जयेत्" अन्यत्रापि । "विष्कुम्भ-शूलपरिघव्यतिपातगण्डव्याघातवैधृतियुतं त्वतिगण्ड-वज्रम् । योगं विहाय कुजमन्दपराह्णसन्ध्यां हित्वा निरं-शमशुभञ्च व्रतं प्रशस्तम्" प्रमिता० । "क्षीणचन्द्रेऽस्तगे शुक्रे निरंशे चैव भास्करे । कर्त्तव्यं नोपनयनं नान-ध्याये गलग्रहे" । निरंशसूर्यमाह तत्रैव । "राशेः प्रथमभागस्थो निरंशः सूर्य उच्यते"। तेन रघुनन्दनेन निरंशशब्दस्य संक्रान्तिपरत्वस्य कथनं चिन्त्यम् । वारनिर्ण-यमाह नारदः । "आचार्य्यसौम्यकाव्यानां वाराः शस्ताः शशीनयोः। वारौ मध्यफलौ प्रोक्तावितरौ निन्दितौ व्रते" तत्राप्यस्तमितस्य बुधस्य वारोवर्जनीयः । "अस्तं गतस्य सौम्यस्य वारो वर्ज्योद्विजन्मनामिति" नारदोक्तेः । अन्य-त्र तु । "शुभो बुधोनास्तमितः पापग्रहयुतो न चेति" । चन्द्रवारस्तु कृष्णे वर्ज्जनीयः । "पापग्रहाणां वाराः स्युर्न शुभाश्चन्द्रवासरः । सितपक्षे प्रशस्तः स्यात् कृष्णे वारोविधोर्नहीति" व्य०च० उक्तेः । सामगानां कुजवारेऽप्युपनयनमुक्तं श्रीपतिना । "शाखाधिपे बलिनि

पञ्चमगृहम् । शुभयुक्तं प्रशंसन्ति तदाजीवितमेव वा" । योगान्तरमाह प्रमि० महेश्वरः । "जीवे बागलाधिष्ठिते भृगुसुते धर्मात्मजस्थे विधौ शुक्रांशेऽखिलवेदविप्रविहित-स्वांशे कृतघ्नोऽधमः"। तत्रैव च पत्र । "विधौ सितांशगे गुरौ तनौ त्रिकोणगे भृगौ । समस्तवेदविद्व्रती कुजांशके-ऽतिनिर्घृणः" । नवांशफलमाह व्य०च० गुरुः । "गुरु-शुक्रांशके च चन्द्रे विद्याधनायुःसुखवान् द्विजन्मा । माहेयमन्दार्कनवांशकस्थे हिंस्रो जडो मूर्खतरोऽतिनिःस्वः" मु०चि० । "क्रूरो जडो भवेत् पापः पटुः षट्कर्म-कृद्गुरुः । यज्ञार्थभाक् तथा मूर्खोरव्याद्यंशे तनौ क्रमात् । विद्यानिरतः शुभराशिलग्ने पापांशगते हि दरिद्रतरः । चन्द्रे स्वलवे बहुदुःखयुतः कर्णादितिभे धनवान् व्रतगे"। प्रमि० नारदः "श्रवणादितिमघान्ते कर्कांशस्थे निशा-करे । तदा व्रती वेदशास्त्रधनधान्यसमृद्धिमान्" । एतच्च कृष्णपक्षविषयम् "शुक्ले स्वांशे निशानाथे वित्तवान् व्रतकृद्भवेत् । कृष्णे स्वांशगतश्चन्द्रो जातिभ्रंशं करोति हि" वशिष्ठोक्तेः "रविगुरुयुतौ व्रतोद्वाहौ" इत्युक्तेर्व्रते गुरु-शुद्धिरावश्यकी । तत्र गुरुशुद्धौ विशेषमाह" मु० चि० 'वटुकन्याजन्मराशेस्त्रिकोणायद्विसप्तगः । श्रेष्ठो गुरुः ख-षट्त्र्याद्ये पूजयाऽन्यत्र निन्दितः"। "स्वोच्चे स्वभे स्वमैत्रे वा स्वांशे वर्गोत्तमे गुरुः । रिष्फाष्टतुर्यगोऽपीष्टो नीचा-रिस्थः शुभोऽप्यसन्" अत्र जीवस्य नीचस्थत्व इव अरि-स्थत्वेऽपि वर्ज्यता प्रतीयते अतएव "जन्मभादष्टमे रिःफे नीचे वा शत्रुभे गुरौ ! मौञ्जीबन्धः शुभः प्रोक्त-श्चैत्रे मीनगते रवाविति" निर्णयसिन्धुधृतवचने मीन-गतरविकालस्यैव प्रतिप्रसवसार्थक्यम् । एतेन "शाखाधिपे बलिनि" इत्यादिवाक्ये उपक्रमे शाखाधिपश्रवणात् गुरोररिस्थत्वे तस्य ऋग्वेदाधिपतया तद्वेदिनामेवो-पनयननिषेधकल्पनमपि निरस्तम् "शाखेशसूर्यशशिजीवबले" इत्यादिप्रागुक्तवचने शाखेशात् पृथक्त्वेन जीवस्य ग्रहणे-नारिस्थत्वेऽपि सर्ववेदिनां दोषसाम्यकथनात् एतेन "नीचस्थितेऽरिस्थगेऽथ पराजिते वा जीवे भृगौ" इत्यादिवचने क्रमान्वयं वदन् परास्तः तथात्वे प्रति-प्रसवानर्थक्यापत्तेः । कल्पदाकरे द्रष्टव्यमिति दिक् तत्तद्विद्याग्रहणार्थे २कर्मभेदे तत्र चिकित्साविद्याङ्गो-पनयनप्रकारो दर्शितः सुश्रुतेन यथा ।

'अथातः शिष्योपनयनीयमध्यायं व्याख्यास्यामः । ब्राह्मणक्षत्रियवैश्यानामन्यतममन्वयवयःशीलशौर्यशौचा-चारविनयशक्तिबलमेधाधृतिस्मृतिमतिप्रतिपत्तियुक्तं तनु-जिह्वौष्ठदन्ताग्रमृजुवक्त्राक्षिनासं प्रसन्नचित्तवाक्चेष्टं क्लेश-सहञ्च भिषक् शिष्यमुपनयेत् । अतो विपरीतगुणं नोपनयेत् उपनयनीयस्तु ब्राह्मणः प्रशस्तेषु तिथिकरणमुहूर्त्तनक्षत्रेषु प्रशस्तायां दिशि शुचौ समे देशे चतुर्हस्तं चतुरस्रं स्थण्डिलमुप-लिप्य गोमयेन दर्भैः संस्तीर्य्य सुमनोभिर्लाजभक्तै रत्नैश्च देवताः पूजयित्वा विप्रान् भिषजश्च, तत्रोल्लिख्याभ्युक्ष्य च दक्षिणतो ब्राह्मणं स्थापयित्वाग्निमुपसमाधाय खदिरपलाशदेवदारु-बिल्वानां समिद्भिश्चतुर्णां वा क्षीरवृक्षाणां न्यग्रोधोदुम्बरा-श्वत्थमधूकानां दधिमधुघृताक्ताभिः, दार्व्वीहोमिकेन विधिना स्रुवेणाज्याहुतीर्जुहुयात् । सप्रणवाभिर्महाव्या-हृतिभिस्ततः प्रतिदैवतमृषींश्च स्वाहाकारं कुर्य्यात् शि-ष्यमपि कारयेत् । ब्राह्मणस्त्रयाणां वर्णानामुपनयनं कर्त्तु-मर्हति राजन्यो द्वयस्य, वैश्यो वैश्यस्यैवेति । शूद्रमपि कुलगुणसम्पन्नं मन्त्रवर्ज्जमनुपनीतमध्यापयेदित्येके । ततो-ऽग्निं त्रिः परिणीयाग्निसाक्षिकं शिष्यं ब्रूयात् । काम-क्रोधलोभमोहमानाहङ्कारेर्ष्यापारुष्यपैशुन्यानृतालस्यायश-स्यानि हित्वा नीचनखरोम्णा शुचिना कषायवाससा स-त्यव्रतब्रह्मचर्य्याभिवादनतत्परेणावश्यं भवितव्यं मदनुम-तस्थानगमनशयनासनभोजनाध्ययनपरेण भूत्वा मत्प्रियहि-तेषु वर्त्तितव्यमतोऽन्यथा ते वर्त्तमानस्याधर्म्मो भवत्यफला च विद्या न च प्राकाश्यं प्राप्नोति । अहं वा त्वयि सम्य-ग्वर्त्तमाने यद्यन्यथादर्शी स्यामेनोभाग्भवेयमफलविद्यश्च । द्विजगुरुदरिद्रमित्रप्रव्रजितोपनतसाध्वनाथाभ्युपगतानां चात्मबान्धवानामिव स्वभेषजैः प्रतिकर्त्तव्यमेवं साधु भ-वति । व्याधशाकुनिकपतितपापकारिणां न च प्रति-कर्त्तव्यमेवं विद्या प्रकाशते मित्रयशोधर्म्मार्थकामांश्च प्रा-प्नोति" एवं धनुर्विद्याग्रहणार्थमप्युपनयनं द्रष्टव्यम् । उपनयनाय हितम् छ । उपनयनीय उपनयनावेदके शास्त्रे त्रि० तत्र साधु छ । उपनयनीय उपनयनकारके गुरौ पु० । उभयत्र उदा० उक्त सुश्रुतवाक्ये दर्शितम् ।

उपनहन न० उप+नह–बन्धने भावे ल्युट् । १बन्धने करणे ल्युट् । २बन्धनसाधने वस्त्रादौ । 'प्रेष्यति च सोमोपन-हनमाहर" कात्या० ७,७,१ । "सोम उपनह्यते बध्यते येन तत् सोमोपनहनं वासः" कर्कः । "वासस्यैनमवधृतं कृत्वाभ्युक्ष्य सोमोपनहनेन" कात्या० २२,६,१२ । "अथ संप्रेष्यति सोमोपनहनमाहर" यजमानो वा सोमोपन-हनमादत्ते" शत० ब्रा० ३,३,२,४ ।

**उपनागरिका** स्त्री "माधुर्य्यव्यञ्जकैर्वर्णैरुपनागरिकेष्यते" इत्युक्तलक्षणे शब्दानुप्रासवृत्तिभेदे। यथा "अपसारय घनसारं कुरु हारं दूरएव किं कमलैः। अलमालि! मृणालैरिति वदति दिवानिशं बाला"।

**उपनामुक** त्रि० उप+नम–बा० उकञ्। १समनमशीले २फलानुगुण्याय प्रह्वे "यदिदिभिर्यजेतोपनामुक एनं यज्ञः स्यात् प्रजात्रोत्युपनामुक एनम्" शत०ब्रा० ११, २,६,६,७।

**उपनाय** पु० उपनाययति उप+नी–णिच् करणस्य कर्त्तृत्वविवक्षायाम् कर्त्तरि अच्। उपनयसंस्कारे हेम०। तस्य आचार्य्यसमीपनयनसाधनकरणत्वात्तथात्वम्।

**उपनायक** पु० उपगतोनायकम् अत्या० स०। १नायकसहाये उपपतौ "नायकस्य गुणोत्कर्षकथका उपनायकाः" संगीतोक्ते २नायकपताकाभेदे उप+नी–ण्वुल्। ३उपस्थापके त्रि० ग्रामकाणाद्युपसन्निकर्षे पु०। उपनयशब्दे उदा०।

**उपनायन** न० उप+नी–स्वार्थे–णिच्–ल्युट् करणे कर्त्तृत्वविवक्षायां कर्त्तरि नन्द्या० ल्यु वा। उपनयसंस्कारे। उपनयनशब्दे बहुप्रयोगो दृश्यः। "ब्राह्मणस्योपनायनम्" मनुः। उपनायनं प्रयोजनमस्य ठञ्। औपनायनिक उपनयनप्रयोजने विधाने त्रि०। "एष प्रोक्तो द्विजातीनामौपनायनिकोविधिः" मनुः औपनायनिक इत्यत्र कुल्लू० अनुशतिकादिकादित्वकल्पनमनादरमेव उपनायनशब्देनैव तद्रूपसिद्धेस्तथाकल्पनानौचित्यात्।

**उपनाह** पु० उप+नह–घञ्। १वीणायास्तन्त्रीबन्धनस्थाने, २व्रणाद्युपशमार्थं लेपनद्रव्ये च। "आदौ विम्लापनं कुर्य्यात् द्वितीयमवसेचनम्। ततोयदुपनाहञ्च चतुर्थीं पाटनक्रियाम्" "शोफयोरुपनाहन्तु कुर्य्यादामविदग्धयोः" "तिलोपनाहं कुर्य्याच्च सर्व्वदा वातरोगिणाम्" "मांसमुपनाहार्थे वसातैलमनुवासनार्थे" इति च सुश्रुतः।

**उपनाहन** न० उप+नह–स्वार्थे णिच्–भावे ल्युट्। व्रणादिबन्धने "प्रशमयेत् स्वेदस्वेदोपनाहनैः"। "वेशवारैः सकृशरैः स्निग्धैः स्यादुपनाहनम्" सुश्रुतः।

**उपनिक्षेप** पु० उप+नि–क्षिप–कर्म्मणि घञ्। १रूपसंख्याप्रदर्शनेन रक्षार्थं परस्य हस्ते निहिते द्रव्ये "आधिसीमोपनिक्षेपजड़बालधनैर्विना। तथोपनिधिराजस्त्रीश्रोत्रियाणां धनैरपि" या०स्मृ०। "उपनिक्षेपो नाम रूपसंख्याप्रदर्शनेन रक्षार्थं निहितमिति" मिता०। भावे घञ्। २तथाऽर्पणे।

**उपनिधातृ** त्रि० उप+नि+धा–तृच्। उपनिहिते गम्यसमीपे १सद्द्रव्यस्थापके २स्थापकमात्रे च। "याभिर्व्वा उपनिधाता स्रुचं देवाः" शत०ब्रा०१,१,२,१७। उप+नि+धा–ण्वुल्। उपनिधायकोऽप्यत्र।

**उपनिधान** न० उप+नि+धा–भावे ल्युट्। उपनिधित्वेन १स्थापने "उपनिधानमुपनिधिः" मिता०। २समीपे स्थापने "अदभिहितोभाव" इत्याद्युक्तेः उपनिधीयमाने ३द्रव्ये च।

**उपनिधि** पु० उप+नि+धा–भावे कि। रूपसंख्याप्रदर्शनं परस्यान्तिके रक्षार्थं १स्वधनस्थापने "अदभिहितोभावोद्रव्यवत् प्रकाशते" इत्युक्तेः तथा निधीयमाने २द्रव्ये च। उपनिधिस्वरूपतल्लक्षणं व्यविशेषो मिता० दर्शितो यथा "वासनस्थमनाख्याय हस्तेऽन्यस्य यदर्प्यते। द्रव्यन्तदौपनिधिकं प्रतिदेयं तथैव तत्" या०स्मृ०। "निक्षेपद्रव्यस्याधारभूतन्द्रव्यान्तरं वासनमुच्यते करण्डादि तत्स्थं यद्द्रव्यं रूपसंख्यादिविशेषमनाख्याय अकथयित्वा मुद्रितमन्यस्य हस्ते रक्षार्थं विश्वासादर्प्यते तद्द्रव्यमौपनिधिकमुच्यते यथाह नारदः। "असंख्यातमविज्ञातं समुद्रं यन्निधीयते। तज्जानीयादुपनिधिं निक्षेपं गणितं विदुरिति" प्रतिदेयन्तथैव तत् यस्मिन् स्थापितमनेनैव पूर्व्वमुद्रादिचिह्नितमर्पितन्तथैव स्वामिनाय प्रतिदेयं प्रत्यर्पणीयम्। प्रतिदेयमित्यस्यापवादमाह" मिता०। "न दाप्योऽपहृतन्तु राजदैविकतस्करैः" या०स्मृ० "तमुपनिधिं राज्ञा दैवेनोदकादिना तस्करैर्व्वोपहृतं नष्टं न दाप्योऽसौ दाता तदुपनिहितमनिन एव तद्द्रव्यम् नष्टं यदि जिह्मकारितं न भवति यथाह नारदः। "ग्रहीतुः सह योऽर्थेन नष्टोनष्टः स दायिनः। दैवराजकृते तद्वन्न चेत्तज्जिह्मकारितमिति" मिता०। अस्यापवादमाह। "भ्रेषश्चेन्मार्गितेऽदत्ते दाप्योदण्डञ्च तत्समम्" या०स्मृ०। "स्वामिना मार्गिते याचिते यदि न ददाति तदा तदुत्तरकालं यद्यपि राजादिभिर्भ्रेषोनाशः सञ्जातस्तथापि तद्द्रव्यं मूल्यकल्पनया धनिने ग्रहीता दाप्यो राज्ञे च तत्समं दण्डम्। भोक्तारन्तु प्रति दण्डमाह" मिता०। "आजीवन् स्वेच्छया दण्ड्योदाप्यस्तं चापि सोदयम्" या०। "यः स्वेच्छया स्वामिनमननुज्ञाप्य उपनिहितन्द्रव्यमाजीवत्युपभुङ्क्ते व्यवहरति वा प्रयोगादिना आजीवति सकाशादुपभोगानुसारेण दण्ड्यस्तञ्चोपनिधिं सोदयमुपभोगे सवृद्धिकं व्यवहारे स लाभञ्च धनिने दाप्यः। वृद्धिप्रमाणञ्च कात्यायनेनोक्तम्। "निक्षेपं वृद्धिशेषञ्च क्रयं विक्रयमेव च। याच्यमानो न चेद्दद्यात् वर्द्धते पञ्चकं शतमिति"। एतच्च भक्षिते द्रष्टव्यम्। उपेक्षाऽज्ञाननष्टे तेनैव विशेषो दर्शितः "भक्षितं सोदयं

दायः समन्तात् उपेक्षितम् । किञ्चिदूनं प्रदापयः स्याद्व्यवहारमनाश्रितमिति" । किञ्चिदूनमिति षष्ठांशहीनम्" मिता० । "एष एव विधिर्दृष्टो याचितान्वाहितादिषु । शिल्पिषूपनिधौ न्यासे प्रतिन्यासे तथैव च" नारदः । "स आत्मभावान् पुत्रांश्च दारांश्च भवतामिह । प्रदायोपनिधिं राजा पाण्डुः स्वर्गमितो गतः" भा० आ० १२६ अ० । उपनिधिमधिकृत्य प्रवृत्तम् तदस्य प्रयोजनमिति वा ठक् । औपनिधिक तदधिकारेण प्रवृत्ते व्यवहारे तत्साधनद्रव्ये च ।

**उपनिपात** पु० उप+नि–पत–घञ् । १समीपे आगतौ २हठादागमने "ततताक्ष्योपनिपातवेगचञ्चुः" किरा० ।

**उपनिपातिन्** त्रि० उप+नि–पत–णिनि । १हठादागते अतर्कितोपगतियुक्ते "रन्ध्रोपनिपातिनोऽनर्थाः" ।

**उपनिबन्धन** न० उप+नि+बन्ध–करणे ल्युट् । १सम्पादनसाधने । "प्रश्रयोपनिबन्धनः" सर्व्वद० भावे ल्युट् । २ग्रथने

**उपनिमन्त्रण** न० उप+नि+मन्त्र–ल्युट् । उपेत्य आवश्यके कर्म्मणि प्रवर्त्तनाव्यापाररूपे निमन्त्रणे ।

**उपनिवपन** न० उप+नि+वप–ल्युट् । अग्निप्रणयनकर्म्माङ्गभूते इध्माभ्याधानादिव्यापारे" औपनिवपनात् कृत्वा हविर्धाने स्थापयति" ८,३, २१ । "औपनिवपनात् "इध्माभ्याधानादि उपवसन्त्युपनिवपनान्तमग्निप्रणयनाख्यं कर्म्म कृत्वा" कर्कः ।

**उपनिवेशित** त्रि० उप+नि+विश–णिच्–क्त । १निवासिते २वसतिविशेषरूपेण स्थापिते च । "स्वर्गाभिष्यन्दवमनं कृत्वेवोपनिवेशिता" कुमा० । ३निवेशितमात्रे च ।

**उपनिषद्** स्त्री उपनिषीदति प्राप्नोति ब्रह्मात्मभावोऽनया उप+नि–सद–क्विप् । १ब्रह्मविद्यायां, २तत्प्रतिपादके वेदशिरोभागे वेदान्ते च । मु० भा० उपनिषच्छब्दार्थव्युत्पत्तिर्दर्शिता यथा । "सेयं ब्रह्मविद्योपनिषच्छब्दवाच्या तत्पराणां सहेतोः संसारस्यात्यन्तावसादनम् उपनिपूर्व्वस्य सदेस्तदर्थत्वात् तादर्थ्याद्ग्रन्थोऽप्युपनिषदुच्यते । मुण्ड० भा० "यथा ये इमां ब्रह्मविद्यामुपयन्त्यात्मभावेन श्रद्धाभक्तिपुरःसराः सन्तस्तेषां गर्भजन्मजरारोगाद्यनर्थपूगं निशातयति परं वा ब्रह्म गमयति अविद्यादिसंसारकारणञ्चात्यन्तमवसादयति विनाशयतीत्युपनिषद् उपनिपूर्व्वस्य सदेरेवमर्थस्मरणात् ।" "अत्र चोपनिषच्छब्दो ब्रह्मविद्यैकगोचरः । तच्छब्दावयवार्थस्य विद्यायामेव सम्भवात् । उपोपसर्गः सामीप्ये तत्प्रतीचि समाप्यते । सामीप्यतारतम्यस्य विश्रान्तेः स्वात्मनीक्षणात् । त्रिविधस्य सदर्थस्य निशब्दोऽपि विशेषणम् । उपनीय तमात्मानं ब्रह्मापास्तद्वयं यतः । निहन्त्यविद्यां तज्जञ्च तस्मादुपनिषद्भवेत् । निहत्यानर्थमूलं स्वाऽविद्यां प्रत्यक्तया परम् । नयत्यपास्तसम्भेदमतोवोपनिषद्भवेत् । प्रवृत्तिहेतून्निःशेषांस्तन्मूलोच्छेदकत्वतः । यतोऽवसादयेद्विद्या तस्मादुपनिषद्भवेत् । यथोक्तविद्याहेतुत्वाद्ग्रन्थोपि तदभेदतः । भवेदुपनिषन्नामा लाङ्गलं जीवनं यथेति" वार्त्तिककृदाचार्य्यैर्दर्शितः । उपनिषद्भेदाश्च मुक्तिकोपनिषदि दर्शिता यथा । "१ईशा २केन ३कठ ४प्रश्न ५मुण्ड ६माण्डूक्य ७तित्तिरिः । ८ऐतरेयञ्च ९छान्दोग्यं १०बृहदारण्यकं तथा । ११ब्रह्म १२कैवल्य १३जाबाल १४श्वेताश्वो १५हंस १६आरुणिः । १७गर्भो १८नारायणो १९हंसो २०बिन्दु२ २१नाद२ २२शिरः३ २३शिखा । २४मैत्रायणी २५कौषितकी २६बृहज्जाबाल २७तापनी । २८कालाग्निरुद्र २९मैत्रेयी ३०सुबाल ३१क्षुरि ३२मन्त्रिका । ३३सर्व्वसारं ३४निरालम्बं ३५रहस्यं ३६वज्रसूचिकम् । ३७तेजो ३८नादो ३९ध्यान ४०विद्या ४१,४२योगतत्त्वात्मबोधकम् । ४३परिव्राट् ४४त्रिशिखी ४५सीता ४६चूडा ४७निर्वाण ४८मण्डलम् । ४९दक्षिणा ५०शरभं ५१स्कन्दं ५२महानारायणाह्वयम् । ५३रहस्यं ५४रामतपनं ५५वासुदेवञ्च ५६मुद्गलम् । ५७शाण्डिल्यं ५८पैङ्गलं ५९भिक्षु ६०६१महच्छारीरकं शिखा६२ । ६३तुरीयातीत ६४संन्यास ६५परिव्राजा ६६ऽक्षमालिका । ६७अव्यक्तै ६८काक्षरं ६९पूर्णा७० ७१सूर्य्याक्ष्य७२ऽध्यात्म७४कुण्डिका । ७५सावित्र्या ७६ऽऽत्मा ७७पाशुपतं ७८परब्रह्मा ७९ऽवधूतकम् । ८०त्रिपुरातापनं ८१देवी ८२त्रिपुरा ८३काठ ८भावना । ८५हृदयं ८६कुण्डली ८७भस्म ८८रुद्राक्ष ८९गण ९०दर्शनम् । ९१तारसार९२महावाक्य ९३पञ्चब्रह्मा ९४ऽग्निहोत्रकम् । ९५गोपालतापनं ९६कृष्णं ९७याज्ञवल्क्यं ९८वराहकम् । ९९शाट्यायनी १००हयग्रीवं १०१दत्तात्रेयं च १०२गारुडम् । १०३कलि७ १०४जाबालि १०५सौभाग्य १०६रहस्य८१०७ऋच १०८मुक्तिका"

तासाञ्च मध्ये यासां यद्वेदगतत्वं तदपि शान्तिपाठमन्त्रसहितं तत्रैव दर्शितं यथा ।

"१ऐतरेय२कौषकी३।४नादविन्द्वात्मप्रबोध५निर्वाण ६मुद्गला ऽ७क्षमालिका ८त्रिपुरा ९सौभाग्यं १०बह्वृचा

ऋग्वेदगतानां दशसङ्ख्याकानामुपनिषदां "वाङ्मे मनसीति" शान्तिः । १ईशावास्य २बृहदारण्यक ३जाबाल ४हंस ५परमहंस ६सुबाल ७मन्त्रिका ८निरालम्ब ९त्रिशिखी" १०ब्राह्मणमण्डल ११अद्वयतारक १२पैङ्गल १३भिक्षु १४।१५तुरीयातीताध्यात्म १६तारसार १७याज्ञवल्क्य १८शाट्यायनी १९मुक्तिकानां शुक्लयजुर्वेदगतानामेकोनविंशतिसङ्ख्याकानामुपनिषदां "पूर्णमदः" इति शान्तिः । १कठवल्ली २तैत्तिरीयक ३ब्रह्म ४कैवल्य ५श्वेताश्वतर ६गर्भ ७।८नारायणामृतबिन्दु ९अमृतनाद १०कालाग्निरुद्र ११क्षुरिका १२सर्वसार १३शुकरहस्य १४तेजोबिन्दु १५ध्यानबिन्दु १६ब्रह्मविद्या १७योगतत्त्व १८दक्षिणामूर्त्ति १९स्कन्द २०शारीरक २१योगशिखै २२,२३काक्षराक्षि २४ऽवधूत २५कठरुद्र २६हृदय २७योगकुण्डलिनी २८पञ्चब्रह्म २९प्राणाग्निहोत्र ३०वराह ३१कलिसन्तरण ३२सरस्वतीरहस्यानां कृष्णयजुर्वेदगतानां द्वात्रिंशत्सङ्ख्याकानामुपनिषदां "सह नाववत्विति" शान्तिः । १केन २।३छान्दोग्यारुणि ४मैत्रायणी ५मैत्रेयी ६वज्रसूचिक ७योगचूडामणि ८वासुदेव ९महत् १०संन्यासाऽ ११व्यक्त १२कुण्डिका १३सावित्री १४रुद्राक्ष १५जाबालदर्शन १६जाबालीनां सामवेदगतानां षोडशसङ्ख्याकानामुपनिषदाम् "आप्यायन्त्विति" शान्तिः । १प्रश्न २मुण्डक ३माण्डूक्याऽ ४थर्वशिरोऽ ५थर्वशिखा ६बृहज्जाबाल ७नृसिंहतापनी ८नारदपरिव्राजक ९सीता १०शरभ ११महानारायण १२रामरहस्य १३रामतापनी १४शाण्डिल्य १५परमहंस १६परिव्राजकाऽऽन्नपूर्णा १७सूर्य्यात्म १८पाशुपत १९परब्रह्म २०त्रिपुरातपन २१देवी २२भावना २३भस्म २४जाबाल २५गणपति २६महावाक्य २७गोपालतपन २८कृष्ण २९हयग्रीव ३०दत्तात्रेय ३१गारुडानामथर्ववेदगतानामेकत्रिंशत्सङ्ख्याकानामुपनिषदां "भद्रं कर्णेभिरिति" शान्तिः" । पूर्व्वोत्तरवाक्ये नामभेदः नामान्तरपरतया समाधेयः । ३योगे च । "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्य्यवत्तरम्" छा० उ० "उपनिषदा योगेन युक्तश्चेतव्यः" भा० "योगो देवतादिविषयमुपासनम्" आनन्दगि० ४धर्मे ५निर्ज्जनस्थाने मेदि० ६समीपसदने त्रिका० । ७द्विजातिकर्त्तव्ये चत्वारिंशत्संस्कारमध्ये वेदव्रतभेदे तच्च व्रतं गोदानाख्यकेशान्तकर्म्मणः प्राक् कर्त्तव्यं यथाह आश्वलायनगृह्यकारिका "प्रथमं स्यान्महानाम्नी द्वितीयन्तु महाव्रतम् । तृतीयं स्यादुपनिषद्गोदानं च ततः परम्" ततश्च विप्रस्य जन्मतस्त्रयोदशे वर्षे महानाम्नीव्रतं, चतुर्द्दशे महाव्रतं, पञ्चदशे उपनिषद्व्रतं, षोड़शे वर्षे गोदानम्, क्षत्रस्य ऊनविंशादिवर्षचतुष्के, वैश्यस्य एकविंशादिचतुष्के यथाक्रमं महानाम्न्यादिवेदव्रतात्मकर्म्मचतुष्टयं कर्त्तव्यम् । तत्र चूड़ादिवत्तत्कालादिकमेव ग्राह्यम्" यथाह पी० धा० श्रीधरः । "तिथिनक्षत्रवाराश्च वर्णोदयनिरीक्षणम् । चौलवत् सर्व्वमाख्यातं सगोदानव्रतेषु च" यदा तु दैवादतीतकालानि महानाम्न्यादिव्रतानि तुल्यदा समावर्त्तनेन सह कार्य्याणि "महानाम्निक्रियायुक्तकालस्याप्यनन्तरावृत् । गोदानान्तर्निवृत्तीत्यादिश्रुतेः । उपनिषत्सु व्यज्यते अण् । औपनिषद वेदान्तमात्रवेद्ये परब्रह्मणि । "तन्त्वौपनिषदं पुरुषं वेद" छा० उ० । उपनिषदं वेत्ति अण् । वेदान्ताभिज्ञे "शुकवद्ब्रह्मभाव इत्यौपनिषदाः" कुसु० ।

**उपनिषादिन्** त्रि० उप+नि+सद्—णिनि स्त्रियां ङीप् । समीपे स्थायिनि "तद्दिशमधस्तादुपनिषादिनीं करोति" शत० ब्रा० ९,४,३,२ ।

**उपनिष्कर** न० उप+निस्+कृ—करणे संज्ञायां घ । महति राजमार्गे अमरः । तत्र हि महतामपि सैन्यानामसंबाधेन निष्क्रमणसम्भवात्तथात्वम् । [अमरः ।

**उपनिष्क्रमण** न० उप+निस्—क्रम करणे ल्युट् । राजपथे ।

**उपनिहित** त्रि० उप+नि—धा—क्त । १उपनिधित्वेन स्थापिते द्रव्ये उपनिधिशब्दे मिता० उदा० २स्थापिते च ।

**उपनीत** त्रि० उप+नी—क्त । १कृतोपनयनसंस्कारे "अथोपनीतं विधिवद्विपश्चितः" रघुः । २ज्ञानलक्षणासन्निकर्षेण ज्ञाते च "उपनीतं विशेषणतयैव भासते नाम्ने तु नायं नियमः" प्राचीनगाथा उपनयशब्दे दृश्या ३समीपे प्रापिते ४उपस्थापिते च ।

**उपनेतृ** पु० उप+नी—तृच् । १उपनयकर्त्तरि गुरौ २उपढौककर्त्तरि त्रि० स्त्रियां ङीप् । "नियमविधिजलानां बर्हिषां चोपनेत्री" कुमा० ।

**उपनेत्र** न० उपगतं नेत्रम् अत्या० स० । नेत्रसमीपे धार्य्ये काचादिनिर्मिते नेत्रतिमिरोपकारके द्रव्यभेदे (चसमा)

**उपन्यास** पु० उप+नि+अस—घञ् । १वाक्योपक्रमे २वाक्यप्रयोगे उपचारच्छलशब्दे उदा० । "तस्माद्ब्रह्मजिज्ञासोपन्यासमुखेन" शारी० भा० । "मालविकायामयमुपन्यासः शङ्कयति" मालवि० । २विचारे "शृणुध्वमुपन्यासं निबोधत" मनुः । "उपन्यासं विचारम्" कुल्लू० ।

४विद्यादिनान्यसमीपे स्वद्रव्यन्यासे उपनिधौ च ।

**उपपति** पु० उपमितः पत्या उपमि० स० । जारे । "उपपतिरिव नीचैः पश्चिमान्तेन चन्द्रः" माघः । तस्य पतिवत् स्त्रिया रतिहेतुत्वात्तत्समत्वम् । "यस्य चोपपतिर्गृहे" "सहन्ते ये चोपपतिम्" मनुः "लभते जारं गेहायोपपतिम्" यजु० २०,९ । गुप्तव्यभिचारमात्रे जारत्वम् पतिसमीपे तस्य गेहस्थितस्य व्यभिचारे उपपतित्वमित्यनयोर्भेदः ।

**उपपत्ति** स्त्री उप+पद-क्तिन् । १युक्तौ, २सङ्गतौ ३हेतौ च "श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः" "उपपत्तिभिर्हेतुभिरिति मथुरानाथः । "उपपत्तिमदूर्जितं वचः" "प्रियेषु यैः पार्थ ! विनोपपत्तेः" किरा० । "अन्यथा यक्ष्यमाणस्यानुपपत्त्यानुपपत्तितः" भाषा० । "विवक्षितगुणोपपत्तेः" शा० सू० । "उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च हेतुस्तात्पर्यनिर्णये" इत्युक्तलक्षणा: प्रकरणप्रतिपाद्यार्थनिर्णायकत्वं यथा । छान्दोग्ये ६प्र० "यथा सोम्यैकेन मृत्पिण्डेन विज्ञातेन सर्वं मृण्मयं विज्ञातं भवति वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इत्यादिना विकारमात्रस्य वाचारम्भणकत्वरूपा युक्तिः । ४उपाये च "कथोपपत्तिं समनापरोऽपराम्" माघः । "अपेक्षिताभ्योऽन्यकोपपत्तिभिः" माघः । ५प्राप्तौ ६सिद्धौ च "सार्थोपपत्तिं प्रति दुर्बलाशः" "अर्थस्य प्राक् तनयोपपत्तेः" रघुः । युक्तयश्च नानाविधाः सुश्रुते दर्शिताः ताश्च तन्त्रयुक्तिशब्दे दर्शयिष्यन्ते । "असद्वादिप्रयुक्तानां वाक्यानां प्रतिषेधनम् । स्ववाक्यसिद्धिरिति च क्रियते तन्त्रयुक्तिभिः" सुश्रुते तत्फलमुक्तम् ।

**उपपद** न० उपोच्चारितं पदम् प्रा० स० । समीपोच्चारिते पूर्वसमार्थे शब्दे "तस्याः सराजोपपदं निशान्तम्" रघुः । "कान्ति कन्योपपदाद्येव" माघः । राजनिशान्तं राजगृहम् इत्यर्थः । २नामोत्तरमुच्चारिते शर्मवर्म्मादिरूपे शब्दे, (उपाधि) व्याकरणे प्रत्ययादिविधायकसूत्रे ३सप्तम्यन्तपदेन निर्दिश्यमाने पदे च । यथा कर्मण्यण् इत्यादौ कर्मणीति सप्तम्यन्तं पदम् अण्प्रत्ययविधाने उपपदम् । "उपपदमतिङ्" पा० । "गतिकारकोपपदानां कृद्भिः समासवचनं प्राक् सुबुत्पत्तेः" वार्त्ति० उक्तेः कुम्भकार इत्यादौ सुबुत्पत्तेः प्राक् समासे उपपदसमासः । उपपदेन समीपस्थपदेन योगे विभक्तिरुपपदविभक्तिः "उपपदविभक्तेः कारकविभक्तिर्गरीयसीति" व्या० प०

**उपपन्न** त्रि० उप+पद–क्त । १युक्तियुक्ते, "उपपन्नं ननु शिवमिति" रघुः । २प्राप्ते च "अतीन्द्रियेष्वप्युपपन्नदर्शनः" रघु. ३गतोगुणान्तराधानरूपसंस्कारयुक्ते "अपत्यं निर्गुणः पितृद्रोही नात्युपपन्नसंस्कारः" दशकुमा० ४उत्पन्ने च ।

**उपपात** पु० उप+पत–घञ् । १दैवादागतौ २नाशोन्मुखत्वे ३नाशे च । "कर्मोपपाते प्रायश्चित्तं तत्कालम्" कात्या० २५,१,१। "उपपातो विनाशोऽभ्येव इत्यनर्थान्तरम्" कर्कः ।

**उपपातक** न० पातयति नरके पत–णिच्–ण्वुल् उप अल्पार्थे प्रा० स० । पातकशब्दे ततोन्यूनफलके पापभेदे । "महापातकतुल्यानि पापान्युक्तानि यानि तु । तानि पातकसंज्ञानि तन्न्यूनमुपपातकमिति" पैठीनसिः । पतनञ्च "द्विजातिकर्मभ्यो हानिः पतनं परलोकासिद्धिस्तमेके नरकम्" गौतमोक्तम् । तस्य न्यूनत्वञ्चाल्पफलदातृत्वेन तच्चाल्पफलदातृत्वमाङ्गिराः "पातके तु शतं स्यात् महत्सु द्विगुणं तथा । उपपाते तुरीयं स्यात् नरके वर्षसंख्यया" ।

येन येन कर्मणा च तज्जन्यते तन्निरूपितं प्रा० वि० । तत्र मनुः । "गोवधोऽयाज्यसंयाज्यपारदार्य्यात्मविक्रयः । पितृमातृगुरुत्यागः स्वाध्यायाग्न्योः सुतस्य च । परिवित्तिता नुजेन परिवेदनमेव च । तयोर्दानञ्च कन्यायास्तयोरेव च याजनम् । कन्याया दूषणञ्चैव वार्द्धुष्यं व्रतच्युतिः । तडागारामदाराणामपत्यस्य च विक्रयः । व्रात्यता बान्धवत्यागो भृताध्यापनमेव च । भृताच्चाध्ययनादानमपण्यानाञ्च विक्रयः । सर्व्वाकरेष्वधीकारो महायन्त्रप्रवर्त्तनम् । हिंसौषधीनां स्त्र्याजीवोऽभिचारो मूलकर्म च । इन्धनार्थमशुष्काणां द्रुमाणामवपातनम् । आत्मार्थञ्च क्रियारम्भो निन्दितान्नादनं तथा । अनाहिताग्निता स्तेयमृणानामनपक्रिया । असच्छास्त्राधिगमनं कौशीलव्यस्य च क्रिया । धान्यकुप्यपशुस्तेयं मद्यपस्त्रीनिषेवणम् । स्त्रीशूद्रविट्क्षत्रवधो नास्तिक्यञ्चोपपातकम्" । "अस्यार्थः । अयाज्यसंयाज्यमिति प्रतिपदाध्यापनरूपयति । त्यागो योगक्षेमाकरणम् । अनिमित्तस्वाध्यायत्यागोऽधीतवेदविस्मरणम् । अग्नित्याग श्राद्धादिना । सुतत्यागः पोषणविनयाधानाद्यकरणेन चकाराद्भार्य्यात्यागोऽपि । परिवित्तिता कनिष्ठस्य भ्रातृदाराग्निहोत्रसंयोगे सति ज्येष्ठस्य भ्रातृदाराग्निहोत्रसंयोगप्रागभावः । कनिष्ठस्य परिवेदनं, चकारात् कन्याया अपि तथाभूतायाः परिवेदनीयत्वम् । परिवित्तिपरिवेत्त्रोर्वरत्वेन कन्यादानम् । तयोरेव विवाहादौ ऋत्विक्कार्य्यमिति । कन्याया दूषणमकन्येत्युक्तिः अङ्गुल्या योनिविदारणं वा

वार्द्धुषिकत्वं ब्राह्मणक्षत्रिययोः । व्रतच्युतिरवकीर्णित्वम् । दाराणामपि परिणीतानामपि विक्रयः । अपत्यस्यानेकविधस्य । व्रात्यता यथाकालमनुपनयनमसोमयाजित्वञ्च । बान्धवत्यागो बान्धवस्य पितृव्यादेरनिमित्तत्यागः । भृतकाध्यापनम् मूल्येन वेतनादिना विद्यार्पणम् । भृताच्च वेतनपरिच्छिन्नाद्वेदादि विद्याग्रहणम् । अपण्यानां लाक्षादीनां सकृत्, गोरसादीनां चासकृत्, ब्राह्मणेन विक्रयः । सर्वाकरेषु सुवर्णाद्युत्पत्तिस्थानेषु नियोगः । तैलादियन्त्रस्य महतो जलादियन्त्रस्य च प्रवर्त्तनम् । धान्यादीनां तथा कर्षापणं स्त्रियार्जितधनजीवनम् । अभिचारः परहिंसार्थं जपादिकर्म, मूलकर्म वशीकरणं मूलादिक्रिया । इन्धनार्थम् द्रुमाणामशुष्काणां छेदनम् । आत्मार्थं पाकक्रिया न वैश्वदेवाद्यर्था । लशुनकवकाद्यन्नभक्षणम् । साग्नेरपि श्रौतस्मार्त्ताग्न्यपरिग्रहः । स्तेयं हेमनराश्वरजतभूमिमणिनिक्षेपेतरद्रव्यहरणम् । देवर्षिपितृसम्बन्धिन ऋणस्यानपशोधनम् । असच्छास्त्राभिगमनम् पाषण्डशास्त्राभ्यासः । कुशीलवस्य कर्म तौर्य्यत्रिकं तस्य सततानुष्ठानम् । कुप्यस्यासारद्रव्यस्य ताम्रकांस्यादेः स्तेयम् मद्यपस्त्रिया मद्यपायाश्च स्त्रिया निषेवणम् ब्राह्मणेन । स्त्रियाः शूद्रवैश्यक्षत्रियाणाञ्च वधः । नास्तिक्यं नास्ति परलोक इति व्यवसितिः । उपपातकमेकैकम् "एकैकमुपपातकमिति" याज्ञवल्क्यवचनात् । एवञ्च गोवधादिनास्तिक्यान्तानि पञ्चाशदुपपातकानि । विष्णुना "अनृतवचनसत्कर्षे राजगामि च पैशुन्यम् । गुरोश्चालीकनिर्बन्धः वेदनिन्दाऽधीतस्य च त्यागः" इत्यादीनि च महान्ति उक्त्वा "उपपातकिनस्त्वेते कुर्युश्चान्द्रायणं नराः" इति उपपातके दर्शितम् । तत्र अनृतादिभाषणं परापकारव्यतिरेकेणात्मन उत्कर्षख्यापनं तथा राज्ञः पुरतः परापकारव्यतिरेकेण परदोषकीर्त्तनम् । गुरवश्चालीकदानादिना अभियोगाभिशंसनम् । तथा परिहासादिना वेदनिन्दा तथाऽनभ्यासाभियोगेनाधीतवेदविस्मरणञ्च यद्यपि तदुपपातकं गुरूणां पुनरेतेषां मनुनाऽनुपातके दर्शितत्वात् । अन्यानि चोपपातकानि स्मृत्यन्तरेऽनुसन्धेयानि" ।

"गोवधोऽव्रात्यतास्तेयमृणानाञ्चानपक्रिया । अनाहिताग्निताऽपण्यविक्रयः परिवेदनम् । भृताद्ध्ययनादानं भृतकाध्यापनन्तथा । पारदार्यं पारिवित्त्यं वार्द्धुष्यं लवणक्रिया । स्त्रीशूद्रविट्क्षत्रवधो निन्दितार्थोपजीवनम् । नास्तिक्यं व्रतलोपश्च सुतानाञ्चैव विक्रयः । धान्यकुप्यपशुस्तेयमयाज्यानाञ्च याजनम् । पितृमातृसुतत्यागस्तडागारामविक्रयः । कन्यासन्दूषणञ्चैव परिवेदकयाजनम् । कन्याप्रदानन्तस्यैव कौटिल्यं व्रतलोपनम् । आत्मनोऽर्थे क्रियारम्भो मद्यपस्त्रीनिषेवणम् । स्वाध्यायाग्निसुतत्यागो बान्धवत्याग एव च । इन्धनार्थं द्रुमच्छेदः स्त्रीहिंसौषधजीवनम् । हिंस्रयन्त्रविधानञ्च व्यसनान्यात्मविक्रयः । शूद्रप्रेष्यं हीनसख्यं हीनयोनिनिषेवणम् । तथैवानाश्रमे वासः परान्नपरिपुष्टता । असच्छास्त्राधिगमनमाकरेष्वधिकारिता । भार्याया विक्रयश्चैषामेकैकमुपपातकम्" या० । "गोवधो गोपिण्डव्यापादनम् । कालेऽनुपनीतत्वं व्रात्यता । ब्राह्मणसुवर्णतत्समव्यतिरिक्तपरद्रव्यापहरणं स्तेयम् । गृहीतस्य सुवर्णादेरदानमृणानामनपाकरणम् तथा देवर्षिपितॄणां सम्बन्धिनामृणानामनपाकरणञ्च । सत्यधिकारे अनाहिताग्नित्वम् । ननु ज्योतिष्टोमादिकामश्रुतयः स्वाङ्गभूताग्निनिष्पत्त्यर्थमाधानमप्युपक्षिपन्ति इति मीमांसकप्रसिद्धिरतश्च यस्याग्निभिः प्रयोजनन्तस्य तदुपायभूताधाने प्रवृत्तिर्यस्याप्यर्थिनस्तु धनार्जने यस्य पुनरग्निभिः प्रयोजनं नास्ति तस्याप्रवृत्तिरिति कथमनाहिताग्निता-दोषः उच्यते । अग्न्याधानस्यावश्यकत्ववचनान्नित्यश्रुतयोऽपि साधिकारत्वाविशेषादाधानस्य प्रयोजिका इति श्रुतिकाराणामभिप्रायो ऽतस्तत्र दोषः । तथा अपण्यस्य लवणादेर्विक्रयः । सोदरस्य ज्येष्ठस्य तिष्ठतः कनीयसोऽनुदाराग्निसंयोगः परिवेदनम् । वेतनपूर्व्वाध्यापकादध्ययनग्रहणम् । वेतनपूर्व्वाध्यापनम् । परदारसेवनञ्च स्वदारतल्पव्यतिरेकेण । पारिवित्त्यं कनीयसि कृतविवाहे ज्येष्ठस्य विवाहराहित्यम् । वार्द्धुष्यम् प्रतिषिद्धवृद्ध्युपजीवित्वम् । लवणक्रिया लवणस्योत्पादनम् । स्त्रियावधो ब्राह्मण्या अपि आत्रेयीव्यतिरेकेण । शूद्रवधः । अदीक्षितविट्क्षत्रवधः निन्दितार्थोपजीवनम् वाराङ्गनाद्यर्पितार्थोपजीवनम् । नास्तिक्यं नास्ति परलोक इत्याद्यभिनिवेशः । व्रतलोपो ब्रह्मचारिणः स्त्रीप्रसङ्गः । सुतानामपत्यानां विक्रयः धान्यं व्रीह्यादि कुप्यमसारद्रव्यन्त्रपुसीसादि पशवो गवादयस्तेषामपहरणम् । "गोवधो व्रात्यतास्तेयम्" इत्यनेन स्तेयग्रहणेनैव सिद्धे पुनर्धान्यकुप्यादिस्तेयग्रहणं निन्दार्थमतो धान्यादिव्यतिरिक्तद्रव्यस्तेये नावश्यमेतदेव प्रायश्चित्तमपि तु ततोऽन्यूनमपि भवतीति । एतेन बान्धवत्यागपक्षे-

नैव विधिं पुनः । पित्रादित्यागस्वरूपं व्याख्यातम् । अयाज्यानामुक्तजातिकर्मदुष्टानां शूद्रव्रात्यादीनां याजनम् । पितृमातृसुतानामपतितानां त्यागो ऽस्वाधिप्रकाशनम् । तडागस्यारामस्य चोद्यानोपवनादेर्विक्रयः । कन्याया दूषणमङ्गुल्यादिना योनिविदारणं न तु सम्भोग तस्य "सखिभार्य्या कुमारीष्विति" गुरुतल्पसमत्वस्योक्तत्वात् । परिविन्दकयाजनं तस्य च कन्याप्रदानम् । कौटिल्यमङ्गुरोरन्यत्र गुरुविषयस्य तु कौटिल्यस्य सुरापानसमत्वस्योक्तम् । पुनर्व्रतलोपस्वरूपं शिष्टाप्रतिषिद्धेष्वपि हविरचरणकमधुप्रेषणात्माशन्त्र्यूनादिकस्य भक्षणमिति एवंरूपेषु प्राप्तार्थं न तु स्नातकव्रतप्राप्त्यर्थं तत्र "स्नातकव्रतलोपे च प्रायश्चित्तम् अभोजनमिति" मनुना लघुप्रायश्चित्तस्य प्रतिपादितत्वात् । आत्मार्थञ्च पाकस्य पचनक्रियारम्भः "अघं स केवलम्भुङ्क्ते यः पचत्यात्मकारणादिति" तस्यैव प्रतिषिद्धत्वात् । क्रियामात्र विषयत्वे तु प्रतिषेधकल्पनागौरवं स्यात् । मद्यपायाः स्त्रियोऽजायाया अपि निषेवणमुपभोगः । स्वाध्यायत्यागो व्याख्यातः अग्नीनाञ्च श्रौतस्मार्त्तानान्त्यागः सुतत्यागः संस्काराद्यकरणम् । बान्धवानाम्पितृव्यमातुलादीनान्त्यागः सति विभवे अपरिरक्षणम् । पाकादिदृष्टप्रयोजनसिद्ध्यर्थमार्द्रद्रुमच्छेदेन त्वाहवनीयपरिरक्षणार्थमपि । स्त्रिया हिंसया औषधेन च जीवनं वर्त्तनं स्त्रीहिंसौषधजीवनम् । तत्र स्त्रीजीवनं नाम भार्य्याम्पण्यभावेन प्रयोज्य तल्लब्धोपजीवनम् स्त्रीधनोपजीवनं वा । हिंसया जीवनम्प्राणिवधेन जीवनम् । औषधजीवनं वशीकरणेन । हिंस्रयन्त्रस्य तिलेक्षुपीडनकरस्य प्रवर्त्तनम् । व्यसनानि मृगयादीन्यष्टादश । आत्मविक्रयो द्रव्यग्रहणेन परदासकरणम् । शूद्रसेवनं हीनेषु मैत्रीकरणम् । अनूढसवर्णदारस्य हीनवर्णदारोपयमनम्, साधारणस्त्रीसम्भोगश्च । अनाश्रमे वासः आश्रमहीनत्वमित्यम् । परपाकरतित्वम् । असच्छास्त्रस्य चार्वाकादि ग्रन्थस्याधिगमः । सर्वाकरेषु सुवर्णाद्युत्पत्तिस्थानेषु राजाज्ञयाधिकारित्वम् । भार्य्याया विक्रयः । चशब्दादन्याद्युक्ताभिचाराऽनृतपूर्व्वकगुणादिभक्षणादेर्ग्रहणम् । एषां गोवधादीनामेतेषामुपपातकसंज्ञा वेदितव्या" मिता० । उपपातकञ्च ।"जलोदरं यकृत्प्लीहाम्लरोगव्रणानि च । श्वासजीर्णज्वरश्छर्दिर्भ्रममोहगलग्रहाः । रक्तार्बुदविसर्पाद्या उपपापोद्भवा गदाः" शाता० ।

**उपपातिन्** त्रि० उप+पत–णिनि स्त्रियां ङीप् । १हठादागते । २अतर्कितोपस्थिते च । "रन्ध्रोपपातिनोऽनर्थाः" हितो० ।

**उपपाद** पु० उप+पद–घञ् । १उपपत्तौ । उपगतः पादम् अत्या० स० । २पादोपगते त्रि० । स्त्रियां गौरा० ङीष् ।

**उपपादक** त्रि० उपपादयति उप+पद–णिच्–ण्वुल् । उपपत्तियुक्तकारके पद-ण्वुल् । उपपत्तियुक्ते २युक्तियुते च ।

**उपपादन** न० उप+पद+णिच् ल्युट् । १युक्त्या समर्थने २सम्यक्प्रतिपादने ३प्राप्तियुक्तकरणे च । "लोहपिण्डं यथा वह्निः प्रविश्य ह्यतिपादयेत् । तथा त्वमपि जानीहि गर्भे जीवोपपादनम्" भा० आश्व० १८अ० ।

**उपपादित** त्रि० उप+पद–णिच्–क्त । १युक्त्या समर्थिते, "उपपादितञ्चैतत् पुरस्तात्" जग० २सम्यक्प्रतिपादिते च

**उपपादुक** त्रि० उपपद्यते उप+पद–उकञ् । दृष्टकारणनिरपेक्षतया अदृष्टमात्रसहकृतेभ्योऽणुभ्यो जायमाने देवदेहे नारकिदेहे च "हेम० दिव्योपपादुका देवाः" अमरः ।

**उपपाद्य** त्रि० उप+पद–णिच्–यत् । १युक्त्या समर्थनीये २प्रतिपाद्ये च । ल्यप् । २उपपत्तियुक्तं कृत्वेत्यर्थे अव्य० ।

**उपपुर** न० समीपस्थं पुरं प्रा० स० । पुरसमीपस्थे शाखानगरे । उपपुरे भवः अण् उत्तरपदवृद्धिः । औपपौर तद्भवे त्रि० ।

**उपपुराण** न० उपगतमनुगतं पुराणम् अत्या० स० । व्यासोक्तादशपुराणसदृशेषु नानामुनिप्रणीतेषु नानाविधेषु पुराणेषु । तानि यथा । आद्यं सनत्कुमारोक्तं नारसिंहमतः परम्२ । तृतीयं वायवीयञ्च ३कुमारेणानुभाषितम् । चतुर्थं शिवधर्माख्यं ४ साक्षान्नन्दीश भाषितम् । दुर्वाससोक्तमाश्चर्य्यं ५ नारदीयमतः परम्६ । नन्दिकेश्वरयुग्मञ्च७, ८तथैवोशनसेरितम्९, कापिलं वारुणं१० शाम्बं ११ कालिकाह्वयमेव च १२ । माहेश्वरं १३ तथा पाद्मं १४ दैवं १५ सर्व्वार्थसाधकम् । पराशरोक्तमपरं १६ मारीचं १७ भास्कराह्वयम् १८ । मत्स्य० कूर्मपु० । हेमाद्रौ तु एतद्भिन्नक्रमतया पठितम् यथा "अन्यान्युपपुराणानि मुनिभिः कथितानि तु । आद्यं सनत्कुमारोक्तं नारसिंहमतःपरम् । तृतीयं नारदप्रोक्तं कुमारेण तु भाषितम् । चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम् । दुर्वाससोक्तमाश्चर्य्यं नारदोक्तमतःपरम् । कापिलं मानवं चैव तथैवोशनसेरितम् । ब्रह्माण्डं वारुणं चाथ कालिकाह्वयमेव च । माहेश्वरं तथा साम्बं सौरं सर्वार्थसञ्चयम् पराशरोक्तमपरं तथा भागवताह्वयम् । इदमष्टादशं प्रोक्तं पुराणं कौर्मसंज्ञितम् । चतुर्धा संस्थितं पुण्यं संहितानां प्रभेदतः" । अत्र मुद्रितपुस्तके भागवत

द्वयमिति पाठोऽसङ्गत उपपुराणेषु भागवतद्वयाप्रसिद्धेः। तच्चाग्रे व्यक्तीभविष्यति। पुराणोपपुराणलक्षणं च १२स्क० भागवते सामान्यत उक्तं यथा "सर्गोऽस्याथ विसर्गश्च वृत्तीरक्षान्तराणि च । वंशो वंशानुचरितं संस्था हेतुरपाश्रयः । दशभिर्लक्षणैर्युक्तं पुराणं तद्विदो विदुः । केचित् पञ्चविधं ब्रह्मन् । महदल्पव्यवस्थया"। "अव्याकृतगुणक्षोभान्महतस्त्रिवृतोऽहमः । भूतसूक्ष्मेन्द्रियार्थानां सम्भवः सर्ग१ उच्यते । पुरुषानुगृहीतानामेतेषां वासनामयः । विसर्गोऽयं २समाहारो बीजाद्बीजं चराचरम् । वृत्ति३र्भूतानि भूतानां चराणामचराणि च । कृता तेन नृणां तत्र कामाच्चोदनयापि वा। रक्षा४ऽच्युतावतारेहा विश्वस्यानुयुगे युगे । तिर्य्यङ्मर्त्त्यर्षिदेवेषु हन्यन्ते यैस्त्रयीद्विषः । मन्वन्तरं ५मनुर्देवा मनुपुत्राः सुरेश्वराः । ऋषयोऽंशावताराश्च हरेः षड्विधमुच्यते । राज्ञां ब्रह्मप्रसूतानां वंशस्त्रैकालिकोऽन्वयः६। वंशानुचरितं ७तेषां वृत्तं वंशधराश्च ये । नैमित्तिकः प्राकृतिको नित्य आत्यन्तिको लयः । संस्थेति ८कविभिः प्रोक्तश्चतुर्द्धास्य स्वभावतः। हेतु९र्जीवोऽस्य सर्गादेरविद्याकर्मकारकः । यं चानुशयिनं प्राहुरव्याकृतमुतापरे । व्यतिरेकान्वयौ यस्य जाग्रत्स्वप्नसुषुप्तिषु । मायामयेषु तद्ब्रह्म जीववृत्तिष्वपाश्रयः १०। पदार्थेषु यथा द्रव्यं तन्मात्रं रूपनामसु । बीजादिपञ्चतान्तासु ह्यवस्थासु युतायुतम् । विरमेत यदा चित्तं हित्वा वृत्तित्रयं स्वयम् । योगेन वा तदात्मानं विदेहात्मा निवर्त्तते । एवंलक्षणलक्ष्याणि पुराणानि पुराविदः । मुनयोऽष्टादश प्राहुः क्षुल्लकानि महान्ति च" । अत्र क्षुल्लकानीत्युक्तेः उपपुराणस्यापि उक्तदशलक्षणत्वं पञ्चलक्षणादिमत्त्वं बोध्यम् । तेषाञ्च संख्यादिनिरूपणम् पञ्चलक्षणवत्त्वञ्च मत्स्यपुराणे उक्तं यथा । "पाद्मे पुराणे या प्रोक्ता नरसिंहोपवर्णना । तच्चाष्टादश साहस्रं नारसिंहमिहोच्यते । नन्दाया यत्र माहात्म्यं कार्त्तिकेयेन वर्ण्यते । नन्दीपुराणं तल्लोके व्याख्यातमिति कीर्त्त्यते । यत्र साम्बं पुरस्कृत्य भविष्यति कथानकम् । प्रोच्यते तत्पुनर्लोके साम्बमेव मुनिव्रताः ! । एवमादित्यसंज्ञञ्च तत्रैव परिपठ्यते" इत्युपक्रम्य अष्टादशभ्यस्तु पृथक् पुराणं यत् प्रदिश्यते । विजानीध्वं द्विजश्रेष्ठास्तदेतेभ्यो विनिर्गतम् । पञ्चाङ्गञ्च पुराणं स्यादाख्यानमितरत् स्मृतम् । सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंशानुचरितञ्चेति पुराणं पञ्चलक्षणम् । ब्रह्मविष्ण्वर्करुद्राणां माहात्म्यं भुवनस्य च । ससंहार प्रदृश्येत पुराणे पञ्चवर्णिता । धर्मश्चार्थश्च कामश्च मोक्षश्च परिकीर्त्त्यते । सर्वेष्वपि पुराणेषु तद्विरुद्धे च यत्फलम् । सात्त्विकेषु च कल्पेषु माहात्म्यमधिकं हरेः । राजसेषु कल्पेषु च माहात्म्यं ब्रह्मणो विदुः । तद्वदग्नेश्च माहात्म्यं तामसेषु शिवस्य च । सङ्कीर्णेषु सरस्वत्याः पितृणाञ्च निगद्यते"। "हेमाद्रौ कालिकापुरा० अस्य किंमूलकत्वमिति प्रश्नप्रस्तावे नारसिंहस्य पाद्ममूलकत्वमुक्त्वा "इदम् यत् कालिकाख्यन्तु मूलं भागवतन्तु तत्" इत्युक्तं तत्र भागवतं तस्य कालिकाख्यस्य मूलमित्यर्थः । भागवतशब्देनात्र देवीभागवतं ग्राह्यं तयोरुभयोरपि कालिकादेवीमाहात्म्यकीर्त्तनेन एकदेवताप्रतिपादकत्वेन एकमूलत्वौचित्यात् । न तु वैष्णवभागवतं तस्य विष्णुदेवताकत्वेनैकदेवताकत्वाभावेन तन्मूलत्वासम्भवात् । एवञ्च देवीभागवतमेव महापुराणमिति केचित् । विष्णुभागवतमेव महापुराणमिति तु बहवः । तत्र हेमाद्रौ मत्स्यपुरा० "वृत्तासुरवधोपेतं तद्भागवतमुच्यते । सारस्वतस्य कल्पस्य मध्ये ये स्युर्नरामराः । तद्वृत्तान्तोद्भवं लोके तद्भागवतमुच्यते । लिखित्वा तच्च यो दद्याद्धेमसिंहसमन्वितम् । पौर्णमास्यां प्रौष्ठपद्याम् स याति परमं पदम् । अष्टादश सहस्राणि पुराणं तत् प्रकीर्त्तितम्" इति महापुराणान्तर्गतभागवतलक्षणमुक्तं वैष्णवे भागवते तु सारस्वतकल्पोद्भवनरादिकथाऽभावात् तल्लक्षणाऽभावेन नैतत् महापुराणं किन्तु उपपुराणम् । देवीभागवतं तु सारस्वतकल्पोद्भवनरादिकथावर्णनेन उक्तलक्षणवत्त्वेन महापुराणमिति पूर्वेषामाशयः । देवीभागवतं विष्णुभागवतञ्चोभयमपि अष्टादशसाहस्रं द्वादशस्कन्धयुक्तञ्चेति द्वयोर्महापुराणत्वसंशये विष्णुभागवतस्य तथात्वे बहूनां विवादात् तन्निर्णयाय देवीभागवतटीकायां यथा व्यवस्थापितं तत् प्रदर्श्यते "तत्र तावत् पुराणेषु भागवतद्वयं प्रसिद्धमेकं महापुराणान्तर्गतमपरमुपपुराणान्तर्गतं लोकेऽप्युपलभ्यमानयोर्देवीभागवतनाम्ना विष्णुभागवतनाम्ना चास्त्येव तत्रैकं महापुराणान्तर्गतमन्यदुपपुराणान्तर्गतमित्यपि निर्विवादमेव । तथापि किं देवीभागवतं महापुराणमन्यदुपपुराणमथ वा विष्णुभागवतं महापुराणमन्यदुपपुराणमिति संशये केचिद्विष्णुभागवतमेव महापुराणमिति वदन्ति केचिद्देवीभागवतमेव महापुराणमिति वदन्ति । तत्र प्रथमपक्षैकदेशिनः केचिदुपपुराणेषु द्वितीयस्भागवतं नास्त्येव महापुराणेष्वेवैकं भागवतं प्रसिद्धं तच्च विष्णु

भागवतमेव न देवीभागवतं देवीभागवतं तु निर्मूलमेवेति वदन्ति। द्वितीयपक्षैकदेशिनोऽपि विष्णुभागवतं बोपदेवकृतमिति वदन्ति। वस्तुतस्तूभयोरपि पुराणयोः पुराणमतभेदेन महापुराणत्वमुपपुराणत्वञ्च। ननु पुराणेषु वैष्णवभागवतं प्रसिद्धं न तूपपुराणेषु द्वितीयमस्तीति चेन्न कूर्मगरुडपाद्मादिषु द्वितीयस्य स्पष्टपरिगणनात् तथा हि हेमाद्रौ दानप्रस्तावे कूर्मपुराणे' अष्टादश पुराणान्युक्त्वा "अन्यान्युपपुराणानि मुनिभिः कथितानि तु। आद्यं सनत्कुमारोक्तं नारसिंहमतः परमित्यादि' पराशरोक्तं प्रवरं तथा भागवतद्वयमिति" तथा गारुडे तत्त्वरहस्ये द्वितीयांशेऽष्टमकाण्डे प्रथमाध्याये प्रथमतो महापुराणानां सात्त्विकादिभेदेन विभागमुक्त्वा लघुपुराणानां सात्त्विकादिभेदेन विभागप्रदर्शनपरे ग्रन्थेऽप्युक्तं "पुराणं भागवतन्दौर्गं नन्दीप्रोक्तं तथैव च। पाशुपतं रैणुकञ्च भैरवं च तथैव चेति"। तथा तत्पूर्वमपि "विष्णुधर्मोत्तरं चैव तथा भागवतन्तथेति"। तन्त्रभागवतन्तथेति पाठेऽपि तन्त्रशास्त्रनिर्णयः तद्विशेषणेन चोपमत्वं सूचितं तथा पाद्मे प्रकृतपरीक्षायां "ब्राह्म्याद्यं वैष्णवञ्च मार्तण्डं नारदेरितमित्यादि"। तथैव गदितं तत्र वराहाद्यापि तन्त्रथा। वाराहं ब्रह्मवैवर्तं प्रकृतेषु प्रशस्यते। शैवभागवतन्दौर्गमविष्णोत्तरमेव चेति"। तथा पाद्मे भागवतमाहात्म्ये एकोनविंशेऽध्याये उपपुराणेषु "शैवमादिपुराणञ्च देवीभागवतन्तथेति" तथा मधुसूदनसरस्वतीकृतसर्वशास्त्रार्थसंग्रहेऽप्युपपुराणमध्ये भागवतम्परिगणितं नागोजीभट्टादिभिः, धर्मशास्त्रग्रन्थेषु एवमन्यैरपि निबन्धकारैरिति। ननु देवीभागवतस्य "तत्र भागवतम्पुण्यं पञ्चमं वेदसम्मितम्" इति प्रथमाध्यायस्थवचनेनाष्टादशमहापुराणेषु पञ्चममिदं पुराणमिति तस्य महापुराणत्वं बोधयतस्तस्य कथमन्यपुराणवचनमुपपुराणत्वं बोधयेदतएवं कश्चित् इदचरमिति चेन्न नारदीयशिवबायव्यादित्यपुराणानां स्वस्वेनान्यमुखेन वा महापुराणत्वेन प्रायमाणानामन्यपुराणेषूपपुराणत्वस्य व्यवस्थापनात् पुराणमतभेदेनैकस्यापि पुराणस्य महापुराणत्वोपपुराणत्वविधया तद्विरोधाभावात्। पुराणभेदेन मतभेदस्तु बहुशः प्रसिद्धः। वैष्णवपुराणेषु सात्त्विकत्वं शैवपुराणेषु तामसत्वं, वैष्णवपुराणमतेन, शैवपुराणेषु सात्त्विकत्वं, वैष्णवपुराणेषु तामसत्वं "दश शैवपुराणानि सात्त्विकानि विदुर्बुधाः। तामसानि च चत्वारि वैष्णवानि प्रचक्षते"। इति स्कान्दे शैवपुराणमतेनेत्थं प्रकारेणेति"।

ततः प्रसङ्गागतमभ्युद्धृत्य इत्याद्युपश्लोकितमिथ्यनेन पुराणे प्रतिपाद्यदेवकर्तृकवध एवाभिप्रेत इति व्यवस्थाप्य तत्रैवोक्तं यथा "देवीभागवतातिरिक्तसर्वपुराणेषु देवीकर्तृकवृत्रासुरवधो न क्वचिदस्ति इन्द्रकृतस्यैव तस्य सत्त्वात् केवलं देवीभागवत एव देवीकृतः सोऽस्ति तदुपलक्षणेन तु देवीभागवतस्यैव प्रतिदर्शितेति युक्तमेव, अनन्तरं च तत्रैव पुराणदानप्रस्तावे "ददाति स्वर्णभक्ताय यस्तु भागवतं द्विजाः। सर्वपापविनिर्मुक्तः सर्वव्याधिविवर्जितः। जीवेद्वर्षशतं चान्ते वैष्णवं पदमिति" पठितम्। अत्र च वैष्णवं भागवतमेव सङ्गीतमुचितम्। किञ्चेदं वचनं देवीभागवतपक्षे एव स्वरसतः संगच्छते प्रथमश्लोके, एकादशद्वादशस्कन्धयोश्च सविस्तरं गायत्रीविधानसहस्रनामादेः कथनात् स्कन्दस्य च गायत्रीदेवतात्वात्। श्रीभागवतपक्षे तु वैकुण्ठं गच्छेदित्येव वदेदिति किञ्च "यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः"। इत्यादिमात्स्यवचनमपि देवीभागवतस्यैव महापुराणत्वं बोधयति वेदे "त्रिपदा गायत्रीति" गायत्रीलक्षणं श्रूयते तेन च त्रिपाच्छन्दोभिरत्र यत्र धर्मविस्तरो वर्ण्यते तद्भागवतमिति तदर्थः। त्रिपाच्छन्दश्च देवीभागवते प्रथमश्लोके "सर्वचैतन्यरूपान्तामाद्यां विद्यां च धीमहि। बुद्धिं या नः प्रचोदयादिति" श्रूयते। न च विष्णुभागवते तच्छन्दोऽस्ति मुख्यार्थसम्भवे गायत्रीपदस्य लक्षणया धीमहीत्यर्थकरणेन विष्णुभागवतपरत्वकल्पनमस्य वचनस्य तु साहसमेव। क्वचित् पुराणेषु यदि तादृशान्येव विष्णुभागवतपराणि वचनानि सन्ति तत्र गत्यन्तराभावादस्तु लक्षणा उदासीने मात्स्यवाक्ये तु मुख्यविषयत्वसम्भवे साऽनुचिता। यत्तु गायत्र्यर्थश्च विष्णुध्यानं न तु शिवशक्तिसूर्यादिध्यानमित्युक्तं तत्तु नास्तिकत्वसूचकमेव मैत्रायणीयानां "महेश्वर" इति श्रुतौ प्रपञ्चसारादिसर्वतन्त्रेषु पुराणादिषु च शिवसूर्यशक्त्यादिरूपार्थस्योक्तत्वात्। किञ्च "हयग्रीवब्रह्मविद्या यत्र वृत्रवधस्तथा। गायत्र्या च समारम्भस्तद्वै भागवतं विदुरिति" पुराणान्तरवाक्यमपि देवीभागवतस्यैव महापुराणत्वबोधकं तथा हि हयग्रीवमाधुरी देवीभागवते प्रथमस्कन्धे शिवस्तेनोपासिता ब्रह्मप्रतिपादिका विद्या' स्त्रीदेवता मन्त्रः सा विद्या यत्र वर्त्तते तद्भागवतमित्यर्थः। स दैत्यकादुपासिता विद्या दैत्यवधमपि तत्रैव प्रथमस्कन्धे दर्शितम् "जपन्नेकाक्षरं मन्त्रं मायाबीजात्मकं ममेत्यादिना"। ननु विष्णुभागवते पञ्चमस्कन्धेऽपि हय-

योवमन्त्रस्य मत्त्वादिदं वचनमुभयभागवतसाधारणमिति चेत् नारदीये शारदातिलकादिनिबन्धेषु च "मन्त्राः पुंदेवताः प्रोक्ता विद्याः स्त्रीदेवताः स्मृताः" इत्यादिवचनैः स्त्रीदैवत्यमन्त्रेष्वेव विद्यापदप्रयोगो न पुंदैवत्यमन्त्रेष्विति प्रतिपादनात्"क्वचित् पुंदैवत्यमन्त्रे तथा प्रयोगस्तु गौणः न च गौणार्थमादाय तद्वचनस्य विष्णुभागवतपरत्वं कल्पयितुमुचितं लक्षणाक्लृप्तदोषापत्तेः तस्माद् तद्वचनमुभयसाधारणमिति देवीभागवतस्यैव महापुराणत्वं बोधयति किञ्च"सारस्वतस्य कल्पस्येति" शब्दश्रवणादपि देवीभागवतस्यैव महापुराणत्वं अत्र ज्ञेयं प्रकरणयुक्तिः श्रूयव ञ्चतुः।"पुराणसंख्यामाचक्ष्व सूत! विस्तरतः क्रमादिति" मुनिप्रश्नोत्तरं "ब्रह्मणाभिहितं पूर्वं यावन्मात्रं, पद्मकल्पवृत्तान्ताश्रयं पाद्मं, वराहकल्पवृत्तान्ताश्रयं वैष्णवं श्वेतकल्पवृत्तान्ताश्रयं वायवीयमित्येवं तत्तत्कल्पवृत्तान्ताश्रयाणि पुराणान्युक्त्वा तदुत्तरं "यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः इत्युपक्रम्य "सारस्वतस्य कल्पस्य मध्ये ये स्युर्नरामराः। तद्वृत्तान्तोद्भवं लोके तद्भागवतमिष्यते"इत्युक्त्वा ततोऽन्यान्यपि महापुराणान्येव तत्तत्कल्पवृत्तान्ताश्रयाणि दर्शितानि पश्चादुपपुराणकथनार्थम् "उपभेदान् प्रवक्ष्यामीति" प्रतिज्ञाय पद्मपुराणान्नारसिंहं निर्गतमेवं नन्दिपुराणादित्यसंज्ञकान्युक्त्वा अन्योपपुराणान्यपि महापुराणेभ्य एव निर्गतानीति "अष्टादशभ्यस्तु पृथक्पुराणं यत् प्रदृश्यते। विजानीध्वं द्विजश्रेष्ठास्तदा तेभ्यो विनिर्गतमिति वचनेन" सूत कथितवावान्। ततः"सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च"इत्यादिना पुराणलक्षणमुक्त्वा "सात्त्विकेषु च कल्पेषु माहात्म्यमधिकं हरेः। राजसेषु च कल्पेषु माहात्म्यं ब्रह्मणो विदुः। तद्वदग्नेश्च माहात्म्यं तामसेषु शिवस्य च। सङ्कीर्णेषु सरस्वत्याः पितॄणाञ्च निगद्यते"इति वचनेन पुराणप्रतिपाद्यहरिब्रह्माग्निहरसरस्वतीपितॄणां माहात्म्यसम्बन्धात् कल्पानां सात्त्विकराजसतामससङ्कीर्णत्वभेदेनाष्टविधत्वमुक्तवानिति तत्र कल्पानां तत्तद्देवतासम्बन्धमात्रं तु तत्तत्कल्पान्वितततत्पुराणप्रतिपाद्यमुख्यदेवताज्ञानेनैव बोध्यम् अन्यप्रकारस्य कुत्रचिदपि पुराणेषु अनुपलम्भात्। तत्रैवं सति"सारस्वतस्य कल्पस्य मध्ये ये स्युर्नरामराः इत्यादि वचनं भागवतस्य लक्षणप्रतिपादकं प्रतिपादितम्। तदर्थस्तु "यथा गारुडकल्पस्य इत्यत्र गरुडस्यायं गारुडः यथा च वाराहकल्प इत्यत्र वराहस्यायं वाराह इति व्युत्पत्तिः प्रसिद्धा तद्वदेव "सरस्वत्यास्तथा कल्पो गौरीकल्पस्तथैव चेति" कल्पनामसु सरस्वतीकल्पत्वेनैव कथितत्वात्, मत्स्यपुराणे उपान्त्याध्याये "सङ्कीर्णेषु सरस्वत्याः पितॄणां कल्प उच्यते" वचनेन तथैवोक्तत्वाच्च ब्रह्मविष्णुरुद्राणां कल्पवद्गौरीलक्ष्म्योः कल्पवच्च सरस्वतीकल्पस्यार्थतः प्राप्तत्वाच्च तादृशसारस्वतकल्पसम्बन्धिनो ये देवमनुष्यास्तद्वृत्तान्तोद्भव उत्पत्तिर्यस्मात् तत्पुराणं भागवतं विदुः तद्वृत्तान्तप्रदर्शकं यत्पुराणं तद्भागवतसंज्ञकमिति यावत्। अत्र च तत्तद्देवतानामाविर्भावाश्रया ये ये कल्पास्ते तत्तन्नाम्ना व्यपदिश्यन्ते एतच्च तत्तन्नामककल्पान्वितेषु पुराणेषु तत्तद्देवताया एव मुख्यत्वेनोत्पत्तिप्रदर्शनवाक्यैर्लक्ष्मीकल्पादिकल्पान्वितकूर्मपुराणादिषु सर्वत्र प्रसिद्धमेव तथा च मुख्यत्वेन सरस्वत्या आविर्भावप्रतिपादकं पुराणं यत्तद्भागवतमित्यतिरहस्यार्थः। तत्र सारस्वतकल्प इति पदेनैव कल्पस्य सरस्वतीसम्बन्धे बोधिते तस्य सङ्कीर्णत्वं "सङ्कीर्णेषु सरस्वत्याः" इति वचनेन ईश्वरप्रेरणां विनापि स्वतआगतमेव। अपिच वचने भागवतपदेन विष्णुभागवतस्य ग्रहणं वन्ध्यासुतोपममेव तत्र मुख्यत्वेन सरस्वत्याविर्भावस्याभावात् विष्णुभागवते द्वितीयस्कन्धे "पाद्मं कल्पमथो शृणु" इति वचनेन स्पष्टमेव तस्य पाद्मकल्पकथाश्रयत्वस्योक्तत्वात् तद्विरोधाच्च। न च पाद्मकल्प एव सारस्वतः सरस्वान् समुद्रस्तस्माज्जातं कमलं सारस्वतं तस्य कल्प इति व्युत्पत्त्येति वाच्यं "पद्मकल्पस्य वृत्तान्तं तत्र यथोदाहृतम्। तस्मात् पाद्मं समाख्यातं इति" पूर्वोदाहृतशिवपुराणवचनेन "एतदेव यदा पद्ममभूद्धैरण्मयं जगत्। तद्वृत्तान्ताश्रयं तद्वत् पाद्ममित्युच्यते बुधैः। पाद्मं तत्पञ्चपञ्चाशत्सहस्राणीह कथ्यते" इति मत्स्यपुराणवचनेन "सारस्वतस्य कल्पस्य मध्ये ये स्युर्नरामराः" इति वचनेन च पाद्मकल्पसारस्वतकल्पयोः पृथक्कथनात् किञ्च सारस्वतकल्पपाद्मकल्पयोरेकत्वे पद्मकल्पप्रतिपादकं पुराणं पाद्मं भागवतं चेत्येव वदेत् किञ्च पद्मकल्पस्य वृत्तान्तमित्यत्र "अभिव्यक्तपदार्थो ये स्वतन्त्रालोकविश्रुता" इति न्यायेन पूर्वं मुख्यार्थं प्रसिद्धं पद्मपदं विहायाप्रसिद्धं सारस्वतपदं पद्मार्थस्य वाचकं कृत्वा सारस्वतपदघटितकल्पने प्रयोजनाभावः। किञ्च "सरस्वत्यास्तथा कल्प इत्यादेः"पूर्वोक्तस्य सारस्वतपदनिरुक्त्यर्थकस्य वचनस्य तस्य विरोधश्च। न च पाद्मकल्पसारस्वतकल्पयोः पृथक्त्वे, त्रिंशत्कल्पेषु मत्स्यपुराणान्तिमाध्याये कीर्त्ति-

तेषु सारस्वतपदेन पाद्मस्य ग्रहणं न स्यादिति वाच्यम् प्रभासखण्डे त्रिंशत्कल्पेषु विष्णुजकल्पार्चिषकल्पसमुत्कल्पानां ग्रहणेऽपि तेषां कल्पानां यथा माहात्म्यानि-माध्याने न ग्रहणं तथा पाद्मस्यापि न ग्रहणमित्यस्य तुल्यत्वात् । यदि तेषां पर्य्यायत्वेन कुत्रचिदन्तर्भावः क्रियते तर्ह्यस्यापि कुत्रचिदन्तर्भावोऽस्तु अतएव विष्णुभागवतस्य प्रबन्धटीकाकारेण "पितृकल्पे एव पूर्वार्धान्ते पद्मस्योद्भवात् पितृकल्पपदेन पाद्मत्वपक्षो वेदितव्यः" इत्युक्तम् पुराणकथनप्रस्तावे सारस्वतकल्पपाद्मकल्पयोः पृथक्करणेन सारस्वतपदेन पाद्मस्य सर्व्वथा न ग्रहणम् । वस्तुतस्तु त्रिंशत्कल्पा ब्रह्मणस्त्रिंशत्तिथ्यात्मकाः त्रिंशत्तिथिषु प्रतिपदादिषूत्पद्यन्ते "भवः भुवः तपः भूर्भुवः भुव इत्यादयस्त्रिंशत्कल्पाः "पाद्मादयश्च पुराणोक्ता दिनकल्पा ब्रह्मणः प्रतिदिवसेषूत्पद्यन्ते" इति दिनकल्पतिथिकल्पानां सुतरां भेदात् तिथिकल्पेषु दिनकल्पानां पाद्मादीनां न ग्रहणमिति सिद्धान्तः । यत्तु विष्णुभागवतस्यारम्भतः पाद्मकल्पकथाश्रयत्वेऽपि कृष्णजन्मखण्डस्यैव सारस्वतकल्पभवत्वेन तस्य च दशमस्कन्धे सत्त्वात् "सारस्वतस्य कल्पस्य मध्ये ये स्युर्नरामराः इति" वचनस्य विष्णुभागवतं विषयोऽस्त्वित्याहुस्तदसत् कृष्णजन्मखण्डस्य सारस्वतकल्पभवत्वप्रतिपादकानां वचनानां निर्मूलत्वात् समूलत्वेऽपि यस्मिन् पुराणे यस्य कल्पस्य प्रथमतः प्रतिपादनं तत्कल्पप्रतिपादकमेव तत्पुराणमिति नियमः । सर्व्वपुराणे तथा दृष्टत्वात् तथा च कृष्णजन्मखण्डस्य दशमस्कन्धे विद्यमानत्वेऽपि प्रथमतस्तत्कथाया अभावात् पाद्मकल्पकथायाः प्रथमतो विद्यमानत्वस्य स्वेनैवोक्तत्वाच्च न "सारस्वतस्य कल्पस्येति" वचनस्य विष्णुभागवतं विषयः । किञ्च कृष्णजन्मखण्डस्य यथा दशमस्कन्धे कथनं तथा सर्व्वपुराणेषु तत्कथनं वर्त्तत एवेति सर्व्वपुराणानां तद्वचनविषयत्वं स्यात्तथा च सर्व्वपुराणानि भागवतपदवाच्यानि स्युस्तस्मात् सारस्वतकल्पस्य यत्र प्रथमतः प्रतिपादनं स एव तद्वचनस्य विषयो वक्तव्यस्तादृशं च देवीभागवतमेवास्तीति देवीभागवतमेव तद्विषयो वक्तव्य इति । किञ्च शिवपुराणे उमासंहितायाम् "ब्रह्मणा संस्तुता सेयं मधुकैटभनाशने । महाविद्या जगद्धात्री सर्व्वविद्याधिदेवता । द्वादश्यां फाल्गुनस्यैव शुक्लायां समभून्नृपेति" वचनात् फाल्गुनशुक्लद्वादश्यां देव्या उद्भवस्तद्दिन एव च सारस्वतकल्पोद्भवस्तदुक्तं हेमाद्रौ" कल्पाद्याप्रकरणे नागरखण्डे "सारस्वतस्तु द्वादश्यां शुक्लायां फाल्गुनस्य चेति" तथा च सरस्वत्याः कल्प इत्यर्थकस्य "सारस्वतस्य कल्पस्य मध्ये ये स्युर्नरामराः" इति वचनस्य सर्व्वथा देवीभागवतमेव विषयो न विष्णुभागवतमिति बोध्यं किञ्च तस्य ग्रहणे तस्य हरिमाहात्म्यप्रतिपादकत्वात् तदाश्रितकल्पस्य सात्त्विकत्वमेव यास्यति "सात्त्विकेष्वथ कल्पेषु माहात्म्यमधिकं हरेरिति" वचनात् । ततश्च "संकीर्णेषु सरस्वत्या" इति वचनेन सारस्वतकल्प इति नाम्ना च परमहंस्य सामग्र्येव सर्व्वथा स्यात् अतो विष्णुभागवतं विहाय देवीभागवतमेवास्य वचनस्य विषयोऽनिच्छतापि वक्तव्यस्तस्मात् सारस्वतस्य कल्पस्येति वचनात् देवीभागवतमेव महापुराणम् अस्ति चात्र सरस्वत्याविर्भावप्रतिपादकं वचनं तदुक्तं देवीभागवते प्रथमस्कन्धे "तस्यास्तु सात्त्विकी शक्ती राजसी तामसी तथा । महालक्ष्मीः सरस्वती महाकालीति ताः स्त्रियः । तासां तिसृणां शक्तीनां देहाङ्गीकारलक्षणः । सृष्ट्यर्थञ्च समाख्यातः सर्गः शास्त्रविशारदैरिति" "अम्बरीष शुकप्रोक्तं नित्यं भागवतं शृणु" इति वचनमपि शुकाय प्रोक्तमिति व्युत्पत्त्या देवीभागवतपरमपि संगच्छते । भवति हि देवीभागवतं शुकायैव प्रोक्तं व्यासेनेति । किञ्च अष्टादशपुराणानि कृत्वा सत्यवतीसुतः । भारताख्यानमखिलं चक्रे तदुपबृंहणमिति" माहात्म्यवचनमपि देवीभागवतस्यैव महापुराणत्वं बोधयति अष्टादशपुराणोत्तरं भारतस्य जातत्वात् भारतोत्तरं च विष्णुभागवतस्य जातत्वात् भारतोत्तरकालं निर्विण्णो व्यासश्चकारेति विष्णुभागवते १स्क०एवोक्तत्वात् । ननु "वेदशाखाः पुराणानि वेदान्तभारतं तथा । कृत्वा संमोहसंमूढोऽभवं राजन्मनस्यपीति" देवीभागवते तृतीयस्कन्धे एवोक्तत्वात् तत्रापि च विरोधस्तदवस्थ एवेति चेन्न मन्यते तदानीं ग्रन्थो नैव जातः किन्तु जनमेजयं प्रति एवं वक्ष्यामीति ज्ञानचक्षुषा ज्ञात्वा भारतात् पूर्व्वमेव देवीभागवतं कृतमित्यर्थस्य कल्पनात् । मन्यते तु तथा कल्पयितुं न शक्यते चतुःश्लोक्या भागवतोपदेशस्य जायमानत्वात् उपदेशात् पूर्व्वं तज्ज्ञानाभावस्यावश्यं कल्पनीयत्वात् यदि तत्रापि पूर्व्वं व्यासस्य ज्ञानमस्तीति स्वीक्रियते तदा वाक्यमात्रः सर्व्वोऽप्यर्थवादः स्यात् ततश्च पञ्चसारस्य भङ्गप्रसङ्ग इत्यास्तां तावत् । वस्तुतस्तु वेदशाखाः पुराणानीति पाठोऽशुद्ध इति मन्यते तृतीयस्कन्धे तदा न कोऽपि विरोधः । यत्तु पाद्मे भागवतमाहात्म्ये श्रीमद्भागवतकथाश्रवणाय समागतानां परिगणनप्रसङ्गे "वेदान्तानि च वेदाश्च मन्त्रास्तन्त्राणि संहिताः । दश सप्त पुराणानि षट् शास्त्राणि समाय

षुः" इत्युक्तं तत्र व्यासकृतपुराणानामष्टादशत्वादष्टादशेति वक्तव्ये सप्तदशत्वोक्तिः श्रीमद्भागवतस्याष्टादशत्वक्रमयति तस्याष्टादशानन्तर्गतत्वे देवीभागवतस्याष्टादशान्तर्गतत्वे वा अष्टादशानां श्रोतुमागतानां पुराणानां अष्टादशत्वानुक्तेर्निर्बीजत्वप्रसङ्गात् एवं पाद्मे "दश सप्त पुराणानि कृत्वा सत्यवतीसुतः । नाप्तवान्मनसा तोषं भारतेनापि भामिनि" । चकार संहितामेतां श्रीमद्भागवतीं परामिति" सप्तदशत्वोक्तिः श्रीमद्भागवतस्यैव एतां संहितामिति निर्दिष्टस्याष्टादशत्वक्रमयति देवीभागवतस्याष्टादशत्वेऽष्टादशपुराणानीत्यनुक्तेर्निर्बीजत्वप्रसङ्गादित्याद्युक्तवत् तेषामेव वचनैर्विष्णुभागवतस्याष्टादशपुराणान्तर्गतत्वं न सिद्ध्यति किन्तु देवीभागवतस्यैवेति सार्थकत्वं कुर्वाणो मूढमेव विभावितवानिति न्याय आगतः । तथा हि भारतं व्यासमुखाच्छ्रुत्वा तत्र संदिहानः क्रौष्टुकिर्मार्कण्डेयं मत्कृगत्य सन्देहं पृष्टवान् तस्मै मार्कण्डेयो मार्कण्डेयपुराणमुक्तवान् तदुक्तं मार्कण्डेयपुराणे "तदिदं भारताख्यानं बह्वर्थं श्रुतिविस्तरम् । तत्त्वतो ज्ञातुकामोऽहं भगवन्तमुपस्थितः" इति तथा च भारतोत्तरं मार्कण्डेयपुराणमभवत् तथैव त्वदुक्तरीत्यैव विष्णुभागवतमपि तथा च भारतात् पूर्वं षोडश पुराणान्येव सिद्धानि तथा च पूर्व्वोक्तवचनमध्ये षोडशेत्येव वक्तव्ये सप्तदशेत्युक्तत्वात् देवीभागवतमेव महापुराणमन्यथा सप्तदशत्वपूर्त्तिर्न स्यात् तस्मात् तद्वचनप्रामाण्याद्देवीभागवतमेव महापुराणमिति सिद्ध्यति न तु विष्णुभागवतं, भारतात् पूर्वं सप्तदश मदीयभागवतसहितानि मार्कण्डेयमष्टादशमुभयमतसिद्धमेव विष्णुभागवतस्य भारतोत्तरं जायमानत्वेन तन्मध्ये तस्यावस्थानस्यसंभावादित्येवं वा अनेनापि दोषाभावादिति सुधियो विभावयन्तु । यत्तु पाद्मे "वैष्णवं नारदीयञ्च तथा भागवतं शुभम् । गारुडञ्च तथा पाद्मं वाराहं शुभदर्शने ॥ सात्त्विकानि पुराणानि विज्ञेयानि शुभानि वै" इत्युक्त्वा भागवतस्य सात्त्विकत्वमुक्तं सात्त्विकेषु पुराणेष्विति कौर्म्मोक्त्या च सात्त्विकपुराणानां विष्णुपरत्वमुक्तम् अतो विष्णुपरमेव भागवतमष्टादशपुराणान्तर्गतं न तु देवीभागवतमिति अपि च स्कान्दे प्रभासखण्डे "चतुर्भिर्भगवान् विष्णुर्द्वाभ्यां ब्रह्मा तथा रविः । अष्टादशपुराणेषु शेषेषु भगवान् भवः" इत्युक्तं स्कान्दे सौरसंहितायां च "अथाते दशभिर्विप्राः ! पुराणैः परमेश्वरः । चतुर्भिर्भगवान् विष्णुर्द्वाभ्यां ब्रह्मा प्रकीर्त्तितः । एकेनाग्निस्तथैकेन भगवांस्तग्मभास्करः" इत्युक्तमतोऽपि विष्णुभागवतमष्टादशान्तर्गतमन्यदित्याद्युक्तवत् तन्मते मात्स्योक्तसात्त्विकराजसतामससंकीर्णपुराणेषु मध्ये त्रयाणां व्यवस्था पूर्ववचनैस्त्वयोक्ता संकीर्णपुराणानान्तु नोक्ता तेषाङ्केषु पुराणेष्वन्तर्भाव इति वद करिष्यामि कुत्रचिदिति चेत् मन्मतेऽपि श्रीभगवत्या विष्णुशक्तित्वाभिमानेन "विष्णुमन्त्राधिष्ठात्रीं देवतां वेदमातरं दुर्गां दुर्बोधध्वान्तभानुं गुरुं चेति श्रीमद्दीपिकोक्तप्रकारेण विष्णुमन्त्राणां दुर्गाया अधिष्ठातृत्वेन तयोरैक्याद्वा तत्प्रतिपादकभागवतस्य वैष्णवेष्वेवान्तर्भावात् अतएव "हरिर्द्वाभ्यां रविर्द्वाभ्यां द्वाभ्यां चण्डीविनायकौ । द्वाभ्यां ब्रह्मा समाख्यातः शेषेषु भगवान् शिवः इति वचनं सङ्गच्छते" वस्तुतस्तु द्वयोरपि भागवतयोरस्मन्मते प्रामाण्यात् विष्णुभागवतपक्षपातिनां वचनानामस्माकं विरोधाभावेन तत्खण्डने प्रयोजनाभाव एव । तथा च नारदीयादिपुराणमते श्रीविष्णुभागवतं महापुराणन्तद्वचनानि प्रसिद्धान्येवेति न लिखितानि देवीभागवतं तु तन्मते उपपुराणम् । शैवमात्स्यपुराणादिमते तु देवीभागवतं महापुराणं विष्णुभागवतमर्थादुपपुराणमिति सिद्धम्" ।

बृहन्ना० ९६ अ० महापुराणप्रतिपाद्यविषयवर्णने "श्रीब्रह्मोवाच, मारीचे ! शृणु वक्ष्यामि वेदव्यासेन यत् कृतम् । श्रीमद्भागवतं नाम पुराणं ब्रह्मसम्मितम् । तदष्टादशसाहस्रं कीर्त्तितं पापनाशनम् । सुरपादपरूपोऽयं स्कन्धैर्द्वादशभिर्युतः । भगवानेव विप्रेन्द्र ! विश्वरूपी समीरितः । तत्र तु प्रथमे स्कन्धे सूतर्षीणां समागमः । व्यासस्य चरितं पुण्यं पाण्डवानां तथैव च । पारीक्षितमुपाख्यानमितीदं समुदाहृतम् । परीक्षिच्छुकसंवादे सृतिद्वयनिरूपणम् । ब्रह्मनारदसंवादेऽवतारचरितामृतम् । पुराणलक्षणञ्चैव सृष्टिकारणसम्भवः । द्वितीयोऽयं समुदितः स्कन्धो व्यासेन धीमता । चरितं विदुरस्याथ मैत्रेयेणास्य सङ्गमः । सृष्टिप्रकरणं पश्चाद्ब्रह्मणः परमात्मनः । कापिलं साङ्ख्यमप्यत्र तृतीयोऽयमुदाहृतः । सत्याचरितमादौ तु ध्रुवस्य चरितं ततः । पृथोः पुण्यसमाख्यानं ततः प्राचीनबर्हिषः । इत्येष तुर्य्यो गदितो विसर्गे स्कन्ध उत्तमः । प्रियव्रतस्य चरितं तद्वंश्यानाञ्च पुण्यदम् । ब्रह्माण्डान्तर्गतानाञ्च लोकानां वर्णनन्ततः । नरकस्थितिरित्येष संस्थाने पञ्चमो मतः । अजामिलस्य चरितं दक्षसृष्टिनिरूपणम् । वृत्राख्यानं ततः पश्चान्मरुतां जन्म पुण्यदम् । षष्ठोऽयमुदितः स्कन्धो व्यासेन परिपोषणे । प्रह्लादचरितं पुण्यं

वर्णाश्रमनिरूपणम् । सप्तमो गदितो यत्र वासनाकर्मकीर्त्तने । गजेन्द्रमोक्षणाख्यानं मन्वन्तरनिरूपणम् । समुद्रमथनञ्चैव बलिवैभवबन्धनम् । मत्स्यावतारचरितमष्टमोऽयं प्रकीर्त्तितः । सूर्य्यवंशसमाख्यानं सोमवंशनिरूपणम् । वंश्यानुचरिते प्रोक्तो नवमोऽयं महामते ॥ कृष्णस्य बालचरितं कौमारञ्च व्रजस्थितिः । कैशोरं मथुरास्थानं यौवनं द्वारकास्थितिः । भूभारहरणञ्चात्र निरोधे दशमः स्मृतः । नारदेन तु संवादो वसुदेवस्य कीर्त्तितः । यदोश्च दत्तात्रेयेण श्रीकृष्णेनोद्धवस्य च । यादवानां मिथोऽन्तश्च मुक्तावेकादशः स्मृतः । भविष्यकलिनिर्देशो मोक्षो राज्ञः परीक्षितः । वेदशाखाप्रणयनं मार्कण्डेयतपः स्मृतम् । सौरी विभूतिरुदिता सात्वती च ततः परम्" । इत्युक्तेः विष्णुभागवत एव तेषां पदार्थानां सत्त्वात् महापुराणत्वं देवीभागवते तदभावात् न महापुराणत्वम् । एवञ्च मतभेदेन कस्यचित् पुराणत्वं कस्यचिदुपपुराणत्वं तच्च कल्पभेदादविरुद्धम् । एतेन विष्णुभागवतस्य वोपदेवकृतत्वशङ्का निर्मूलैव । वोपदेवेन "चतुरेण चतुर्वर्गचिन्तामणि वणिच्छया हेमाद्रिर्वोपदेवेन मुक्ताफलमचीकरत्" इति मुक्ताफलग्रन्थे स्वयं कथितत्वेन तस्य हेमाद्रिसभासदत्वप्रतीतेः हेमाद्रौ च नानास्थानेषु विष्णुभागवतवचनस्य प्रमाणत्वेन धृतत्वेन न तत्कृतत्वमिति प्रतिभाति ।

**उपपुष्पिका** स्त्री उपगता पुष्पमिव विकाशभावम् यत्र । ब० संज्ञायां कन् टापि अत इत्त्वम् । जृम्भायाम् (हाइतोला) हारा० तत्र हि मुखस्य पुष्पस्येव विकाशभावात् तथात्वम् ।

**उपपृच्** त्रि० उप+पृच्–क्विप् । उपरि सामीप्येन संपृक्ते "विद्मणाहिः शयत उपपृक् पृथिव्याः" ऋ० १,३२,५,

**उपपौर्णमास(सि)** अव्य० सामीप्ये अव्ययी० वा अच् समा० । पौर्णमास्याः समीपे ।

**उपप्रदान** न० उप उपाधौ तेन प्रदानम् । १उत्कोचे स्वकार्य्यसाधनार्थं तत्प्रतिबन्धकेभ्योराजभृत्यादिभ्योदाने (घुषदेओया) २सम्भ्यर्थं भृत्यादेर्दाने च हेम० "तस्योपप्रदानेन सन्धिरेव युक्तः" हितो० "उपप्रदानं क्षिप्रूनामेकं श्याकर्षणौषधम्" कठम० "साम चोपप्रदानं च भेदोदण्डश्च तत्त्वतः" रामा० । प्रलोभनार्थं ३द्रव्यदाने "उपप्रदानैर्मार्जारो हितकृत् प्रार्थ्यते नरैः" पञ्चत० । समीपे दाने च ।

**उपप्रलोभन** न० उप+प्र+लुभ–ल्युट् । १सम्यक्प्रलोभने "यस्य चोपप्रलोभनाय" दशकु० । करणे ल्युट् । २सम्यक्प्रलोभनसाधने द्रव्ये "उच्चावचानुपप्रलोभनानि" दशकु० ।

**उपप्लव** पु० उप+प्लु–अप् । गगनादुल्कापातादिरूपे १उपद्रवे, "उपप्लवाय लोकानां धूमकेतुरिवोत्थितः" कुमा० । "हदनिहित" इत्याद्युक्तेः २उत्पातस्थचके वात्यादौ "त्वाकारप्रशमितवनोपप्लवं साधु मूर्ध्ना" मेघ० । "कच्चिन्न वाय्वादिरुपप्लवोवः" रघुः ५सर्गे "त्वया दयोपप्लविनः परेभ्यः" रघुः "उपप्लविनो भयवन्तः" मल्लि० । ३विघ्ने "जीवन् पुनः शश्वदुपप्लवेभ्यः" रघुः । उपप्लवेभ्यः विघ्नेभ्यः" मल्लि० । ५औपसर्गिकात्यन्तमरकपीड़ने ६राजविप्लवे "दुर्भिक्षे चाप्युपप्लवे" कूर्म पु० । "उपप्लवे राजविप्लवे औपसर्गिकात्यन्तमरकपीड़ने" यु० त० रघु० । ७उपरोधे वेष्टने "अमेघोपप्लवे यस्य शक्रचापतडिद्गुणान्" सुश्रु० । ८चन्द्रसूर्य्ययोर्ग्रहणे "उपप्लवे चन्द्रमसोरवेश्च" स्मृतिः । ९विपत्तौ "अथ मदनवधूरुपप्लवान्तम्" कुमा० । १०समीपे प्लवने गतौ च । "तस्मीनमन्वपाद्यजनः सुसमाधीडुपप्लवे" भा० व० २२अ० । "कल्पनापोढमभ्रान्तं प्रत्यक्षं निर्विकल्पकम् । विकल्पो वस्तुनिर्भासादसंवादादुपप्लवः" इति बौद्धमतसिद्धे ११विकल्पे स च संसारिणां सविकल्पज्ञानमात्रेऽस्ति ईश्वरज्ञानं तु निरुपप्लवम् । उपप्लवति लोकानुपद्रवति उप-प्लु-कर्त्तरि अच् । १२राहौ मेदि० । "केतूपप्लवभौमसन्द्गतयः षष्ठे तृतीये शुभाः" ज्यो० त० ।

**उपप्लव्य** न० उप+प्लु–आधारे बा० यत् । १विराटनगरसमीपस्थे पुरभेदे । "उपप्लव्ये निविष्टेषु पाण्डवेषु जिगीषया" "आगम्य हास्तिनपुरादुपप्लव्यमरिन्दम" भा० आ० १अ० "ततस्त्रयोदशे वर्षे निवृत्ते पञ्च पाण्डवाः । उपप्लव्यं विराटस्य समपद्यन्त सर्व्वशः" भा० वि० ७२अ० । "विराटनगरसमीपस्थं नगरान्तरम्" नील० । "राज्ञस्तु वचनं श्रुत्वा धृतराष्ट्रस्य सञ्जयः । उपप्लव्यं ययौ द्रष्टुं पाण्डवानमितौजसः" भा० उ० २२अ० । कर्मणि यत् । २उपप्लवनीये त्रि० । आवश्यके तु ण्यत् । उपप्लाव्य अवश्यमुपप्लवनीये त्रि० ।

**उपप्लुत** त्रि० उप+प्लु–क्त । उपद्रवयुक्ते "उपप्लुतं पातुमदो मदोद्धतैः" माघः ।

**उपबन्ध** पु० उप+बन्ध–घञ् । १बन्धनदार्ढ्यार्थं तत्समीपे बन्धनान्तरबन्धने । उपमितः बन्धेन वा० स० । २पद्मासनरूपबन्धसदृशे आसनान्तरासनभेदे ३संख्याविशेषेण संबन्धप्रतिपादने च "नोदनानुपबन्धेषु च गन्धपु ग्रपबन्धाभ्याम्" कात्या० १,८,२२, "सोमस्य गन्धपुष्पैः उपबन्धाद्" कर्कः अत्र उपबन्धश्च संख्याविशेषेण सम्बन्धप्रतिपादनं तत्संख्या च शत० ब्रा० २,१,२,१८, दर्शिता यथा "अथ यदपामन्ते

क्रीणाति रसो वा आपः स रसमेवैतत् क्रीणात्यथ यद्धिरण्यं भवति स शुक्रमेवैतत् क्रीणात्यथ यद्वासो भवति सत्वचसमेवैतत् क्रीणात्यथ यदजा भवति स तपसमेवैतत् क्रीणात्यथ यद्धेनुर्भवति सा पिरमेवैतत् क्रीणात्यथ यन्मिथुनौ भवतः स मिथुनमेवैतत् क्रीणाति तं वै दशभिरेव क्रीणीयाद्दशाक्षरा वै विराड्वैराजः सोमस्तस्माद्दशभिरेव क्रीणीयाद्दशभिः" ।

**उपबर्ह** पु० उपबर्ह्यते आस्तीर्यते उप+बर्ह–स्तृतौ कर्मणि घञ् । (बालिश) १उपधाने बर्ह–हिंसायाम् भावे घञ् । २उपपीडने च ।

**उपबर्हण** न० उपबर्ह्यतेऽनेन करणे ल्युट् । १उपधाने "पुरावाप्रवाः पुराख्यायन्तो योपबर्हणेनान्यादिशा दक्षिणा" शत० ब्रा० १२,८४,१०, बर्ह हिंसायां भावे ल्युट् । २उपपीडने च

**उपबहु** त्रि० उपगता बहवो यत्र संख्यात्वेऽपि पर्युदासात् न डच् । बहुसंख्यासमीपवर्त्तिनि ।

**उपबाधा** स्त्री उप+बाध–अ । संपीडने ।

**उपबाहु** पु० उपगतो बाहुम् अत्या० । १बाहोः समीपवर्त्तिनाड़ीभेदे ततः इदमर्थे बाह्वादि० इञ् । औपबाहवि तत्सम्बन्धिनि त्रि० । सामीप्यादौ अव्ययो० । २बाहुसामीप्यादौ अव्य० ।

**उपब्द** पु० उपगतः शब्दः प्रा० स० पृषो० । "सोमाभिषवशब्दे "ग्रावाणो घ्नन्तु रक्षस उपब्दैः" ऋ० ७,१०४,१७, "उपब्दैः अभिषवशब्दैः" भा०

**उपब्दि** पु० उप+शब्द–इन् पृषो० । श्रोत्रमर्थे शब्दे "न योरुपब्दिरश्व्यः" ऋ० १,७४,७, "उपब्दिः श्रवणार्हः" भा० "मरुतां शृण्व आयतामुपब्दिः" ऋ० १,१६९,७, ततोऽस्त्यर्थे मतुप् । उपब्दिमत् श्रोत्र योग्य शब्दयुक्ते "सशब्दमविद्मत्" तैत्ति० "उच्चैरेव उपब्दिमान् बलस्य रूपम्" ऐत० ब्रा० । [सम्यग् भञ्जने २अधोभावे च ।

**उपभङ्ग** पु० उप+भञ्ज घञ् कुत्वम् । १युद्धादितः पलायने

**उपभुक्त** त्रि० उप+भुज–क्त । कृतोपभोगे वस्तुनि

**उपभुक्ति** स्त्री उप+भुज क्तिन् । उपभोगे

**उपभूषण** न० उपमितं भूषणेन उपमि० स० । घण्टाचामरादौ "घण्टाचामरकुम्भादिपात्रोपकरणादिकम् । तद्भूषणान्तरेदद्यादुपस्करतदुपभूषणम्" पु० । उपचारशब्दे१२०२पृ०दृश्यम् ।

**उपभृत्** स्त्री उप+भृ–आधारे क्विप् । आश्वत्थे यज्ञाङ्गपात्रभेदे स्रुचि "आश्व युप्रभृत्" कात्या० १,३,३५, उपभृत्संज्ञका स्रुक् आश्वत्थी" कर्कः "पाणिभ्यां जुहूं परिगृह्योपभृत्या बाजम्" ११०,९"सव्यउपभृत्" आश्व०श्र० ४,१,१ ।

**उपभोग** पु० उप+भुज–घञ् कुत्वम् । विषयभोगजन्य सुखभेदे "स्त्रीणां स्वपतिदायस्तु भोगफलः स्मृतः" दा० भा० स्मृ० । "न जातु कामः कामानामुपभोगेन शाम्यति" मनुः भारतञ्च । "आगमेनोपभोगेन नष्टं भाव्यमतोऽन्यथा" । "इह कर्मोपभोगाय तैः संचरति सोऽव्ययः" या० स्मृ० । "प्रियोपभोगचिह्नेषु पौरोभाग्यमिवाचरत्" "कृतोपभोगोत्सुकयेव लक्ष्म्या" रघुः भोगश्च विषयसंसर्गजन्यसुखभेदः । अधिकं भोगशब्दे वक्ष्यते । ततः अस्त्यर्थे इनि । उपभोगिन् तद्युक्ते त्रि० "ब्राह्मणांश्च जिघांसन्ति ब्राह्मणस्वोपभोगिनः । भा० व० १९० अ० । स्त्रियां ङीप् ॥

**उपभोग्य** उप+भुज–ण्यत् अनन्नार्थत्वे कुत्वम् । उपभोगयोग्ये वस्तुनि अन्ने तु न कुत्वम् । उपभोज्यमित्येव । "असूत सा नागवधूपभोग्यम्" कुमा० । "स्त्रियस्तत्कालोपभोग्यानि यौवनानि धनानि च" पञ्चत० । "विविधान्यन्नपानानि पुरुषा येऽनुयायिनः । ते वै स्वपोपभोज्यानि ब्राह्मणानां ददुश्च ह" भा० आनु० ८५ अ० ।

**उपभोजिन्** त्रि० उ+भुज–णिनि । उपभोगकारके । "निष्ठ्यावारयोषेषु परपाकोपभोजिषु" "उञ्छप्रवत्तिनिरतेषु भिक्षुकांस्तोपभोजिषु" स्मृ० ।

**उपम** त्रि० उपमीयते उप+मा–घञर्थे क । १उपमेये । यदं यद्विष्णोरुपमं निधायि" ऋ० ५,३,२ । "उपममुपमेयमिव" भा० । उपमीयते समीपे क्षिप्यते मि–वा० ड । २अन्तिके निरु० "यत् सेतुमुपमं समत्सु" ऋ० ७,२०,२ । "उपममन्तिकम्" भा० । ३अन्तिकस्थे त्रि० । दिवश्चिदन्ता उपमा" ऋ० १०,८,१ । "उपमान् समीपस्थान्" भा० "राजासि सृष्टेरुपमस्य पत्रेः" ऋ० ४, ४२, १ ।

**उपमद्गु** पु० "अक्रूरःसुषुवे तस्मात् श्वफल्काद्भूरिदक्षिणः । उपमद्गुस्तथा मद्गुर्मुदरश्चारिमेजयः" हरिवं० ३५ अ० इत्युक्ते श्वफल्कपुत्रे अक्रूरानुजे यदुवंश्ये क्षत्रियभेदे ।

**उपमन्त्रण** न० उप+मन्त्र–ल्युट् । आमन्त्रणे कर्त्तव्यकरणाय प्रार्थनापूर्व्वकप्रवर्त्तनारूपे व्यापारभेदे । "भासनोपसम्भाषणज्ञानयत्नविमत्युपमन्त्रणेषु वदः" पा० । "उपमन्त्रणमुपच्छन्दनम्" सि० कौ० । २उपच्छन्दने । (खोसामदी) ततः अस्त्यर्थे इनि उपमन्त्रिन् । (खोसामुदिया) उपच्छन्दनकारके नर्म्मसचिवे । "इममामुपमन्त्रिणः" ऋ० ८,११२,४ । "उपमन्त्रिणः उपमन्त्र-

कान्तोनर्म्मसचिवा इसनामुपहासयुक्तां वाचमिच्छन्ति" भा०

**उपमन्थनी** स्त्री उपमथ्यतेऽनया उप+मन्थ–करणे ल्युट् ङीप्। अग्निमन्थनसाधनद्रव्ये "चतुरौदुम्बरो भवति औदुम्बरश्चमस औदुम्बरः स्रुव औदुम्बर इध्म औदुम्बर्य्या उपमन्थन्यौ" शत० ब्रा० १४, ८, २, २१।

**उपमन्यु** पु० आयोदधौम्यशिष्ये ऋषिभेदे। "धौम्योनामासीदृषिस्तस्य त्रयः शिष्या बभूवुरुपमन्युरारुणिर्वेदश्चेति" भा० आ० तच्चरितञ्च तत्र वर्णितं यथा।

"अथापरः शिष्यस्तस्यैवायोदधौम्यस्योपमन्युर्नाम। तं चोपाध्यायः प्रेषयामास वत्सोपमन्यो! गा रक्षस्वेति। स उपाध्यायवचनादरक्षद्गाः स चाहनि गा रक्षित्वा दिवसक्षये गुरुगृहमागम्योपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे। तमुपाध्यायः पीवानमपश्यदुवाच चैनं वत्सोपमन्यो! केन वृत्तिं कल्पयसि पीवानसि दृढमिति। स उपाध्यायं प्रत्युवाच भो भैक्षेण वृत्तिं कल्पयामीति तमुपाध्यायः प्रत्युवाच। मय्यनिवेद्य भैक्षं नोपयोक्तव्यमिति। स तथेत्युक्तो भैक्षं चरित्वोपाध्यायाय न्यवेदयत्। स तस्मादुपाध्यायः सर्व्वमेव भैक्ष्यमगृह्णात्। स तथेत्युक्तः पुनररक्षद्गाः अहनि रक्षित्वा निशामुखे गुरुकुलमागम्य गुरोरग्रतः स्थित्वा नमश्चक्रे। तमुपाध्यायस्तथापि पीवानमेव दृष्ट्वोवाच वत्सोपमन्यो! सर्व्वमशेषतस्ते भैक्षं गृह्णामि केनेदानीं वृत्तिं कल्पयसीति। स एवमुक्त उपाध्यायं प्रत्युवाच भगवते निवेद्य पूर्व्वमपरं चरामि तेन वृत्तिं कल्पयामीति तमुपाध्यायः प्रत्युवाच। नैषा न्याय्या गुरुवृत्तिरन्येषामपि भैक्ष्योपजीविनां वृत्त्युपरोधं करोषि इत्येवं वर्त्तमानो लुब्धोऽसीति। स तथेत्युक्त्वा गा अरक्षत् रक्षित्वा च पुनरुपाध्यायगृहमागम्योपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे। तमुपाध्यायस्तथापि पीवानमेव दृष्ट्वा पुनरुवाच वत्सोपमन्यो! अहं ते सर्व्वं भैक्ष्यं गृह्णामि न चान्यच्चरसि पीवानसि भृशं केन वृत्तिं कल्पयसीति। स एवमुक्तस्तमुपाध्यायं प्रत्युवाच भो एतासां गवां पयसा वृत्तिं कल्पयामीति तमुवाचोपाध्यायो नैतन्न्याय्यं पय उपयोक्तुं भवतो मया नाभ्यनुज्ञातमिति। स तथेति प्रतिज्ञाय गा रक्षित्वा पुनरुपाध्यायगृहमेत्य गुरोरग्रतः स्थित्वा नमश्चक्रे। तमुपाध्यायः पीवानमेव दृष्ट्वोवाच वत्सोपमन्यो! भैक्ष्यं नाश्नासि न चान्यच्चरसि पयो न पिबसि पीवानसि भृशं केनेदानीं वृत्तिं कल्पयसीति। स एवमुक्त उपाध्यायं प्रत्युवाच भो फेनं पिबामि यमिमे वत्सा आसां मातॄणां स्तनात् पिबन्त उद्गिरन्ति। तमुपाध्यायः प्रत्युवाच एते त्वदनुकम्पया गुणवन्तो वत्साः प्रभूततरं फेनमुद्गिरन्ति तदेषामपि वत्सानां वृत्त्युपरोधं करोष्येवं वर्त्तमानः फेनमपि भवान्न पातुमर्हतीति स तथेति प्रतिश्रुत्य पुनररक्षद्गाः। तथा प्रतिषिद्धो भैक्ष्यं नाश्नाति न चान्यच्चरति पयो न पिबति फेनं नोपयुङ्क्ते स कदाचिदरण्ये क्षुधार्त्तोऽर्कपत्राण्यभक्षयत्। स तैरर्कपत्रैर्भक्षितैः क्षारतिक्तकटुरूक्षैस्तीक्ष्णविपाकैश्चक्षुष्युपहतोऽन्धो बभूव ततः सोऽन्धोऽपि चङ्क्रम्यमाणः कूपे पपात। अथ तस्मिन्ननागच्छति सूर्य्ये चास्ताचलावलम्बिनि उपाध्यायः शिष्यानवोचत् नायात्युपमन्युः त ऊचुर्वनङ्गतो गा रक्षितुमिति तानाह उपाध्यायः। मयोपमन्युः सर्व्वतः प्रतिषिद्धः स नियतं कुपितस्ततो नागच्छति चिरं ततोऽन्वेष्य इत्येवमुक्त्वा शिष्यैः सार्द्धमरण्यं गत्वा तस्याह्वानाय शब्दं चकार, भो उपमन्यो! क्वासि वत्सैहीति। स उपाध्यायवचनं श्रुत्वा प्रत्युवाचोच्चैरयमस्मिन् कूपे पतितोऽहमिति तमुपाध्यायः प्रत्युवाच कथं त्वमस्मिन् कूपे पतित इति। स उपाध्यायं प्रत्युवाच अर्कपत्राणि भक्षयित्वाऽन्धीभूतोऽहमतः कूपे पतित इति। तमुपाध्यायः प्रत्युवाच। अश्विनौ स्तुहि तौ देवभिषजौ त्वां चक्षुष्मन्तं कर्त्ताराविति स एवमुक्त उपाध्यायेनोपमन्युरश्विनौ स्तोतुमुपचक्रमे देवावश्विनौ वाग्भिरृग्भिः"। अश्विस्तुतिमुपवर्ण्य कथां समापयामास यथा "इत्येवं तेनाभिष्टुतावश्विनावाजग्मतुराहतुश्चैनं प्रीतौ स्व एष तेऽपूपोऽशानैनमिति। स एवमुक्तः प्रत्युवाच नानृतमूचतुर्भगवन्तौ। न त्वहमेतमपूपमुपयोक्तुमुत्सहे गुरवेऽनिवेद्येति। ततस्तमश्विनावूचतुः आवाभ्यां पुरस्तादभ्युपाध्यायेनैवमेवाभिष्टुताभ्यामपूपो दत्त उपयुक्तः स तेनानिवेद्य गुरवे, त्वमपि तथैव कुरुष्व यथा कृतमुपाध्यायेनेति। स एवमुक्तः प्रत्युवाच एतत्प्रत्यनुनये भवन्तावश्विनौ नोत्सहेऽहमनिवेद्य गुरवेऽपूपमेनमुपयोक्तुमिति। तमाश्विनावाहतुः प्रीतौ स्वस्तवानया गुरुभक्त्या उपाध्यायस्य ते कार्ष्णायसा दन्ता भवतोऽपि हिरण्मया भविष्यन्ति चक्षुष्मांश्च भविष्यसि श्रेयश्चावाप्स्यसीति। स एवमुक्तोऽश्विभ्यां लब्धचक्षुरुपाध्यायसकाशमागम्योपाध्यायमभ्यवादयत आचचक्षे च स चास्य प्रीतिमान् बभूव आह चैनं यथाश्विनावाहतुस्तथा त्वं श्रेयोऽवाप्स्यसीति। सर्व्वे च ते वेदाः प्रतिभास्यन्ति सर्व्वाणि च धर्म्मशास्त्रा-

घीति एवा तवत्रापि परीक्षोपमन्योः”। उपमन्योरपत्यम् विदा० अञ्। औपमन्यव तदपत्ये बहुत्वे तु तस्य लुक्। उपमन्यवः “उपमन्यु पराशरकुण्डिनेभ्यः” “उपमन्यून् वाशिष्ठाभरद्वाजेन्द्रप्रमदेति” आश्व०श्रौ०सू० १२'१५'१,२,

**उपमर्द** पु० उप+मृद–घञ्। १आलोडने, २हिंसने, पूर्व्वधर्म्मि-विनाशनेन ३धर्म्मान्तरोत्पादने। यथा भस्तेर्भूः पचिकरोति: स्था–तिष्ठ इत्याद्यादेशे। ४निष्पीडने “अन्यांस्तावदुपमर्द्द सहाय भक्ष” सा०द०। धान्यादेः ५निस्तुषीकरणे च। (धानमाडा) भावे ल्युट् उपमर्द्दनमप्यत्रार्थे न०। कर्त्तरि ण्वुल्। उपमर्द्दक तत्कारके त्रि०।

**उपमा** स्त्री उप+मि–अ। १सादृश्ये, “अतुलोपमाभ्याम्” पा० उक्तेः तद्योगे उपमानवाचकात् षष्ठी नतु तृतीया। ‘कुटोपमं भूतिसितेन शम्भुना” माघे तु षष्ठ्यर्थे तृतीया भट्टि०। २अर्थालङ्कारभेदे च अर्थालङ्कारभेदस्य २९६ पृ० विस्तरो दृश्यः। न्यायमतसिद्धे उपमानशब्दे ३गवयादिपदशक्तिज्ञानरूपे, वेदान्तिमतसिद्धे ४गवादिसादृश्यज्ञानरूपे प्रमाभेदे च उपमानशब्दे विवृतिः। करणे घा० अ। ५उपमाने च। “अपि शाक्रतमभ्रांशं बुबुधे न बुधोपमः” रघुः। “यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता” गीता “वजते सोपमा दिवः” ऋ० १,३१,१५, स्वार्थे षञ्। औपम्य उपमाने न०।

**उपमात्** स्त्री उपमीयते प्रक्षिप्यते उप+मिञ–क्षेपे–बा०अति। स्थूणायाम् वंशबन्धनसाधने स्तम्भे “सानुमुपमाद्विव द्योः” ऋ० ६,६७,६,।“उपमीयते प्रक्षिप्यते इत्युपमात् स्थूणा सा यथा वंशं धारयति तद्वदित्यर्थः” भा०।

**उपमाति** स्त्री उप+मि–क्तिन् वेदे नि०आत्। १उपमायाम्। “पूर्वीष्ट इन्द्रोपमातयः” ऋ०८,४०,९, लोके तु उपमितिरित्येव उक्तार्थे। उप+मीङ–वधे–क्तिन् बा०आत्। २हिंसने उपमातिवनिः। “त्विषे भाद्रयाणं भूदुपमातिवनिः” ऋ०५,४१,१६, उपमातये वनति वनु व्याप्तौ इन्। हिंसनव्यापृत इत्यर्थः उपमातिवनिर्हन्ता” भा०।

**उपमातृ** स्त्री उपमिता माता शाक०स०। १धात्र्याम् अमरः। सा हि मातृतुल्यं प्रतिपालयतीति तस्यास्तथात्वम् २मातृतुल्यासु मातृष्वस्रादिषु च। ताश्च “मातृष्वसा मातुलानी पितृव्यस्त्री पितृष्वसा। श्वश्रूः पूर्व्वजपत्नी च मातृतुल्याः प्रकीर्त्तिता” दायभा० वृह० स्मृ० उक्ताः। स्वस्रादिपर्य्युदासात् ऋदन्तत्वेऽपि स्त्रियां न ङीप्। उप+मा–तृच्। ३उपमानकर्त्तरि त्रि०। स्त्रियां ङीप्।

**उपमाद** त्रि० उपमादयति उप+मद–णिच्–अच्। उपमादके हर्षजनके “देवानामुपमादमृष्वः” ऋ० २,५,५, “उपमादम् उपमादकं यज्ञम्” भा०।

**उपमान** न० उपमीयतेऽनेन उप+मा–भावे ल्युट्। १सादृश्यज्ञाने। करणे ल्युट्। २सादृश्यज्ञानसाधने सादृश्यप्रतियोगिनि, येन सादृश्यं भवति तस्मिन्, यथा चन्द्र इव मुखमित्यादौ चन्द्र उपमानम्। प्रसिद्धस्यैवोपमानत्वम् अप्रसिद्धस्योपमेयत्वम्। उपमानमभूद्विलासिनाम्” कुमा० “उपमानमलुप्तमहीरुहाणाम्” माघः। ३उपमितिप्रमाकरणे उपमानप्रमाणे न्या०सू० दर्शितं यथा “प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्” सू०। “प्रसिद्धस्य पूर्व्वप्रमितस्य गवादेः साधर्म्यात् सादृश्यात् तज्ज्ञानात् साध्यस्य गवयादिपदवाच्यत्वस्य साधनं सिद्धिरुपमानमुपमितिर्यत इत्यध्याहारेण करणलक्षणम् अथ वा साध्यसाधनमिति करणव्युत्पत्त्या करणलक्षणमेवेदम् अत्र च वैधर्म्योपमितिं मन्यन्ते टीकाकृतः यथा अतिदीर्घग्रीवत्वादिपश्वन्तरवैधर्म्यज्ञानादुष्ट्रे करभपदवाच्यतायाः। एवमन्योऽप्युपमानस्य विषयः इति भाष्यं यथा मुद्गपर्णीसदृशी ओषधी विषं हन्तीत्यतिदेशवाक्यार्थे ज्ञाते मुद्गपर्णीसादृश्यज्ञाने जाते इयमोषधी विषहरणीत्युपमित्या विषयीक्रियत इत्यादि”।

उपमानचि० सादृश्यपदार्थनिरुक्तिपूर्व्वकमुपमानस्य प्रमाणान्तरत्वं व्यवस्थापितं यथा। “तत्र सादृश्यप्रमाकरणमुपमानमिति केचित्। सादृश्यञ्च पदार्थान्तरम्। तथा हि। सदृशव्यवहारादबाधितादस्ति सादृश्यं तच्च न प्रतिपदार्थमेकं सर्वस्य सर्वसदृशत्वापत्तेः असदृशत्वापत्तेश्च सदृशमन्यदसदृशव्यवहारस्य तदेकत्वेऽनुपपत्तेश्च। न च व्यञ्जकभूयःसामान्यात्वसामान्यं तदीरिति वाच्यं बहुभिरल्पैश्च व्यज्यमानघटादौ सदृशव्यवहारादर्शनात् व्यञ्जकाभिमतादेव व्यवहारसिद्धौ अतिरिक्ताविद्धेश्च। नापि संयोगवत् व्यासज्यवृत्त्यनेकम्, गोत्वोपलक्षितसादृश्याश्रयत्वात् गवयवत्, गोरपि असदृशत्वप्रसङ्गात् गोरसन्निकर्षे संयोगवदप्रत्यक्षत्वप्रसङ्गाच्च। प्रत्यक्षत्वे वा गवयनिरूपितस्यैकवित्तिवेद्यत्वेन गोनिष्ठतया चाक्षुषत्वप्रसङ्गः। किन्तु प्रत्याश्रयं भिन्नम्। नचैकैकव्यभिचारादनुगतरूपाभावाच्चानुगतप्रत्ययः सादृश्यपदव्युत्पत्तिश्च न स्यादिति वाच्यम् अनुगतवित्तिवेद्यसादृश्यत्वसामान्यात् सप्तपदार्थातिरिक्तत्वाद्वा जातिवदन्त्यविशेषवच्च स्वतश्चानुगतत्वोपपत्तेः। तच्च द्रव्ये न गुणः कर्म वा, गुणकर्मवृत्तित्वात् न च सदृशाश्रय-

हस्तित्वादेव तत्र व्यवहारः सौन्दर्यवैसादृश्येऽपि तत्र तत्-
प्रतीतेः । अतएव नाश्रयसादृश्यात्तत्,सामग्रीमहत्त्वात्तत्, सा-
धकाभावादविशेषेण वैपरीत्यसम्भवाच्च । नापि सामान्यं
तद्धि न सर्व्वदृश्यत्वेनानभ्युपगमात् सुसदृशमन्दसदृश-
व्यवहारानुपपत्तेश्च । अथ विजातीयत्वे सत्यवयवगुणकर्म-
वृत्तिभूयःसामान्यं तत्, अतएव दूरस्थे प्रतियोगिनि
भूयःसामान्यग्रहणाच्च तत्र सादृश्यप्रत्ययः वनं, प्रासाद
तिवत् बहुत्वस्य समुदायसंख्यात्वादेवं सामान्यमिति धी-
प्रयोगौ अन्यथा वनाद्यपि अर्थान्तरं स्यात् सामान्यबहु-
त्वाल्पत्वाभ्यां सुसदृशमन्दसदृशव्यवहारः । यदुच्यते । "सा-
मान्यान्येव भूयांसि गुणावयवकर्म्मणाम् । भिन्नं प्रधानसा-
मान्यव्यक्तं सादृश्यमिष्यते" इति साजात्येऽप्यरविन्दद्वयवत्
कमलकैरवयोरवयवादिभूम्ने गुणादौ जातौ च सदृशप्रत्य-
यात् विसदृशयोः करभरासभयोरनुभवत्वाच्च । नापि धर्म्म-
न्तरे धर्म्मान्तरवृत्तिधर्म्मबाहुल्यम् असाधारणधर्म्मशून्यत्वे
सति तद्गतभूयोधर्म्मवत्त्वं वा स्वनिष्ठात्यन्ताभावप्रतियोगि-
धर्म्मसमानाधिकरणभूयोधर्म्मवत्त्वं वा त्रिचतुःपञ्चादि-
भेदेन भूयस्त्वस्याननुगतत्वात् । नापि कपिञ्जलवत्त्रित्वप-
र्य्यवसन्नं विसदृशयोरपि हस्तिमशकयोः सादृश्यप्रसङ्गात् ।
तदुक्तं "एवं जातिगुणद्रव्यक्रियाव्यक्तिषु धर्म्मतः । एकैक-
द्वित्रिसामस्त्यभेदादेकत्र चिन्त्यतेति"। अथ व्यावर्त्तकधर्म्मापे-
क्षया तद्गतधर्म्मबाहुल्यं सादृश्यमाल्पत्वञ्च त्रिचतुरादिषु
गुणतं हस्तिमशकयोस्तु वस्तुव्यावर्त्तकं साधारणन्त्वल्पमतएव
भेदाधिष्ठानमुच्यते इति चेन्न व्यावर्त्तकसमसङ्ख्यात्वेना-
गणितेनापि सादृश्यव्यवहारात् । किञ्च सामान्यान्या-
श्रयभेदेनाभिन्नानि सादृश्यन्तु भिन्नम् । सामान्यं
निःप्रतियोगिकं तदनिरूप्यञ्च । सादृश्यन्तु सप्रति-
योगिकं तन्निरूप्यञ्च । अथ भेदे सति तद्गतभूयः-
सामान्यवत्त्वं सादृश्यं भेदश्च प्रत्यास्वयमन्यः सप्रतियो-
गिकश्चेति चेत्तर्हि सादृश्यस्य भेदघटितत्वेन तस्मात्
सदृश इति स्यात् नतु तेन तस्य वा सदृश इति स्यात् ।
नच सादृश्यस्यापि सप्रतियोगिकत्वेन तस्मात् सदृश इति
स्यात्, अवधौ हि तथाप्रतीतिप्रयोगौ न तु प्रतियोगिनि,
अभावेऽपि घटाद्वेति प्रतीतिप्रसङ्गात् । अपि च तद्धर्म्मवत्त्वं
यदि सादृश्यं तदा तत्तातद्वत्त्वयोः सङ्करप्रसङ्गात् । तद्धर्म्म-
वत्ता हि तत्ता तद्वत्ता च तद्वत्ता यदि च तत्तैव तद्वत्ता
तदा तदेव तद्वदिति स्यात् । तथा च तद्धर्म्मवत्ताज्ञाने
प्रत्यभिज्ञानवत् सोऽयमिति स्यात् नतु तद्वदिति । एवं तद-
त्तैव हि तत्तेति गवयेऽपि गोबुद्धिव्यपदेशौ स्याताम्
गोगततत्ताभावयोगित्वेन गोवत्तत्ताश्रयत्वात् । नापि विशेषः
प्रत्यक्षत्वात् । न समवायः, वृत्तिमत्त्वात् इत्यतिरिक्तं सादृ-
श्यम् वस्तु सादृश्यं भावोऽभावो वा भावोऽपि सगुणं निर्गुणं
वा, निर्गुणमप्याश्रितमनाश्रितं वा । आश्रितमपि सा-
मान्यवन्निःसामान्यं वा सामान्यवत्त्वे स्पन्दोऽस्पन्दो वा
निर्गुणं निःसामान्यमाश्रितमनाश्रितमनेकाश्रितम् वा ।
इति यथायथं सप्तपदार्थान्तर्गतमिति तत्र व्यवहारानुप-
पत्त्या तद्बहिर्भावात् अन्यथैतादृशविकल्पेन सामान्यवि-
शेषसमवायानामपि द्रव्यादिस्वधर्म्मान्तर्गतत्वं स्या-
दिति । उच्यते । असाधारणान्यतद्गतबहुधर्म्मवत्त्वं तत्सा-
दृश्यं यमजादिसाधारणं भेदाघटिततया च निरवधि,
तद्गतबहुधर्म्मवत्त्वं तन्निरूप्यमिति तन्निरूप्यत्वमेव तस्य स-
प्रतियोगिकत्वं तथापि सादृश्ये तदेव सप्रतियोगिकत्वं
न तु भेदद्दीर्घादिवत्सावधित्वं तस्मात् सदृश इति प्रत्यया-
पत्तेः । बहुत्वञ्च त्रिचतुरादिसाधारणमिति नाननुगमः ।
न चातिप्रसङ्गः हस्तिमशकयोरपि प्राणित्वसुखित्वदुःखि-
त्वादिना सादृश्यात् । अतएव वैसादृश्येऽपि आह्लादक-
त्वादिना चन्द्र इव मुखं, बहुलत्वादिना महिषीव
गौरिति । बहुत्वतद्गतधर्म्मवत्त्वेन सुसदृशमन्दसदृशत्वम् ।
अतएव गवये गोसादृश्यं मन्दतद्धर्म्मवत्त्वमेव विशेषयति ।
वराहं गावोऽनुधावन्तीत्यत्र गोसादृश्यं वराहेऽप्युक्तम् ।
तत्तद्धर्म्मवत्त्वेनोपमेयव्यवहारः काव्यादौ, साध्यसाधनवत्त्व-
मात्रेण दृष्टान्ते यथासादृश्यवाचकवति प्रयोगः परीक्ष-
काणाम् । न चैते गौणा मुख्ये बाधकाभावात् । तस्मात्
केनचित् कस्यचित् कश्चित् सादृश्यं नत्वनुगतमस्ति ॥ किञ्च
सादृश्यबहुतद्धर्म्मवत्त्वज्ञानं सादृश्यव्यञ्जकं तदेव तद्व्यव-
हारनियामकमस्तु किमधिकेन । अन्यथा निरन्तरादित्वे
तु व्यञ्जकमपि बहुधर्म्मवत्त्वमननुगतं स्यात् । व्यञ्जक-
मननुगतमपि वह्नौ प्रत्यक्षादिवदिति चेन्न तत्र व्यक्तीनां
वैजात्यात् धूमालोकादौ वह्निव्याप्यत्वमेवानुगतम् ।
अत्रापि तद्व्याप्यत्वमस्तीति चेत् सादृश्यं तद्व्याप्यं तदेव
तद्व्यवहारनिमित्तं न तु तद्गतबहुधर्म्मवत्त्वज्ञानं, न
व्यञ्जकमेवानुभवविरोधात् तद्गतभूयोधर्म्मस्य बहुत्वज्ञानं
विना सुसदृश-मन्दसदृशत्वज्ञानाभावाच्च । अथ तद्गत-
बहुधर्म्मवत्त्वं न सप्रतियोगिकं, सादृश्यं तु तथेति व्यव-
हर्त्तव्यमधिकमिति चेन्न सादृश्यस्यापि सप्रतियोगिक-
त्वात् वस्तु तत्तातद्वत्त्वयोः सङ्करः स्यादिति तन्न तत्तैव

तद्धर्मवत्ता तदभेदो वा तत्ता वा च सोऽयमिति प्रत्यभिज्ञाने भासते। भेदे भासमाने तदन्यस्मिन् तद्धर्मवत्ता तद्वत्ता यतो भवति तद्वदयं न तु स इति तयोर्भेदात्। नन्वेवं व्यक्त्यन्तरे गोत्वपक्षे तद्बोधदयमिति साधारण्यमपि गौरिति चेन्न गोत्वमात्रस्य तदन्यव्यक्तिवृत्तित्वपक्षे सदृशः, एकत्र नानासम्बन्धावगमात्। तद्बोधवृत्तिवद्धर्मज्ञाने भवत्येव सदृशावगतेति। तथाप्ययमपि चन्द्रादिमानिति सदृशधीः स्यात् न तु गोसदृश इति चेन्न एकत्रोभयसम्बन्धः सदृशयोऽन्यगतभूयोधर्मवत्त्वमन्यत्र सादृश्यमिति विवेकात्

नवीनास्तु। विलक्षणसुखद्वये इतरसकलव्यावृत्तसादृश्यमनुभूयते न तु तदुभयमात्रवृत्तिजातिरस्ति तद्व्याभावे जातेरनाश्रयत्वेनानित्यत्वप्रसङ्गात्। नापि जन्यं धर्मान्तरमनोवधिकं सादृश्यमेवं तथापि समानधर्मवत्त्वव्यञ्जकं विना कथं तत्र सादृश्याभिव्यक्तिरिति चेन्न प्रतीतिबलात् द्रव्ये तथा, गुणादौ तु व्यभिचारात् अतएव न व्यञ्जकेनापेक्षितितद्भावेऽपि सादृश्यानुभवादित्याहुः। तत्सुखं विलक्षणं सुखद्वयं न सुखमात्रहेतुजन्यं सुखान्तरस्यापि सदृशत्वापत्तेः किन्तु विलक्षणादृष्टजन्यं तच्चादृष्टं विहितवेदक्रियाविशेषानुष्ठानादन्येषामप्यस्तीति तेषामपि तादृशानि सुखानि भवन्तीति तेषु कारणविशेषप्रयोज्या विलक्षणतास्ति तच्चादात्मनामानन्त्यात् अनादिनिधनत्वादुत्पन्नानागतविजातीयं न सुखमस्ति एवं दुःखान्तरकार्येष्वपि सन्नानुत्पन्नमनुत्पत्स्यमानजातीयं कार्यमस्ति। यच्च व्यक्तिनाशे जातेरनित्यत्वमापादितं तदपि न विनाशकाभावात् अतएव प्रलयेऽपि तदवस्थानम्। अपि चैकत्र प्रतियोगिभेदेन सादृश्यं भिन्नं नत्वेकम्, सुखद्वयमन्द्रसदृव्यवहारात् तथा च योग्यत्वादेकपक्षे सर्वप्रसङ्गात्। प्रतियोगिगतभूयोधर्मज्ञानस्य व्यञ्जकस्य क्रमाक्रमे तदेव व्यवहारनिमित्तमित्युक्तम्। किञ्चैवं वैसादृश्यमपि स्यात्। न च सादृश्याभाववत्तत्, वैपरीत्यस्यापि सम्भवात् सादृश्याभावत्वेनैव प्रतीतिर्विषयस्य निषेधार्थत्वादिति चेत्तर्हि गौरिव नहिमोत्थल पाण्डवलक्ष्मीरवत्वादिना विवक्षितसादृश्याभावे अश्वे वैसादृश्यं न स्यात् न हि तत्र गोसादृश्यं तदभावश्च। तस्मात् साधर्म्यवैधर्म्ये सादृश्यवैसादृश्ये। यत्तु तद्गतत्वनैकधर्मवत्त्वं सादृश्यं तेनाभेदेऽपि "गगनं गगनाकारं सागरः सागरोपमः। रामरावणयोर्युद्धं रामरावणयोरिव" इत्यादौ सादृश्यं, न चैवं गोरपि गोसदृशत्वे गवयपदाभिधेयत्वापत्तिः तत्र यद् यदस्य विशेषे तात्पर्यात्। अन्यथा नहि देशेऽतिप्रसङ्ग इति तच्च तस्य तेन वा सदृश इति प्रतीतिप्रयोगात् न चाभेदे सम्बन्धः षष्ठ्यर्थो वा सम्भवति। गगनं गगनाकारमित्यादौ तु गगनाद्यवैताद्रूप्यधर्मवत्त्वान्यदियत्र तात्पर्यम्। यद्वा सर्गान्तरीयगगनसागरयोरुपमानत्वं तयोर्युद्धविशेषे तयोरेव युद्धान्तरमुपमानमिति। नन्वस्तु देवदत्तयज्ञदत्तौ भवतः तत्सदृशश्चायमिति भेदाभेदयोरपि सादृश्यनियमात् अतिरिक्तं सादृश्यमिति चेन्न देवदत्ताभिप्रायेणैकदेशे सादृश्यपदप्रयोगात् अन्यथा स एवायं न तु तत्सदृश इति, सदृशोऽयं न तु स इति प्रतीतिप्रयोगौ। न चात्र सदृशपदं भेदमात्रपरमिति युक्तं तस्य सम्भवति लक्षणाया अयोगात्। तथा च पदार्थान्तरं सादृश्यमिति। स्यादेतत्। मा भूत् पदार्थान्तरं तथापि प्रत्यक्षात्प्रत्याहार्गवये गोसादृश्यज्ञानात् गवयसदृशो गौरितिज्ञानमुपमितिः। न चैतत्प्रत्यक्षं विशेष्यासन्निकर्षात् नानुमानं लिङ्गाभावात्। न च गवयगतं सादृश्यं लिङ्गम् अपक्षधर्मत्वात्। अथ सदृशद्वयान्तरदर्शने यो यद्गतसादृश्यप्रतियोगी स तत्सदृश इति प्रत्यक्षेण व्याप्तिग्रहे सति गवयगतसादृश्यप्रतियोगित्वात् गौर्गवयसदृश इत्यनुमितिरिति चेत् व्याप्तिग्रहं विनैव नगरमपि प्रत्यक्षात्प्रत्याहृत्य गोसदृशं गवयं ज्ञात्वा गवि गवयसादृश्यज्ञानोदयात्। किञ्च गवि गवयसादृश्यं न साध्यं प्रथमतस्तदप्रतीतेः गवयगतसादृश्यप्रतियोगित्वस्य गवि न प्रत्यक्षं विशेष्यासन्निकर्षादिति नानुमितिगम्यं तल्लिङ्गस्यापि तद्रूपत्वेनाप्रत्यक्षत्वात् लिङ्गान्तरगम्यत्वेऽनवस्थानात्। न च गौरेतद्गवयसदृशः गवयगतभूयोऽवयवादिसामान्यवत्त्वात् गवयान्तरवदिति गवयान्तरज्ञानेऽपि गवि गवयसादृश्यं विनानुपपद्यमानं तत्कल्पयति। न हि गोसदृशो गवय एतद्विसदृशो गौरिति वाच्यम्। गवयनिरूपितगोसादृश्यार्थापत्तौ तेन विनानुपपत्तिज्ञानाभावात्। किञ्च तथार्थापत्तिर्व्यतिरेक्यनुमानं न च गवयगतसादृश्यप्रतियोगित्वं गवि प्रत्यक्षादिना ज्ञातं प्रत्यभियुक्तम्। नन्वेवं करभे गोवैधर्म्यज्ञानात् गवि करभवैधर्म्यज्ञानमपि मानान्तरं स्यादिति चेत् गवि करभवैधर्म्यं यदि करभवृत्तिधर्माभावस्तदा उच्यते गवि प्राक्तावदनुपलब्धिगम्यमेव अथ करभव्यावृत्तधर्मवत्त्वं तदा गोधर्मा गविगता एव इदानीं ज्ञातगोधर्माणां करभेऽभावमात्रमधिकं गम्यं तच्च प्रत्यक्षादेव। अथ तत्प्रतियो-

गिकैतच्छिष्टसादृश्ये भासमाने समानसंवित्संवेद्यतया एतत्प्रतियोगिकतरिक्तसादृश्ये वैधर्म्ये च ज्ञातमिति चेन्न विषयविशेष्यप्रतियोगिभेदेन समानसंवित्संवेद्यत्वासिद्धेः । एतत्सदृश एतद्विधर्मा च इत्यत्र तद्विशेष्यकप्रत्ययानुदयाच्च तद्विशेष्यकप्रत्यये तत्सन्निकर्षस्य हेतुत्वात् । ननु प्रत्यक्षे विशेष्यसन्निकर्षो हेतुर्न तु यावद्विशेष्यसन्निकर्षो गौरवात् अन्यथाऽतीतानागतव्याप्यविशेषकव्याप्तिप्रत्यक्षं न स्यादिति चेन्न अतीतानागतविशेषे सामान्यलक्षणायाः सत्त्वात् । अथ गवयसादृश्यं गवि गवयगतमहत्त्वादिमत्त्वं तच्च गवये गोसदृशे भासमाने गवि भातमेव यद्वा गोगतमहत्त्वादेर्गवयगतत्वं गवये गोसादृश्यम् एवं तदेव गवयगतस्य गोगतत्वं गवि गोसादृश्यं तच्चेन्द्रियेणैव ज्ञातं सामान्यलक्षणत्वेनेन्द्रियसन्निकृष्टत्वात् अयं च स इति विपरीतप्रत्यभिज्ञायामिवेति चेत् सत्यम् गोविशेष्यकगवयगतमहत्त्वादिज्ञानं नेन्द्रियजन्यं गोरसन्निकर्षात् तस्मादेतत्सदृश एतद्विधर्मा एतस्माद्दीर्घः स इति ज्ञानं नानुमानात् विशेष्यासन्निकर्षे तद्धर्मविशिष्टज्ञानात् । एवञ्च सप्रतियोगिकपदार्थज्ञानेन तत्प्रतियोगिकपदार्थज्ञानजनकानां प्रत्यक्षादीनां विनाऽप्यर्थापत्तौ पूर्वानुमानतेति वार्त्तमेतत् तथा हि । परस्परसदृशं द्वन्द्वादिकं प्रत्यक्षयतो यो यत्सादृश्यप्रतियोगी स तत्सदृश इति सामान्यतो व्याप्तिज्ञाने सति गौर्गवयसदृशः तत्सादृश्यप्रतियोगित्वात् यथा भ्राता भगिनी । गवयगतसादृश्यप्रतियोगित्वञ्च गोर्गवयगतसादृश्यविशिष्टेन्द्रियेण सादृश्ये गोः प्रतियोगित्वेनैव ज्ञानात् अन्यथा सादृश्ये गोरनन्वयापत्तिः यत्र त्वां सामान्यतोव्याप्तिग्रहं विना एतत्सदृशः स इति कथासिद्धेः यत्र त्वां व्याप्तिग्रहेऽप्यायं व्यतिरेको परेषामर्थापत्तिरित्यन्यदेतत् । सादृश्यस्योभयवृत्तिधर्मस्य क्वचिद्विशेष्यसन्निकर्षात् प्रत्यक्षेण ज्ञानं यावद्विशेष्यसन्निकर्षस्याप्रयोजकत्वात् । अन्यथाऽयं स इति भ्रान्तविपरीतप्रत्यभिज्ञायां का गतिः । अत एव येनच्छिष्टसादृश्यप्रतियोगित्वस्य च प्रत्यक्षविशेष्यकत्वं परामर्शे न प्रयोजकमित्यलम् । कीदृशो गवय इति जिज्ञासया यथा गौस्तथा गवय इति श्रुतातिदेशवाक्यस्य तथाभूते पिण्डे दृष्टे तथा गवय इत्यतिदेशवाक्यार्थानुसन्धानेऽयं गवयपदवाच्य इति मतिरुपमानफलम् । न चेयं वाक्यमात्रात्, अप्रत्यक्षीकृतपिण्डस्यापि प्रसङ्गात् । नापि प्रत्यक्षमात्रात् अश्रुतवाक्यस्यापि प्रसङ्गात् । नापि तयोः समाहारात् स हि प्रमाणसमाहारो वा फलसमाहारो वा

आद्ये प्रमाणत्वे सति समाहारः समाहृतयो र्वा प्रमाणत्वं, फलानेकत्वे समाहारानुपपत्तेः तस्य परस्परसहकारित्वप्रयुक्तत्वात् । नान्त्यः वाक्यप्रत्यक्षयोर्भिन्नकालत्वात् वाक्यतदर्थयोः स्मृतिद्वारोपनयेऽपि गवयपिण्डसम्बन्धे नापि इन्द्रियादिना तद्गतसादृश्यानुपनये समयपरिच्छेदासिद्धेः । फलसमाहारे च तदन्तर्भावे शब्दानुमानयोरपि प्रत्यक्षत्वप्रसङ्गः । तत् किं तत्फलस्य प्रमाणबहिर्भाव एव अन्तर्भावे वा किंयती सीमा । तत्तदसाधारणेन्द्रियादिसाहित्यम् अस्ति तर्हि सादृश्यज्ञानेऽपि विस्फारितस्य चक्षुषो व्यापारः । न तस्मिन् सति तस्यानुपयोगात् उपलब्धगोसादृश्यविशिष्टगवयपिण्डस्य वाक्यार्थस्मृतिमतः कालान्तरेऽप्यनुसन्धानवशात् समयपरिच्छेदोपपत्तेः । तस्मादागमप्रत्यक्षाभ्यामन्यदेवेदमागमस्मृतिसहितं सादृश्यज्ञानमुपमानप्रमाणमिति जरन्नैयायिकाजयन्तप्रभृतयः । तत्र वैधर्म्येऽनुपपत्तेः । यदोदीच्येन क्रमेलकं निन्दतोक्तं धिक् करभमतिदीर्घग्रीवं प्रलम्बचपलौष्ठं कठोरतीक्ष्णकण्टकाशिनं कुत्सितावयवसन्निवेशमपसदं पशूनामिति, तदुपश्रुत्य दाक्षिणात्य उत्तरापथं गतस्तादृशं वस्तूपलभ्य नूनमसौ करभ इति प्रत्येति । तत्र किं ज्ञानं न तावदुपमानं सादृश्याभावात् न च प्रमाणान्तरं सम्भवति । उच्यते । न तावदनुगतं प्रवृत्तिनिमित्तमुपलक्षणं विना, प्रत्यभिज्ञानतः शरीरैकत्वादिना शरीरविशेषे चैत्रादिपदवदेकैकगृह्यव्यक्तिकया गवयपदशक्तिग्रहे गवयान्तरेऽपि सम्भवात् । नाप्यनध्यक्षे पदान्तरोपस्थिते परिभाषाऽऽकाशादिपदवत्, अतएवानध्यक्षत्वाच्च उपलक्षणस्य च शक्तौ बहिर्भावात् तद्वदेव । नापि योगनिर्वचनात् पाठकादिवत् योपलक्षणे, अन्यथा पठिक्रियानुपहिते पठतिप्रयोगः स्यात् । अतस्तद्गुणज्ञानादियोगिनि शक्तिः । अवच्छेदकतया लुप्यतेऽपीति योगाभावात् । नाप्युपस्थितनिमित्तकल्पनात् स्वर्गादिपदवत् तदभावात् । अतो गन्धाद्युपलक्षितेन पृथिवीत्वेन निमित्तेन पृथिव्यादिपदवत् सादृश्याद्युपलक्षिते गवयत्वादौ गवयादिपदानां शक्तिरिति परमार्थतः । अन्यथा फलस्याभासत्वे मानत्वविरोधात् न च पूर्वं गवयत्वमुपस्थितमुपस्थापकाभावात् न च गवयपदादेव तदुपस्थितिरन्योन्याश्रयात् अथ वाक्यादेवानेन समयः परिच्छिन्नः कैवलमये प्रत्यभिजानाति योगोसदृशो गवयपदवाच्यत्वेन मयावगतः सोऽयमिति नोपमानस्य विषय इति चेन्न हि सादृश्यमेव निमित्तमसम्प्रतीतगूनामव्यवहारप्रसङ्गात् गौर-

कस्यां नाड्यामिति चेत् उच्यते । स्वयमेव चतुर्विंशय नवांशेभ्य इति परिगणितविषयत्वेनाभिधानात् संस्थनत्त्वसमुदायविषयकमिति । किञ्च पञ्च पर्वतत्र पर्वनाड्योर्देशविशेषविषयत्वेन भिन्नाड्यास्तु सर्वदेशव्यापकत्वादेतस्या एव निषेधोयुक्तः । तानि च देशविशेषवाक्यान्यग्रेऽभिधास्ये । अतः “भकूटकान् सप्तभेदांश ते तान्नित्यत्वपाठे प्रशस्तानिति पठन्ति अभियुक्ताः शार्ङ्गधरीयज्योतिर्निबन्धकारादयः । तस्मान्नाडीसमाज पदस्य प्राग्वदेव व्याख्यानं न्याय्यम् । ननु यत्र नाडीनक्षत्र शुद्धिरस्ति । यथा भरणीहस्तयोः षट्काष्टकञ्च वर्त्तते पञ्चमैत्रमपि नास्ति तत्र किं कार्य्यमत आह । अन्यर्क्षेऽंशेशपयोरिति । अन्यर्क्षे प्रोक्तषट्काष्टकादिभ्योऽन्यराशौ, कोर्थः? राशिस्वामिनोः परस्परं शत्रुत्वे वा समत्वे वा षट्काष्टकादौ च सति अंशपयोस्तद्राशिनवांशस्वामिनोर्मैत्रित्व-बलित्वे चेत् स्याताम् । बलित्वं स्वक्षेत्रतुङ्गादिस्थितत्वेन, बलिता परस्परमैत्री ते उभे चेद्भवतः बलितायाः उपलक्षणत्वादेकाधिपत्यमपि तदा विवाहः शुभोनिगदितः । उक्तञ्च जगन्मोहने वशिष्ठेन । “राशिनाथे विरुद्धेऽपि सबलांशपकाधिपौ । मैत्रत्वेऽपि च कर्त्तव्यं दम्पत्योः सुखमिच्छतेति” नन्वयमपरिहारो राशिनाथे विरुद्धेऽपीत्यनुवादात्केवल षड्दोषापवादको न तु दुष्टभकूटपञ्चवैरस्य । उच्यते “खेटारित्वं नाशयेत् सद्भकूटम्” अग्रे वक्ष्यति । तत्र च “नभोगारिभावं हरेत् सद्भकूटमिति” सप्तर्षिमतविवाहपटलीयवाक्यं सम्मतित्वेनास्माभिरभिधास्यते । तदेव केवलपञ्चवैरापवादकमस्ति न त्विदमपि । ननु द्वयोर्वाक्ययोर्यथाश्रुतयद्व्यस्तसमार्थे जिज्ञासिते एकस्मिन्नेव षड्दोषरूपे परिहारद्वयं दृश्यते । अथैकस्मिन्नेव दुष्टभकूटके भवनपतिसुहृत्त्वमित्यादिनानेकपरिहाराभिधानमिष्टतोऽत्र वचने न किञ्चित्ताद्दृशं विषयं पश्यामः सत्यम् । “नभोगारिभावं हरेत्सद्भकूटमिति तु निःसन्देहं षड्वैरस्यापवादकम् परन्तु “राशिनाथे विरुद्धेऽपि मैत्रत्वे चांशनाथयोः । विवाहकारयेद्धीमान् दम्पत्योः सौख्यवर्द्धनमिति” जगन्मोहनस्थवशिष्ठवाक्येन प्रागुक्तवशिष्ठवचःसमानार्थकं दुष्टभकूटपञ्चपञ्चवैरापवादकम् । तथाहि । न्यूनार्थे एकस्मिन्वाक्ये राशिनाथयोः परस्परविरोधे सति तद्राशिनवांशस्वामिनोः परस्परमैत्री चेच्छुभो विवाह इत्यर्थः । अत्रांशनाथयोः सबलत्वविचारोनास्ति । अत्र त्वंशनाथयोरुच्चादिस्थितत्वेन सबलत्वं परस्परमैत्री चेति द्वयमस्ति तद्दुष्टभकूटपञ्चपञ्चवैरापवादकमिममधिकार्थवचनस्यार्थः । एवञ्च “नभोगारिभावं हरेत्सद्भकूटमित्यपि” वाक्यं षड्वैरापवादकत्वमुक्तमनत्वाद्गौणिकयवत् । अंशनाथसबलत्वाभिधायकं तु “राशिनाथे विरुद्धेऽपीत्येतद्वाक्यमुभयविरोधपरिहारार्थकम् । तथाहि । राशौ च नाथौ च एतेषां समाहारो राशिनाथन्तस्मिन् राशिनाथे इत्येवं यदि समाहारद्वन्द्व आश्रीयेत तदा अत्ययमर्थः । राशौ विरुद्धौ षट्काष्टकादिना, नाथौ विरुद्धौ तयोर्नाथावित्याकाङ्क्षायां तयोः षट्काष्टकादिविचारस्तयोरेव सन्निहितत्वादुपपन्नमिति तयोः राश्योर्नाथौ विरुद्धौ “मित्राखि शत्रुसमेरित्यादिना परस्परं शत्रू स्यातां तद्राशिनवांशस्वामिनोः सबलत्वे मित्रत्वे च सञ्जाते सति विवाहः शुभदः । नन्वतिक्लिष्टे समाहारद्वन्द्वे किं प्रयोजनम्? उच्यते । अंशनाथस्य सबलत्वस्याधिककरणमेव । तत्र युगपदुत्पन्नस्य दोषद्वैविध्यस्य राशिविरोधपतिविरोधरूपस्य परिहारोऽतएव ज्योतिःशास्त्राभियुक्ताः एवंविध उभयविरोधे एवंविधं समाधिमाश्रित्य विवाहङ्कारयन्तीत्यास्तां प्रसक्तानुप्रसक्तम् । अस्मिन्नपि पक्षे नाडीशुद्धिरपेक्षितैत्याह । नाड्यशुद्धौ तथेति प्रागुक्तप्रकारेण नाडीनक्षत्रेषु स्त्रीपुरुषनक्षत्रयोरेकस्यां नाड्यामवस्थिताभावश्चेत्तदा विवाहः शुभः । यथा भरणीहस्तयोःशत्रुभवविधविरोधे राशिनवांशयोः क्रमेण पञ्चमचतुर्थयोर्यौ स्वामिनौ सूर्य्यभौमौ तयोर्मैत्रमप्यस्ति स्वनवांशस्थितत्वात्सबलत्वमपि तत्र विवाहः शुभफलदोनिगदितः । यतोऽत्र स्त्रीपुंसनक्षत्रयोरेकनाड्यामवस्थित्यभावः । यदाश्विनीहस्ता एव द्वयोर्नक्षत्रे स्यातां तदा नाडीनक्षत्रशुद्ध्यभावात् सकलगुणवत्त्वेऽपि विवाहो न भवति । किं पुनरेवंविधविषये इति “यदा नाड्यस्त्वेकनाडीसमाजोभकूटादिकान् सप्तभेदान् प्रशस्तान्” इत्युक्तेः । अथैतत्परिहारासम्भवे परिहारान्तरमाह । ताराशुद्धिवशे इति । अनाड्यर्क्ष इत्यनुवर्त्तते । प्राग्वदेव व्याख्येयमिदम् । एवंविधे विषये षट्काष्टकादौ च सति यदि स्त्रीपुंसनक्षत्रयोः परस्परन्ताराशुद्धिवशे कन्यार्क्षाद्वरभं यावदित्यादिना ताराशुद्धिरूपे वशे सञ्जाते द्वितीयचतुर्थपञ्चाष्टमनवमताराश्रयके सति बुधैर्विवाहः शुभोभिगदितः । अत्रोदाहरणानि बुधैर्ध्येयानि । अत्र संमतिः “अन्योन्यताराविशुद्धौ” इत्युक्ता । राजमार्त्तण्डेनायमर्थः स्पष्टमभिहितः । “मैत्री चेत्पतयोर्द्वयोरपि तयोरेकाधिपत्येऽपि चेत्तारा

मित्रसुमित्रजन्मशुभदा क्षेमा च संपत्करी । षष्ठाष्टे नव पञ्चमे व्ययधने योगेषु पुंयोषितोः प्रीत्यायुःसुतवृद्धिवित्तजनकः कार्यो विवाहस्तदेति" । चकारात् षष्ठी च । जन्मतारा वधूत्पत्तितारा तदा राशिभेदे चरणभेदे वा शुभा ज्ञेया । इयमेकोनविंशतितारे शुभे एव । अत्रापि पक्षे नाडीशुद्धिरपेक्षितैव । नाडीशुद्ध्यभावे विवाहोनैव भवेत् । उक्तैवात्र संमतिः" । अथ तस्यापि परिहारस्य सद्भावे परिहारान्तरमाह । अथ राशिवश्यताभाव इति । अत्रापि द्वयोः स्त्रीपुंसयोः राशिनाथविरोधादिके विषये षट्काष्टकादौ सति "हित्वा मृगेन्द्रं नरराशिवश्या" इत्यादिना पुरुषराशेः स्त्रीराशिवश्यताभावे सति विवाहः शुभोनिगदितः । "यदि भवनवशित्वमिति श्रीपत्युक्तेश्च क्वचिदपि पक्षे नाडीशुद्धिरपेक्षितैवोक्तादेव हेतोः । तदयमत्र निष्कृष्टोऽर्थः । षट्काष्टकनवपञ्चमद्विद्वादशाख्येषु दुष्टभकूटेषु सत्सु परस्परं ग्रहमैत्री एकः परिहारः । एकाधिपत्यं द्वितीयः । ग्रहयोरंशाधिपयोः सबलत्वे मैत्रे च तृतीयः । ताराशुद्धिश्चतुर्थः । राशिवश्यत्वं पञ्चमः । सर्वेष्वपि परिहारेषु नाडीशुद्धिरपेक्षितैव । नाडीविरोधसत्त्वे तु विवाहोनैव स्यादिति। एतच्च ग्रन्थकर्त्रा "भवनपतिसुहृत्त्वमित्यस्य" श्रीपतिश्लोकस्य वाक्यचतुष्टयमङ्गीकृत्य तत्परिहाराभिधानकृतम् । तट्टीकाकृन्महादेवोऽप्येवमेव व्याख्यत् । यत्र हि प्रत्येकं परिहारकम् तत्र गुणसमुदायः परिहारकः स्यादिति किं वाच्यम् । वस्तुतस्तु । "मैत्री चेत्पयोर्द्वयोरपि तयोरेकाधिपत्येऽपि चेत्तारामित्रसुमित्रजन्मशुभदा क्षेमा च सम्पत्करीत्यादि प्राग्लिखितेन राजमार्त्तण्डवाक्येन दुष्टभकूटे ग्रहमैत्र्या सह तथैकाधिपत्येन सह ताराशुद्धिरेव परिहारिका समुचिता । अर्थादेकस्य मित्रत्वेऽपरस्य समत्वे वक्ष्यमाणापेक्षा अतएतद्वाक्यं ज्योतिःसारसागरे विवृतम् "तत्रान्योन्यमित्रत्वे तुल्याधिपतित्वे वा ताराशुद्धिरेव चिन्त्या । एकमित्रतायान्तु वशित्वादि गुणान्तरापेक्षा । समत्वे तु सर्वथा त्याग इति"। अत एवैतस्मिन् पक्षे क्षेमदाभिधानादेकवाक्यतावसायः । एवं श्रीपतिवाक्यमपि व्याकर्त्तव्यमेकवाक्यताबलात् । तत्र षट्काष्टके पुनर्भवनपतिसुहृत्त्वमिति सकलगुणसत्त्वेनैव परिहारकम् । अनयोर्दुष्टभकूटयोर्द्वयमेव । यदाह ज्योतिर्निबन्धे गर्गः "षट्कमैत्र्या शुभा तारा राशिवश्यैस्त्रिभिः शुभम् । षडष्टकस्तु याः प्राहुर्द्वाभ्यां द्विर्द्वादशाख्यकमिति" । "द्विर्-कोणद्विर्द्वादशम् । "द्विर्द्वादशे वा नवपञ्चमे वेत्यादीनि" वशित्वादीनि तूपलक्षणपरतया व्याख्येयानि । अत्र यथासम्प्रदायं व्यवस्था ज्ञेयेत्यलमियता" पी० धा०

अत्रापवादः । "मैत्र्यां राशिस्वामिनोरंशनाथद्वन्द्वस्यापि स्याद्गणानां न दोषः । खेटारित्वं नाशयेत् सद्भकूटं खेटप्रीतिश्चापि दुष्टं भकूटम्" । मु० चि० "स्त्रीपुंसराशिस्वामिनोर्मैत्र्यां सत्यां तथा राशिनवांशयोर्द्वन्द्वं द्वयम् तस्यापि मैत्र्यां सत्यां गणानां दुष्टगणानां दोषो न स्यात्, स्त्रीरक्षोगणा पुमान् मनुष्यगणोदेवगणो वा तदा गणदोषो न स्यादित्यर्थः" । यदाह कालिः "राशीशयोः सुहृद्भावे मित्रत्वे वांशनाथयोः । गणादिदोषेऽप्युद्वाहः शुभमीशप्रवर्द्धनः" । अथ सद्भकूटं शुभफलदभकूटं राशिकूटं तृतीयैकादशादिकं खेटारित्वं ग्रहयोः शत्रुतासम्बन्धिनं दोषं नाशयेत् । एवमेव खेटप्रीतिर्ग्रहमैत्री चापि दुष्टं भकूटं षडष्टकादिसम्बन्धिनं दोषं नाशयेदित्यर्थः" तदुक्तं सप्तर्षिमते विवाहपटले । "नभोगारिभावं हरेत् सद्भकूटं विरुद्धं भकूटं हरेत् खेटमैत्री । यदा नाशयन्त्येकनाडीसमायोगकूटादिकान् सप्तभेदांश्च ते तान्" । (मु० चि०) चतुर्थचरणः "योगो दुष्टभकूटक इत्यादिना पुनरुक्तोऽपि स्मरणाविच्छेदार्थं पठितः" । यदुक्तं नारदेन "एकाधीशे मित्रभावे शुभदं पाणिपीडनम् । द्विद्वादशे त्रिकोणे च न कदाचित् षडष्टके" इति । एतन्नाडीदोषे सत्येव द्रष्टव्यम् । अधुनोदितवाक्यस्मरणात् । "भवनपतिसुहृत्त्वं स्यात् तथैकाधिपत्यं यदि भवनवशित्वं चैव षष्ठाष्टकेऽपि । शुभकृदिह विवाहोऽन्योऽन्यताराविशुद्धौ यदि खलु फणिचक्रे स्यान्न नाडीसमाजः" इति श्रीपत्युक्तेश्च "अन्यथा प्रागभिहितवशित्वादिवाक्यान्यनर्थकान्यापद्येरन्निति" । पी० धा० । अथ नाडीकूटमाह । "ज्येष्ठार्यमेशनीराधिपभयुगयुगं दास्रभं चैकनाडी पुष्येन्दुत्वाष्ट्रमित्रान्तकवसुजलभं योनिबुध्न्ये च मध्या । वाय्वग्निव्यालविश्वोडुयुगयुगमथो पौष्णभं चापरा स्याद्दम्पत्योरेकनाड्यां परिणयनमसन्मध्यनाड्यां हि मृत्युः" मु० चि० ज्येष्ठा प्रसिद्धा । अर्यमा उत्तराफल्गुनी । ईश आर्द्रा । नीराधीपो वरुणस्तद्भं शततारका एभ्यो नक्षत्रेभ्यो युगयुगं द्वयं द्वयम् । ज्येष्ठामूलं उत्तराफल्गुनीहस्तौ । आर्द्रा पुनर्वसू च । शततारकापूर्वभाद्रा चेत्यर्थः । दास्रभमश्विनी च एतन्नक्षत्रनवकं परस्परमेकनाडीत्युच्यते । अथ पुष्यः प्रसिद्धः इन्दुर्मृगः त्वाष्ट्रं चित्रा मित्रोऽनुराधा अन्तकं भरणी व-

सुर्धनिष्ठा, जलभं पूर्वाषाढ़ा, योनिः पूर्वफाल्गुनी, बुध्नोऽहिर्बुध्न्य उत्तरभाद्रपदा, एतच्चतुर्नवकं परस्परं मध्यनाड्यामुच्यते। अथ वायुः स्वाती, अग्निः कृत्तिका, व्यालोऽश्लेषा, विश्वोत्तराषाढ़ा, एभ्यो युग्मयुग्मं स्वाती विशाखा च, कृत्तिका रोहिणी च अश्लेषा मघा च उत्तराषाढ़ाश्रवणे चेत्यर्थः। अथ पौष्णभं रेवती च, एतच्चतुर्नवकमपरं तृतीयनाडीत्युच्यते। एतत्फलमाह। दम्पत्योः स्त्रीपुंसयोरेकनाड्यां परिणयनमसदुदुष्टफलं स्यात्। मध्यनाड्यां हि निश्चयेन मृत्युर्द्वयोरपि स्यात्। "मूलेन्द्रार्कभपाश्यजैकचरणादित्यार्यमेशाश्विभैर्याम्येन्द्रीज्यभमित्रभाम्बरसुभत्वाष्ट्राम्बुहिर्बुध्न्यभैः। अन्यैर्नाप्यदूरैकनाड़िनवके स्यातां द्विभे चेन्मृतिर्गौडाद्दक्षिणतः कचिन्मृपसुखे पार्श्वैकनाडी स्थिता"। गौड़ाद्दक्षिणतः सर्वत्रैव पार्श्वैकनाडी स्थिता, कलिङ्गादौ क्वचित्, अन्यत्रान्यथा अत्राभे पार्श्वैकनाडी स्थितेत्यर्थः"। यदाह गर्गः। "नाड़ीकूटं तु संग्राह्यं कूटानां तु शिरोमणिः। ब्रह्मणा कन्यकाकण्ठसूत्रत्वेन विनिर्मितमिति"। वराहः "आद्यैकनाडी कुरुते वियोगं मध्याख्यनाड्यामुभयोर्विनाशम्। अन्त्या च वैधव्यमतीव दुःखं तस्माच्च तिस्रः परिवर्ज्जनीयाः" इति। अत्र चक्रन्यासो वसिष्ठेनोक्तः। "आद्यन्तिभिर्भैस्त्रिभिरश्विभाद्यं क्रमोत्क्रमात् संगणयेदुडूनि। यद्येकपर्वण्युभयोश्च धिष्ण्ये नेष्टा बुधानां भृशमेकनाडी"। फलेऽपि विशेषमाह वशिष्ठः "सा मध्यनाड़ी युगपन्निहन्ति तत्पार्श्वनाडी खलु कन्यकां तु। आद्यन्तपर्य्यायसमागता चेद्द्वैध सामन्तरिता निषिद्धाः"। उत्तरार्द्धस्यायमर्थः। आद्यन्ते समीपस्थिते पर्याये आद्यन्तौ चेदेकनाडी समागता। यथाऽश्विन्यार्द्रयोर्भरणीमृगशिरोरोहिण्यास्तयोर्वा सा नाड़ी वर्ज्जनीयैव स्त्रीपुंसयोरत्यशुभफलदात्री स्यात्। यदा त्वश्विन्युत्तरफाल्गुन्योरितरत्नव्यवधाना सा नाड़ी त्रिभिर्वर्षैरल्पाऽशुभफलदात्री स्यात्। इयञ्चाश्विन्यादित्रिकगणना कन्यायाश्चतुश्चरणे जन्मनक्षत्रे सति यदा तु त्रिचरणं नक्षत्रं तदा कृत्तिकामारभ्य साभिजिच्चतुःपर्वगणना द्विचरणे कन्यानक्षत्रे मृगशीर्षतः पञ्चपर्वगणना। यदाह नारदः। चतुस्त्रिद्व्यङ्घ्रिभोत्थायाः कन्यायाः क्रमशोऽश्विभात्। वह्निभादिन्दुभाद्वाड़ी त्रिचतुःपञ्चपर्वसु। भवेत् संख्या चैकनाड्यां मृत्युर्न संशयः"। अमुमर्थं स्फुटमाह गर्गः। "चतुःपात् कन्यकाऋक्षं गणयेदश्विभादिकम्। त्रिपं वह्न्यादिकत्वेन त्रिपं पर्व सुधाकरम्। कन्यकर्क्षं त्रिपाच्चेत् स्याद्गणयेत् कृत्तिकादिकम्। चतुर्भिः पर्वभिस्तद्वदभिजित्तारकान्वितम्। कन्यकर्क्षं द्विपाच्चेत् स्याद्गणयेत् सौम्यभादिकम्। पञ्चभिस्त्वपरोक्षे तु पञ्चमात् त्रिकवर्जिते" एतत्फलमप्याह गर्गः। "संश्लिष्टा मध्यनाड़ी तु युगपं हन्ति वेगतः। संश्लिष्टा पार्श्वनाड़ी तु कन्यकां हन्त्यसंशयम्। व्यवस्था त्वेकनाड़ी स्यादायसन्ततिदायिनी। दूरस्था चैकनाड़ी स्याद्दुरानिष्टकारिणीति"। जगन्मोहने नारदः। "एकनाड़ीविवाहश्च गुणैः सर्वैः समन्वितः। वर्ज्जनीयः प्रयत्नेन दम्पत्योर्निधनं यतः"। आसां नाड़ीनां देशभेदेन व्यवस्थामाह जगन्मोहने नारदः। "चतुर्नाड़ी त्वहिच्छत्रे पाञ्चाले पञ्चनाड़िका। त्रिनाड़ी सर्वदेशेषु वर्ज्जनीया प्रयत्नतः" इति। अहिच्छत्रपाञ्चालौ देशविशेषौ। तथाद्वशिष्ठादिभिर्देशभेदेन नक्षत्रभेदेन चानित्यप्रवृत्तिके चतुःपञ्चनाड्यावुपेक्ष्य सकलदेशव्यापित्वात् सकलनक्षत्रव्यापित्वाच्च त्रिनाड्येवोक्ता। नचैतावता चतुःपञ्चनाड्योः स्वस्वदेशव्यतिरिक्तदेशेषु नैवावदोषः किन्तु सर्वेष्वपि देशेषु विवाहे तत्र स्वदेशे दोषमहत्त्वमन्यदेशे दोषाल्पता त्रिनाड़ी तु सर्वत्रैव समानदोषा" यदाह मनुः। "अहिच्छत्रे चतुर्नाड़ीसंयोगः कालमृत्युदः। एष योगोऽन्यदेशेषु ह्यमृत्युफलप्रदः। पञ्चनाड़ीसमायोगः पाञ्चाले कालदण्डदः। इतरत्र समायोगो दुःखदारिद्र्यदोषकृत्। त्रिनाड्यां तु समायोगः सर्वत्रानिष्टकारकः" इति। यत्तु ज्योतिर्निबन्धे ज्योतिःप्रकाशे अश्विन्यादित्रिनाड़ीं प्रकल्प्याभिहितम् "निधनं मध्यमनाड्यां दम्पत्योर्नैव पार्श्वयोर्नाड्योः" अत्र पार्श्वनाड्यां मृत्युरूपमहादोषाभावं मत्वा विवाहादिकरणं शुभायेत्यर्थः। तत् कलियादिविषयं गोदावरीतीरदक्षिणदेशवासिविषयं वा। तदप्युक्तं तत्रैव। "करपीड़े एकनाड्यौ न निन्द्ये इति वदन्ति। तत् कलियादिविषयं गौतम्यायाम्यतटायेति"। गौतमी गोदावरी। अत्रापि चार्षं मूलं मृग्यम्। "इयं चाश्विन्यादित्रिनाड़ी गुरुमन्त्रादिष्वप्यनिष्टा प्रश्नपल्लीपतनादौ तु शुभैव"। उक्तञ्च स्वरोदये "एकनाड़ीस्थिता यत्र गुरुमन्त्राश्च देवताः। तत्र द्वेषं रुजं मृत्युं क्रमेण फलमादिशेत्। प्रभुः पण्याङ्गना मित्रं देशो ग्रामः पुरं गृहम्। एकनाड़ीस्थितं भव्यं विरुद्धं वेधवर्जितमिति"। अत्र नाड़ीवेधे चरणवेधेऽधिकदोषः, आवश्यके स एव ग्राह्यः" एतदप्युक्तं तत्रैव। "आद्यांशेन चतुर्थांशं चतुर्थांशेन चादिमम्। द्वितीयेन तृतीयञ्च तृतीयेन द्वितीयकम्।

रेवतः पूर्वभाद्रपदादिना । याम्यः सौम्योगुरुर्योनिश्चित्-मित्रजलाह्वयम् । धनिष्ठा चोत्तरा भद्रा मध्यनाड़ी व्यवस्थिता । कृत्तिका रोहिणी सर्पोमघा स्वातीविशाखके । उत्तराश्रवणापौष्णं पृष्ठनाड़ी व्यवस्थिता । अश्व्यादिनाड़ीवेधर्क्षे षष्ठं द्वितीयकं क्रमात् । याम्यादित्रिकतुर्थञ्च कृत्तिकादिद्विषट्ककम् । एवं शिरोवधेवेधं कन्यायन्ते वरे गुरौ । पञ्चस्वोत्तामिमित्रेषु देशे ग्रामे पुरे गृहे । एकनाड़ीस्थधिष्ण्यानि यदि स्युर्वरकन्ययोः । तदा वेधं विजानीयात् गुर्वादिषु तथैव च । प्रकटं यस्य जन्मर्क्षं तस्य जन्मर्क्षतोव्यधः । प्रणष्टं जन्मभं यस्य तस्य नामर्क्षतोवदेत् । द्वयोर्जन्मभयोर्वेधे द्वयोर्नामभयोस्तथा । नामजन्मर्क्षयोर्वेधे न कर्त्तव्यं कदाचन । एकनाड़ीस्थिता चेत् स्यात् भर्त्तुर्नाशाय चाङ्गना । तस्मान्नाड़ीव्यधोवीक्ष्योविवाहे शुभमिच्छता । प्राङ्नाड्या वेधतोभर्त्ता मध्यनाड्योभयं तथा । पृष्ठनाड़ीव्यधे कन्या म्रियते नात्र संशयः । एकनाड़ीस्थिता यत्र गुरुर्मन्त्रश्च देवता । तत्र द्वेषं रुजं मृत्युं क्रमेण फलमादिशेत् । प्रभुः पत्तनमित्रं देशोग्रामः पुरं गृहम् । एकनाड़ीगता भव्या अभव्या वेधवर्जिताः” । अस्यापवादः ज्यो० त० । ‘एकराश्यादियोगे तु नाड़ीदोषो न विद्यते” एकराश्यादिश्च “एकराशौ च दम्पत्योः शुभं स्यात् समसप्तके । चतुर्थे दशमे चैव तृतीयैकादशे तथा”इत्युक्तः । समसप्तकाद्विषमसप्तके दोषः । तथा च “घोटके सप्तके मेषतुले युग्महयौ तथा । सिंहघटौ यदा पञ्चौ मृतिं तत्राग्रवीश्वरः” । ज्योपतिव्यवहारनिर्णये । “एकदेकाधिपयोगे ताराबले वश्यराशौ वा । अपि नाड्यादिवेधे भवति विवाहोहितार्थाय,राजमार्त्तण्डे च ।“न राजयोगे चक्रवैरिता च न तारशुद्धिर्गणमैत्रं स्यात् । न नाड़ीदोषोन च वर्णदुष्टिर्गणोदयस्ते शुभयोर्वदन्ति”अत्र देशभेदात् व्यवस्था । अन्यत्रोक्तम्।“लग्ने व्यये च पाताले जामित्रे चाष्टमे कुजे । भर्त्ता कन्याविनाशाय कन्याभर्त्तृविनाशकृत्” । अस्यापवादः । “अथ वा गुणबाहुल्ये कुजे वा तादृशे द्वयोः” प्रागुक्तरीत्या षट्त्रिंशतां कूटानां गुणाङ्कानां सङ्कलने अष्टादशतोऽधिकत्वे उभयोर्वरकन्ययोरुक्तलग्नादिस्थाने मङ्गलस्थितौ च न दोषः एवमन्योऽपि वैधव्ययोगोनिरूपणीयः स च जातकग्रन्थे वक्ष्यते । एवं विवाहे वर्णादिशुद्धिं दम्पत्योरानुकूल्याङ्गं चोक्त्वेदानीं निर्दोषदिनलग्नादि निरूप्यते । “तत्रैकविंशतिः सर्वलग्नता दोषा नारदेन परिगणिताः । “एकविंशतिदोषाणां नामरूपफलानि च । पितामहोक्तं संवीक्ष्य तानि वक्ष्ये समासतः । पञ्चाङ्गशुद्धिरहितोदोषस्त्वाद्यः प्रकीर्त्तितः । उदयास्तशुद्धिरहितो द्वितीयः सूर्यसंक्रमः । तृतीयः पापषड्वर्गो भृगुषष्ठः कुजाष्टमः । गण्डान्तं कर्त्तरी रिष्फषडष्टेन्दुश्च संयुतः । दम्पत्योरष्टमं लग्नं राशिर्विषघटी तथा । दुर्मुहूर्त्तो वारदोषः खार्जूरिकसमाङ्घ्रिभम् । ग्रहणोत्पातभं क्रूरविद्धर्क्षं क्रूरसंयुतम् । कुनवांशो महापातो वैधृतिश्चैकविंशतिरिति” अन्यैस्तु दश दोषा उक्ताः “वेधश्च १लत्ता२च तथा च पातः,३खार्ज्जूरयोगो४दशयोगचक्रम्५। युतिश्च६जामित्र७मुपग्रहाश्च८वाणाख्यवज्रौ९दश चैव दोषा इति व्यवहारोच्चयेऽभिधानात्। तत्र“दुर्मुहूर्त्तो रवावर्यमेत्यादिः। वारदोषः कुलिकादिः, क्रूरसंयुतमित्यस्योपलक्षणत्वात्काल-दृष्टिनामकोऽपि दोषो ग्राह्यते । यदाह वशिष्ठः । “पञ्चाङ्गशुद्धिरहितास्तोत्पाताऽकालदृष्टिजाः” इति । एवं दोषाणां कर्मविशेषे फलमाह वशिष्ठः “एकविंशन्महादोषास्त्वेते ब्रह्मणोदिताः । कदाचिन्नैव सीदन्ति गुणानां कोटिकोटिभिः । तस्मादेतेषु दोषेषु कदाचिन्नाचरेच्छुभम् । विवाहे विधवा नारी मरणं व्रतबन्धने । ग्रामनाशः प्रतिष्ठायां सीमन्ते गर्भनाशनम् । नवान्नभोजने मृत्युः कृषौ तत्फलनाशनम् । कर्त्तुर्नाशो गृहारम्भे प्रवेशे पतिनाशनम् । यात्रायां कर्त्तृनाशः स्याद्युद्धयाने विशेषतः । नश्यते शुभकृत्पुण्यमेषु श्राद्धादिकर्मभिरिति” पी० धा० ।

तत्र सर्वकर्मोपयोगिषड्वर्गे वक्तव्ये आदौ क्षेत्रनवांशपाशाह “कुजशुक्रसौम्यशशिसूर्यचन्द्रजाः कविभौमजीवशनिसौरयोगुरुः । इह राशिपाः क्रियमृगास्यतौलिकेन्दुभतो नवांशविधिरुच्यते बुधैः” मु० चि० ।

“अत्र लग्नादीनां लक्षणं नारदोक्तम् ।“त्रिंशद्भागात्मकं लग्नं होरा तस्यार्द्धमुच्यते । लग्नत्रिभागो द्रेक्काणो नवमांशो नवांशकः । द्वादशांशोद्वादशांशस्त्रिंशांशस्त्रिंशदंशकः । षड्वर्गाः कथितास्त्वेते- तेषामीशा इमे स्मृताः” इति । तत्रैते भौमशुक्रबुधचन्द्रसूर्यबुधशुक्रभौमगुरुशनिशुरवः, क्रमेणेह षड्वर्गे राशिपा मेषादिराशीनां स्वामिनः । क्रियेति । क्रियो मेषः मृगास्यो मकरः तौलिकं तुला इन्दुभं कर्कः एभ्यो राशिभ्यो द्वादशस्वपि राशिषु नवांशश्चार्धंर्धैरुच्यते । मेषे मेषादेः, वृषे मकरादेः मिथुने तुलातः कर्के कर्कादेः, एवं सिंहेऽपि मे-

मादेव एवं कन्यादिषु अपि राशिषु मकरादित एव। एवमेव धनुरादिष्वपि इत्यर्थः। यदाह नारदः। “सिंहस्याधिपतिर्भानुश्चन्द्रः कर्कटकेश्वरः। मेषवृश्चिकयोर्भौमः कन्यामिथुनयोर्बुधः। धनुर्मीनयोर्देवेज्यः शुक्रो वृषतुलेश्वरः। शनिर्मकरकुम्भेश इत्येते राशिनायकाः”। “नवमांशा मेषसिंहधनुषि, मेषादयः क्रमात्। क्रमाद्गोमृगकन्यासु ज्ञेयाः स्युर्मकरादयः। तुलामिथुनकुम्भेषु स्युः क्रमेण तुलादयः। अलिकर्कटमीनेषु क्रमात् स्युः कर्कटादयः” इति पी० धा०। अथ होरेशकथनम् “समभवनमध्ये शशिरविहोरा विषमभमध्ये रविशशिनोः स्यात्” मु० चि०। “पञ्चदशभागात्मिका होरा समराशिमध्ये प्रथमा चन्द्रस्यापरा सूर्यस्य। विषमराशिमध्ये प्रथमा रवेः परा चन्द्रस्येत्यर्थः। “होरार्केन्द्वोरोजराशौ समभे चन्द्रसूर्ययोरिति नारदोक्तेः” पी० धा०। अथ त्रिंशांशेशाः। “शुक्रज्ञजीवशनिभूतनयस्य बाणशैलाष्टपञ्चविशिखाः समराशिमध्ये। त्रिंशांशकाविषमभे विपरीतमस्मादुद्रेष्काणकाः प्रथमपञ्चनवाधिपानाम्” मु० चि०। समराशिमध्ये क्रमेण प्रथमतः पञ्चानामंशानां शुक्रः स्वामी ततः शैलानां सप्तानां ज्ञो बुधः। ततोऽष्टानां जीवो गुरुः। ततः पञ्चानां शनिः। ततो विशिखानां बाणानां पञ्च तेषां भूतनयो भौमः। शुक्रश्चेत्यादिसमाहारद्वन्द्वः। विषमभे तु अस्मात् समराशेर्विपरीतं ज्ञेयम्। यथा प्रथमतः पञ्चानां भौमः ततः पञ्चानां शनिः ततोऽष्टानां गुरुः। ततः सप्तानां बुधः ततः पञ्चानां शुक्रः इत्यर्थः। अयमेव त्रिंशांशकसंज्ञ इति। यथाह नारदः। ‘कुजार्कीज्यज्ञशुक्राणां बाणेष्वष्टाद्रिमार्गणाः भागाः स्युर्विषमे ते तु समराशौ विपर्ययात्’ इति। द्रेष्काणा राशिदशांशाः द्वादशसु राशिषु प्रथमोद्रेष्काणः प्रथमस्य स्वराश्यधीशस्य, द्वितीयोद्रेष्काणः पञ्चमराशीश्वरस्य, तृतीयः स्वराशितो नवमराशीश्वरस्य। यथा वृषे प्रथमोद्रेष्काणो वृषाधीशशुक्रस्य, स्वापेक्षपञ्चमकन्याधीशबुधस्य द्वितीयः, तृतीयः स्वापेक्षनवममकराधीशशनेरित्यर्थः। “स्युर्द्रेकाणा लग्नपञ्चनवराशीश्वराः क्रमादिति” नारदोक्तेः पी० धा०। द्वादशांशेशानाह।

“स्याद्द्वादशांश इह राशित एव गेहं होराथ दृक्‌नवमांशकस्त्र्यंशभागाः। त्रिंशांशकश्च षडिमे कथितास्तु वर्गाः सौम्यैः शुभं भवति चाशुभमेव पापैः” मु० चि०। ‘इह षड्वर्गे द्वादशांशः सार्द्धमंशद्वयं तत् स्वराशित एकेकांशात्मं गणितं यत्र यद्राशिस्वामी स द्वादशांशेश्वरः ‘आरभ्य लग्नराशेस्तु द्वादशांशेश्वराः क्रमादिति” नारदोक्तेः। अन्यत्स्पष्टतरम्। तदुक्तं वशिष्ठेन। “लग्नं तदर्द्धञ्च ततस्त्रिभागो नवांशकश्च द्विदशांशकश्च। त्रिंशांशकश्चेति हि वर्गषट्कं शुभं शुभस्योभयराशिपस्य। यः पापषड्वर्गभवो हि दोषः पश्चात्सौम्यफलप्र-जातम्। गुणौघमध्योधिकमोदवाच्यः शुभस्तथैवं खलु राशपस्येति”। तस्मात् सौम्यपापषड्वर्गसाहुर्ये सति सौम्यषड्वर्गस्त्रिभ्योऽधिकश्चेच्छुभः त्रिभ्यो हीनश्चेदशुभ इत्यर्थः” पी० धा०। अथ गण्डान्तदोषः। “ज्येष्ठापौष्णभसार्पभान्त्यघटिकायुग्मं च मूलाश्विनीपित्र्यादौ घटिकाद्वयं निगदितं तद्भस्य गण्डान्तकम्। कर्कालिझषभान्ततोऽर्धघटिका सिंहाश्वमेषादिगा पूर्वान्ते घटिकात्मकं त्वशुभदं नन्दातिथेश्चादिमम्” मु० चि०।

“गण्डान्तं नाम सन्धिविशेषः स चानेकविधः नक्षत्रसन्धिस्तिथिसन्धिर्लग्नसन्धिश्च तथा योगसन्धिः करणसन्धिर्वर्षसन्धिरयनसन्धिरृतुसन्धिर्माससन्धिः पक्षसन्धिर्दिनसन्धी रात्रिसन्धिमध्याह्नसन्धिः प्रातःसायंसन्धिर्निशीथसन्धिश्च। तत्र तिथिनक्षत्रलग्नविशेषाणां यः सन्धिर्नियतकालः स गण्डान्तसंज्ञः। अन्येषां तु सन्धिर्नियतकालः सन्धिशब्दवाच्य एव। तत्रादौ नक्षत्रगण्डान्तमुच्यते। ज्येष्ठा प्रसिद्धा पौष्णभं रेवती सार्पभमश्लेषा एषामन्ते घटिकाद्वयम् (४दण्डाः)। तथा मूलाश्विन्यौ प्रसिद्धे पित्र्यं मघा। एषामादौ घटिकाद्वयं च गण्डान्तञ्च। तथा च रेवत्यश्विन्योरश्लेषामघयोर्ज्येष्ठामूलयोरन्तरालवर्त्ति घटीचतुष्टयं नक्षत्रगण्डान्तमशुभदम् तदुक्तं रत्नमालायाम्। “पौष्णाश्विन्योः सार्पपित्र्यर्क्षयोश्च यच्च ज्येष्ठामूलयोरन्तरालम्। तद्गण्डान्तं स्याच्चतुर्नाडिकं हि यात्राजन्मोद्वाहकालेष्वनिष्टमिति”। यत्तु वशिष्ठेनोक्तम् “यदन्तरालं पितृसार्पयोश्च मूलेन्द्रयोराश्विनपौष्णयोश्च। ससन्धि गण्डान्तमिति त्रयं तद्याममप्रमाणं शुभकर्महन्तृ इति”। यामः प्रहरो नक्षत्रभोगस्येति शेषः। नारदोऽपि ‘सार्पेन्द्रपौष्णधिष्ण्यान्ते षोड़शांशा भसन्धयः। तदग्रभेष्वाद्यजाताः पापा गण्डान्तसंज्ञकाः। एवं सन्धित्रितयजं गण्डान्तत्रितयं महत्। अशुभं जन्मयानादिविवाहस्थापनादिषु”। षोड़शांशो नक्षत्रभोगस्यार्द्धप्रहर इति यावत्। आद्यजाताः षोड़शांशाः। तदेतद्दोषमहत्त्वात्तत्तत्स्थ-

नार्थम्। तथा हि। चतुर्घटिके नक्षत्रगण्डान्ते महान् दोषः, तदधिके स्वष्टघटिकात्मके मध्यमदोषः। ततोऽधिके चरणावधिके स्वल्पदोषः। अतएवोक्तं सूर्यसिद्धान्ते "सार्पेन्द्रपौष्णधिष्ण्यानामन्त्याः पादा भसन्धयः। तदग्रभेषु साद्धांशो गण्डान्तं नाम कीर्त्त्यते। व्यतीपातत्रयं घोरं गण्डान्तत्रितयं तथा। एतद्भसन्धित्रितयं सर्वकर्मसु वर्जयेदिति"। अर्द्धांशचरणार्द्धं प्रहर इत्यर्थः। दीपिकायाञ्च। "आद्ये मघाचतुर्भागे मूलपादाद्य एव च। रेवत्यन्त्यचतुर्भागे विवाहः प्राणनाशकः" इति। अथ लग्नगण्डान्तमुच्यते। कर्कीति कर्कः प्रसिद्धः अलिर्वृश्चिकः झषओ मीनः एषान्त्रयाणां लग्नानामन्तेऽर्द्धघटिका, तथा सिंहमेषौ प्रसिद्धौ चापोधनुः एषां लग्नानामादिभूतार्द्धघटिका गण्डान्तं नाम। तथा च कर्कसिंहयोर्वृश्चिकधनुषोर्मीनमेषयोश्च लग्नयोरन्तरालवर्त्तिन्येका घटिका लग्नगण्डान्तमशुभदमित्यर्थः। यदाह कश्यपः "सिंहकर्कटयोश्चापकीटयोर्मीनमेषयोः। गण्डान्तमन्तरालं तद्घटिका निधनप्रदेति"। यत्तु नारदेनोक्तम् "कुलीरसिंहयोः कीटचापयोर्मीनमेषयोः। गण्डान्तमन्तरालं स्यात् घटिकार्द्धं मृतिप्रदमिति"। वशिष्ठेनापि। "लग्नान्तरालं घटिकार्द्धमेतत्कुलीरहर्य्योरलिचापयोश्च। मीनाजयोः सर्वगुणान्निहन्ति लोभो यथा सर्वगुणाकरस्येति"। तद्दोषाधिक्यख्यापनार्थम्। अथ तिथिगण्डान्तमुच्यते। पूर्णान्त इति। पूर्णाः पञ्चमीदशमीपञ्चदश्यस्तासामन्ते घटिकैका, तथा नन्दाः प्रतिपत्षष्ठ्येकादश्यस्तासामादिभूतैका घटिका तिथिगण्डान्तं नाम। तथा च पञ्चमीषष्ठ्योर्दशम्येकादश्योः, पञ्चदशीप्रतिपदोर्वा तिथ्योरन्तरालवर्त्तिघटीद्वयं तिथिगण्डान्तमशुभमित्यर्थः। यदाह नारदः "पूर्णानन्दाख्ययोस्तिथ्योः सन्धिर्नाडीद्वयं सदा। गण्डान्तं मृत्युदं जन्मयात्रोद्वाहव्रतादिषु" इति। यत्तु कश्यपेनोक्तम् "पूर्णानन्दाख्ययोस्तिथ्योः सन्धिर्नाडीचतुष्टयम्। उद्वाहजन्मयात्रेषु गण्डान्तं निधनप्रदमिति"। तद्दोषतारतम्यख्यापनार्थम्। एवं गण्डान्तसंज्ञः सन्धिरुक्तः। तत्र तिथिलग्नगण्डान्तपरिहारः शाकल्यसंहितायाम्। "तथैव तिथिगण्डान्तं नाशीन्दौ बलशालिनि। तथैव लग्नगण्डान्तं नास्ति जीवे बलान्विते" इति। अथात्र प्रसङ्गादन्यानपि सन्धिरुच्यतेऽस्माभिः। यदाह गुरुः "घटिकाद्वयमृक्षान्ते मासान्ते च दिनत्रयम्। वर्षान्ते वर्जयेत्पक्षं षड्वाहिनसप्तकमिति"। तिथ्यादिसन्धिमध्याह वशिष्ठः "पक्षोऽब्दसन्धिस्त्रिदिनञ्च मासषन्धिस्त्रिनाड्यः खलु सन्ध्ययोश्च। नाड्यश्चतस्रस्तिथिऋक्षयोगसन्धिस्तदर्द्धं करणस्य सन्धिः"। वर्षेषु विशेषमाह स एव "सौराब्दान्ते त्यजेत्पक्षं चान्द्रे तु नवमन्त्यजेत्। सावनान्तेऽष्टमन्त्यांशं नाक्षत्रे पौष्णभात् त्र्यहमिति"। अत्रापि विशेषमाह स एव। "अब्दाः स्युस्त्रिविधा जीवसौरचान्द्राह्वयाः सदा। तेषामादौ तथा चान्ते त्रिदिनं वर्जयेच्छुभे" इति। अयञ्च सर्वकार्यसाधारणो निषेधः अन्यथा मीनादित्ये विवाहप्रसङ्गाभावादेव वर्षान्तनिषेधस्य वैयर्थ्यापातात्। गुरुः "ऋक्षान्ते पुत्रनाशः स्यान्मासान्ते तु धनक्षयः। वर्षान्ते वर्गनाशः स्यात्तदुपग्रहणात् सर्वनाशनमिति"। आवश्यकत्वे तु "नक्षत्रयोगतिथिसन्धिषु नाडिकैका तिथ्यष्टविंशतिपलैः सहितोभयत्र। कर्क्यलिमीनतनुसन्धिषु दिक्पलानि त्याज्यानि शेषविवरेषु च पञ्च पञ्चेति" सायनासिद्धं कैशवार्कवाक्यमनुसर्त्तव्यम्। षायना च सिद्धान्तशिरोमणावभिहिता। "शशितनुविकलाभ्यचन्द्रभुक्तेन्दुभान्वोर्गतिविवरकलाभिर्भूय एवाभिरेव। पृथगथ गतिगुण्या नाडिकाः सन्धिराप्ता भतिथिकरणयोगानां फलं तत्र मिश्रमिति"। सन्धिफलमप्याह कैशवार्कः। "सन्धौ पुरन्ध्री शुचनेति बन्ध्या मृतप्रजा वा यदि सन्धिसन्धिः। वदन्ति वात्स्या ऋतुनाविमूढां निशीथमध्यं दिनसन्धिमूढाम्" तत्रार्द्धरात्रमध्यन्दिनसन्धिः "मध्ये निशाह्नोर्घटीलं ग्रयम्" मु० चि०। इत्याद्ये प्रकरणेऽभिहितः। सन्धिसन्धिस्तु कैशवार्केणोक्तः। "रवेर्भवेदेकघटाधिकस्य यदंशकं खलु सायनस्य। तदत्र राशिद्वयभागतष्टं खष्टं वसन्तादृतवो भवन्ति। तत्सन्धियोगात् कुघटोऽश्माः शुद्धिं सदा सेविशुवायनीयाः। स सन्धिसन्धिः खलु यत्र शेषं शून्यं भवेदेव विशेषपुण्यः" इति मीनसंक्रान्तिमारभ्य वसन्तर्त्तुगणनेति पञ्चमङ्गीतत्यैकघटाधिकस्येत्युक्तम्। गण्डान्तदोषपरिहारमाह वशिष्ठः "गण्डान्तदोषमखिलं मुहूर्त्तोऽभिजिदाह्वयः। हन्ति वृन्दं मृगव्याधः पक्षिसङ्घमिवाखिलम्"। तदेतद्दोषापवादाख्यस्य प्रकारस्य नियामकत्वाद्विवाहविषयं न जातकादौ" पी० धा०। अथ कर्त्तरीदोषः। "लग्नात् पापावृजू व्ययार्थस्थौ यदा तदा। कर्त्तरी नाम सा ज्ञेया मृत्युदारिद्र्यशोकदा"। मु० चि० "यदा पापग्रहो लग्नाद्व्ययार्थस्थावृज्वनृजू द्वादशस्थः पापग्रहो मार्गी, द्वितीयस्थः पापग्रहो वक्री स्यात्तदा कर्त्तरी नाम दोषः

कन्वति स्त्रीपुंसयोः प्राणान्छेदयतीति कर्त्तरी छेदन इति धात्वर्थानुसारादन्वर्था सम्मुखकर्त्तरीयं मृत्युदारिद्र्यशोकदा भवेत्। यदाह नारदः "लग्नाभिमुखयोः पापग्रहयोर्ऋजुवक्रयोः। सा कर्त्तरीति विज्ञेया दम्पत्योर्गलकर्त्तरी। कर्त्तरीदोषसंयुक्तं यल्लग्नं तत् परित्यजेत्। अपि सौम्यग्रहैर्युक्तं गुणैः सर्वैः समन्वितमिति"। गर्गोऽपि। "व्यये मार्गगतिः क्रूरो वक्री क्रूरो धने यदि। तौ च लग्नांशतुल्यौ च तदा घोराख्यकर्त्तरी"। यदा तु द्वितीये मार्गी द्वादशे च वक्री अथ द्वावपि क्रूरौ व्ययार्थस्थौ शत्रौ शीघ्रिणौ वा स्यातां तदा कर्त्तरी नास्त्येव। यदाह वशिष्ठः "लग्नस्य पृष्ठाग्रगयोरसाध्वोः सा कर्त्तरी स्यादृजुवक्रगत्योः। तावेव शीघ्रौ यदि वक्रचारौ न कर्त्तरी चेति पितामहोक्तिरिति"। इयं कर्त्तरी चन्द्रस्यापि द्रष्टव्या। यदाह कश्यपः "चन्द्रस्य कर्त्तरी तद्वच्छुभदा न दोषदेति"। परन्तु लग्नस्य चन्द्रस्य वा क्रूरग्रहमध्यगतत्वदोषोऽप्येव कर्त्तरीतोऽल्पफलः कन्यानाशकरत्वात्। यदाह वशिष्ठः। "क्रूरग्रहमध्यगते लग्ने चन्द्रेऽथ वा करग्रहणम्। ते यमसदनाभिमुखं गमनं कुर्वन्ति कन्यायाः" इति कर्त्तरीदोषेऽन्यदप्यपवादान्तरं 'पापौ कर्त्तरिकारकावित्यादिना स्वयं वक्ष्यति। अत्र लग्नादित्युपलक्षणात् सर्वेषामपि भावानां कर्त्तरीदोषोऽध्यवसेयः "यो यो भावः स्वामिदृष्टोयुतोवेत्यादिना" तुल्यन्यायत्वात्। तत्र लग्ने कर्त्तरी महादोषकरी लग्नभङ्गाधायकत्वात्तस्या अन्यत्र तादृग्दोषाभाव इति तु तत्त्वम्" पी॰ धा॰। अतःपरं राहुकेत्वोः पापग्रहत्वं व्यवस्थापितं तच्च केतुशब्दे विस्तरेण वक्ष्यते। अथ युतयोगापरपर्य्यायसंग्रहदोषः। "चन्द्रे सूर्य्यादिसंयुक्ते दारिद्र्यं मरणं शुभम्। सौख्यसापत्न्यवैराग्यं पापद्वययुते मृतिः" मु॰ चि॰ "सूर्य्ययुक्ते चन्द्रे दारिद्र्यं स्यात्। भौमादियोगे मरणादि फलं क्रमेण स्यादित्यर्थः पापग्रहद्वितयेऽप्यशुभफलं राहुकेत्वोरपि द्रष्टव्यम्। यथाह नारदः 'यथाह्नि ग्रहसंयुक्ते दोषः संग्रहसंज्ञकः। सूर्य्येण संयुते चन्द्रे दारिद्र्यं भवति ध्रुवम्। कुजेन मरणं व्याधिः सौम्येन त्वनपत्यता। दौर्भाग्यं गुरुणा युक्ते सापत्न्यं भार्गवेण तु। प्रव्रज्या सूर्य्यपुत्रेण राहुणा कलहः सदा। केतुना संयुते चन्द्रे नित्यं कष्टं दरिद्रता। तस्मिन् संग्रहदोषे तु विवाहं नैव कारयेत्"। सापत्न्यं भर्त्तुरन्या भार्य्या स्यात्। अत्र गुरुबुधसाहित्यफलमशुभमुक्तम् यच्चफलं तु वशिष्ठवाक्ये कस्यचिन्मताभिप्रायेण शुभफलमुक्तम्। यथोक्तं वशिष्ठेन "दारिद्र्यं रविणा कुजेन मरणं सौम्येन न स्युः प्रजा दौर्भाग्यं गुरुणा सितेन सहिते चन्द्रे ससापत्नकम्। प्रव्रज्याऽर्कसुतेन सेन्दुजगुरौ चाप्यन्ति केचिच्छुभं द्व्याद्यैर्न्तुरखग्रहैः शशियुतैर्दीर्घः प्रवासः शुभैरिति"। अत एव श्रीपतिनोक्तम्। "शुभस्य दम्भोलिभृदीड्यविद्धामिति" दम्भोलिभृदीड्योजीवः। पापेति। पापद्वयेन युते उपलक्षणत्वात्पापत्रयादियुते मृतिरेव स्यात्। "पापद्वययुते चन्द्रे दम्पत्योर्मरणं ध्रुवमिति" नारदोक्तेः। बहुसौम्यग्रहयोगे तु बहुकालं पत्युर्देशान्तरेऽवस्थानं स्यात् तद्वाक्यमधुनैवाभिहितम्। अथास्य परिहारो नारदोक्तः। "स्वक्षेत्रगः स्वोच्चगो वा मित्रक्षेत्रगतो विधुः। युतिदोषाय न भवेद्दम्पत्योः श्रेयसे तदेति"। क्वचिद्वर्गोत्तम इति पठ्यते। कश्यपेनापि। "उच्चमित्रस्वराशिस्थः शुभयुक्तः शुभप्रदः। एवंविधः क्रूरयुतः सम्पूर्णफलदः शशीति" पी॰ धा॰।

अथ जन्मराशिलग्नयोरष्टमलग्नदोषं सापवादमाह।

"जन्मलग्नभयोर्मृत्युराशौ नेष्टः करग्रहः। एकाधिपत्ये राशीशे मैत्रे वा नैव दोषकृत्" मु॰ चि॰।

'जन्मलग्नजन्मराश्योः सम्बन्धिनि मृत्युराशावष्टमलग्ने करग्रहोनेष्टः। यदाह नारदः 'दम्पत्योरष्टमं लग्नं त्वष्टमोराशिरेव च। यदि लग्नगतः सोऽपि दम्पत्योर्निधनप्रदः। स राशिः शुभयुक्तोऽपि लग्नं वा शुभसंयुतम्। लग्नं विवर्जयेत् यत्नात् तदंशांश्च तदीश्वरान्" इति। अत्र जन्मलग्ने जन्मराशौ च विशेषमाह कश्यपः। "दृष्टं स्वजन्मलग्नं तज्जन्मराशिरनिष्टदः। लग्नगस्तु तयोः स्थानाच्छुभान्युपचयानि वै" इति। नारदोऽपि "जन्मराश्युदयोर्नैव जन्मलग्नोदयः शुभः। तयोरुपचयस्थानं यदि लग्नगतं शुभमिति"। अथाष्टमलग्नदोषपरिहारमाह। एकेति जन्मराशिजन्मलग्नयोरन्यतरस्य विवाहलग्नस्य च स्वाम्यैक्ये सति यथा मेषवृश्चिकयोः, यथा तयोराशीश्वरयोः मैत्रे यथा सिंहमीनयोः। अत्र हि सूर्य्यगुर्वोरन्योन्यप्रीतिरस्ति। एतादृशविषये विवाहो लग्नाष्टमदोषकृत् न स्यात्। यदाह कश्यपः 'जन्मेशाष्टमलग्नेशौ मिथो मित्रे व्यवस्थितौ। जन्मराश्यष्टमजोत्थदोषो नश्यति भावतः" इति पी॰ धा॰। परिहारान्तरमाह "क्षीणोच्चकर्कालिमृगस्त्रियोऽष्टमं लग्नं यदा नाष्टमगेहदोषकृत्। अन्योन्यमित्रत्ववशेन सा वधूर्भवेत् सुतायुर्दृढसौख्यभागिनी"। 'उच्चा वृषः स्त्री कन्या कन्ये प्रसि-

न्ताः एते राशयो यद्यष्टमलग्नं स्युः यथा सिंहान्मीनः तुलातोवृषः धनुषः कर्कः मेषात् वृश्चिकः मिथुनान्मकरः कुम्भात्कन्याऽष्टमलग्नम्। तदाष्टमगेहदोषकृन्न भवेत्। कुत इत्यत आह। अन्योन्येति। प्रागुक्तपरस्परप्रीति वशे। इदञ्चोपलक्षणम्। मेषवृश्चिकयोस्तुलावृषयोरेकाधिपत्वात्। एवं सति या वधूः परिणीता कन्या सुता युक्ता सौख्यभागिनी स्यात्। उक्तञ्च "अपकुलीरझषालिमृगाङ्गना जननराशिविलग्नगृहाष्टमाः। शुभफला भृगुणा कथितास्तयोरधिपती सुहृदौ हि परस्परमिति"। परिहारान्तरमप्याह गुरुः। "लग्नादष्टमराशीशः केन्द्रगः शुभवीक्षितः। यद्यष्टमगतस्योक्तदोषमाशु व्यपोहति। रन्ध्रेशः स्वशुभांशस्थस्तुङ्गः स्वक्षेत्रमित्रगः। अष्टमस्थानदोषोऽपि विनश्यति न संशय" इति।

अथ लग्नेऽष्टमेशादियोगफलम्। "मृतिभवनांशो यदि च विलग्ने तदधिपतिर्वा न शुभकरः स्यात्। व्ययभवनं वा भवति तदंशस्तदधिपतिर्वा कलहकरः स्यात्" मु॰ चि॰। "अष्टमभवननवांशो यदि विलग्ने स्यादथ वाष्टमभवनस्वामी विलग्ने स्यात्तदा शुभकरो न स्यात्। यदाह कश्यपः। "दम्पत्योरष्टमे लग्ने राशौ वापि तदंशके। तदीशे वा लग्नगते तयोर्मृत्युर्न संशय" इति। अथ व्ययभवनमन्यलग्नजन्मराशिभ्यां द्वादशभवनम् अथवा व्ययांशो व्ययस्वामी यदि लग्ने स्यात्तदा कलहकृत् स्यात्। उक्तञ्च कश्यपेन "तथैव द्वादशे लग्ने तदंशे वा तदीश्वरे। विवाहे जन्मगे नैस्त्यं नित्यं स्यात् कलहोद्वयोरिति"। नारदेनापि "दम्पत्योर्द्वादशं लग्नं राशिर्वा यदि जन्मगः। अर्थहानिस्तयोस्तस्मात्तदंशस्वामिनं त्यजेदिति"।

अथ विषघटीदोषः। "खरामतो ३० ऽन्त्यादितिवह्निपित्र्यभे खवेदतः ४० कै, रदत ३२ श्च सार्पभे। खबाणतो ५० ऽश्वे, ष्टितितो १८ र्यमाम्बुपे, कृते २० र्भगत्वाष्ट्र भविश्वजीवभे। मनो १४ र्द्विदैवानिलसौम्यशाक्रभे कृपयतः २१ मैत्रकरेऽष्टि १६ तोऽजभे। युगाश्वितो २४ बुध्न्यभतोयवाम्यभे, खचन्द्रतो १० मित्रभवासवश्रुतौ। मूलेऽङ्कबाणाद् ५६ विषनाडिकाः कृता ४ वर्ज्याः शुभेऽथो विषनाडिकाध्रुवाः। निघ्ना भभोगेन खतर्क ६० भाजिताः स्फुटाभवेयुर्विषनाडिकास्तथा" मु॰ चि॰। "रेवतीपुनर्वसुकृत्तिकामघानक्षत्रेषु खरामतः त्रिंशत्घटिकोत्तरं कृतायतस्त्रो घटिकाविषनाडिकाः शुभकार्ये वर्ज्याः स्युरिति" तृतीयश्लोकेनान्वयः। एवं सर्वत्र व्याख्येयं कै रोहिण्यां कृतैर्विंशतेः। अजभे पूर्वभाद्रपदायाम् अन्यानि पदानि स्पष्टानि। तदेवं षष्टिघटीरूपे नक्षत्रभोगे ध्रुवकायतस्त्रो विषनाड़िकाः प्रोक्ताः न्यूनाधिकत्वे तु स्पष्टीकरणमुच्यते। अथो इति। विषनाडीनां ध्रुवाः खरामतः इत्येवमादायो नक्षत्रभोगेनेष्टेन निघ्नाः खतर्कैः षष्ट्या भाजितास्ततो विषनाडिका ध्रुवाः स्पष्टा भवेयुरित्यर्थः। अत्रोपपत्तिस्त्रैराशिकेन। यदि घटीषष्ट्यात्मकभभोगेनेमे ध्रुवका इमायतस्त्रो विषनाडिकाश्च लभ्यन्ते। तदेष्टभभोगेन किमपि, ध्रुवाविषनाडिकाश्चेष्टभभोगेन गुण्याः षष्ट्या भाज्या फलितम्। यदाह कश्यपः "वियद्बाणाः ५० वेददस्राः २४ खरामा ३० व्योमसागराः ४०। वेदचन्द्रा १४ चन्द्रदस्राः १२ खरामाः ३० व्योमबाहवः २०। नेत्राग्नयो ३२ व्योमगुणाः ३० शून्यदस्रा २० गजेन्दवः १८। व्योमबाहवो २१ वियद्दस्राः २० शक्रा १४ स्वेन्द्राः १४ खभूमयः १०। वेदचन्द्रा १४ स्तर्कबाणा ५६ वेददस्राः २४ खबाहवः २०। व्योमेन्दवो १० व्योमचन्द्रा १० धृतयः १८ स्तर्कभूमयः १६ वेदाश्विनः २४ खरामाः ३० स्युर्दस्रर्क्षात् घटिकाः क्रमात्। आभ्यः परस्तत्क्रमशश्चतस्रो विषनाडिकाः। भक्षाद्यन्तघटीनिघ्नाः षष्टिभक्ताः स्फुटाः स्मृताः। विषनाडीदोषदुष्टं लग्नं सर्वगुणान्वितम्। शुभैः सर्वैश्च संयुक्तमपि यत्नेन त्यजेदिति"। वसिष्ठः कुर्वन्त्युद्वाहितां कन्यां विधवां वत्सरत्रयात्। अन्यस्मिन् मङ्गले तावन्निधनं वाथ निर्द्धनमिति"। ताः विषनाडिकाः।

अथ प्रसङ्गात् ग्रन्थान्तरोक्तास्तिथिवारविषनाडिकाः प्रोच्यन्तेऽस्माभिः दैवज्ञम॰। "तिथी १५ षु ५ नागा ८ ऽद्रि ७ गिरी ७ षु ५ वारिधि ४ र्गजा ८ ऽद्रि ७ दिक् १० पावक ३ विश्व १३ वासवाः १४। मुनोभ ७, ८ संख्याप्रथमा तिथेः क्रमात्परं विषं स्यात् घटिकाचतुष्टयम्। नखा २० द्वयं २ द्वादश १२ दिक् १० च शैला ७ बाणाश्च ५ तत्त्वानि २५ यथाक्रमेण। सूर्यादिवारेषु परं चतस्रो नाड्योविषं स्यात् खलु वर्जनीयम्"। ज्योतिःसागरे। "विवाहव्रतचूडासु गृहारम्भप्रवेशयोः। यात्रादिशुभकार्येषु विघ्नदा विषनाड़िकेति"। अस्य परिहारमाह दैवज्ञम॰ गुरुः "चन्द्रो विषघटीदोषं हन्ति केन्द्रत्रिकोणगः। लग्नं विना शुभैर्दृष्टः केन्द्रे वा लग्नपस्तथेति" फलप्रदीपे "विषनाड्युत्थितं दोषं हन्ति सौम्यर्क्षगः शशी। मित्रदृष्टोऽथ वा स्वीयवर्गस्थो लग्नपो भवेत्" पी॰ धा॰। अथ मुहूर्त्तेशाः।

"गिरिशभुजगमित्राः पित्र्यवस्वम्बुविश्वेऽभिजिदथ च विधाताऽपीन्द्र इन्द्रानलौ च। निरृतिरुदकनाथोऽप्यर्यमाऽथो भगः स्युः क्रमश इह मुहूर्त्ता वासरे बाणचन्द्राः" मु॰ चि॰।

"अत्र वाणचन्द्रा इत्युक्तेः मुहूर्त्तस्य पार्थक्येनात्र लक्षणं नोक्तम्। गिरिशो महादेवः भुजगः सर्पः मित्रः सूर्य्यविशेषः पितृवसवः विश्वे प्रसिद्धाः अष्टमोऽभिजित् ततो विधाता ब्रह्मा, इन्द्रः इन्द्राग्नी अत्र समुदितयो-र्व्यासज्यवृत्तिदेवतात्वम् अत्र तत्तन्मुहूर्त्तस्वामिनः पितर इत्यपेक्षितम् पितृमिति नक्षत्रतद्देशयोरभेदोपचारात् तस्य स्वामिनि इत्ति:। निर्ऋतीराक्षसः उदकनाथो वरुणः अर्यमा भगश्चैतौ सूर्य्यविशेषौ। इत्येतद्दशा वाणचन्द्राः पञ्चदश वासरे मुहूर्त्ताः स्युः यदाह नारदः "दिवामुहूर्त्ता रुद्राहिमित्राः पितृवसूदकम्। विश्वे विधातृब्रह्मेन्द्रा इन्द्राग्न्यसुरतोयपाः। अर्यमा-भगसंज्ञश्च विज्ञेयाः दश पञ्च चेति" पी० धा०।

"शिवोऽजपादादष्टौ स्युर्भेशा अदितिजीवकौ। विष्णुर्कत्वष्टमरुतो मुहूर्त्ता निशि कीर्त्तिताः" मु० चि०।

"प्रथममुहूर्त्तस्वामी शिवः ततोऽजपादात् पूर्व्वाभाद्रपदा-दष्टौ भेशानक्षत्रस्वामिनोमुहूर्त्तेशाः स्युः। यथा "अजपादः अहिर्बुध्न्यः पूषा अश्विनौ यमः अग्निर्ब्रह्मा सोम इत्यष्टौ भेशाः। ततोदशमेशोऽदितिः जीवको गुरुः। विष्णुर्कत्वष्टमरुतः प्रसिद्धाः एतद्दशा निशि मुहूर्त्ता प्रकीर्त्तिताः यदाह नारदः "ईशाजपादहिर्बुध्न्यपूषाश्वियमवह्नयः। धातृचन्द्रा-दितीज्याख्यविष्णुर्कत्वष्टृवायवः" इति। मुहूर्त्तलक्षणं काश्य-पेनोक्तम्। "अह्नः पञ्चदशोभागोमुहूर्त्तोऽथ तथा निशः" इति। प्रयोजनमाह नारदः। "यस्मिन्भे हि यत्कर्म कथितं निखिलञ्च यत्। तद्दैवत्ये तन्मुहूर्त्ते कार्य्यं यात्रा-दिकं सदेति"यात्रासु पक्षबलं देवस्यापमाद्यपि कार्य्यम्। पी० धा०। एवं मुहूर्त्तेषु निरूपिते तद्दोषमाह।

"रवावर्य्यमा ब्रह्मरक्षश्च सोमे कुजे वह्निपित्र्ये बुधे चा-भिजित् स्यात्। गुरौ तोयरक्षो भगौ ब्रह्मपित्र्ये शना-वीशसार्पौ मुहूर्त्ता निषिद्धाः" मु० चि०।

"रवेर्वारेऽर्यमा चतुर्थः अर्यमस्वामिकचतुर्दशसं-ख्याकोमुहूर्त्तोनिषिद्धः। एवं सोमवारे ब्रह्मरक्षः इत्ये-कवद्भावः। ब्रह्मरक्षःस्वामिकौ मुहूर्त्तौ निषिद्धौ एवं सर्व्वत्र व्याख्येयम्। ईशो महादेवः। यदाह-नारदः। "अर्य्यमा राक्षसब्राह्मौ पित्र्याग्नेयौ तथा-भिजित्। रक्षःसार्पौ ब्राह्मपित्र्यौ भौजङ्गेशाविनादिषु। वारेषु वर्जनीयास्ते मुहूर्त्ताः शुभकर्म्मणि" पी० धा०।

"अथ वेधदोषं विवर्ज्जितनक्षत्रादिकमभिजिन्मानञ्चाह "निर्व्वेधैः शशिकरमूलमैत्रपित्र्यब्राह्मान्त्योत्तरश्च-वर्णैः शुभोविवाहः। रिक्तामारहिततिथौ शुभेऽह्नि वैश्वप्रा-न्त्याङ्घ्रिश्रुतितिथिभागतोऽभिजित् स्यात्"मु० चि०।

"मृगशिरोहस्तमूलानुराधा मघारोहिण्युत्तराफाल्-गुन्युत्तराषाढोत्तराभाद्रपदास्वातीनक्षत्रैः निर्वेधैः वेधा-ख्यदोषरहितैः विवाहः शुभः शुभफलप्रदः यदाह वशिष्ठः। "स्वातीमघायां निर्ऋतौ ध्रुवान्त्यमित्रेन्दुहस्तेषु च कन्यकानाम्। पाणिग्रहस्त्विष्टफलप्रदः स्यादविद्धभेष्वेव गुणान्वितानामिति"। नारदोऽपि "पौष्णधातृत्तरामैत्र-दस्रचन्द्रार्कपित्र्यभैः। समूलभैरविद्धैस्तैः स्त्रीकरग्राह इष्यते" अर्कोहस्तः पी० धा०। वशिष्ठवाक्ये इष्टफलदइत्युक्ते अन्ये-षामपि ग्रहणमापद्विषये सूचितम् तेन "कुमार्य्याः पाणिं गृह्णीयात्त्रिषूत्तरादिषु"पारस्करसूत्रे चित्राश्रवणधनिष्ठा-श्विनीनां ग्रहणं तच्च तस्य यजुर्वेदीयगृह्यसूत्रकरत्वेन तद्वेदिविषयमापद्विषयं चेति ज्यो०रघु०अतएव भीमपरा-क्रमे अन्यान्यनक्षत्रेऽनिष्टमुक्तं यथा

"पूर्वात्रये विशाखायां शिवाद्ये भचतुष्टये। ऊढा चात्र भ-वेत् कन्या विधवाऽतो विवर्जयेत्। विष्णुभात्तु त्रिके चित्रे ज्येष्ठायां श्रवणे यमे। एभिर्विवाहिता कन्या भवत्येव सु-दुःखिता"।अत्र चित्रादिवर्जनात् यजुर्वेदिनामप्यत्यन्तापद्येव ग्राह्यता। तिथिनिर्णयमाह रिक्तेति। रिक्ताख्याः प्रसिद्धाः आभिर्वर्जिततिथिषु शुभेऽह्नि शुभग्रहवासरेऽपि विवाहः शुभः। यदाह वशिष्ठः। "शुक्लद्वितीयादित एव कृष्णे पक्षे दशम्यन्तगताः प्रशस्ताः। तास्वष्टमीस्कन्दगणेशदुर्गाचतुर्दशी चापि तिथिर्विवर्ज्या। वाराः प्रशस्ताः शुभखेचराणां सूर्य्यार्किवारौ खलु मध्यमौ तु। त्याज्यः सदा भूमिसुतस्य वारः कामार्कतिथ्योरपि तौ प्रदोषाविति" तौ सूर्य्यार्कि-वारौ त्रयोदशीद्वादश्योः प्रदोषौ प्रकृष्टदोषावित्यर्थः। गणेशश्च-तुर्थी दुर्गा नवमी। अत्र यदि विचारितविवाहदिनमारभ्य चतुर्थीकर्मपर्य्यन्तं पित्राद्यावश्यकश्राद्धदिनममावास्या वा भवति तदा विवाहो न कार्य्यः। उक्तञ्च "विवाहमा-रभ्य चतुर्थिमध्ये श्राद्धं दिनं दर्शदिनं यदि स्यात्। वैधव्यमाप्नोति तदाशु कन्या जीवेत् पतिश्चेदनप-त्यता स्यादिति। अन्यत्र। "विवाहमध्ये यदि तत्क्षयाह-स्तत्राक्षयस्याः पितरो न यान्ति। इत्ते विवाहे परतस्तु कुर्यात् श्राद्धं स्वधाभिर्न तु दूषयेत् तमिति। पी०धा०। तेन कृष्णपक्षे द्वादश्यादिदिनचतुष्टये आपद्यपि विवाहो न कार्य्यः। रिक्ताया वर्ज्यत्वेऽपि शनिवारयुक्ताया-स्तस्याः ग्राह्यता इति गौड़ा अनार्षमूलत्वात्तच्चिन्त्यम्"न

वारदोषाः प्रभवन्ति रात्रौ सूर्य्याग्नेनीस्तनुसर्वचरणामिति"। गौड़ावदन्ति तन्मूलमपि मृग्यम्"। अथाभिजित्प्रमाणम्। वैश्वेति पी०धा० 'अभिजिच्छब्दे २२७पृ० तद्दिष्टिः।

अथ पञ्चशलाकचक्रे विद्धनक्षत्राणि। "वेधोऽन्योन्यमसौ विरिञ्च्यभिजितोर्याम्यानुराधर्क्षयोर्विश्वेन्द्वोर्हरिपित्र्ययोर्ग्रहकृतोहस्तोत्तराभाद्रयोः। स्वातीवारुणयोर्भवेन्निर्ऋतिभादित्योस्तथोफान्त्ययोः खेटे तत्र गते तुरीयचरणाद्योर्वा तृतीयद्वयोः" मु०चि०।

"विरञ्चिः रोहिणी रोहिण्यभिजितोर्म्मिथः क्रूराक्रूरैः कृतो वेधोऽन्योन्यं परस्परं भवेत्। रोहिणीस्थे ग्रहे अभिजिद्विद्धः अभिजित्स्थे रोहिणी विद्धेत्यर्थः। एवं सर्व्वत्र उफा उत्तरफल्गुनी। तच्चक्रप्रकारमाह नारदः। "तिर्य्यक्पञ्चोर्द्ध्वगाः पञ्च रेखे द्वे द्वे च कोणयोः। शम्भु-कोणे द्वितीयेऽग्निधिष्ण्यं चक्रे च विन्यसेत्। भान्यतः साभिजिन्त्येकरेखाकोणे च विद्धभमिति"। चक्रे तस्मिन्नेकरेखास्थितेन तद्विद्धं खेचरेण प्रदिष्टम्। क्रूरैर्विद्धं सर्वधिष्ण्यं विवर्ज्यं सौम्यैर्विद्धं नाखिलं पाद एवेति"। नन्वष्टाविंशतिर्नक्षत्राणि चक्रे तत्र द्वयोर्द्वयोः परस्परवेधे चतुर्दश युग्मानि वक्तव्यानि स्युः कथमष्टावेवाभिहितानि उच्यते विवाहे ह्येकादशनक्षत्राणामेव ग्राह्यत्वाभिधानात् तद्वेधोपयोगीन्येतावन्त्येव युग्मानि सम्भवन्तीति तावतामेवाभिधानम्। अतएव दैवज्ञम० "रोहिण्यभिजितोर्मूलादित्ययोर्मृगवैष्णवयोः। रेवत्युत्तरफाल्गुन्योर्मघाश्रवणयोर्भवेत्। हस्तोत्तराभाद्रपदोः स्वातीवारुणयोर्मिथः। अनुराधाभरण्योश्च वेधोऽयं पञ्चरेखजः" इति तथैवोक्तम्। वाराहविवाहपटले प्रत्येकवेधफलानि "रविवेधे वैधव्यं प्रलमाप्तं करोति कुजवेधे। वन्ध्या शशिजतवेधे दीक्षाकरणं करोति गुरुवेधः। भृगुसुतवेधेऽपुत्रा दासी रविजातराहुसम्भूते" इति। शशिजो बुधः दीक्षाकरणं प्रव्रज्याम् चरणवेधमाह खेट इति। तत्र तस्मिन् नक्षत्रे विद्यमाने ग्रहे सति यदि चतुर्थपादेऽस्ति तदा विद्धनक्षत्रस्य प्रथमपादे वेधः। यदि तृतीयपादे तदा द्वितीयचरणस्य वेधः एवं यदि द्वितीयपादस्थः तदा तृतीयपादे वेधः यदि प्रथमपादे तदा चतुर्थपादस्य वेध इत्यर्थः। यदाह वशिष्ठः 'अतोऽन्त्यपादमादिगो द्वितीयगस्तृतीयकम्। तृतीयगो द्वितीयकञ्चतुर्थगस्तु चादिमम्। भिनत्ति वेधकृद्ग्रहोनचान्यपादमादिगेत"। एतद्यद्यपि शुभाशुभग्रहसाधारणं प्रतीयते तथापि सौम्यग्रहपरन्द्रष्टव्यम्। अतोवशिष्ठेनैव खार्जूरदोषाभिधानावसरे "विषप्रदिग्धेन हतस्य पत्रिणा मृगस्य मांसं स्वभदं यथाहृते। तथैव पादो न शुभोऽवशिष्टपादाः शुभाश्चेति पितामहेन" इत्याशङ्क्य समाहितम् 'पादएव न शुभः शुभग्रहैर्विद्ध इत्यखिलशास्त्रसंमतम्। क्रूरविद्धभयुतं न शोभनं शोभनेषु गदितं न पादतः' इति। नारदः। "पादमेव शुभैर्विद्धमशुभैश्चैव तद्भमम्" इति। कश्यपोऽपि। "क्रूरविद्धं युतन्धिष्ण्यं क्रूराक्रान्तञ्च तद्भमम्। मणिहेममयं कुम्भं मूत्राक्रान्तमिव त्यजेत्" इति तद्भमं सकलनक्षत्रम्। तस्मात्क्रूरग्रहविद्धे संपूर्णनक्षत्रत्यागः शुभविद्धे चरणत्याग इति सिद्धान्तः। तत्र विवाहे पञ्चशलाकावेध एव यदाह वशिष्ठः "पञ्चशलाकाचक्रे पाणिग्रहणे भवेधविधिरुक्तः। यज्ञशुभतिलकतः सप्तशलाकाजइतरत्रेति"। श्रीपतिः "वधूप्रवेशने दाने वरणे पाणिपीडने। वेधः पञ्चशलाकाख्योऽन्यत्र सप्तशलाकक" इति पी०धा०। अत्र केचित् सप्तशलाकाचक्रवेधमाहुः। तत्र विद्धनक्षत्राणि यथा "शाक्रेज्ये, शतभामित्रे, जलशिवे, पौष्णार्य्यमर्क्षे, वसुद्वीशे, वैश्वसुधांशुभे, हयभगे, सार्पानुराधे, तथा। हस्तोपान्तिमभे, विधातृविधिभे, मूलादिती त्वाष्ट्रभाऽजाङ्घ्री, याम्यमघे, कृशानुहरिभे, विद्धे कुभट्टे ग्रहे" मु०चि० "कुभट्टे ग्रहे सप्तशलाके चक्रे शाक्रं ज्येष्ठाज्येष्ठापुष्यनक्षत्रे मिथः क्रूराधिष्ठितत्वेन विद्धे ज्ञेये। एवं जलशिवे पूर्व्वाषाढार्द्रे विद्धे ज्ञेये एवं सर्व्वत्र। वैश्वसुधांशुभे उत्तराषाढामृगशिरसी, हयभगे अश्विनीपूर्व्वफाल्गुन्यौ, उपान्तिमभं उत्तराभाद्रपदा, अत्र मूलवाक्यं स्वरोदयस्थं यज्ञोपवीतप्रकरणे विहितम्। चक्रोद्धारो व्यवहारसमुच्चये "सप्त सप्त विलिखेत्तु रेखिकास्तिर्य्यगूर्द्ध्वमथ कृत्तिकादिकम्। वेधयेदभिजिता समन्वितञ्चैकरेखखगमेन विध्यते" दीपिका। "यस्याः शशी सप्तशलाकभिन्नः पापैरपापैरथवा विवाहे। उद्वाहवस्त्रेण तु संवृताङ्गी श्मशानभूमिं रुदती प्रयाति"। तथा च भोजः। "विद्धे सप्तशलाकाख्ये विधवा लग्नवासरा। पुनर्यात्यचिरान्नारी तथाग्नौ सुखचन्द्रिकाम्"। वैधव्यञ्च नक्षत्रस्याद्यस्यार्द्धैर्भवति तदुक्तं वराहेण "नक्षत्रजमुद्वाहे फलमब्दैस्तारकामितैः सदसदिति"। अत्रापि तुल्यन्यायत्वात् क्रूरवेधे पूर्णं नक्षत्रन्त्याज्यम्, शुभग्रहवेधे पादस्त्याज्यः इति ध्येयम्। पी० धा०। "सप्तशलाकाजइतरत्रेति" प्रागुक्तवचनात्

"भुक्तभोग्यन्तथाक्रान्तं विद्धं पापग्रहैश्च यत्। शुभाशुभेषु कार्य्येषु वर्जनीयं प्रयत्नतः" स्वरोदयवाक्याच्च अस्य कर्मकार्य्येषु वर्ज्यं तथा चतुर्दशयुग्मानामिहोक्तिः" अत्रापवादः "भक्ष्याणि क्रूरविद्धानि क्रूरमुक्तादिकानि च। भुक्ता चन्द्रेण मुक्तानि शुभार्हाणि प्रचक्षते"। मु० चि० "क्रूरपदैर्विद्धानि भक्ष्याणि तथा क्रूरैर्मुक्तानि त्यक्तानि। आदिशब्दात् क्रूरैराक्रान्तानि क्रूरैर्गन्तव्यानि च त्रिविधोत्पातैर्दूषितानि ज्ञेयानि तानि यदि चन्द्रेण भुक्त्वा मुक्तानि तदा शुभार्हाणि प्रचक्षते वदन्ति मुनय इति शेषः। यदाह नारदः "भुक्तभोग्यन्तथाक्रान्तं विद्धं पापग्रहैश्च भम्। मङ्गलेषु च कार्य्येषु यत्नतः परिवर्जयेदिति"। वशिष्ठोऽपि "उत्पातभक्रूरग्रहभक्रूरविद्धस्थितञ्च यत्। दहत्येव शुभं कर्म्म शम्बराग्निशरोम्बुधिमिति"। शार्ङ्गीये "क्रूराक्रान्तक्रूरविमुक्तविद्धगन्तव्यधिष्ण्येषु कुमारिकाणाम्। वदन्ति पाणिग्रहणे मुनीन्द्रा वैधव्यमब्दैस्त्रिभिरेवमाशुरिति"। अस्यापवादमाह केशवार्कः। "उत्पातपापग्रहदूषितर्क्षं यदीन्दुराक्रम्य पुनर्भुनक्ति। तदा तदर्हं किल मङ्गलेषु शुभेत्वमाक्रान्तधनूरवीन्दोरिति"। अयमवधिराक्रान्तनक्षत्रविषयो वेदितव्यस्तत्र हि चाण्डालधृतहस्तस्नानवच्चन्द्रभोगस्य निर्वर्त्तकत्वात्। तदुक्तं शार्ङ्गीये "यद्धिष्ण्यं क्रूरसंयुक्तं स्यात्तथापीन्दुसंयुतम्। शुभकार्य्येषु तत्त्याज्यमन्यकर्म्मसु सिद्धिदम्। यथा हि चाण्डालस्पृष्टैकहस्तो मज्जन्नगाधेऽपि सरित्प्रवाहे। भवेन्न पूतः शशिभोगतोऽपि तथा न शुध्येद्धु पापयुक्तम्। स्पृष्ट्वा गते तु चाण्डाले शुद्धिराप्लवनाद्यथा। तथा भुक्त्वा गते क्रूरे चन्द्रभोगाद्विशोधनमिति। अतएवोक्तं वशिष्ठेन "गन्तव्यधिष्ण्यं खलु भुक्तभं यत् क्रूरैश्च कोत्पातविदूषितञ्च। चन्द्रोपभोगादमलन्तदानीं शुभेषु कार्य्येषु शुभप्रदं चेति। एतच्च साधारण्यायत्वात् क्रूरविद्धे भे चन्द्रभोगादपि शुद्धिर्नास्तीत्युक्तम् यत्तु नारदेनोक्तम् "ग्रहणोत्पातभं त्याज्यं मङ्गलेषु ऋतुत्रयम्। यावच्च रविणा भुक्त्वा मुक्तं तद्दग्धकाष्ठवदिति" "तद्यावद्वचनं वाचनिकमिति" न्यायेन ग्रहणोत्पातभयोः षण्मासपर्य्यन्तं निषेधस्ततोऽपि यावद्रविणा भुक्त्वा न त्यक्तं तावत्त्यजेत् तत्रापि चन्द्रग्रहण एव सूर्य्यग्रहणोयन्नक्षत्रस्य तु षण्मासानन्तरं सूर्य्यभोगासम्भव एव अतो न क्रूरमुक्तादौ रविभोगापेक्षा उत्पातभस्य चन्द्रोपभोगोऽप्यावश्यको वशिष्ठवाक्यालोचनात्। अत्र क्रूरवेधे निखिलभं त्याज्यं न चरण एव। तदुक्तं कश्यपेन "क्रूरविद्धयुतं धिष्ण्यं निखिलं नैव पादतः। अन्यैरपि गुणैर्युक्तं सर्व्वदोषविवर्जितम्। त्यजेदनर्घमाणिक्यं कलङ्कोपहतं यथेति" अयञ्च क्रूराधिष्ठितत्वे दोषः क्रूरग्रहचन्द्रयोरेकराशिस्थत्वे वेदितव्यः। यदा तु चन्द्रः प्रथमपादे क्रूरग्रहश्च तृतीयपादे एवं सति राशिभेदोऽपि जायते तदा क्रूरग्रहाधिष्ठितत्वदोषो नास्तीति ध्येयम्। उक्तञ्च ज्योतिर्निबन्धे। "एकस्मिन्नपि धिष्ण्ये च भिन्ने राशौ खलग्रहे शशिनि। तच्चन्द्रर्क्षे कुर्य्याद्विवाहयात्रादिकं सर्व्वमिति" यथा मृगशिरसि प्रथमे पादे चन्द्रः तृतीये क्रूरग्रहः तत्र सत्यप्येकनक्षत्रत्वे राशिभेदो द्वयोरिति पी० धा०।

अथ लत्तादोषः। "शराङ्गपूर्णेन्दुसिताः स्वपृष्ठे भं सप्तगोजातिशरैर्मितं हि। संलत्तयन्तेऽर्कशनीज्यभौमाः सूर्य्याष्टतर्काग्निमितं पुरस्तात्" मु० चि०।

"सप्त प्रसिद्धाः गावो नव जातयो द्वाविंशतिः शराः पञ्च एतैर्मितम्भम् स्वाक्रान्तनक्षत्रात् शराङ्गपूर्णेन्दुसिताः स्वपृष्ठे संलत्तयन्ते यथा बुधः सप्तमं, राहुर्नवमं, पूर्णेन्दुः पूर्णिमान्तचन्द्रो द्वाविंशम्, तत्र गतकृष्णपक्षे पञ्चमीषष्ठीसप्तमीनामन्यतमायां सम्भवति। शुक्रः पञ्चमं स्वपृष्ठे लत्तयतीत्यर्थः अर्कशनीज्यभौमाः क्रमेण पुरस्तादग्रे सूर्य्याष्टतर्काग्निमितं संलत्तयन्ते यथा सूर्य्यः स्वाक्रान्तनक्षत्राद्द्वादशं, शनिरष्टमम्, गुरुः षष्ठम्, भौमस्तृतीयमम् अग्रतो लत्तयतीत्यर्थः। यदाह नारदः "पुरतः पृष्ठतोऽर्काद्या दिनर्क्षं लत्तितञ्च यत्। अर्काङ्गतिगुणाङ्गर्त्तुयामाष्टनवषड्भमिति, सूर्य्यः पुरतः, चन्द्रः पृष्ठतः एवं क्रमेण भौमादयोपि पुरतः पृष्ठतश्च लत्तयन्तीत्यर्थः। वराहोऽपि "सूर्य्यो द्वादशमृक्षं षष्ठं गुरुरवनिजस्तृतीयन्तु। संलत्तयति दिवाकरपुत्रोऽष्टममग्रतः पादैः। पश्चाद्द्वाविंशतिमक्षौर्णिमचन्द्रस्तु पञ्चमं शुक्रः। स्वर्भानुरपि नवमं सप्तममृक्षं शशाङ्कसुत" इति प्रत्येकं वेधफलमाह स एव। "रविलत्ता वित्तहरी नित्यं क्षौणी विनिर्दिशेन्मरणम्। चान्द्री नाशङ्कुर्य्याद्बौधी नाशं वदत्येव। सौरी मरणं कथयति बन्धुविनाशं बृहस्पतेर्लत्ता। मरणं लत्ता राहोः कार्य्यविनाशं भृगोर्वदन्तीति" मध्यलत्ता वा पृष्ठलत्ता वा वक्तव्या किमिति न ह्युक्तं कथनम्। अत्र समाधत्ते केशवार्कः" "इति सति द्युसदामभिलत्तने यदनुलत्तनमुक्तमृषिव्रजैः। तदुडुपश्चिमपूर्व्वविभागयोरनधिकाधिकदोषविवक्षयेति"। अत्र राहोः सदा वक्रिचारवशगणना क्रमेणैव स्याद्या यथाश्विन्यां राहुः तदा श्लेषां लत्तयति। एवमुत्तरत्र

श्वादिमतेऽपि वक्रगामिना राहुणा सम्मुखमश्विनीरेवतीत्या-
दिगणनया विंशतिभमु अर्क्षं यैन मत्वन्यथाश्रयितव्यमिति
साम्प्रदायिकाः" पी०धा० ।
अथ पातदोषः । "हर्षणवैधृति साध्यव्यतिपातकगण्डशूल-
योग नाम् । अन्ते यन्नक्षत्रं पातेन निपातितन्तत् स्यात्" ।
मु०चि० ।"हर्षणेत्यादि षड्योगानां अन्ते यच्चन्द्रनक्षत्रं
भवेत् तत्पातेन चण्डीशचण्डायुधाख्येन निपाति
तं स्यात् यदाह त्रिविक्रमः "साध्यहर्षणशूलानि वै-
धृतिव्यतिपातयोः । षड्भक्तगण्डस्य चान्ते स्याचेत् पातेन
निपातितमिति" । नारदेन प्रकारान्तरेणैतत्प्रकारसमा-
दकः पातोऽभिहितः । "सूर्यभात्सार्पपित्र्यान्त्यत्वाष्ट्र-
मित्रोडुविष्णुभे । मघाया दिनभे तावदाश्विभात्पातदुष्ट-
भम्" । वशिष्ठेनापि "रविभाद्धि पितृमित्रत्वाष्ट्रभहरिपौ-
ष्णभेषु गणितेषु । आश्विनभादिन्दुयुतौ तावति वै पतति
गणनया पातः । अयमपि पातोदोषश्चण्डीशचण्डायुधा-
ख्ययोर्ज्ञेयः । यस्मिन् मङ्गलेष्वपि वर्ज्यो यथाहिनाशदः
कर्त्तुरिति" यद्यप्यत्र हर्षणादीनामुपादानं नास्ति तथा-
प्यभिहिताश्लेषादिनक्षत्रसाहित्येन पाताभिधानात्तस्य
सम्भावेऽप्येव योगेषु पातसम्भवो जायते इति मत्वा हर्षणा-
दीनामनुक्तिः । एतच्च प्रागुक्तेषु दशसु विरुद्धयोगेषु
लत्तापातयोः पृथक्कीर्त्तनम्" । ज्यो०त० रघुनन्दनेन
"भुक्तं द्वादशसूर्यराशिरवनीसूनुस्तृतीयं गुरुः षष्ठ
आद्यमर्कजस्तु पुरतोहन्ति स्फुटं लत्तया" इत्यादि रत्नमा-
लावाक्यं धृत्वा "लत्तापातोऽयमिति,यदुक्तं तच्चिन्त्यमूलम्
द्वयोर्विभिन्नदोषत्वात् अन्यथा प्रागुक्तव्यवहारोच्चयवाक्ये-
ऽवश्यं दशसंख्यानुपपत्तेः तद्वाक्ये पातशब्दस्याश्रवणाच्च ।
अथ क्रान्तिसाम्यम् "पञ्चास्याजौ गोमृगौ तौलिकुम्भौ
कन्यामीनौ कर्क्यली चापयुग्मे । तत्रान्योन्यं चन्द्रभान्वो-
र्निरुक्तं क्रान्तेः साम्यं नो शुभं मङ्गलेषु" मु०चि०।"पञ्चा-
स्याजौ सिंहमेषौ अन्ये प्रसिद्धाः । एषु राशियुग्मेषु च-
न्द्रभान्वोः पाठक्रमेण व्युत्क्रमेण वा स्थितयोः क्रान्तिसाम्यं
निरुक्तन्तन्मङ्गलेषु नो शुभं स्यात् । अत्र पञ्चास्याजा-
वित्येवमादीनामुक्तयमुदाहरणादिकप्रदर्शनार्थत्वात्सर्वथा
सूर्याचन्द्रमसोः सायनयोर्योगः षड्राशिमितो द्वाद-
शराशिमितो वा विश्वजितस्तदैव क्रान्तिसाम्यस्य सम्भ-
वात् । अतः सम्मतिवाक्यस्यावसरः नन्वेतावन्त एव
षड्राशियोगा द्वादशराशियोगा वा सम्भवन्तीति चेन्न
राश्यन्तावच्छेदस्थितावधिकानामपि सम्भवात् प्रत्यंश-
कलाविकलान्तस्थितत्वेनानन्तभेदसम्भवाच्चातः प्रागुक्तं
व्याख्यानं न्यायः । क्रान्तिसाम्यस्य च महापात इति
नाम । एतस्य निन्द्यतामाह वशिष्ठः "दोषो महा-
पात इति प्रसिद्धः सर्वेष्वतोहन्ति वधूं वरं च । तं र-
क्षितुं लग्नगुणास्त्वशक्ताः सवान्धवा नाऽशनितोऽपघातम्" ।
अशनिर्वज्रम् । नारदोऽपि "यस्मिन् दिने महापात
स्तद्दिनं वर्जयेत् शुभे" इति अतएव पतनमात्पातः सकल-
शुभकर्मणामित्यन्वर्थतापि । सा च स्पष्टा सोमसिद्धान्ते ।
"यच्छुभानां विनाशाय नदन्निव पतत्ययम् । व्यतीपातः
प्रसिद्धोऽत्र संज्ञाभेदेन वैधृतिः" इति । महापातशब्दस्य
रूढिस्तु रवीन्दुक्रान्तिसाम्य एव नत्वन्येषां ग्रहाणां क्रान्ति
साम्ये । यथा जलजशब्दस्य रूढिः कमले न तु भेकादौ ।
क्रान्तिर्नाम ग्रहाणां दक्षिणोत्तरवृत्ते गमनम् । या च सू-
र्यस्य क्रान्तिः सा यदा चन्द्रक्रान्त्या तुल्या स्यात्तु पातम-
ध्यकालः । तत्तोत्सर्गतोरवीन्द्वोः क्रान्त्योः समानत्वं भुज-
साम्ये सति भवति । भुजोनाम "त्र्यूनं भुजः स्यात्
त्र्यधिकेन हीनं भार्द्धञ्च भार्द्धादधिकं विभार्द्धम् । नवा-
धिकेनोनितमर्कभं चेति" वक्ष्यमाणलक्षितः तत्साम्यं तु
सूर्याचन्द्रमसोर्योगे षड्राशितुल्ये द्वादशराशितुल्ये वा
सति भवति । अतएव ग्रन्थकृता तादृशायोगा एव पठिताः ।
"विनाशपातेन्दुमिहायनांशकैर्युतौ रविः शीतकरश्च दृश्यते ।
समापमत्वे व्यतिपात वैधृतास्त्वयारुदैक्ये रसभेऽर्कभे क्रमात्"
इति भास्कराचार्य्योक्तिमङ्गीकृत्य सामान्यतः क्रान्तिसाम्य-
दिवसस्य सीम्नोपस्थित्यर्थं भुजसाम्यप्रतिपादनम् । तदुक्तं
वशिष्ठेन स्वसिद्धान्ते "चक्रे चक्रार्द्धतुल्ये वा किंयद्भागाधि-
कोनके । सायनार्केन्दुयोगे चेत्तदा पातस्य सम्भवः ।
शुभमङ्गलकर्माणि लोकानां च विनाशयेत् । स्नानदा-
नादिकं तत्र जपश्राद्धादिकाः क्रियाः । यदापि कुरुते-
मर्त्यः शुभकृत् फलमश्नुते । सूर्यग्रहे कुरुक्षेत्रे कोटिस्व-
र्णैर्भवेत् फलम् । तत् फलं लभते पाते स्नानश्राद्धजपा-
दिना । उत्पत्तौ लक्षगुणितं श्रमणे कोटिसङ्गुणम् ।
पातेऽर्बुदसङ्ख्यं पतिते दत्तमक्षयमिति" । तथा सूर्यसि-
द्धान्तेऽपि । "एकायनगतौ स्यातां सूर्याचन्द्रमसौ यदा ।
तद्युतौ मण्डले क्रान्त्योस्तुल्यत्वे वैधृताभिधः । विपरीता-
यनगतौ चन्द्रार्कौ क्रान्तिलिप्तिकाः । समास्तदा व्यती-
पातोभगणार्द्धे तयोर्युतौ । तुल्यांशुजालसम्पर्कात्तयोस्तु प्र-
वहाहतः । तादृक् क्रोधोद्भवो वह्निर्लोकाभावाय जायते"
इति । अतएवानन्तरोक्तक्रान्तिसाम्ये महापातदोषो

नास्त्येव । तदुक्तं गणेशदैवज्ञैः "पूर्वं तत् स्यात् पातमध्यं द्वितीयं पूर्वैर्नोक्तं तद्यतोनातिदुष्टमिति" । अनेनैवाशयेन वशिष्ठेन स्वसंहितायामुक्तम् । "शास्त्रात् समानीत महातिपातः सर्वेष्वतोहन्ति वधूं वरं च । त्रिःसप्तधारानिव जामदग्न्यक्रोधोऽचिरात् क्षत्रकुलं समस्तमिति" । शास्त्रानयितशास्त्रोक्तमहापाताधिकारादित्यर्थः । तत्र हि योगादेव महापातस्यानिष्टत्वात्तस्यैव दोषत्वं नान्यस्येत्यर्थादुक्तं भवति । किन्त्वपञ्चाङ्गीयोऽपि योगः सूर्याचन्द्रमसोर्योगादेव साधितः स्पष्टाधिकारेऽतस्तस्मादेव महापातोऽपि साधयितुमुचित एव" पी॰धा॰ ।

अथ खार्जूरापरपर्यायैकार्गलदोषः

"व्याघातगण्डव्यतिपातपूर्वे शूलान्त्यवज्रे परिघातिगण्डे एकार्गलाख्योह्यभिजित्समेतोदोषः शशी चेद्विषमर्क्षगोऽर्कात्" मु॰चि॰ । "अन्त्योवैधृतिः । वज्रे सिद्धिः । यस्मिन्दिने व्याघातादिके विरुद्धे दुष्टयोगे सति अर्कादर्कनक्षत्राच्छशी चन्द्रोऽभिजित्समेतोविषमे विषमसंख्याके ऋक्षे नक्षत्रे स्यात्तदा खार्जूरचक्रोत्पन्न एकार्गलाख्योदोषः स्यात् । यदा समे स्यात्तदा न दोषः इत्यर्थः । तदाह त्रिविक्रमः 'विरुद्धनामयोगेषु साभिजिद्विषमर्क्षगः । अर्कादिन्दुस्तदा योगोनिन्द्य एकार्गलाभिधः' इति वशिष्ठेन तत्प्रकारमभिहितम् । "अन्त्यातिगण्डपरिघव्यतिपातपूर्वव्याघातगण्डवरशूलनकामनोषु । चित्रानुराधपितृपद्मगदस्रभेषु साहिज्यमूलशशिसूरिषु मूलभेषु । "रेखामेकामूर्द्धगां षट् च सप्त तिर्यक् कृत्वा तत्र खार्जूरचक्रे । तिर्यग्रेखासंस्थयोश्चन्द्रभान्वोर्दृक्सम्पातोदोष एकार्गलाख्यः । "करकरतुहिनांशोर्दृष्टिसम्पातजातज्वलनलवशरीरस्तूर्णमग्निं स्यात् । भुवि पतति जनानां मङ्गलध्वंसनाय गुणगणगतशक्रैरस्यभार्योऽग्निकोपः" इति अत्र वशिष्ठवाक्येऽभिजित्साहित्यमात्र न वेति सन्देहः नारदस्त्वभिजिद्वर्जितं चक्रमाह "व्याघातशूलपरिघपातपूर्वेषु सत्स्वपि । गण्डातिगण्डकुलिशवैधृत्या सहितेषु च । अदितीन्दुमघाह्याद्यमूलमैत्रेज्यभानि च । सोमानि सहचित्राभिर्मूर्ध्नि भानि यथाक्रमम् । लिखेदूर्द्ध्वगतामेकां तिर्यग्रेखास्त्रयोदश । तत्र खार्जूरिके चक्रे कथितं मूर्ध्नि भं न्यसेत् । भान्येकरेखागतयोः सूर्याचन्द्रमसोर्मिथः । एकार्गलो दृष्टिपातस्त्वभिजिद्वर्जितानि वै । वाक्ये कमठे चक्रेऽप्येवं त्रिनाडिके । साभिजिद्गणना नास्ति चक्रे खार्जूरिके तथेति" । कश्यपेनापि एकार्गलोदृष्टिपातसाभिजिद्वर्जितानि वै" इति । तत्र त्रिविक्रमकश्यपार्कवाक्ययोः समूलत्वस्य शिष्टव्यवहारात्त्वनारदादिवाक्यैः सह विकल्पः ततोऽनयोः पक्षयोर्यथादेशाचाराद्व्यवस्थेति युक्तं प्रतीमः" पी॰धा॰ । खार्जूरवेधे ज्यो॰ति॰ "एकामूर्द्ध्वगतां त्रयोदश तथा तिर्यग्गताः स्थापयेत् । रेखाचक्रमिदं बुधैरभिहितं खार्जूरिकं तत्र तु । व्याघातादि तु मूर्ध्नि भन्तु कथितं तत्रैकरेखास्थयोः सूर्याचन्द्रमसोर्मिथोनिगदितो दृक्पात एकार्गलः" 'व्याघातादीति व्याघातयोगसंख्याङ्कस्थयोदयाङ्कः । तथा च हस्तादीनि नक्षत्राणि देयानीत्यर्थः" इति बहुव्याख्यातं तच्चिन्त्यमुक्तवाक्यैः व्याघातादिदुष्टयोगयुक्तदिवसे एव खार्जूरवेधप्रतिपादनात् तत्र शेषनक्षत्रादीनां च नारदेन विशेषाभिधानाच्च ।

अथोपग्रहदोषः स च उपग्रहशब्दे १२०२ पृ॰ उक्तप्रायः विशेषार्थं पुनरुच्यते ।

"शराष्टदिक्शक्रनगातिधृत्यतिथिर्षतिश्च प्रकृतेश्च पञ्च । उपग्रहाः सूर्यभतोऽब्जताराः शुभा न देशे कुरुबाह्लिकानाम्" । 'सूर्यभतः सूर्याक्रान्तनक्षत्राद्ब्जताराः चन्द्रनक्षत्राणि पञ्चाष्टदशचतुर्दशसप्तदशैकोनविंशतिपञ्चदशाष्टादशैकविंशतिद्वाविंशतित्रयोविंशतिचतुर्विंशतिपञ्चविंशतिसंख्याकाश्चेत्स्युस्तदोपग्रहनामकादोषाः स्युः प्रकृतिरेकविंशतिः ततः पञ्च । यदाह नारदः "भूकम्पः सूर्यभात्सप्तमर्क्षे विद्युच्च पञ्चमे । शूलोऽष्टमे च नवमेऽशनिरष्टादशे ततः । केतुः पञ्चदशे दण्डश्चोल्का एकोनविंशती । निर्घातपातसंज्ञश्च ज्ञेयः स नवपञ्चमे । मोहनिर्घातकम्पाश्च कुलिशं परिवेषकम् । विंशेयाश्चैकविंशाच्चादारभ्य च यथाक्रमम् । चन्द्रयुक्तेषु भेष्वेषु शुभकर्म न कारयेदिति" । शराहः "उपग्रहर्क्षेषु विवाहिता स्त्री सूर्यर्क्षतो दुर्भगतामुपैति" । अन्यत्रापि । "गृहप्रवेशे दारिद्र्यं विवाहे मरणं भवेत् । प्रस्थाने विपदः प्रोक्ता उपग्रहदिने वदीति" । एवं सामान्यतो निषेधमभिधाय देशभेदेन परिहारमाह । शुभा इति । "बाह्लिके कुरुदेशे च वर्जयेदुपग्रहमिति" कश्यपोक्तेः" पी॰धा॰ । अत्रापवादः ।

"पातोपग्रहलत्तासु नेष्टोऽङ्घ्रिः खेटपत्तुगः" मु॰चि॰ ।

"पातलत्तोपग्रहाख्योदोषः उपग्रहः प्रागुक्त एव । लत्ता शराङ्कपूर्णेन्दु सिताः" इत्यादिनोक्ता, तत्र खेटपत्तुगः ग्रहचरणतुल्यो नक्षत्रचरणोऽनिष्टः अस्यार्थः

पाते उपग्रहे च रविर्यस्मिन् स्यात्तत्संख्यचरणस्य नक्षत्रस्य वर्ज्यो नान्यः लत्तायान्तु लत्ताकारिणोपग्रह-चरणे युक्तत्संख्य एव पादो वर्ज्यो नान्यः। उक्तं च मुहूर्त्तदीपिकायाम् "उपग्रहेषु लत्तायां तथा चण्डायुधाह्वये यत्रोऽस्ति यत्प्रमाणांशे विद्धांशस्तत्प्रमाणकः" इति उपग्रहचण्डायुधयोः सूर्यकृतोऽङ्घ्रिपाद्ग्रहस्यैव सम्भवात्। अयञ्च परिहारस्तुल्यन्यायत्वात् खार्जूरकेऽपि द्रष्टव्यः। सूर्यो यस्मिन् पादे भवेत्तत्समसंख्यचरण एकरेखावस्थितचन्द्रनक्षत्रस्य वर्ज्य इत्यर्थः "खार्जूरिकसमाङ्घ्रिभमिति" नारदोक्तेः ज्योतिर्निबन्धे गर्गः "पूर्वाह्णे दण्डदोषः स्यादपराह्णे तु भोहजः। उल्का चैवार्द्धरात्रे तु कम्पोऽहोरात्रदूषकः"। तत्रापि "कम्पोल्कादण्डमोहानामङ्घ्रिभमिति" नारदोक्तेः कालभेद एव वर्ज्यः "सरभावेदपक्षेव ७,१२,१०,६, आदितो घटिकास्तु वर्जनीयाः पराः शुभा" पी० धा०।

अथ वारदोषः। स च अर्द्धयामकुलिकयमघण्टभेदात् त्रिविधः। ते च कश्यपेनोक्ताः यथा "शैलाब्धयः सूर्ये चन्द्रे षड्वेदपर्वताः। भौमे बाणाग्निनेत्राणि सौम्ये वेदाक्षिशायकाः। गुरुवारेऽग्निचन्द्रेभाः शुक्रे नेत्राग्निवह्नयः। शनौ चन्द्रेभतर्काःस्युः कुलिकोयमघण्टकः। अर्द्धप्रहरसंज्ञञ्च मङ्गलेषु विवर्जयेत्। वारदोषेण दुष्टन्तल्लग्नं सर्वगुणान्वितम्। त्यजेद्यथा पुरोडाशं वायसोपहतन्त्वयेति"। फलमाह वशिष्ठः "निधनं प्रहरार्द्धे तु निःस्वत्वं यमघण्टके। कुलिके सर्वनाशः स्याद्रात्रावेते न दोषदाः" पी० धा०। दिवसाष्टमभागात्मकाश्चैते। तत्र अर्द्धयामशब्दे ३७६ पृ० अर्द्धयामविशेष उक्तः। मुहूर्त्तात्मककुलिकस्तु कुलिकशब्दे वक्ष्यते तत्र कुलिकमुहूर्त्तमुपक्रम्य श्रीपतिना "यात्रायां मरणं काले वैधव्यं पाणिपीड़ने। व्रते ब्रह्मवधः प्रोक्तः सर्वं कर्म ततस्त्यजेत्" उक्तम्।

अथ जामित्रदोषः। "लग्नाच्चन्द्राच्च मदनभवनगे खेटे न स्यादिह परिणयनम्। किंवा बाणाशुगमितलवगे जामित्रं स्यादशुभकरमिदम्" मु० चि०। "विवाहलग्नाच्चन्द्राद्वा सप्तमं भवनं ग्रहं जामित्रं तत्र गते खेटे परिणयनं न स्यात्। उक्तञ्च 'जामित्रं द्विविधं प्रोक्तं गर्गगालवगौतमैः। तस्माल्लग्नाच्च चन्द्राच्च जामित्रं परिवर्जयेदिति"। तत्स्वरूपमाह महेश्वरः 'लग्नात्शीतकराद्युग्मगता नेष्टा विवाहे ग्रहाः" इति। वशिष्ठः लग्नप्रकरणे "सर्वे जामित्रसंस्था विदधति मरणम्" इत्याह च। वक्ष्यः "पापात् सप्तमगः शशी यदि भवेत् पापेन युक्तोऽथवा यत्नेनापि विवर्जयेन्मुनिमते दोषोऽपि संकथ्यते। उद्वाहे विधवा, व्रते तु मरणं, मूलञ्च पुंसर्मणि, यात्राय विपदो, गृहेषु दहनः, क्षौरेऽपि रोगो महान्"। भुजबलः "चन्द्रात् सप्तमराशिगे दिनकरे त्यक्ता धवैः कन्यका, भौमे च प्रमदा प्रयाति विलयं, शौरे च वन्ध्या सदा। जीवः शुक्रशशाङ्कजो शुभकराः केचिद्वदन्ति क्रमात् भर्तृप्रेक्षितदीक्षितास्तभवने नित्यं प्रवासान्वितेति"। अस्यापवादमाह। किं वायस्त्रोविकल्पे पूर्वपक्षाधिष्ठितराशेः सप्तमराशिस्थितलिङ्गभागात्मके लग्नेऽपि चन्द्रो निषिद्ध इत्युक्तमिदानीन्तदधिष्ठितराशिनवांशमारभ्य बाणाशुगाः पञ्च पञ्चाशत् तन्मितनवांशगे लग्ने चन्द्रे सति जामित्रं स्यात्। यथा मेषराशौ पञ्चमनवांशे भौमोऽस्ति तस्मात् तुलायां पञ्चमनवांशस्थं लग्नं वा चन्द्रो वा निषिद्धोऽन्येऽष्टौ नवांशाः शुभाः। एवंविधं सूक्ष्मं जामित्रमिदमशुभकरं स्यात्। यदाह महेश्वरः "कैश्चित् कामनवांशकादिषु शरैस्तुल्ये नवांशे स्थिताः" इति। केशवार्कस्तु चन्द्रनवांशादेशाह। "हिमरश्मिनवांशकात् खलो यदि खेटः शरसायकांशके। अयमन्यगुणैर्न हन्यते निबिड़ैरम्बुपसर्गडम्बरः" अपवादान्तरमाह राजमार्त्तण्डः "तुङ्गत्रिकोणभवने भवने निजे वा सौम्याधिमित्रग्रहगोऽपि तदीक्षितो वा। जामित्रवेधजनितानपहृत्य दोषान् दोषाकरः सुखमनेकविधं विधत्ते" इति। व्यवहारसमुच्चयेऽपि। "स्वोच्चेऽथवा स्वभवने स्फुरदंशुजालः सौम्यालये स्थितखगे शुभवर्गगो वा। जामित्रकारिपरिसञ्चितदोषराशिं हृत्वा ददाति बहुशः सुखमेव चन्द्रः"। कालखण्डे वात्स्यायनः 'गुरुचन्द्रश्च जामित्रे तिष्ठेद्यदि बलान्वितः। धनसौभाग्यपुत्रांश्च लभते नात्र संशयः। भक्षितस्त्रामयालैश्च, सुवर्णाभरणैः शुभैः। शोभिता तु यदा तिष्ठेद्गुरुणापि निरीक्षिते। सा तु भर्त्तुः प्रिया नित्यं बुधे चन्द्रस्य सप्तमे" पी० धा०।

"एकार्गलोपग्रहपातलत्ताजामित्रकर्त्तर्युदयास्तदोषाः। नश्यन्ति चन्द्रार्कबलोपपन्ने लग्ने यथार्काभ्युदये तु दोषा" मु० चि०। "एकार्गलः खार्जूरचक्रोक्तः उपग्रहः शराऐत्यादिनोक्तः पातश्चण्डीशचण्डायुधम् लत्ता मरांशित्यादिनोक्ता, जामित्रमधुनोक्तम्। कर्त्तरी, लग्नात् पापाद्वित्याद्युक्ता उदयास्तदोषा वक्ष्यन्ते। एवंविधादोषा नश्यन्ति। यदा विवाहलग्ने चन्द्रार्कयोर्बलं स्वोच्चमित्रादिराशि-

स्थितत्वरूपं विहितत्वानस्थितत्वञ्च तेनोपपन्नं भवति । यस्मिन् सूर्यस्याभ्युदये दोषा रात्रिर्यथा नश्यतीत्यर्थः । गाढान्धकारयुक्तापि रात्रिरेकाकिना सूर्यस्योदयेन स्वयमेव नश्यतीति यथा" पी०धा० ।

प्रथङ्गादन्यान्यदोषस्य देशान्तरविषयत्वमाह "उपग्रहर्क्षं कुरुवाह्लिकेषु कलिङ्गवङ्गेषु च पातितभ्रम् । सौराष्ट्रशाल्वेषु च लत्तितर्क्षं त्यजेत् तु विद्धं किल सर्वदेशे" मु०चि० ।

"कुरवोवाह्लिकाश्च पश्चिमदेशास्तेषूपग्रहदोषाक्रान्तम् त्यजेन्न तदरिक्तसर्वदेशेषु तेषु शुभमेवेत्यर्थः । कलिङ्गोवङ्गश्च प्राग्देशौ बहुवचनान्मगधाङ्गादयोऽपि । तेषु चण्डीशचण्डायुधापरपर्यायं पातं त्यजेत् । न तु क्रान्तिसाम्यरूपं पातं तस्य महापातत्वव्यवहारात् । सौराष्ट्रः शाल्वदेशः पश्चिमदेशविशेषः बहुवचनादुपासवाङ्गल्यं तेषु लत्तितं लत्तासंज्ञातारां तत्र परित्यजेत् । विद्धं क्रूरेण शुभेन वा पञ्चशलाकादिचक्रद्वारा भिन्नर्क्षं भूतलवर्त्तिसर्वदेशेषु त्यजेत् । किन्तु नियमेन नत्वस्य देशभेदेन परिहारः एतदपि वाक्यं सम्मत्यन्तरं नार्हति । विवाहपटलेऽपि "लत्तामालवके देशे पातः कोशलके तथा । एकार्गलन्तु काश्मीरे वेधं सर्वत्र वर्जयेदिति" । वराहः । "तिथिदोषस्तु विन्ध्याख्ये देशे नान्येषु केषु चेति" । दशयोगो भवेद्गौडे शामिलस्य च यामुने । वेधदोषस्य शेषेषु" इत्यादि वाक्यानां यथादेशाचारात् व्यवस्था" पी०धा० ।

अथ दशयोगः "भशाङ्कसूर्यर्क्षयुतेर्भशेषे खं भूयुगाङ्गानि दशेशतिथ्यः नागेन्दवोऽङ्केन्दुमिता नखाश्चेद् भवन्ति चैते दशयोगसंज्ञाः" मु० चि० । "चेद्यदि चन्द्रसूर्यनक्षत्रयोर्युतेर्योगात् सप्तविंशत्याभक्ताच्छेषस्थाने शून्यं चेत् चतुःषड्दशैकादशपञ्चदशाष्टादशैकोनविंशतिविंशतिसंख्याके सति एते अङ्काः दशयोगसंज्ञा भवन्ति नान्ये इत्यर्थः । शिष्टानां दशानामङ्कानामभिहितत्वाद्दशयोग इत्यन्वर्थसंज्ञा तदुक्तं दीपिकायाम् "तिथ्यङ्गवेदैकादशनखविंशभैकादशाष्टादशविंशसंख्याः । इन्दोरुडुना सूर्ययुतोडुना वा योगाद्भतो वेदयोगदोषः" । वशिष्ठोऽपि "यस्मिन्नृक्षे रविस्तिष्ठेद् यस्मिन्नृक्षे शशी तथा । धिष्ण्ये द्वयोर्योगभक्ते शेषः स्यात् वादितोदय । शून्यवेदर्त्तुरूपाणि दिग्वदिशनयोत्कृतिः । अर्कविंशा नखाश्चेति दश योगाः प्रकीर्त्तिताः" इति पी०धा० तत्फलम् "वाताभ्राग्निमहीपचौरमरणं रुग्वज्रवादाः क्षतिर्योगाङ्के दलिते समे मनुयुतेऽश्वीभे तु सैकेऽर्द्धिते ।

मन्दाद्याश्च खलितास्तु मनुभीरेखाः क्रमात् संलिखेद्द् भोऽस्मिन् ग्रहचन्द्रयोर्न शुभदः स्यादेकरेखास्थयोः" मु०चि० ।

"शून्यशेषे वातदोषः स्यात् एकशेषेऽभ्रान्मिघात्, चतुर्थ्वशिष्टेऽग्निः, षट्सु महीपाद्भयं, दशसु चौरात्, एकादशसु मरणं द्वयोरन्यतरस्य वा, पञ्चदशसु रुक्, अष्टादशसु वज्रम् एकोनविंशतिशेषे वादः कलहः, विंशतिशेषे क्षतिः द्रव्यनाशः स्यात् । यदाह लल्लः "मरुन्मेघाग्निभूपालचौरमृत्युरुजोऽशनिः । कलिर्हानिर्दशैतास्ते दोषाः त्याज्याः सदा बुधैः" । विवाहादौ प्रतिष्ठायां व्रते पुंसवने तथा । कर्णवेधे च चूड़ायां दशयोगं विवर्जयेदिति" । अथापवाद उच्यते । योगाङ्क इति । योगाङ्के समे युग्मसंख्याके सति दलिते खण्डीकृते मनुभिश्चतुर्दशभिर्युते योगाङ्के तदा दाखादश्विनीतोभं नक्षत्रं स्यात् । यथा समाङ्के अङ्कयोगः दशाङ्कः १० अर्द्धितः ५ मनुयुतः १९ मूलनक्षत्रं जातम् । अथ योगाङ्के अयुग्मसंख्याके सति सैके एकयुक्ते ततोऽर्द्धिते अश्विनीतोभं स्यात् । यथा विषमाङ्को योगःपञ्चदश सैकः १६ अर्द्धितः ८ पुष्यनक्षत्रं जातम् । तदुक्तं यथा अथ मनुभिः खलिताश्चतुर्दश रेखास्तिर्यक् क्रमात् संलिखेत् । अनेन प्रकारेण यन्नक्षत्रमागतं तत आरभ्य साभिजिन्नक्षत्रचन्द्रमसो चक्रे लेख्यं तत्र स्वाक्रान्तनक्षत्रे स्थाप्यौ । दिननक्षत्रे च चन्द्र एवं सति यदि ग्रहचन्द्रावेकरेखास्थौ स्यातां तयोस्तादृशयोः परस्परावलोकनरूपोवेधोन शुभदः । उक्तञ्च ज्योतिःसागरे 'योगाङ्के विषमे सैके समे मनुलोचने२८।दलीकृतेऽश्विनीपूर्वं दशयोगमुदाहृतम् । दशयोगे महापक्षे प्रमादाद्यदि विध्यते । क्रूरैः सौम्यग्रहैर्वापि दम्पत्योरिकमाशर्मिति" दशयोगापवादान्तरमाह भरद्वाजः । "गुरौ लग्नाधिपे शुक्रे सवीर्ये लग्नकेन्द्रगे । दश दोषा विनश्यन्ति यथाग्नौ तूलराशयः" । व्यासोऽपि "शुक्रेण गुरुणा वापि संयुतं दृष्टमेव च । दशयोगसमायुक्तमपि लग्नं शुभावहमिति" पी०धा० । अपवादान्तरं ज्यो०त० । "आद्यपादस्थिते सूर्ये तुरीयांशः प्रदुष्यति । द्वितीयस्थे तृतीयस्थो विपरीतमतोऽन्यथा" । विपरीतं चतुर्थस्थे आद्यः तृतीयस्थे द्वितीयो दुष्यति नान्यस्थे नान्यपादो दुष्यतीत्यर्थः ।

अथ वाणदोषः "लग्नेनाढ्यायातातिथ्योऽङ्कतष्टाः शेषे नागद्व्यब्धितर्केन्दुसंख्ये रोगोवह्नीराजचौरौ च मृत्युर्बाणश्चायं दाक्षिणात्यप्रसिद्धः" मु०चि० । "शुक्लप्रतिप-

दसारभ्य गततिथ्याङ्कैर्नवभिस्तष्टाः शेषे नागसंख्येऽष्टसंख्ये रोगाख्योवाणः । एवं द्विसंख्ये शेषे वह्न्याख्यः चतुःसंख्ये शेषे राजा । तर्काः षट् तत्संख्ये शेषे चौराख्यः एकसंख्ये शेषे मृत्युसंज्ञोवाणः । अयं च दाक्षिणात्येषु महाराष्ट्रदेशीयेषु प्रसिद्धः तेन देशाचारात् व्यवस्थया वाणस्य त्यागः । न तु प्राच्योदीच्यपाश्चात्यानाम् । तदुक्तं सप्तर्षिमते विवाहपटले । “गततिथियुतलग्नं पञ्चधा स्थापनीयं तिथि १५रवि १२दश१०नागैर्दवेद ४युक्तं क्रमेण । नवहृतशर५शेषे वाणसंज्ञाः क्रमेण रुगनलनृपचौराः पञ्चमोमृत्युसंज्ञ इति” पी०धा० अथ प्राच्याख्यवाणापवादौ

“रसगुणशशिनागाब्ध्याढ्यसंक्रान्तियातांशकमितिरथ तष्टाङ्कैर्यदा पञ्चशेषाः । रुगनलनृपचौरा मृत्युसंज्ञश्च वाणो नवहृतशरशेषे शेषकैक्ये सशल्यः” मु०चि० । “रसगुणशशिनागाब्धिभिराढ्याचासौ संक्रान्तियातांशकमितिश्चेति स्पष्टनिरयनांशसूर्यसंक्रान्तिभुक्तांशानाम्मितिः संख्या पञ्चधा स्थाप्या कक्षादिकतुपेत्तत्रम् । सा क्रमेण षट्त्रेकाष्टचतुर्भिराढ्या संयोज्याङ्कैर्नवभिस्तष्टा सती यदा पञ्चशेषा यस्मिन् स्थले पञ्चावशिष्यन्ते तत्र क्रमेणरुगादिवाणोज्ञेयः । यथा आदौ पञ्चशेषे रोगवाणः द्वितीये पञ्चशेषेऽग्निवाणः तृतीये पञ्चशेषे राजवाणः चतुर्थे पञ्चशेषे चौरवाणः पञ्चमे पञ्चशेषे मृत्युवाणः तत्रात्तत्राङ्कं भवतीत्यर्थः । यदाह कश्यपः “संक्रान्तियातांशकनन्दशेषकाग्निनृपाष्टयुगैः समेतः । तष्टोपकैरोगकृतागभूपस्तेनामृतिश्चेति च पञ्च वाणाः । इति पञ्चेति पृथक् पृथक् पदं शिष्यन्ते तदा वाणाः स्युरित्यर्थः । तत्र वाणोद्विविधः एकः काष्ठशल्योऽपरोलोहशल्यः तत्राभिहितो वाणः काष्ठशल्य उच्यते । अस्य नाम प्राच्याख्यो वाण इत्याहुः । तेन तादृशे वाणे लग्ने तथा पीडा न भवेत्तदूर्ध्वं तदपवादमृतो लोहशल्यसहितो वाण उच्यते न चेति । यानि प्रागागतानि शेषाणि तेषामैक्ये नवहृते पञ्चाक्षरशेषे सति सशल्यः लोहसहितोवाणः स्यात् । पञ्चव्यतिरिक्ते शेषे शल्यसहितो दुष्टवाणः । अयं तुल्यन्यायत्वात् प्राक् पद्योक्तेऽपि वाणे सशल्यो वाणोज्ञेयः ज्योतिश्चिन्तामणावन्यथा वाणोऽभिहितः । “तिथिवारभलग्नाह्वोरसाग्न्यजाष्टवेदयुक् ६,३,१,८,४, नन्दाप्त पञ्चशेषे रुग्वह्निराट्चौरमृत्युकदिति” पी०धा० । अथ समयादिभेदेन वाणापवादः “रात्रौ चौररुजौ दिवाऽग्निनृपती त्याज्यौ सदा सन्ध्ययोर्मृत्युश्च शनौ नृपोज्ञिदि मृतिर्भौमेऽग्निचौरौ रवौ । रोगोऽथ व्रतगेहगोपनृपसेवायानपाणिग्रहे वर्ज्याश्च क्रमतो बुधैरुगनलक्ष्मापाखचौरा मृतिः” मु०चि० ।

“रात्रौ चोररुजौ वाणौ त्याज्यौ,दिवा दिवसेऽग्निनृपती वह्निराजकवाणौ त्याज्यौ सन्ध्ययोः प्रातःसायंसन्ध्ययोः सदा मृत्युर्वाणस्त्याज्यः । ज्योतिःप्रकाशे “रोगञ्चौरन्त्यजेद्रात्रौ दिवा राजाग्निपञ्चकम् । उभयोः सन्ध्ययोर्मृत्युमन्यकाले न निन्दितः” । अथ शनौ शनिवारे नृपवाणः, ज्ञिदि बुधवारे मृतिवाणः, भौमेऽग्निचौरवाणौ रवौ रोगवाणः त्याज्यः । उक्तञ्च दैवज्ञम० “रवौ रोगं, कुजे वह्निं, शनौ च नृपपञ्चकम् । वर्जयेच्च कुजे चौरं, बुधवारे च मृत्युदमिति” । एतेषु शुभकर्म्मसु एते वाणा वर्ज्याः यथा व्रते यज्ञोपवीते रुक्, गेहं गृहं तस्य गोप आच्छादनं तत्रानलोऽग्निः, नृपसेवायां क्ष्मापाखोराजा, याने यात्रायां चौरः पाणिग्रहे मृतिर्वाणो वर्ज्य इत्यर्थः । तदुक्तं ज्योतिःप्रकाशे “नृपाख्यं राजसेवायां गृहगोपेऽग्निपञ्चकम् । याने चौरं, व्रते रोगन्त्यजेन्मृत्युं करग्रहे इति” । केचिदेवं पाठमाहुः । व्रते विवर्जयेद्रोगं गृहगोपेऽग्निपञ्चकम् । यात्रायां राजचौराख्यौ विवाहे मृतिपञ्चकमिति” पी०धा०।

अथ लग्नसप्तमयोः शुद्ध्यादुपयोगिग्रहदृष्टिभेदः ‘त्र्याय’ त्रिकोणं चतुरस्रसप्तमं पश्यन्ति खेटाश्चरणाभिवृद्धितः । मन्दोगुरुर्भूमिसुतः परे च क्रमेण संपूर्णदृशो भवन्ति” मु०चि०।

“खेटाग्रहा यस्मिन् स्थाने तिष्ठन्ति तस्मात् कथ्यमानानि स्थानानि चरणाभिवृद्ध्या पादवृद्ध्या पश्यन्ति तद्यथा त्र्यायं तृतीयं दशमञ्चैकचरणदृष्ट्या पश्यन्ति त्रिकोणं नवपञ्चमं द्विचरणदृष्ट्या पश्यन्ति । चतुरस्रं चतुर्थम् अष्टमं च त्रिचरणदृष्ट्या पश्यन्ति । सप्तमं सप्तमस्थानं चतुश्चरणदृष्ट्या पश्यन्ति । अनेन तत्तद्दृष्टिवशशुभफलं चरणाभिवृद्ध्यैव भवतीत्यपि सूचितम् । तदुक्तं वराहेण “दशमतृतीये नवपञ्चमे चतुर्थाष्टमे कलत्रं च । पश्यन्ति पादवृद्ध्या फलानि चैवं प्रयच्छन्तीति” । मन्द इति । मन्दः शनैश्चरः स्वस्थानात् त्र्यायं संपूर्णदृक् चतुश्चरणदृष्टिः । एवं गुरुस्त्रिकोणं, भूमिसुतः चतुरस्रं, परे चन्द्रबुधसूर्यशुक्राः क्रमेण सप्तमे संपूर्णदृश इत्यर्थः यदाह गार्गिः । “दुश्चिक्यदशमान्, सौरिस्त्रिकोणस्थान् वृहस्पतिः । चतुर्थाष्टमगान् भौमः शेषाः सप्तमसंस्थितान् । भवन्ति वीक्षणे नित्यमेवाधिकफला ग्रहाः” इति । वराहोऽपि “पूर्णं पश्यति

रविजस्तृतीयदशमे त्रिकोणमपि जीवः। चतुरस्रं भूमिसुतः सितार्कबुधहिमकराः कलत्रं चेति" पी॰धा॰। अत्रापि शब्दात् सप्तमस्थानेऽपि पूर्णदृष्टिः एवं शनिकुजयोः। अत एव मु॰चि॰परे चेत्युक्तम् तत्प्रमाणञ्च पञ्चदृष्टिप्रकरणे वक्ष्यते।

अथ लग्ननिरूपणम्। दीपिका "कन्यातुलाधन्विमिथुनेषु साध्वी शेषेष्वसाध्वी धनवर्जिता च। निन्द्योऽपि लग्ने द्विपदांश इष्टः कन्यादिलग्नेष्वपि नान्यभागः"। कन्यादिलग्नेष्वपि द्विपदांशएव इष्टोनान्य इत्यर्थः। अध्यमाधवलग्ने परे चरांशवर्ज्जनात् धरलग्नेऽपि तुलातिरिक्तद्विपदांशस्य ग्राह्यता "धनुषि कुलटा तत्पूर्व्वार्द्धे सतीत्वपरे जगुः" विवाहपटले धनुरुत्तरार्द्धनिषेधात् पूर्व्वार्द्धस्य ग्राह्यतैव। मासभेदे लग्नभेदानां शून्यत्वात् तत्तन्मासे शून्यलग्ने विवाहो नेष्टः यदाह ज्यो॰त॰"घटमृगमिथुना युग्ममेषकन्यालवसुभा। चापः कर्कौ स्मृगः सिंहश्चैत्रादौ शून्यराशयः" पङ्ग्वादिलग्नानि यानि वक्ष्यन्ते तान्यपि तत्तत्काले वर्ज्यानि।

अथ लग्नसप्तमशुद्धौ "यदा लग्नांशेशोलवमथ तनुं पश्यति युतोभवेद्वाऽयं वोढुः शुभफलमनल्पं रचयति। लवद्यूनस्वामी लवमदनभं लग्नमदनं प्रपश्येद्वा वध्वाः शुभमितरथा ज्ञेयमशुभम्" मु॰चि॰। "यदा लग्नांशेशोलग्नांशस्तस्येशः स्वामी स्वं नवांशं पश्यति। अथ वाऽयं नवांशेन सह युतो वा भवेत्तदा वोढुर्वरस्यानल्पं बहुशुभफलं रचयति। यथा मेषलग्ने मिथुनांशस्तदीशो बुधः तुलायां मिथुनं पश्यति तत्र तिष्ठति वा अयहृदयशुद्धेः प्रथमः कल्पः। तदभावे तु लग्नांशेशस्तनुं लग्नं पश्यति लग्नेन सह युतो वा भवेत्तदापि वोढुः शुभफलमनल्पं स्यात् यथा मेषलग्ने एव मिथुननवांशस्वामी बुधोमकरे स्वनवांशं न पश्यति किन्तु लग्नं पश्यति अथवा मेष एव तिष्ठति। अयं लग्नशुद्धेः द्वितीयः प्रकारः। लवेति। लवद्यूनस्वामी लवान्नवांशात् द्यूनं सप्तमनवांशस्तत्स्वामी लवमदनभं नवांशमदनभं सप्तमनवांशं पश्यति तेन सह युतो वा भवेत् तदा वध्वा अनल्पं शुभं रचयति। यथा मिथुननवांशात् सप्तमोधनुरंशस्तदधीशोगुरुर्मेषे धनुः पश्यति तत्र तिष्ठति वा अयमस्तशुद्धेः प्रथमः प्रकारः। तदभावे तु लवद्यूनस्वामी लग्नमदनं सप्तमभवनं पश्यति सप्तमभवनेन सहयुतो वा भवेत्तदा वध्वाः शुभं यथा मेषलग्ने गुरुः कर्के सप्तमतुलागतं स्वनवांशं धनूरूपं न पश्यति किन्तु सप्तमभवनं तुलां पश्यति अथवा तुलायामेवास्ति। अयमस्तशुद्धेर्द्वितीयः प्रकारः। इतरथेति इतरथा यदा लग्नांशेशोलवन्तनुं वा न पश्यति तत्र युतो वा न स्यात्तदा वरस्याशुभं मृत्युः स्यात्। यदा स्वस्तांशेशोऽस्तांशमस्तभवनं वा न पश्यति तत्र युतो वा न स्यात्तदा कन्याया अशुभं मृत्युरित्यर्थः। यदाह कश्यपः "स्वस्वेशेनोदयास्तांशौ वीक्षितौ वाथ संयुतौ। लग्नं वास्तमथेह तत्तदंशेशेनेक्षितं युतमिति" तदाऽशुभमित्यनुषङ्गः। वशिष्ठः "इष्टोदयांशे निजपत्यदृष्टे वरस्य मृत्युस्त्वनुसंयुते च। अस्तांशकेऽप्येवमदृष्टयुक्ते स्वस्वामिना नाशमुपैति कन्येति"। तुल्यन्यायत्वाल्लग्नेऽप्यस्तलग्नेऽपि उदयस्तांशयोस्तांशस्वामिनोर्दृष्ट्यभावेऽप्येतदेव फलं ध्येयम्। "लवेशोलवं लग्नपोलग्नगेहं प्रपश्येन्मिथो वा शुभं स्याद्वरस्य। लवद्यूनपोऽशं द्यूनं लग्नपोऽस्तं मिथोवेक्षते स्याच्छुभं कन्यकायाः" मु॰चि॰। "नवांशस्वामी नवांशं प्रपश्येल्लग्नस्वामी लग्नं प्रपश्येत्तदा वरस्य शुभं स्यात्। अथ वा मिथः परस्परं नवस्वामी लग्नं लग्नेशोनवकं प्रपश्येत् तदाऽपि वरस्य शुभम् एवं लवद्यूनपोनवांशात्सप्तमनवांशस्वामी स्वंशं द्यूनमंशं सप्तमराशिमीक्षते लग्नपः लग्नस्वामी अस्तं लग्नात्सप्तमभवनमीक्षते तदा कन्यायाः शुभं स्यात्। वा अथवा मिथः सप्तमाधीशोलग्नसप्तमं वीक्षते लग्नात्सप्तमाधीशवांशसप्तममीक्षते तदापि कन्यायाः शुभं स्यात्। अत्रान्यथात्वे दम्पत्योरशुभमित्यर्थः। यदाह नारदः "लग्नवांशकौ स्वस्वपतिना वीक्षितौ युतौ। न चेद्वान्योऽन्यपतिना शुभमिष्टं च वा यथा। वरस्य मृत्युः स्यात्ताभ्यां सप्तसप्तोदयांशकौ। एवन्तौ वीक्षितौ युक्तौ मृत्युर्वध्वाः करग्रहे"। वशिष्ठोऽपि "उदयांशः समन्नाथो मित्रसौम्येन वा युतः। प्रेक्षितो वा तथास्तांशो दम्पत्योः पुत्रपौत्रदः" इति। परस्परवीक्षणेऽप्येतदेव फलं ध्येयं नारदवाक्यस्वरसात् पी॰धा॰।

"लवपतिशुभमित्रैर्वीक्षितेऽंशं तनुं वा परिणयनकरस्य स्याच्छुभं शास्त्रदृष्टम्। मदनलवपमित्रैः सौम्यसंयद्युनं वा तनुमदनगृहं चेद्वीक्षते शर्म वध्वाः" मु॰चि॰। "अथ पूर्वोक्तप्रकारेणोदयास्तशुद्धेरभावेऽपि तृतीयप्रकार उच्यते। लवपतीति शुभमित्रं शुभश्च तन्मित्रं चेति कर्मधारयः। लवपतेर्लग्ननवांशेशस्य शुभग्रहैः सौम्यबुधगुरुशुक्रास्तेषामन्यतमेन मित्रं स्यात् चेदंशं स्वनवांशं तनुं लग्नं वा वीक्षते तदा परिणयनकरस्य वरस्य

माङ्गल्यं वशिष्ठोक्तपुत्रपौत्रादिप्राप्तिरूपं शुभं फलं स्यात् अथ वा एवं मदनलवणासारांशेषस्य मित्रं सौम्यं चेत् स्यात्तत्रांशात् द्यूनं सप्तमनवांशं चेद्दीयते सा अथ वा तत्तुमदनरूढं लग्नात्सप्तमभवनस्थं दीयते तदा वध्वाः माङ्गल्यं शर्म स्यात् । यद्युभयत्रापि नवांशस्वामिनो मित्रं पापग्रहश्चेत्तस्य दृष्टिरशुभैवेति फलितार्थः । यदाह वराहः "शुद्धस्थिरं स्याच्च यदोदयांशोलग्ने नवांशस्तदुपैति शुद्धिम् । तदा शुभत्वोऽप्यनिरीक्षितोयः शुभाय स स्यात्प्रवदन्ति सन्तः" इति । कश्यपः "राश्यंशौ मित्रसौम्ये न वीक्षितौ वाथ संयुतौ । उदयास्तांशयोः शुद्धिस्त्रिविधा लग्नवत्परेति" । वशिष्ठः "लग्नांशशुद्धा रहितः सदोषः करोति वस्तुं वरकन्ययोश्च। नाशं तदा लग्नशुभास्तगतास्तं सम्प्राप्तो इव सर्पदष्टमिति" । केचित्तु विवाहादौ वज्रयोगं निषिद्धमाहुस्तद्यथा । "तिथिवारं च नक्षत्रं नवभिश्च समन्वितम् । सप्तभिस्तु हरेद्भागं शेषाङ्के फलमादिशेत् । त्रिशेषे तु जलं विद्यात् पञ्चशेषे प्रभञ्जनः । सप्तशेषे वज्रपातोऽज्ञेयं वज्रस्य लक्षणमिति टोडरानन्दे" पी० धा०

अथ सूर्य्यसंक्रान्तिदोषः "विषुवायनेषु परपूर्व्वमध्यमान्दिवसांस्त्यजेदितरसंक्रमेषु हि । घटिकास्तु षोड़श शुभक्रियाविधौ परतोऽपि पूर्व्वमपि सन्त्यजेद्बुधः" मु० चि० । "विषुवत्तुलामेषसंक्रान्ती अयनं कर्कमकरसंक्रान्ती एतासु विषुवायनाख्यासु संक्रान्तिषु परपूर्व्वमध्यमान् दिवसान् बुधः शुभक्रियाविधौ विवाहयज्ञोपवीतादिशुभकार्य्येषु त्यजेत् । इतराखिलसंक्रान्तिषु संक्रमकालात्परतोऽग्रेऽपि पूर्व्वं प्रागपि षोड़श घटिकाः मिलित्वा द्वात्रिंशद्घटिकास्त्यजेत् । यदाह वशिष्ठः "विषुवतोरयनयोर्दिवसत्रयं हरिपदे षड़शीतिमुखेषु च । पूर्व्वतोऽपि परतोऽपि संक्रमात्नाडिकाश्च खलु षोड़श त्यजेत् । संक्रान्तिदोषे त्वचिरात् क्षतं यदुद्वाहपूर्व्वोक्तिम मङ्गलाद्यम् । लाक्षासमुज्ज्वलिताग्निमध्ये विलीयते तद्वदशेषमेतदिति" उद्वाहादिग्रहणात्स्नानादावनिषेधः । तद्वाक्यानि संक्रान्तिप्रकरणेऽस्माभिरुक्तानि । किन्तु दिनत्रयं त्याज्यं किं संक्रान्तिकालात् प्राग्दिनत्रयमुत तदनन्तरमुत मध्यमं चेति पक्षत्रयसम्भवे निर्णयमाह गुरुः । "अयने विषुवे पूर्व्वमपरं मध्यन्दिनन्त्यजेत् । अन्य संक्रमणे पूर्व्वाः पराः षोड़श नाडिका इति" । अयञ्च निषेधः षाबनसंक्रान्तिष्वपि ध्येयः। यदाह वशिष्ठः "यदाऽयनप्रवेशः स्यात्तदा तद्राशिसंक्रमः । तस्मिन्नपि दिने त्याज्या नाड्यः षोड़श षोड़शेति" । शौनकः "अयनद्वये समूढा भर्त्तारं नाभिनन्दते नारी । विषुवद्द्वयेऽपि विधवा षड़शीतिमुखेषु सा म्रियते । विष्णुपदेषु विनीता कन्या विकलेन्द्रिया व्यतीपाते । वैधृतिविष्ट्योर्भ्रष्टा सुभगा शेषेषु करणेष्विति" पी० धा० ।

अथ पङ्ग्वादिलग्नदोषः "घस्रे तुलालौ वधिरौ मृगाश्वौ रात्रौ च सिंहाजवृषा-दिवान्धाः । कन्यानृयुक्कर्कटका निशान्धा दिने घटोऽन्त्यो निशि पङ्गुसंज्ञः" मु० चि० । "घस्रे दिवसे तुलावृश्चिकौ वधिरौ स्मृतौ, मृगाश्वौ मकरधनुषी रात्रौ न तु दिवसे, सिंहाजवृषा दिवान्धा दिवसे वधिरा । न तु रात्रौ । कन्या नृयुक्कर्कटा निशान्धा रात्रावन्धा न तु दिवान्धाः । घटः कुम्भो दिने पङ्गुसंज्ञो न तु रात्रौ । अन्त्यो मीनो निशि पङ्गुसंज्ञो न तु दिने । यदाह वशिष्ठः "मेषादिचात्मकं षट्कं चत्वारो वधिराः स्मृताः । द्वौ पङ्गू चैति विज्ञेयाविद्येतद्राशिलक्षणम् । मेषो वृषो मृगेन्द्रश्च दिवसेऽन्धाः प्रकीर्त्तिताः । नृयुक्कर्कटकन्याश्च रात्रावन्धाः प्रकीर्त्तिताः । तुला च वृश्चिकश्चैव दिवसे वधिरौ तथा । धनुश्च मकरश्चैव वधिरौ निशि कीर्त्तितौ । कुम्भमीनौ च पङ्गू द्वौ दिवारात्रौ यथाक्रममिति" । कुम्भो दिवा पङ्गुर्मीनो रात्रौ पङ्गुः, अनेन यस्मिन्काले लग्नस्य योऽन्धपङ्ग्वादिदोषः उक्तस्तस्मिन्नेव काले तल्लग्नन्दोषावहं न कालान्तरे" पी० धा० ।

तत्फलम् । "दारिद्र्यं वधिरतनौ दिवान्धलग्ने वैधव्यं शिशुमरणं निशान्धलग्ने पङ्ग्वङ्गे निखिलधनानि नाशमीयुः सर्व्वत्राधिपगुरुदृष्टिभिर्न दोषः" मु० चि० ।

"वशिष्ठः 'अन्धे वैधव्यमाप्नोति दारिद्र्यं वधिरे तथा । अथ नार्यो भवेत् पङ्गाविति धात्रा विनिर्म्मितम्"। व्यासः "मासश्चन्द्रात्कृपाच्चारा राघवो वधिरादयः। गौड़माळवयोस्त्याज्यास्त्वन्यदेशे न गर्हिता इति पी० धा० ।

अथ नवांशशुद्धिः ।"कार्म्मुकतौलिककन्यायुग्मलवे झषगे वा । यर्हि भवेदुपयामस्तर्हि सती खलु कन्या" मु० चि० । "कार्म्मुकं धनुस्तौलिकं तुला न्युग्मं मिथुनम् एषामंशे नवांशे झषगे मीनगते वायश्चेत्कीयमद्गुनार्थः धनुरादिनवांशाः सर्व्वमुनिसम्मता इत्यर्थः तेष्वंशेषु यर्हि यदा उपयामो विवाहो भवेत्तर्हि कन्या विवाहोत्तरं सती पतिव्रता खलु यदाह वशिष्ठः "लग्ने हि सर्व्वे शुभराशयश्च शुभेक्षिता वाथ युताः शुभाः स्युः। नवांशकस्तौलिनृयुग्मकन्याचापाद्य-

भागः शुभदो न चान्ये । द्विभर्त्तृका मेषनवांशके स्यात् वृ-
षांशके वा पशुशीलयुक्ता । धनान्विता पुत्रवती तृतीये कुली-
रकांशे कुलटाप्यजस्रम् । सिंहांशके सा पितृमन्दिरस्था क-
न्यांशके वित्तयुता सुशीला । तुलांशके सर्व्वगुणान्विता सा,
कीटांशके निःस्वतरा विशीला । चापांशकाद्ये धनिनी द्वि-
तीये भागेऽव्यसक्ता मलिना गदाढ्या । निःस्वा मृगांशे वि-
गुणा घटांशे विभर्त्तृका योगरता विशीर्णा । मीनांशके क्रूर-
हृतार्थ हीना शुभग्रहैर्युक्तनिरीक्षिते वा । तस्मान्नवांशो-
क्तनवांशकेषु कुर्य्याद्विवाहं शुभषड्वर्गैः । नवांशदोषः
सकलग्रहोत्थं लग्नोत्थसौख्यप्रदमन्यथा च । ध्रुवं निह-
न्त्येव दोषोऽसकृदुग्रं षड्वर्गजं सौम्यवियच्चराणाम्" । पशु-
शीलयुक्ता पशुचारपरा गदोरोगः एते एव च
नवांशाः सकलमुनिभिरुक्ताः "तुलामिथुनकन्यां-
शा धनुराद्यार्द्धसंयुताः । एते नवांशाः शुभदा यदि नान्यां-
शकाः शुभा इति" नारदोक्तेः शौनकस्तु मीनांशकमपि
शुभमाह "सुदती सौभाग्यवती प्रहसितवदना च मीनांशे"
इति । तत्र निषेधस्य तुल्यबलत्वात् षोडशीग्रहणाग्रहणव-
द्विकल्प इत्याहुः तत्र एकवाक्येनोपपत्तावनेकवाक्यार्थोऽन-
न्याय्य इति बहुमुनिवचनप्रामाण्यात् मीनांशत्याग एवो-
चितोऽत्र एकमुनिवचनानुरोधात् प्राचिकोविकल्पविधिता-
शाष्टदोषग्रस्तत्वात् । का तर्हि शौनकवाक्यस्य गतिरिति
चेत् शुभग्रहदोषबलात् लग्नान्तरासम्भवे मीनांशको निषि-
द्धोऽपि ग्राह्य इत्येवं विषया गतिर्युक्ता" पी॰धा॰ ।
"अन्त्यनवांशे न च परिणेया काचन वर्गोत्तममिह हित्वा ।
नो चरलग्ने चरभवयोगे तौलिमृगस्थे शशभृति कुर्य्या-
त्" मु॰चि॰ ।" विहितनवांशेष्वपि यथा मेषलग्ने धनु-
र्नवांशोऽन्तिम इत्येवं विधिविषये लग्नान्तिमनवांशे काचन
कन्या न परिणेया न विवाह्या । परन्तु वर्गोत्तमं नवांशं
हित्वा तत्र विवाह उचित एव । यथा मिथुनलग्ने मिथु-
नांशोऽन्तिमोऽपि वर्गोत्तमः । तदाह कश्यपः "अन्त्यांशका
अपि नेष्टा यदि वर्गोत्तमाह्वयाः । अन्त्यांशास्तु न चा-
ह्या यतस्ते कुनवांशकाः" इति । वशिष्ठोऽपि "वर्गोत्तमं
विनान्त्यांशे विवाहो न शुभप्रदः । वर्गोत्तमश्चेदन्त्यांशः
पुत्रपौत्रादिवृद्धिदः"इति । अन्यच्च नो चरलग्ने इति ।
तौलिमृगस्थे तुलामकरस्थे शशभृति चन्द्रे सति चरलग्ने
विहितचरभवयोगे नो कुर्य्यात् । यथा मेषलग्ने तुलांशे
उक्तञ्च मेषवार्केण "चरभं चरवेश्मगतश्च जनुर्मृगगतुला
भवने मृगलक्ष्मणि । युवतिरत्र भवेत् हतकौतुका मदन-
वल्लभवल्लभजनोनुसुखीति"। अनघो जीर्णभर्त्ता तस्य स्वजने
त्यागे उन्मुखी परपुरुषरता स्यादित्यर्थः" पी॰धा॰ ।

अथ लग्नादिस्थ ग्रहदोषः "व्यये शनिः खेऽवनिजस्तृतीये
भृगुस्तनौ चन्द्रखला न शस्ताः । लग्नेट् कविग्लौश्च रिपौ
मृतौ ग्लौर्लग्नेट्शुभाराश्च मदे च सर्वे" मु॰चि॰ ।

"व्यये द्वादशस्थाने स्थितः शनिः न शस्तः "सोम-
पकुलेऽपि हि जातां द्वादशगे मद्यपां कुरुते" इति शौ-
नकोक्तेः । अत्र रविसुते इत्यनुवर्त्तते ।"खे दशमेऽवनिजो
मङ्गलो न शस्तः । "शाकिनी व्योम्नि वक्रे" इति केश-
वार्कोक्तेः । तृतीयो भृगुः शुक्रः न शस्तः "धन्या धनगे
शुक्रे तपस्त्वं प्राप्नुयान्नारी । दुश्चिक्यगते तु कन्या
स्याद्दुहृदुः कनीयसा-स्वजते" इति शौनकोक्तेः । तनौ
लग्ने चन्द्रः खलाः पापग्रहाश्च न शस्ताः । "लग्नस्थे-
ऽर्के कन्या विधवा संवत्सरेऽष्टमे भवति । लग्नस्थो हिम-
रश्मिर्मृत्युं कुर्य्यात् त्रयोदशे मासि । भौमः सद्यो विधवां
लग्नस्थोऽब्दात्स सोम्यग्रहयोगात् । कामयति नीचवर्गा-
ल्लग्नस्थे रविसुते बहून् पुरुषान् । शशिवह्निभुक्तदस्य
तु षितेयं षद्वर्षादिति विद्यैरिति" शौनकोक्तेः । लग्नेट्
लग्नस्वामी, कविः शुक्रः ग्लौश्चन्द्रश्च रिपौ षष्ठस्थाने
न शस्ताः । "रन्ध्रे कुजे सौम्यखगे च मृत्युः षष्ठाष्टगे
लग्नपतौ च मृत्युरिति" ज्योतिर्निबन्धोक्तेः । "भृगु-
षट्काख्यो दोषो लग्नात् षष्ठगते सिते । उच्चगे शुभ-
संयुक्ते तल्लग्नं सर्वदा त्यजेदिति" नारदोक्तेः ।"अब्द-
षट्कात् मृत्युर्दम्पत्योः षष्ठगे चन्द्रे" इति शौनकोक्तेः ।
ग्लौश्चन्द्रः लग्नेट् शुभाश्चन्द्रबुधगुरुशुक्राः आराभौम-
श्चैते मृताष्टमस्थाने न शस्ताः"मासत्रयेण विधवां निधन-
गश्चन्द्रमाः कुरुते"। मासत्रयेण कन्या निधनस्थे याति पञ्च-
त्वम्"। बुधस्याप्यनुवर्त्तते।"दम्पत्योर्निधनस्थः सप्तदशाब्दा-
द्वियोगदो जीवः । पञ्चत्वं नयति भृगुर्निधनस्थः सप्त-
भिर्वर्षैरिति" शौनकोक्तेः । नारदः "कुजाष्टमो महा-
दोषो लग्नादष्टमगे कुजे । शुभत्रययुतं लग्नं त्यजेत्
तत्तुङ्गगो यदि" । अत्र सम्मतिः प्रागुक्ता । लग्नेट् च
पुनः सर्व्वे सूर्य्यादयो ग्रहा मदे सप्तमस्थाने न शस्ताः
निषिद्धाः । "सर्वे जामित्रसंस्थाविदधति मरणमिति"
वशिष्ठोक्तेः । कश्यपोऽपि "सप्तस्थानगाः सर्वे ग्रहाः
कुर्व्वन्ति शोभनः । दम्पत्योर्मरणं यत्तु स्यादेकस्य च
न संशयः" इति चर्चाद्न्येषु स्थानेषु ग्रहाः सर्वो-
पि नाशकाः केषुचित् स्थानेषु शुभा एव केषुचिन्मध्यमा

एवेत्येतदपि वक्ष्यति । अतोऽसमर्थमतिसंक्षिप्य त्रिवि कमेण निषिद्धस्थानान्येवोक्तानि । "त्याज्या लग्नेऽब्धयो मन्दात्, षष्ठे शुक्रेन्दुलग्नपाः। रन्ध्रे चन्द्रादयः पञ्च सर्व्वेऽस्ते ऽब्जगुरू समाविति"। (मन्दादब्धयः चत्वारो मन्दरविचन्द्रकुजा इत्यर्थः)। अब्जगुर्व्वोः समत्वं शौनकमतेन लाहशविरुद्धफलाभावात् । यदाह "कन्यास्तिस्रो जनयति सापत्न्यं चैव सप्तमे शशिनि"। "शीलचरित्रोपेताङ्करोति पत्युः कलत्रगे हेज्यामिति"। गुरुरित्यनुवर्त्तते अत्र वचनद्वयप्रामाण्याद्विकल्पः। यच्चात्रिणोक्तं "जामित्रगो यदि भवेदुशना बुधो वा गीर्वाणनाथसचिवः सितचन्द्रपक्षे। कन्याविवाहसमये परिहृत्य दोषान् सौभाग्यपुत्रसहितां वनितां करोतीति" तच्चन्द्रजामित्रविषयम् । तथा च भुजबलः "स्त्रीणां विवाहे तु बलैरुपेताः पत्युः प्रणाशं विहगा विदध्युः। त्यक्त्वा बुधं दैत्यगुरुं गुरुं च निशाकरादस्तगृहप्रपन्नाः" इति । अतएव दीपिका "रविमन्दकुजाक्रान्तं लगाद्वात् सप्तमं त्यजेत् । विवाहयात्रा चूड़ासु गृहकर्म्मप्रवेशने" इतिपी॰धा॰ अथ लग्नतःस्थानविशेषे ग्रहभेदानां शस्तता "लग्नायाष्टषट्सु रविकेतुतमोऽर्कपुत्रास्त्र्यायारिगः क्षितिसुतो द्विशुभायगोऽब्जः। सप्तव्ययाष्टरहितौ ज्ञगुरू सितोऽष्टत्रिद्यूनषड्व्ययगृहान् परिहृत्य शस्तः" मु॰चि॰ ।

"तृतीयैकादशाष्टमषष्ठस्थानेषु रविकेतुतमोऽर्कपुत्राः शस्ताः शुभफलदातारः । यदाह शौनकः "बन्धुजनेभ्यः पूजां त्रिंशद्वर्षाणि सहजगे त्वर्के । प्राप्नोति धनं षष्ठे त्र्यब्दादूर्द्ध्वं सुतांश्चैव । दम्पत्योः सह मरणं निधनस्थेऽर्केऽष्टसप्तत्या । कारयति धनविवृद्धिं त्र्यब्दादूर्द्ध्वं तथा शगः सवितेति" (रवेः) धनधान्यपुत्रयुक्तां पञ्चमसंवत्सरात्तृतीयस्थः । षष्ठः षड्भिर्मासैरसपत्नीं कन्यकां कुरुते । निधनगतार्किः कुर्य्यादामरणादामयवियुक्ताम् । आयगतार्किः कन्यां त्रिवर्गयोग्यां करोति षण्मासादिति" (शनेः) अत्र राहुकेत्वोश्च फलं शनिवदेवेति "स्वर्भानौ वाप्य च शिखिनि वा लग्नभावादिसंस्थे" इति वशिष्ठोक्तेः त्र्यायारिगः तृतीयैकादशषष्ठस्थानस्थितः क्षितिसुतो भौमः शस्तः।"सहजस्थो भूमिसुतः सौभाग्यकरस्तु यावदायुष्यम्। संवत्सरेण विपुलं धनागमं शत्रुसंस्थस्तु । मधिकाब्धुनरत्नाढ्यामेकादशगः कुजोऽब्दषट्केन" इति शौनकोक्तेः । अब्जश्चन्द्रोद्विशुभायगोद्वितीयतृतीयैकादशस्थः शस्तः।"अब्दादष्टसंयुक्तां करोति चन्द्रो धने नार्य्याः । चन्द्रस्तृतीयराशौ सौभाग्यकरस्तु यावदायुष्यम् । लग्नादेकादशगः कन्यामिन्दुर्धनान्वितां कुरुते" इति शौनकोक्तेः । ज्ञगुरू बुधवृहस्पती सप्तमद्वादशाष्टमातिरिक्तस्थानस्थितौ शस्तौ । उक्तस्थानानाम् अशुभत्वादन्येषां शुभदातृत्वात् । यदाह वशिष्ठः । "प्रीतिर्वृद्धिः सगुणनिरतिर्बन्धुपूजा सुताप्तिः सद्वैपत्यं तनयरहितं त्वन्यथा भर्त्तृनाशः। धर्मे बुद्धिर्भवति धरणीलब्धिरत्नेव वृद्धिर्हानिः स्त्रीणां हिमकरसुते लग्नभावादिसंस्थे" इति । "लक्ष्मीप्राप्तिर्भवति सुयशाः प्रीतिरन्योन्यहर्षश्चरिष्टप्राप्तिर्बहुविधभयं चाश्रमाणां विरक्तिः। पापासक्तिः सुकृतविरतिर्भूरिलाभः सुरेज्ये स्त्रीणां सौख्यं रिपुकृतभयं लग्नभावादिसंस्थे" इति अयं शुभदैवं अतः शुभावहो विधिहितमपरः । क्लीबत्वं त्वाष्टम् केचिद्बहुविधभयमिति" पठन्ति तन्मकारे भ्रकारभ्रान्तेः "उभयकुलानन्दकरीं करोति न चिराद्गुरुः षष्ठे" इति षष्ठस्थानस्थितगुरोः शौनकेनापि सम्यक्फलाभिधानात् । सित इति अष्टमतृतीयसप्तमषड्द्वादशस्थानानि परिहृत्य त्यक्तान्येषु स्थानेषु सितः शुक्रः शस्तः । तदुक्तं वशिष्ठेन "भोगप्राप्तिर्विविधविभवं वैरवृत्तिर्महत्त्वं द्युम्नाधिक्यं भवति निधनं सर्व्वनाशोऽवशत्वम् । त्यप्रीतिर्बहुविधगुणाः सर्वसम्पत्समृद्धिरस्तं स्त्रीणामुशनसि तथा लग्नभावादिसंस्थे" इति द्युम्नं द्रविणम्।अवशत्वं दरिद्रता। अस्वं दारिद्र्यम् । वशिष्ठः "मृत्युर्नैस्वं बहुविधधनं भ्रातृहानिः प्रजानां व्याधिः सौख्यं बहुविधमतोभर्त्तृहानिश्चिरायुः । श्रेयोहानिर्भवति हृदयव्याधिरर्थागमश्च भानौ स्त्रीणामतिशयरुजा लग्नभावादिसंस्थे ।(रवेः)नाशः सम्पद्बहुविधशोषसुवृद्धिः प्रजाप्तिः सख्यानुमृत्युर्भवति न चिराद्दीर्घसापत्न्यबाधा । प्रव्रज्यात्वं दुहितृजननं वर्द्धनं भोगभाक्त्वं दास्यं स्त्रीणां तुहिनकिरणे लग्नभावादिसंस्थे(इन्दोः)। अत्र चतुर्थचन्द्रस्य प्रजाप्तिः फलमभिहितम् श्रीपतिनापि "सुखे तु कथितो बन्धुवर्गः पैत्रनेत्येकीयमतमनुसृत्योक्तमिति अन्यकृता चतुर्थस्थानस्य मध्यमत्वमङ्गीकृतम् । "वधूं चतुरविमुक्तां चतुर्थस्थः शशी त्वावदादिति" शौनकः । विरुद्धार्थयोः का गतिरिति चेत् । बालचन्द्रविषयमशुभफलम् तद्भिन्नचन्द्रविषयं शुभफलम् । उक्तञ्च केशवार्केण "बालोऽब्जः प्रियविरहं शनिः स्तनाभ्यःमृत्युत्वं सृजति सुखे सुवासिनीनामिति" वशिष्ठः "मृत्युः शोको बहुविधधनं भ्रातृवैरं कुदुर्विलक्ष्मीप्राप्तिर्भवति मरणक्षोभयोर्वैशनाशः। स्त्रीणां हि षो व्यसनानि

रतिः पुत्रपौत्रादिभिर्विभूतिभिर्मेर्लभिति तनये चान्द्रभावादिसंस्थे”(कुजस्य)। खचान्द्रत्वं मदयनरतिवल्लभत्वं वियोगं व्याधिः सुधीर्मृतिरत्र सुखं गर्भपातप्रदचिः द्यूताघक्रिर्भवति रविजे वैभवं बन्धरोगं खभौमौ वाय्यव पिथिनि वा जन्मभावादिसंस्थे” पी० धा० बुधादीनामनुपदमुक्तम् ।

अथ लग्नादिभङ्ककर्त्तर्य्यादिदोषापवादः

“पापौ कर्त्तरिकारकौ रिपुग्टहे नीचास्तगौ कर्त्तरीदोषो नैव सितेऽरिनीचग्टहगे तत्षष्ठदोषोऽपि न । भौमेऽस्ते रिपुनीचगे न हि भवेद्भौमोऽष्टमो दोषकृद्गोचे नीचगतांशके शशिनि रिप्फाष्टारिदोषोऽपि न” मु० चि० ।

“तत्र कर्त्तरीयोगलक्षणं लग्नात् पापावित्यादिनोक्तं यौ क्रूरौ ग्रहौ कर्त्तरिकारकौ रिपुग्टहे शत्रुगेहे स्थितौ नीचेऽस्तगौ स्वनीचराशिस्थितौ अस्तं गतौ वा तदा कर्त्तरी नैव स्यात् यदाहुः कश्यपनारदवसिष्ठाः “पापयोः कर्त्तरीकर्त्रोः शत्रुनीचग्टहस्थयोः । तदा चास्तगयोर्वापि कर्त्तरी नैव दोषदा” इति इदं विशेषणं शत्रुग्टहस्थत्वादिकं समुच्चितं व्यस्तं समस्तं वा ज्ञेयम्, अपवादान्तरमुक्तं दैवज्ञम० गर्गेण । “क्रूरकर्त्तरिसंयुक्तं लग्नं चन्द्रं च न त्यजेत् । केन्द्रत्रिकोणसंस्थेषु शुभभार्गवजित्सु च” । “विधौ धनोपगे शुभग्टहेऽथवास्तगे गुरौ । न कर्त्तरी भवत्यहोजगाद बादरायणः । क्रूरद्वयस्यान्तरगं विलग्नं मृतिप्रदं चन्द्रमसश्च रोगदम् । शुभैर्धनस्थैरथ वाऽस्तगे गुरौ न कर्त्तरी स्यादिह भार्गवादिदुरिति”।

अथ षष्ठशुक्रापवाद उच्यते ।“सिते शुक्रेऽरिग्टहगे नीचग्टहगे वा सति तत्षष्ठदोषो भृगुषट्कदोषोऽपि न स्यात् यदाह कश्यपः “नीचराशिगते शुक्रे शत्रुक्षेत्रगतेऽपि वा । भृगुषट्कोत्थितो दोषो नास्ति तत्र न संशयः” अथाष्टमभौमदोषापवाद उच्यते । भौमेऽस्ते अस्तं गते रिपुनीचगे शत्रुग्टहे वा स्वनीचग्टहे वा सत्यष्टमो भौमो न दोषकृत् स्यात् । उक्तं च कश्यपेन “अस्तगे नीचगे भौमे शत्रुक्षेत्रगतेऽपि वा । कुजाष्टमोद्भवो दोषो न किञ्चिदपि विद्यते” इति । अथ षडष्टद्वादशस्थान चन्द्रापवाद उच्यते । शशिनि चन्द्रे नीचनवांशके वा सति रिप्फाष्टारिदोषोऽपि द्वादशाष्टमशत्रुस्थानस्थित चन्द्रदोषोऽपि न स्यात् । “नीचराशिगते चन्द्रे नीचांशकगतेऽपि वा । चन्द्रे षडादिरिप्फस्थे दोषो नास्ति न संशयः इति” कश्यपोक्तेः पी० धा० ।

अथाब्दाद्यादिदोषापवादः“अब्दायनर्त्तुतिथिमासभपक्षदग्धतिथ्यन्धकाणबधिराङ्गमुखाश्च दोषाः । नश्यन्ति विद्गुरुसितेष्विह केन्द्रकोणे तद्वच्च पापविधुयुक्तनवांशदोषाः” मु० चि० ।

“अब्ददोषः१ अयनदोषः२ ऋतुदोषः३ तिथिदोषो रिक्तादिः४ मासदोषः५ नक्षत्रदोषः क्रूरयुक्तादिः६ । पक्षदोषस्त्रयोदशदिनात्मकादि ७ दग्धा तिथिः प्रसिद्धा चापान्त्यगेत्यादिनोक्ता८ । अन्धकाणबधिराख्यो लग्नदोषः९ तन्मुखात्सदादयोऽन्ये अकालवृष्ट्याद्या दोषा विद्गुरु सितेषु केन्द्रकोणे केन्द्रं सप्तमस्थानरहितं विवक्षितं जामित्रदोषस्य सत्वात् । अतएवोक्तमग्रे “त्रिकोणे केन्द्रे वा मदनरहिते” इति कोणे नवपञ्चमे सत्सु नश्यन्ति । उक्तञ्च कश्यपेन “अब्दायनर्त्तुमासोत्थाः पक्षतिथ्युत्थसम्भवाः । ते सर्वे नाशमायान्ति केन्द्रसंस्थे शुभग्रहे । काणान्धबधिरोद्भूता दग्धलग्नतिथेर्भवाः । ते दोषा नाशमायान्ति केन्द्रसंस्थे शुभग्रहे” इति । “अकालजाश्च नीहारविद्युत्पांशुभ्रमभ्रमाः । परिवेषप्रतिसूर्यशक्रचापध्वजादयः । दोषप्रदा मङ्गलेषु कालजाश्चेन्न दोषदाः । गुरुरेकोऽपि केन्द्रस्थः शुक्रो वा यदि वा बुधः । हरेः स्मृतिर्यथा हन्ति तद्दोषानकालजान् । लत्तोपग्रहपातक्षीणचन्द्रजामित्रसम्भवान् । तत् केन्द्रगो गुरुर्हन्ति सुपर्णः पन्नगानिवेति” । तद्वच्चेति तथा यदि पापः क्रूरो विधुयुक्तराशेर्नवांशे स्यात्तथा सचन्द्रे मेषे सूर्यनवांशस्तद्दोषोऽभिहितो यज्ञोपवीतप्रकरणे, तदा तत्तद्दोषो नश्यति । उक्तञ्च संहिताप्रदीपे “सचन्द्रराशेरशुभो नवांशः प्रोक्तः सपापोऽपि विलग्नसंस्थः । त्रिकोणकेन्द्रेषु गुरुः सितो वा यदा तदाऽसावशुभोऽपि शस्तः पी० धा० ।

अथ बहुविधदोषापवादः“केन्द्रे कोणे जीव आये रवौ वा लग्ने चन्द्रे वापि वर्गोत्तमे वा । सर्वे दोषा नाशमायान्ति चन्द्रे लाभे तद्वद्दुर्मुहूर्तांशदोषाः”मु० चि०। “केन्द्रं प्रसिद्धं कोणं नवपञ्चमं तत्र च जीवो गुरुः स्यात्तदा सर्वे दोषा नाशमायन्ति उपलक्षणत्वाद्बुधशुक्रावपि । यदाह नारदः ‘उक्तानुक्ताश्च ये दोषास्तान्निहन्ति बली गुरुः केन्द्रसंस्थः सितो वापि पन्नगान् गरुड़ो यथेति” सितो बुधस्याप्युपलक्षकः । उक्तञ्च कश्यपेन “काव्ये गुरौ वा सौम्ये वा यदा केन्द्रत्रिकोणगे । नाशं यान्त्यखिलादोषाः पापानीव हरिस्मृतेरिति” तत्रापि लग्नाख्यकेन्द्रस्यातिबलत्वात्तत्र स्थितो जीवः सर्वारिष्टहरः तदुक्तं वसिष्ठेन “कुनवांश

र्मिषलिङ्गनीतक्लेशस्य विकृयामदर्शोपलम्भादिति"। चन्द्रे लाभस्थे वित्ते द्वितीयस्थे सहजस्थे वा सति स्त्रीपुरुषयोः सौख्यं स्यात्। तदुक्तं संहितासारे "यत्रैकादशगश्चन्द्रो द्वितीयो वा तृतीयगः। गोधूलिका स विज्ञेया शेषा धूलिरिति स्मृतेति" पी॰धा॰

ज्यो॰त॰माघभेदे फलभेदः। "माघे गोधूलियोगे प्रभवति विधवा. फाल्गुने तथैव,पुत्रायुर्धनयौवनेन रहिता कुम्भे स्थिते भास्करे। वैशाखे शुभदा, प्रजाबलवती, ज्यैष्ठे पतेर्मान्यदा आषाढे धनधान्यपुत्रबहुला, पापिष्ठके बन्धका।

अथ विवाहादौ वर्ज्यग्रहदोषसमष्टिः"उत्पातान् सह पातदग्धतिथिभिर्दुष्टांश्च योगांस्तथा चन्द्रेज्योशनसामथास्तमयनं तिथ्याः क्षयर्द्धी तथा। गण्डान्तञ्च सविष्टि संक्रमदिनं तन्वंशपास्तं तथा तन्वंशेशविधूनथाष्टरिपुगान् पापस्य वर्गांस्तथा। सेन्दुक्रूरखगोदयांशमुदयास्ताशुद्धिषड्वायुधम्। चार्जूरं दशयोगयोगसहितं जामित्रलत्ताव्यधम्। बाणोपग्रहपापकर्त्तरि तथा तिथ्यृक्षयोगोत्थितं दुष्टं योगमथार्द्धयामकुलिकाद्यान् वारदोषानपि। क्रूराक्रान्तविमुक्तभं ग्रहणभं यत् क्रूरगन्तव्यभं त्रेधोत्पातहतञ्च केतुहतभं सन्ध्योदितञ्च तथा। तद्वच्च ग्रहभिन्नयुद्धगतभं सर्वानिमान् सन्त्यजेदुद्वाहे शुभकर्म्मसु ग्रहकृतान् लग्नस्य दोषानपि" मु॰चि॰। "उत्पातादीन्दोषान् उद्वाहे यज्ञोपवीतादिशुभकर्म्मसु च सन्त्यजेदिति तृतीयश्लोकेनान्वयः। उद्वाहग्रहणं गोबलीवर्द्दन्यायेन तत्प्राधान्यसूचनार्थम्। उत्पातान् त्रिविधान् दिव्यान्तरिक्षभौमान् तथा च तत्सम्बन्धिनः सप्त वर्ज्यदिवसांस्त्यजेत्। यदाह गुरुः "दिग्दाहे वा महाङ्गारपतने चाम्बुवर्षणे। उल्कापाते महावाते महाशनिनिपातने। अनभ्राशनिपाते च भूकम्पे परिवेषयोः। ग्रामोत्पाते शिवाशब्दे दुर्निमित्ते भयोद्भवे। केतवो यत्र दृश्यन्ते स धूमा वा पृथग्विधाः। चन्द्रसूर्य्यग्रहे चैव वर्जयेद्दिनसप्तकमिति"। पातो महापातः शान्तिसाध्यमिति यावत् तद्युक्तमृक्षम्। दग्धतिथयः "चापान्त्यगे गोघटगे द्वितीयेत्यादिनोक्ताः एतैः सह त्यजेदिति सम्बन्धः तथा दुष्टान् योगान् व्यतीपात वैधृतिपरिघादीन्। अथ चन्द्रेज्योशनसां चन्द्रगुरुशुक्राणाम् अस्तमयनमस्तं च तिथ्याः क्षयर्द्धी तिथिक्षयं तिथिवृद्धिं च गण्डान्तं नक्षत्रतिथिलग्नैः त्रिविधं विष्टिर्भद्रा संक्रमदिनं तद्दिवसे वर्ज्या घटिकाः,अयनेषु विषुवेषु च पूर्वापरं त्रिदिनमिति विशेषोऽध्येयः। ताभ्यां सहितमिति पूर्वेण सम्बन्धः। तन्वंशपास्तम् अंशो लग्नगतत्रिंशत्तमांशः तौ पातः तन्वंशपौ तयोरस्तं लग्नाधीशास्तं लग्नगतनवांशाधीशास्तं चेत्यर्थः तथा तन्वंशेशविधून् लग्ननवांशेशचन्द्रान् अष्टरिपुगान् अष्टमगतान् षष्ठस्थान् इन्दुश्च क्रूरखगश्चेन्दुक्रूरखगौ उदयो लग्नञ्च अंशो नवांशश्च उदयांशमिति समाहारद्वन्द्वैकवचनं इन्दुक्रूरखगाभ्यां सहितमुदयांशम्। इन्दुसहितं लग्नं लग्नांशञ्च क्रूरग्रहेण सहितं लग्नं लग्नांशं चेत्यर्थः। पापस्येत्यत्र वचनमविवक्षितं पापानां वर्गानित्यर्थः उदयास्ताशुद्धिरुदयाशुद्धिश्च उदयास्ताशुद्धिः षड्वायुधम् "षड्वायुधं हर्षणवैधृतिकाख्येत्यादिनोक्तम्। चार्जूरं व्याघातगण्डेत्यादिनोक्तं दशयोगः "सूर्य्यर्क्षचन्द्रर्क्षयुतेरित्यादिनोक्तः,योगो ग्रहयुतिश्च तत्सहितं जामित्रलत्ताव्यधम् समाहारद्वन्द्वैकवचनं जामित्रं द्विविधं लग्नजामित्रं चन्द्रजामित्रञ्च लग्नाच्चन्द्रेत्यादिनोक्तं लत्ता "शराङ्कपूर्णेन्दुमिता" इत्युक्ता व्यधम् वेधं सप्तशलाकोक्तं पञ्चशलाकोक्तञ्च। बाणाः पञ्चकम् उपग्रहः प्रसिद्धः शराष्टदिक्शक्रेत्यादिः पापकर्त्तरी क्रूरग्रहकर्त्तरी समाहारद्वन्द्वैकवचनं तिथ्यृक्षवारोत्थितं दुष्टं योगं तिथिनक्षत्रवारै रचितं उत्पन्नं दुष्टयोगम्। तथा तिथिनक्षत्रोद्भवं पैष्णादिमे इत्यादि। तिथिवारोद्भवं सूर्य्येशपञ्चेत्यादिनक्षत्रवारोद्भवं याम्यन्त्वाष्ट्रमित्यादि अनेकं दुष्टयोगम् अथार्द्धयामकुलिकाद्यान् वारदोषानपि अर्द्धयाम आदिशब्देन दुर्मुहूर्त्तादिकान्। क्रूराक्रान्तविमुक्तभं क्रूराक्रान्तं क्रूरविमुक्तञ्च भं ग्रहणभं यस्मिन् भे सूर्य्यचन्द्रोपरागौ जातस्तत् यत् क्रूरगन्तव्यभं क्रूरेण जिगमिषितं यन्नक्षत्रं त्रेधोत्पातहतञ्च भम्। त्रिविधोत्पातैर्दिव्यभौमान्तरिक्षैर्हतं नक्षत्रत्रयं त्याज्यमेवं ग्रहणनक्षत्रमपि। केतुहतभञ्च केतुना हतञ्च। सन्ध्योदितभम् अत्र सन्ध्याशब्देन सायंसन्ध्या गृह्यते। तत्रोदितं तत्काले यन्नक्षत्रस्य क्षितिजे उदयस्तत् सूर्य्याच्चतुर्दशं नक्षत्रमित्यर्थः। न तु प्रातःसन्ध्यायामत्र हि सूर्य्याक्रान्तभुक्तान्यतरत्वसत्त्वात्। यदुक्तं केशवार्केण "तरणितारकतोऽपि चतुर्दशं तदभिधेऽपि शिवं शुभकर्म्मणीति"। तारकचक्रः क्वचिदपि। ननूग्रहत्वादेव निषेधे सिद्धे पुनर्दोषाभिधानं किमर्थम् उच्यते उपग्रहदोषस्य सत्यावश्यकत्वे कुरुबाह्लिकदेशविषयत्वात्तद्दर्शनस्य च दोषाधिक्यसूचनादावश्यकेऽपि सर्वदेशविषयत्वेन निषेधो यथा स्यादिति। ग्रहभिन्नयुद्धगतभं ग्रहेण भेदितं ग्रहयुद्धगतञ्च ग्रहलाघ

कृशाङ्गी वा भवेदिह । समैः समांसैर्मृदुभिर्निमग्नास्थि-भिः शुभैः । पार्श्वैः सौभाग्यसुखयोर्निधानं स्यादसं-शयम् । यस्या दृश्यशिरे पार्श्वे उन्नते रोमसंयुते । निरपत्या च दुःशीला सा भवेद्दुःखशेवधिः । उदरेणा-तिमृदुना विशिरेण मृदुत्वचा । योषिद्भवति भोग्याढ्या-नित्यमिष्टान्नसेविनी । कुम्भाकारं दरिद्रायाः जठरं च मृदङ्गवत् । कूष्माण्डाभं यवाभं च दुःपूरं जायते स्त्रियाः । सुविशालोदरी नारी निरपत्या च दुर्भगा । प्रलम्बज-ठरा हन्ति श्वशुरं चापि देवरम् । मध्यक्षामा च सुभगा-भोगाढ्या सवलित्रया । ऋज्वी तन्वी च रोमाली यस्याः सा भर्त्तृधर्मभूः । कपिला जटिला स्थूला कुञ्चिता रोमरा-जिका । वैरवैधव्यदौर्भाग्यं विदध्यादिह योषिताम् । निर्लोम हृदयं यस्याः समं निम्नत्ववर्जितम् । ऐश्वर्यं चाव-वैधव्यं प्रियप्रेम च सा लभेत् । विस्तीर्णहृदया योषा पुंश्च-ली निर्दया तथा । उद्भिन्नरोमहृदया पतिं हन्ति विनि-श्चितम् । अष्टादशाङ्गुलततमुरः पीवरमुन्नतम् । सुखाय, दुःखाय भवेद्रोमशं विषमं पृथु । घनौ वृत्तौ दृढौ पीनौ समौ शस्तौ पयोधरौ । स्थूलाग्रौ विरलौ शुष्कौ वामो-रूणां न शर्मदौ । दक्षिणोन्नतवक्षोजा पुत्रिणीष्वग्रणीर्मता । वामोन्नतकुचा सूते कन्यां सौभाग्यसुन्दरीम् । अरघट्टघटी-तुल्यौ कुचौ दौःशील्यसूचकौ । पीवराग्रौ सान्तरालौ पृथुपान्तौ न शोभनौ । मूले स्थूलौ क्रमकृशावग्रे तीक्ष्णौ पयोधरौ । सुखदौ पूर्वकाले तु पश्चादत्यन्तदुःखदौ । सुभगे चूचुकयुगं यस्याः श्यामं सुवर्त्तुलम् । अन्तर्मग्नं च दीर्घं च कृशं क्लेशाय जायते । पीवराभ्यां च बाहुभ्यां धनधान्यनिधिर्वधूः । स्वास्थिभ्यां च निम्नाभ्यां विषमाभ्यां दरिद्रिणी । अवनम्रावनतौ स्कन्धावदीर्घावकृशौ शुभौ । वक्रौ स्थूलौ च रोमाढ्यौ प्रेष्यवैधव्यसूचकौ । निगूढसन्धी कक्षाग्रौ शुभावंसौ सुसंहतौ । वैधव्यदौ समुच्छ्रायौ निर्मां-सावतिदुःखदौ । कक्षे सुसूक्ष्मरोमे च तुङ्गे स्निग्धे च मांसले । शस्ते, न शस्ते गम्भीरे शिराले स्वेदमेदुरे । शस्तौ दोषौ अनिर्दोषौ गूढास्थिग्रन्थिकोमलौ । शिथिलौ च विरोमाणौ सरलौ हरिणीदृशाम् । वैधव्यं स्थूलरोमाणौ ह्रस्वौ दौर्भाग्यसूचकौ । परिक्लेशाय नारीणां परिदृश्यशिरोभुजौ । अम्भोजमुकुलाकारमङ्गुष्ठाङ्गुलि-सम्मुखम् । हस्तद्वयं मृगाक्षीणां बहुभोगाय जायते । मृदु-मध्योन्नतं रक्तं तलं पाणेररन्ध्रकम् । प्रशस्तं शस्त-रेखाढ्यमल्परेखं शुभावहम् । विधवा बहुरेखेण विरेखेण दरिद्रिणी । भिक्षुकी सुशिराढ्येन नारी करतलेन वै । विरोम विशिरं यस्याः पाणिपृष्ठं समुन्नतम् । वैधव्यदेह रोमाढ्यं निम्नांसं स्नायुमत् त्यजेत् । व्यक्ता व्यक्ता गभीरा च स्निग्धा पूर्णा च वर्त्तुला । कररेखाङ्गनायाः स्याच्छुभा भाग्यानुसारतः । मत्स्येन सुभगा नारी स्वस्तिकेन च सुप्रजाः । पद्मेन भूपतेः पत्नी जनयेद्भूपतिं सुतम् । चक्रवर्त्तिस्त्रियाः पाणौ नन्द्यावर्त्तः प्रदक्षिणः । शङ्खा-तपत्रकमठा देवमातृत्वसूचकाः । तुलामानाकृती रेखा व-णिक्पत्नीत्वहेतुका । गजवाजिवृषाकाराः करे वामे मृगी-दृशाम् । रेखाः प्रासादवज्राभा सूयुस्तीर्थकराः शुभम् । कृषीवलस्य पत्नी स्याच्छकटेन युगेन वा । तोमराङ्कुश-कोदण्डै राजपत्नी भवेद् ध्रुवम् । अङ्गुष्ठमूलान्निर्गत्य रेखा याति कनिष्ठिकाम् । यदि सा पतिहन्त्री स्याद्दूरतस्तां त्यजेत् सुधीः । त्रिशूलासिगदाशक्तिदुन्दुभ्याकृतिरेखया । नितम्बिनी कीर्त्तिमती त्यागेन पृथिवीतले । कङ्कजम्बूक-मण्डूकवृकवृश्चिकभोगिनः । रासभोष्ट्रबिडालाः स्युः करस्था दुःखदाः स्त्रियाः । शुभदः सरलाङ्गुष्ठो वृत्तो वृत्तनखो मृदुः । अङ्गुल्यश्च सुपर्व्वाणो दीर्घा वृत्ताः क्रमात् कृशाः । चिपिटाः स्फुटिता रूक्षाः पृष्ठरोमयुजोऽशुभाः । अतिह्रस्वाः कृशा वक्रा विरला रोगहेतवः । दुःखायाङ्गुलयः स्त्रीणां बहुपर्व्वसमन्विताः । अरुणाः सशिखास्तुङ्गाः करजाः सुदृशां शुभाः । निम्ना विवर्णाः शुक्त्याभाः पीता दारिद्र्यदायकाः । नखेषु बिन्दवः श्वेताः प्रायः स्युः स्वैरिणीस्त्रियाः । पुरुषाश्चापि जायन्ते दुःखिनः पुष्पितैर्नखैः । अन्तर्निमग्नवंशा-स्थिः पृष्ठिः स्यान्मांसला शुभा । पृष्ठेन रोमयुक्तेन वै-धव्यं लभते ध्रुवम् । भुग्नेन विनतेनापि सशिरेणापि दुःखिता । ऋज्वी कृकाटिका श्रेष्ठा समांसा च समुन्नता । शुष्का शिराला लोमाढ्या विशाला कुटिलाऽ-शुभा । मांसलो वर्त्तुलः कण्ठः प्रशस्तश्चतुरङ्गुलः । शस्ता ग्रीवा त्रिरेखाढ्या त्वव्यक्तास्थिसुसंहता । निर्मांसा चिपिटा दीर्घा स्फुटा न शुभप्रदा । स्थूलग्रीवा च वि-धवा वक्रग्रीवा च किङ्करी । वन्ध्या हि चिपिटग्रीवा ह्रस्वग्रीवा च निःसुता । चिबुकं द्व्यङ्गुलं यस्याः वृत्तं पीनं सुकोमलम् । स्थूलं द्विधा संविभक्तमायतं रोमशं त्यजेत् । हनुश्चिबुकसंलग्ना निर्लोमा सुघना शुभा । वक्रा स्थूला कृशा दीर्घा रोमशा न शुभप्रदा । शस्तौ कपोलौ वामाक्ष्याः पीनौ वृत्तौ समुन्नतौ । रोमशौ परुषौ

निम्नौ निर्मांसौ परिवर्ज्जयेत् । समं समांसं सुस्निग्धं सामोदं वर्त्तुलं शुभम् । अनेकवदनच्छायं धन्या-नामिह जायते । पाठको वर्त्तुलः स्निग्धो रेखाभूषितमध्य-भूः । शोभनिर्लोमामधरो धराजानिप्रिया भवेत् । क्रमः प्रलम्बः स्फुटितो रूक्षो दौर्भाग्यसूचकः । श्यावः स्थूलोऽ-धरोष्ठः स्याद्वैधव्यकलहप्रदः । सतुषोमत्तकाशिन्याश्चो-त्तरोष्ठः सुभोगदः । किञ्चिन्मध्योन्नतोऽरोमा विपरीतो विरुद्धकृत् । गोक्षीरसन्निभाः स्निग्धा द्वात्रिंशद्दशनाः शुभाः । अधस्तादुपरिष्टाच्च समस्तोकसमन्विताः । पीताः श्यावाश्च दशनाः स्थूला दीर्घा द्विपङ्क्तयः । शुक्त्याकाराश्च विरला दुःखदौर्भाग्यकारिणः । अधस्ताद-धिकैर्दन्तैर्भर्त्तारं भक्षयेत् स्फुटम् । पतिहीना च विकटैः कुलटा विरलैर्भवेत् । जिह्वेष्टमिष्टभोक्त्री स्याच्छोणा-म्रदी तथा सिता । दुःखाय मध्यसंकीर्णा पुरोभागवि-शाला । सितया तोयमरणं श्यामया कलहप्रिया । दरि-द्रिणी मांसलया लम्बयाऽभक्ष्यभक्षिणी । विशालया रसनया प्रमदातिप्रमादभाक् । स्निग्धं कोकनदाभासं प्रशस्तं ता-लु कोमलम् । सिते तालुनि वैधव्यं पीते प्रव्रजिता भवेत् । कृष्णेऽपत्यवियोगार्त्ता रूक्षे भूरिकुटुम्बिनी । कण्ठे स्थूला सुवृत्ता च क्रमतोऽल्पा च घोण्टिका । अप्रलम्बा-ऽरुणाभा पक्वा स्थूला कृष्णा च दुःखदा । अलक्षितद्विजं किञ्चित् किञ्चित्फुल्लकपोलकम् । स्मितं प्रशस्तं सुद-तीनामनिमीलितलोचनम् । समवृत्तपुटा नासा लघुच्छिद्रा शु-भावहा । स्थूलाग्रा मध्यनम्रा च न प्रशस्ता समुन्नता । आकुञ्चिताग्रारुणाग्रा च वैधव्यक्लेशदायिनी । परप्रेष्या च चिपिटा ह्रस्वा दीर्घा कलिप्रिया । दीर्घं घनत् सुतं दीर्घं युगपद्दिलिपिच्छितम् । रक्तनालोचने यस्याः रक्तान्ते कृष्णतारके । गोक्षीरवर्णविशदे सुस्निग्धे कृष्णपक्ष्मणी । उन्नताक्षी न दीर्घायुर्वृत्ताक्षी कुलटा भवेत् । मेषाक्षी महि-षाक्षी च केकराक्षी न शोभना । आसपिङ्गा नितरां गोपिङ्गाक्षी सुदुर्वृत्ता । पारावताक्षी दुःशीला रक्ताक्षी भर्त्तृ-घातिनी । कोटराक्षवना दुष्टा गजनेत्रा न शोभना । पुंश्चली वामकाणाक्षी वन्ध्या दक्षिणकाणिका । मधुपिङ्ग-लाक्षी रमणी धनधान्यसमृद्धिभाक् । पक्ष्मभिः सुघनैः स्निग्धैः कृष्णैः सूक्ष्मैः सुखभाक् । कपिलैर्विरलैः स्थूलै-र्निन्द्या भवति भामिनी । भ्रुवौ सुवर्त्तुले तन्व्यौ स्निग्धे कृष्णे सुसंहते । प्रशस्ते मृदुरोमाण्यौ सुभ्रुवः कार्मु-काकृती । खररोमा च मुक्ता विकीर्णा परुषा स्थिराः । च भ्रूः प्रशस्ता मिलिता दीर्घलोमा च पिङ्गला । ल-म्बकर्णौ शुभावर्त्तौ सुखदौ च शुभप्रदौ । शष्कुलीर-हितौ निन्द्यौ शिरालौ कुटिलौ कृशौ । भालः शिरावि-रहितो निर्लोमार्द्धेन्दुसन्निभः । अनिम्नस्त्र्यङ्गुलो नार्य्याः सौभाग्यारोग्यकारणम् । व्यक्तस्वस्तिकरेखञ्च ललाटं राज्यसम्पदे । प्रलम्बमलिकं यस्या देवरं हन्ति सा ध्रुवम् । रोमशेन शिरालेन प्रांशुना रोगिणी मता । सीमन्तः सरलः शस्तो मौलिः शस्तः समुन्नतः । गजकुम्भ-निभो हन्तः सौभाग्यैश्वर्य्यसूचकः । स्थूलमूर्द्धा च विषमा दीर्घशीर्षा च बन्धकी । विशालेनापि शिरसा भवेद्दौर्भाग्यभाजनम् । केशा अलिकुलच्छायाः सूक्ष्माः स्निग्धाः सुकोमलाः । किञ्चिदाकुञ्चिताग्राश्च कुटिला अतिशोभनाः । परुषाः स्फुटिताग्राश्च विरलाश्च शि-रोरुहाः । पिङ्गलाश्चपलोद्ध्वा दुःखदारिद्र्यबन्धदाः । तिलकं लाञ्छनं वापि हृदि सौभाग्यकारणम् । यस्या दक्षिणवक्षोजे शोणे तिलकलाञ्छने । कन्याचतुष्टयं सूते सूते सा च सुतत्रयम् । भ्रुवोरन्तर्ललाटे वा मशको राज्य-सूचकः । वामे कपोले मशकः शोणो मिष्टान्नदः स्त्रियाः । तिलकं लाञ्छनं शोणं यस्या वामकुचे भवेत् । एकं पुत्रं प्रसूयादौ ततः सा विधवा भवेत् । गुह्यस्य दक्षिणे भागे तिलकं यदि योषितः । तदा क्षितिपतेः पत्नी सूते वा क्षितिपं सुतम् । नासाग्रे मशकः शोणो महिष्या एव जायते । कृष्णः स एव भर्त्तृघ्न्याः पुंश्चल्याश्च प्रकीर्त्तितः । नाभेरधस्तात् तिलकं मशको लाञ्छनं शुभम् । मशकस्तिलकश्चिह्नं गुल्फदेशे दरिद्रकृत् । करे-कर्णे कपोले वा कण्ठे वामे भवेद् यदि । एतां त्रया-णामेकन्तु प्राग्गर्भे सुतदं भवेत् । भालगेन त्रिशूलेन निर्म्मितेन स्वयम्भुवा । नितम्बिनी बहुसाहस्रां स्वामित्वं योजिदाप्नुयात् । सुप्ता परस्परं या तु दन्तान् कटकटा-यते । लक्षणस्यापि न सा शस्ता यत् किञ्चित् प्रजल्पेत् तथा । प्राणो प्रदक्षिणावर्त्तो भव्यो वामो न शोभनः । नाभौ कुक्षौ बुरसि वा दक्षिणावर्त्त ईरितः । शुभाय दक्षि-णावर्त्तः पृष्ठवंशस्य दक्षिणे । अन्तःपृष्ठे नाभिसमो बह्वायुः-पुत्रवर्द्धनः । राजपत्न्याः प्रकाशेन अनेकौघ प्रदक्षिणः । स चेद्धि कटिभागे स्यादल्पायुष्यप्रदः । कटितोगुह्यवेधेन पत्यपत्यनिपातनः । स्यातामुदरवेधेन पृष्ठावर्त्तौ न शोभनौ । एकेन हन्ति भर्त्तारं भवेदन्येन पुंश्चली । कण्ठगोदक्षिणावर्त्तो दुःखवैधव्यदेशकः । सीमन्तेऽथ

ग्रहरूपे पात्रभेदे। "उपयामगृहीतोऽसि" यजु० ७, ४,११,२०। उपचारात् २तद्देवे च। "वातं प्राणेनापानेन नासिके, उपयाममधरेण" यजु० २५,२। उप+यम–घञ् वा वृद्धिः। २विवाहे। "यर्हि भवेदुपयामस्तर्हि सती खलु कन्या" हृ० चि०। वृद्धा०। अस्त्यर्थे वा मतुप्। उपयामवत् तद्विशिष्टे त्रि०। पक्षे इनि उपयामिन् तत्रैव उभयत्र स्त्रियां ङीप्।

**उपयुक्त** त्रि० उप+युज–क्त। १न्याय्ये, २उचिते, ३भुक्ते च।

**उपयोग** पु० उप+युज–घञ्। १आचरणे २भोजने, "पर्य्यागते मदनफलमज्जवदुपयोगः" सुश्रुतः। ३इष्टसिद्धिसाधने व्यापारे आनुकूल्ये च। "अथवा काव्यनिर्व्वन्धेषूपयोगो यथाक्रमम्" सुश्रु० "अनङ्गलेखक्रिययोपयोगम्" कुमा०।

**उपयोगिन्** त्रि० उप+युज–घिनुण्। १इष्टसाधनायानुकूले २उपयुक्ते च। "तदुपयोगीनि शारीरकसूत्रादीनि" वेदा० सा०। स्त्रियां ङीप्। तस्य भावः तल् उपयोगिता स्त्री त्व उपयोगित्व न० आनुकूल्ये।

**उपर** त्रि० वप–करन्। १उप्ते स्थापिते "दिवरज उपरमन्तभावः, "उपह्वरे यदुपरा अपिन्वन्" ऋ० १,६२,५,६। "उपरा उप्ताः स्थापिताः" भा०। "त्रिश्चोभूमीरुपरा षड्विधानाः" ऋ० ७,८७,५। उप+रम–आ० आधारे ड। २उपरमाधारे। "ते नः पूर्व्वास उपरास इन्दवः" ऋ० ८,७७,२, "उपरासः उपराः उपरता यत्रेत्युपराः" भा०। कर्त्तरि ड। ३उपरते "पुरः सतोरुपरा एतशे कः" ऋ०५,२९,५ "उपरा उपरताः" भा०। उपरि अन्तःसमयत्वेनास्त्यस्य अर्श आ० अच्। उपरिकालोत्पन्ने। "ये पूर्व्वासोय उपरास ईयुः" १०,१५,२, "उपरासः यजमानजन्मन उपर्य्युत्पन्नाः" भा०। उभयोरैक्यात्। ४उपले प्रस्तरे च।

**उपरक्त** पु० उप+रञ्ज–क्त। १राहुग्रस्ते चन्द्रे सूर्य्ये च। २व्यसनेष्वासक्ते, ३रञ्जनद्रव्येण रक्ते ४उपाधिसान्निध्यादुपाधिगुणवत्तया प्रतीते च।

**उपरक्ष** पु० उप+रक्ष–ण्वुल्। समीपस्थित्वा रक्षके सैन्यादौ (वाड़िगार्ड)। [(पहारा)।

**उपरक्षण** न० उप+रक्ष–ल्युट्। रक्षार्थं सैन्यादिस्थापने

**उपरत** त्रि० उप+रम–क्त। १विरते, २निवृत्ते, ३मृते, "पितर्य्युपरते पुत्रा विभजेयुर्धनं पितुः" दा० भा०। "पितर्य्युपरतस्पृहे" दा० भा०। "सत्यपि जीवने निवृत्तस्वत्वकामे इत्यर्थः। ४उपरतियुक्ते "शान्तोदान्त उपरतस्तितिक्षुः श्रद्धावान् समाहितो भूत्वात्मन्यात्मानमवलोकयेत्" श्रुतिः।

**उपरताति** स्त्री ताय–कर्मणि क्तिन्। १त० वस्य वा रः। १युद्धे "अर्य्य उपरताति वन्वन्" ऋ० ७,४८,१। "उपरैरुपलैः पाषाणतुल्यैः शरैस्तायते विस्तीर्य्यते उपरताति युद्धम्" भा० सप्तम्या लुक्। २उपलरूपकरकाद्याधारे अन्तरिक्षे च। "स्वरन्ति ता उपरताति" ऋ० १०,५१,५। उपरताति मेघकरकाद्याधारे अन्तरिक्षे सप्तम्या लुक्।

**उपरति** स्त्री उप+रम–क्तिन्। १विरतौ, २मृतौ ३लब्धप्राप्तावौदासीन्ये विषयेभ्य इन्द्रियाणां ४निवारणे, ५विहितकर्म्मणाम् विधानतस्त्यागरूपे संन्यासे "पुमर्थः कर्म्मणा नेति धीर्वा सोपरतिर्भवेत्" इत्युक्तरूपायां ६बुद्धौ च। सेयमुपरतिर्ब्रह्मविचाराङ्गसाधनचतुष्टयान्तर्गतसाधनविशेषः तानि च साधनानि विवेकचूड़ामणौ शङ्कराचार्य्येण दर्शितानि यथा "साधनान्यत्र चत्वारि कथितानि मनीषिभिः। येषु सत्स्वेव सन्निष्ठा यदभावे न सिध्यति। आदौ नित्यानित्यवस्तुविवेकः परिगण्यते। इहामुत्र फलभोगविरागस्तदनन्तरम्। शमादिषट्कसम्पत्तिर्मुमुक्षुत्वमिति स्फुटम्। ब्रह्म सत्यं जगन्मिथ्येत्येवंरूपो विनिश्चयः। सोऽयं नित्यानित्यवस्तुविवेकः समुदाहृतः। तद्वैराग्यं जिहासा या दर्शनश्रवणादिभिः। देहादिब्रह्मपर्य्यन्ते ह्यनित्ये भोग्यवस्तुनि। स्वलक्ष्ये नियतावस्था मनसः शम उच्यते। विषयेभ्यः परावर्त्य स्थापनं स्वस्वगोलके। उभयेषामिन्द्रियाणां स दमः परिकीर्त्तितः। बाह्यानालम्बनं वृत्तेरेषोपरतिरुत्तमा। सहनं सर्व्वदुःखानामप्रतीकारपूर्व्वकम्। चिन्ताविलापरहितं सा तितिक्षा निगद्यते। शास्त्रस्य गुरुवाक्यस्य सत्यबुद्ध्यवधारणम्। सा श्रद्धा कथिता सद्भिर्यया वस्तूपलभ्यते। सर्व्वदा स्थापनं बुद्धेः शुद्धे ब्रह्मणि सर्व्वदा। तत्समाधानमित्युक्तं न तु चित्तस्य लालनम्। अहङ्कारादिदेहान्तान् बन्धानज्ञानकल्पितान्। स्वस्वरूपावबोधेन मोक्तुमिच्छा मुमुक्षुता। मन्दमध्यमरूपापि वैराग्येण, शमादिना,। प्रसादेन गुरोः, सैव प्रवृद्धा सूयते फलम्। वैराग्यञ्च मुमुक्षुत्वं तीव्रं यस्य तु विद्यते। तस्मिन्नेवार्थवन्तः स्युः फलवन्तः शमादयः। एतयोर्मन्दता यत्र विरक्तत्वमुमुक्षयोः। मरौ सलिलवत् तत्र शमादेर्भानमात्रता। मोक्षकारणसामग्र्यां भक्तिरेव गरीयसी। स्वस्वरूपानुसन्धानं भक्तिरित्यभिधीयते। स्वात्मतत्त्वानुसन्धानं भक्तिरित्यपरे जगुः। उक्तसाधनसम्पन्न-

सत्त्वजितात्मानः । उपसीदेत् गुरुं प्राज्ञं यतो बन्धविमोक्षणम्”

**उपरञ्जक** त्रि॰ उप+रन्ज–णिच्–ण्वुल् । १उपरागकारके । “न बाह्यान्तरयोरुपरञ्ज्योपरञ्जकभावोऽपि देशव्यवधानात्” सां॰सू॰ । [रागाश्रयतया करणीये ।

**उपरञ्ज्य** त्रि॰ उ+रन्ज–णिच्–यत् । उपरञ्जनीये उप-

**उपरत्न** न॰ उपमितं रत्नेन अवा॰त॰ । मणिभेदेषु काचादिषु “उपरत्नानि काचश्च कर्पूरोऽश्मा तथैव च । मुक्ता शुक्तिस्तथा शङ्ख इत्यादीनि बहून्यपि । गुणा यथैव रत्नानामुपरत्नेषु ते तथा । किन्तु किञ्चित्ततो हीना विशेषोऽयमुदाहृतः” भा॰प्र॰ ।

**उपरम** पु॰ उप+रम–घञ् अवृद्धिः । १विषयवैराग्ये, २निवृत्तौ च । “तथैव फेनोपरमे वास्तरूप्यं नियोजयेत्” वैद्य॰ “रुग्विगतेऽस्थिवशे दोपरमश्च” सुश्रु॰ । “हिमागोपरमे काले व्यतीते प्रवगासतः” भा॰व॰ २८१अ॰ । भावे ल्युट् उपरमण । उपरति न॰ ।

**उपरव** पु॰ उप+रु–आधारे घञ् । सोमाभिषवार्थे गर्त्ताकारे देशभेदे । तत्करणप्रकारश्च” शत॰ ब्रा॰ ३,५,४,१–१२ उक्तः यथा “इयं वा अभ्युपरवाः खायन्ते । शिरो वै यज्ञस्य हविर्धानं तस्य इमे शीर्षंश्चत्वारः कूपा इमावह द्वाविमौ द्वौ तानेवैतत् करोति तस्मादुपरवान् खनति । देवाश्च वा असुराश्च उभये प्राजापत्याः पस्पृधिरे । ततोऽसुरा एषु लोकेषु कृत्यां वलगान्निचख्नुरेतयैव चिद्देवानभिभवेमेति । तद्वै देवा अस्पृण्वत । त एतैः कृत्यां वलगानुदखनन् यदा वै कृत्यामुत्खनन्त्यथ सालसा मोघा भवति तथो एवैष एतद्यद्यस्मा अत्र कश्चिद्द्विषन् भ्रातृव्यः कृत्यां वलगान्निखनति तानेवैतदुदुत्किरति तस्मादुपरवान् खनति यद्दक्षिणस्य हविर्धानस्याधोऽधः प्रउगं खनति । सोऽभ्रिमादत्ते “देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे नार्यसीति” समान एतस्य यजुषो बन्धुर्योषो वा एषा यदभ्रिस्तस्मादाह नार्यसीति । तान् प्रादेशमात्रं विना परिलिखति । इदमहं रक्षसां ग्रीवा अपिकृन्तामीति वज्रो वा अभ्रिर्वज्रेणैवैतन्नाष्ट्राणां रक्षसां ग्रीवा अपिकृन्तति । तद्यावेतौ पूर्वौ तयोर्दक्षिणमेवाग्रे परिलिखेदथापरयोरुत्तरमथापरयोर्दक्षिणमथ पूर्वयोरुत्तरम् । अथो इतरथाहुः अपरयोरेवाग्र उत्तरं परिलिखेदथ पूर्वयोर्दक्षिणमथापरयोर्दक्षिणमथ पूर्वयोरुत्तरमित्यथो अपि समीच एव परिलिखेदेतं त्वेवोत्तमं परिलिखेद्य एष पूर्वयोरुत्तरो भवति तान् यथापरिलिखितमेव यथापूर्वं खनति । इहचसि इडद्रवा इत्युपलौत्येवैनानेतन्म इयन्त्येव यदाह इहचसि इडद्रवा इति इडतीमिन्द्राय वाचं वदेतीन्द्रो वै यज्ञस्य देवता वैष्णवं हविर्धानं तत् सेन्द्रं करोति तस्मादाह इडतीमिन्द्राय वाचं वदेति रक्षोहणं वलगहनमिति रक्षसां ह्येते वलगानां वधाय खायन्ते वैष्णवीमिति वैष्णवो हि हविर्धाने याव, तान् यथाखातमेवोत्किरति । इदमहं तं वलगमुत्किरामि यं मे निष्ट्यो यममात्यो निचखानेति निष्ट्यो वा अमात्यो वा कृत्यां वलगान्निखनति तानेवैतदुत्किरति इदमहं तं वलगमुत्किरामि । यं मे समानो यमसमानो निचखानेति समानो वा असमानो वा कृत्यां वलगान्निखनति तानेवैतदुत्किरति । इदमहं तं वलगमुत्किरामि । यं मे सबन्धुर्यमसबन्धुर्निचखानेति सबन्धुर्वा असबन्धुर्वा कृत्यां वलगान्निखनति तानेवैतदुत्किरति । इदमहं तं वलगमुत्किरामि यं मे सजातो यमसजातो निचखानेति सजातो वा असजातो वा कृत्यां वलगान्निखनति तानेवैतदुत्किरत्युत्कृत्यां किरामीत्यन्तत उपवदति तत्कृत्यामुत्किरति तान्बाहुमात्रान् खनेत् । अन्तो वा एषोऽन्तमेवैतत् कृत्यां गमयति तानन्यया संतृन्दन्ति यद्यन्यया न शक्नुयादपि समीचस्तस्मादिमे प्राणाः परः संतृण्णाः तान् यथाखातमेवावमर्शयति” “सोमाभिषवायोपरवाणां खननं विवक्षुः खननस्योभयार्थतामाह इयमिति । कर्णच्छिद्रे द्वे नासिकाच्छिद्रे द्वे । इष्ट्यर्थं भूमौ स्थापिताः कृत्याविशेषा वलगाः । अस्पृण्वतः हिंसितवन्तः । मध्ये मध्ये प्रादेशमात्रान्तरालं विहाय समचतुरस्रे खननप्रदेशे चतुरोऽवटान् प्रादेशमात्रान् परिलिखेत् खननमपि परिलेखनक्रमेण कर्त्तव्यम् । खातावटस्य उद्वपनेऽपि खननक्रम एव । अङ्गुलिप्रादेशाद्यपेक्षया बाहुप्रमाणस्यान्तत्वम् ततोऽधिकात् प्रदेशात् सदृढदरणादरक्षत्वादुभाहुमात्रस्यान्तत्वम् तानन्यया संतृन्दन्ति पूर्वयोर्दक्षिणस्यापरयोरुत्तरस्य चान्तरालदेशम् । अन्तःप्रदेशनिम्नोन्नतत्वपरिहाराय संमृषेत् संमृषेते परस्परहस्तसंस्पर्शं कुर्य्याताम्” । भा॰ “उत्तरपूर्व्वे जुहोत्युपरवे” कात्या॰ २५,१२,१०, “उपरवदेशात् सप्तयजुर्हरति” ८,२,१२,

**उपरस** पु॰ उपमितो रसेन अवा॰त॰ । पारदतुल्येषु गन्धकादिषु ।

"गन्धोहिङ्गुलमभ्रतालकशिलास्रोतोञ्जनं टङ्कणं राजावर्त्तकचुम्बकौ स्फटिकः शङ्खः खटी गैरिकम्। कासीसं रसकं कपर्द्दसिकताबोलाश्च कङ्कुष्ठक सौराष्ट्री च मता अमी उपरसाः सूतस्य किञ्चिद्गुणैः" भा०प्र०। अथैषां शोधनविधिः "सूर्य्यावर्त्तो वज्रकन्दः कदली देवदालिका। शिग्रुः कोषातकी बन्ध्या काकमाची च वारुणम्। एषामेकरसेनैव त्रिक्षारैर्लवणैः सह। भावयेदम्लवर्गैश्च दिनमेकं प्रयत्नतः। ततः पचेद्व तद्द्रावैर्दोलायन्त्रे दिनं सुधीः। एवं शुद्ध्यन्ति ते सर्वे प्रोक्ता उपरसा हि ये"। विशेषश्च। "कङ्कुष्ठं गैरिकं शङ्खः कासीसं टङ्कणं तथा। नीलाञ्जनं शुक्तिभेदाः चुल्लका सवराटिकाः। जम्बीरवारिणा स्विन्नाः क्षालिताः कोष्णवारिणा। नित्यमायान्त्यमी शोध्याभिषग्भिर्योगसिद्धये" भावप्रकाशः।

**उपराग** पु० उप+रन्ज–घञ्। १समीपस्थितस्य स्वगुणादेरन्यत्रारोपे, यथा "स्फटिकसान्निध्यस्थितजवादिगतलौहित्यं स्फटिके आरोप्यते" स चारोप उपाधिकृतत्वादौपाधिकः अस्युपरागमाश्रित्यैव सांख्यादयः वेदान्तिनश्च बुद्धिगतकर्त्तृत्वादेः पुरुषे, पुरुषगतचैतन्यस्य च बुद्धौ औपाधिकत्वं कल्पयन्ति "उपरागात् कर्त्तृत्वं चित्सान्निध्यात्" सां०सू० "पुरुषस्य यत् कर्त्तृत्वं तद्बुद्ध्युपरागात् बुद्धेश्च या चित्ता सा पुरुषसान्निध्यात् एतदुभयं न वास्तवं यथाऽग्न्ययसोः परस्परसंयोगविशेषात् परस्परधर्मव्यवहार औपाधिकः यथा च जलसूर्य्ययोः संयोगात् परस्परधर्मारोपस्तथैव बुद्धिपुरुषयोः" प्र० भा० "तद्गुणसारत्वात्" शा०सू० "बुद्धेर्गुणैनैव आत्मनो गुणत्वस्यारोप इति समर्थितम्"। बौद्धा अपि बाह्योपरागात् ज्ञानस्य तत्तदाकारता भवतीति मन्यन्ते तदर्थं तत्तन्मतावसरे वक्ष्यते अनेनैवोपरागेण बाह्यान्तरयोरुपरञ्ज्योपरञ्जकभावः। २सतोगुणान्तराधानरूपे वासनारूपे संस्कारे "नानादिविषयोपरागनिमित्तकोऽप्यस्य" सां०सू० "अस्यात्मनः प्रवाहरूपेणानादिर्या विषयवासना न ततो बन्धः" प्र०भा०। ३रविचन्द्रयोर्ग्रहणे तत्रापि छादकसान्निध्यात् चन्द्रार्कयोस्तद्रूपारोप एवेति तस्य तथात्वम्। ग्रहणञ्च राहुचिह्नितभूमिच्छायया चन्द्रस्य, तदधिष्ठितचन्द्रमण्डलेन च रवेर्मण्डलस्य छादनमिति सिद्धान्ते स्थितम्। तत्र सि०शि० ग्रहणं कथं? भवेदित्येतन्निरूपितं यथा "पश्चाद्भागाज्जलदवदधः संस्थितोऽभ्येत्य चन्द्रो भानोर्बिम्बं स्फुरदसिततया छादयत्यात्ममूर्त्त्या। पश्चात् स्पर्शो हरिदिशि ततो मुक्तिरस्यात एव क्वापि च्छन्नः क्वचिदपिहितो नैष कक्षान्तरत्वात्" शि०। "अर्कादधश्चन्द्रकक्षा। यथा मेघोऽधःस्थः पश्चाद्भागादागत्य रविं छादयति एवं चन्द्रोऽपि शीघ्रत्वात् पश्चाद्भागादागत्य रविं छादयति। अतः पश्चात् स्पर्शः। निःसरति चन्द्रे पूर्वतो मोक्षो रवेः। अत एव कक्षाभेदात् क्वचिदर्कग्रहो दृश्यते क्वचिदेव न छन्नः। यथाधःस्थे मेघे कैश्चिद्रविर्न दृश्यते कैश्चिद्दृश्यते प्रदेशान्तरस्थैः। इदानीं नतिलम्बयोः कारणमाह" प्रमि०। "पर्वान्तेऽर्कं नतमुडुपतिश्छन्नमेव प्रपश्येत् भूमध्यस्थो न तु वसुमतीपृष्ठनिष्ठस्तदानीम्। तद्दृक्सूत्राद्विमदधिरधोलम्बितोऽर्कग्रहेऽतः कक्षाभेदादिह खलु नतिर्लम्बनं चोपपन्नम्। समकलकाले भूभा लगति मृगाङ्के नतस्तया च्छादनम्। सर्वे पश्यन्ति समं समकक्षत्वान्न लम्बनावनती। पूर्वाभिमुखो गच्छन् कुच्छायान्तर्यतः शशी विशति। तेन प्राक् प्रग्रहणं पश्चान्मोक्षोऽस्य निःसरतः। भानोर्बिम्बपृथुत्वादपृथुपृथिव्याः प्रभा हि सूच्यग्रा। दीर्घतया शशिकक्षामतीत्य दूरं बहिर्याता। अनुपातात् तद्दैर्घ्यं शशिकक्षायां च तद्बिम्बम्। भूमेर्भोरन्यदिशि व्यक्तः क्षेपः शशिग्रहे तस्मात्" शि०। "दर्शान्तकाले रविं पूर्वतः पश्चिमतो वा नतं चन्द्रेण च्छन्नमेव पश्यति भूमध्यस्थो द्रष्टा, यतो दर्शान्ते समौ भवतः। यो भूपृष्ठस्थो द्रष्टा स तदार्कं छन्नं न पश्यति। यतस्तद्दृक्सूत्राच्चन्द्रोऽधो लम्बितो भवति। अतः कक्षाभेदाल्लम्बनं नतिश्चोपपद्यते। चन्द्रग्रहे तु लम्बननत्योरभावः। यतः समकलकाले भूभा चन्द्रे लगति। तथा छन्नं सर्वे विदेशान्तरस्था अपि नतमपि तं चन्द्रं समं पश्यन्ति। यतस्तत्र छाद्यच्छादकयोरेकैव कक्षा जाता। तथा भूभा तावत् पूर्वाभिमुखमर्कगत्या गच्छति। चन्द्रश्च स्वगत्या। स शीघ्रत्वात् पूर्वाभिमुखो गच्छन् भूभां प्रविशति। तेन तत्र प्राक् स्पर्शः। भूभाया निःसरतः पश्चान्मुक्तिः। भानोर्बिम्बं विपुलं पृथ्वी लघुः। अतो भूभा सूच्यग्रा भवति। दीर्घत्वेन चन्द्रकक्षामतीत्य दूरं गता। तद्दैर्घ्यमनुपातात् साध्यते। चन्द्रकक्षाप्रदेशे भूभा चन्द्रबिम्बं चेति सर्वं ग्रहणे प्रतिपादितमेव। (अयं स च ग्रन्थो दर्शयिष्यते) इदानीं छादकनिर्णयमाह" प्रमि०। "छादकः पृथुतरस्ततो विधोरर्द्धखण्डिततमोर्विषाणयोः। कुण्ठता च महती स्थितिर्यतो लक्ष्यते हरिणलक्षणग्रहे। अर्धखण्डिततनोर्विषाणयोस्तीक्ष्णता भवति तीक्ष्णदीधितेः। स्यात् स्थितिर्लघुरतो

लघुः पृथक् छादको दिगन्ततोऽवगम्यते । दिग्देशकालावरणादिभेदाच्च च्छादको राहुरिति ब्रुवन्ति । यन्मानिनः केवलगोलविद्यास्तत् संहितावेदपुराणबाह्यम् । राहुः कुभामण्डलगः शशाङ्कं, शशाङ्कगश्छादयतीनबिम्बम् । तमोमयः शम्भुवरप्रदानात् सर्वागमानामविरुद्धमेतत्" सि०शि०। "अर्कच्छादकाच्चन्द्रच्छादकः पृथुतरोऽवगम्यते । कुतः यतोऽर्धखण्डितस्येन्दोर्विषाणयोः कुण्ठता दृश्यते स्थितिश्च महती । अर्कस्य पुनरर्धखण्डितस्य तीक्ष्णता विषाणयोः । स्थितिश्च लघ्वी । एतत्कारणद्वयान्यथानुपपत्त्यार्कस्य छादकोऽल्पः । स च लघुकायः । एवं रवीन्द्वोर्न छादको राहुरिति वदन्ति । कुतः दिग्देशकालावरणादिभेदात् । एकस्य प्राक् स्पर्शः इतरस्य पश्चात्, रवेः क्वापि ग्रहणमस्ति क्वापि नास्ति । क्वापि दर्शान्तादग्रतः क्वापि पृष्ठतः । अतो राहुकृतं न ग्रहणम् । नहि बहवो राहवः एवं येऽत्र वदन्ति । केवलगोलविद्यास्तदभिमानिनश्च । इदं संहितावेदपुराणबाह्यम् । यतः संहितासु "राहुरष्टमो ग्रहः"। "स्वर्भानुर्ह वा असुरः सूर्य्याचन्द्रमसौ विव्याधेति" माध्यन्दिनी श्रुतिः । "सर्वं गङ्गासमं तोयं सर्वे ब्रह्मसमा द्विजाः । सर्वं भूमिसमं दानं राहुग्रस्ते दिवाकरे" इत्यादिपुराणवाक्यानि । अतोऽविरुद्धमुच्यते । राहुरनियतगतिस्तमोमयो ब्रह्मवरप्रदानाद्भूभां प्रविश्य चन्द्रं, चन्द्रं प्रविश्य रविं, छादयतीति सर्वागमानामविरुद्धम्" प्रमि० । अत्र लल्लः । "ग्रहणे कमलासनानुभावाद् तदुत्तांशभुजोऽस्य सन्निधानम् । वदतः स्मृतिवेदसंहितासु ग्रहणं राहुकृतं गतं प्रसिद्धिम्" । श्रीपतिः "भूच्छायायां प्रविष्टः स्थगयति शशिनं शुक्लपक्षावसाने राहुर्ब्रह्मप्रसादात् समधिगततरस्तत्तमोव्यासतुल्यः । अर्कस्थं भानुबिम्बं सलिलमयतनोरप्यधोवर्ति बिम्बं संस्थश्चैवं च मासव्युपरतिसमये स्वल्प साहित्यहेतोः" ।

ग्रहणप्रकारस्तज्ज्ञानोपायश्च सू० सि० रङ्गनाथेन दर्शितो यथा "सार्धानि षट्सहस्राणि ६५००योजनानि विवस्वतः । विष्कम्भो मण्डलस्येन्दोः सहाशीत्या चतुःशती ४८०। स्फुटस्वभुक्त्या गुणितौ मध्यभुक्त्योद्धृतौ स्फुटौ । रवेः स्वभगणाभ्यस्तः शशाङ्कभगणोद्धृतः" सू०सि० । "सूर्यस्य मण्डलस्य गोलरूपबिम्बस्य विष्कम्भो व्यासः। ६५००योजनानि, चन्द्रस्य गोलाकारबिम्बस्य ४८० योजनानि व्यासः" "व्यासस्यैव गणिते बिम्बत्वव्यवहार" र०ना०

"शशाङ्ककक्षागुणितो भाजितो वार्ककक्षया । विष्कम्भश्चन्द्रकक्षायां तिथ्याप्ता मानलिप्तिकाः" सू०सि० ।

"सूर्यस्य विष्कम्भः ६५००प्रागुक्तः स्फुटो व्यासः स्वभगणैः सूर्यभगणैरुक्तैर्गुणितश्चन्द्रभगणैर्भक्तो वाथवा चन्द्रकक्षया वक्ष्यमाणया गुणितः सूर्यकक्षया वक्ष्यमाणया भक्तश्चन्द्रकक्षायां चन्द्राधिष्ठिताकाशगोले सूर्यव्यासः स्पष्टो भवति । ततो व्यासयोजनसङ्ख्या पञ्चदशभक्ता सूर्यचन्द्रयोर्बिम्बव्यासप्रमाणकला भवन्ति । अत्रोपपत्तिः । यदा चक्रकलाभिश्चन्द्रकक्षायोजनानि तदैककलया कानीति चन्द्रकक्षास्थितैककलायां पञ्चदश योजनानि । अतश्चन्द्रस्य स्वकक्षायां स्थितत्वात् स्पष्टचन्द्रबिम्बव्यासयोजनानि पञ्चदशभक्तानि चन्द्रबिम्बव्यासकला भवन्ति । एवं सूर्यकक्षायामेका कला सार्धशतद्वययोजनैरिति स्पष्टसूर्यव्यासस्तैर्भक्तो व्यासकला भवन्ति । तत्र सूर्यस्य लोकैर्दूरान्तराच्चन्द्राकाश इव दर्शनात् प्रत्यक्षतो विशिष्टान्तरेण दर्शनाभावाच्च चन्द्रकक्षाप्रमाणेन सूर्यबिम्बव्यासः यदि सूर्यकक्षयाऽयं तदा चन्द्रकक्षया कः? इत्यनुपातेन गणितार्थमवस्तुभूतः साधितः । न तु वस्तुतश्चन्द्रकक्षायां सूर्यमण्डलावस्थानं सूर्यग्रहणे चन्द्रस्य छादकत्वानुक्तिप्रसङ्गात् अथ सूर्यस्पष्टव्यासचन्द्रभगणभक्तस्वकक्षारूपचन्द्रकक्षया भक्त इति स्वकक्षारूपगुणहरयोर्नाशात् सूर्यभगणगुणितचन्द्रभगणभक्त इति पूर्वं कक्षयोरनुक्तेरयं प्रकारो मुख्यत्वात् प्रथमसुक्तः तच्चन्द्रकक्षासिद्धसूर्यबिम्बव्यासः पञ्चदशभक्तः सूर्यबिम्बव्यासकलाः सिद्धा इत्युपपन्नम्" रङ्ग० "स्फुटेन्दुभुक्तिर्भूव्यासगुणिता मध्ययोद्धृता । लब्धं सूची महीव्यासस्फुटार्कश्रवणान्तरम् । मध्येन्दुव्यासगुणितं मध्यार्कव्यासभाजितम् । विशोध्य लब्धं सूच्यां तु तमोलिप्तास्तु पूर्ववत्" सू०सि०।

"स्पष्टा चन्द्रस्य गतिर्भूव्यासेन गुणिता मध्यया चन्द्रगत्या भक्ता फलं सूचीसंज्ञं स्यात् । भूव्यासस्पष्टसूर्यबिम्बव्यासयोरन्तरं मध्येन चन्द्रबिम्बव्यासेन ४८० योजनेन गुणितं मध्येन सूर्यबिम्बव्यासेन ६५०० योजनेन भक्तं फलं सूच्यां प्राक्सिद्धायां न्यूनीकार्य तत्काराच्छेषं तमः भूच्छायारूपं योजनात्मकं भाभावस्थम इति छायायास्तमस्त्वात् । अस्य कलात्मकं मानमाह । लिप्ता इति । पूर्ववत् तिथ्याप्ता मानलिप्तिका इति पूर्वोक्तेन भूच्छायायाः कलाः कार्याः । अत्रोपपत्तिः । "भूव्यासहीनं रविबिम्बमिन्दुकर्णाहतं भास्करकर्णभक्तम् । भूविस्तृतिर्लब्धफलेन हीना

भवेत् कुभाविस्तृतिरिन्दुमार्गे” इति सि॰शि॰ उक्ता तत्र ४६००भूव्यासोनस्य रविबिम्बस्य ६५००स्वल्पान्तराङ्गीकारेण स्पष्टगतिभक्तमध्यगतिगुणितचन्द्रमध्ययोजनकर्णरूपस्पष्टेन्दुयोजनकर्णौ गुणः। तादृशसूर्यकर्णौ हरः। तत्रैतत्खण्डस्य कलाकरणार्थं त्रिज्यागुणश्चन्द्रकर्णस्तादृशो हर इति चन्द्रस्पष्टमध्यगत्योस्तुल्यगुणहरत्वेन नाशात् त्रिज्यामध्येन्दुयोजनकर्णयोस्त्रिज्यापवर्तनेन हरः पञ्चदश गुणकः। अथेऽवशिष्टौ भूव्यासहीनमध्यार्कबिम्बयोजनानां रविस्पष्टगतिमध्यमगती गुणहरौ। चन्द्रसूर्ययोजनकर्णावपि क्रमेण गुणहरौ। तत्र कर्णस्थाने वाभवात् तयोर्बिम्बयोजनानि गृहीतानि। यद्यपि सूर्यचन्द्रयोर्मध्ययोजनकर्णानुसारित्वाभावादुबिम्बयोजनग्रहणमनुचितं तथाप्यल्पान्तराङ्गीकारेण नददोषः। इन्दुव्यासार्कव्यासयोर्भूगोलाध्यायोक्तकला मूकर्णगुणिता महीमण्डलभाजिता तत्कर्ण इति। तत्कलाव्यासार्धत्वे तु सुतराम्। तत्रापि स्पष्टार्कबिम्बयोजनग्रहणे मध्यार्कयोजनबिम्बं सूर्यस्पष्टगतिगुणितं सूर्यमध्यगतिभक्तमिति सिद्धम्। न चोक्तरीत्या सूर्यस्पष्टमध्यगती गुणहरौ भूव्यासमध्यार्कबिम्बयोजनान्तरस्योत्पन्नौ न केवलं बिम्बस्येति भूव्यासस्यापि महीव्यास इत्यनेन कथं सिद्ध इति वाच्यम् भगवता स्वल्पान्तरेण महीव्यासस्य यथास्थितस्यैवाङ्गीकारात्। महीव्यासस्फुटार्कश्रवणान्तरमित्युक्त्या मध्यस्फुटपदस्योभयत्रान्वयेनार्कश्रवणाभिधानेन च सूर्यबिम्बस्फुटरीत्यैव महीव्यासस्य स्फुटत्वसिद्धेश्च। अथैतत्खण्डसिद्धं फलं भूव्यासाङ्गीनं भूभायोजनानि। तत्र कलाकरणार्थं भूव्यासस्यापरखण्डस्य त्रिज्या गुणः स्पष्टचन्द्रगतिभक्तमध्यगतिगुणितचन्द्रमध्ययोजनकर्णरूपस्पष्टयोजनकर्णो हरः। तत्र त्रिज्यामध्ययोजनकर्णौ गुणहरौ गुणेनापवर्त्य हरस्थाने पञ्चदश चन्द्रस्पष्टमध्यगती गुणहराविति सूच्युक्तोपपन्ना। भूभायाः सूच्यनुकारत्वात् प्रथमखण्डं द्वितीयखण्डे हीनं भूभायोजनात्मिका सा पञ्चदशभक्ता कलादिकेत्युक्तमुपपन्नम्। यदि तु भूव्यासहीनं रविबिम्बमित्यादौ मध्यबिम्बानुक्तेः प्रथममेव स्पष्टार्कबिम्बग्रहणं तदा महीव्यासस्य स्पष्टत्वाप्रसिद्ध्या महीव्यासस्फुटार्कश्रवणान्तरमित्येव यथाश्रुतं सम्यक्। परन्तु तदा भूव्यासोनार्कबिम्बस्य सूर्यमध्यस्पष्टगती हरगुणावशिष्टौ वाच्यावपि भगवता स्वल्पान्तरत्वादनुक्तौ। न चानुपाते सूर्यचन्द्रयोर्मध्ययोजनकर्णावेव गृहीतौ न स्फुटाविति मध्यस्फुटगती हरगुणावनुत्पन्नौ नोक्ताविति वाच्यम्। चन्द्रस्पष्टयोजनकर्णस्वरूपपठनेनोत्पन्नसूच्या अनुक्तत्वापत्तेः। न च चन्द्रकर्णस्य मध्यत्वेन गृहीते वक्ष्यान्तरमतः स्पष्टत्वेन तस्य पाते सूच्युपपन्ना सूर्यकर्णस्य मध्यत्वेन गृहीतेऽल्पान्तरमिति वाच्यम्। मध्यार्कबिम्बयोजनग्रहणेन स्फुटार्कश्रवणानुपपत्तेः। न चोभयत्राग्रहीते प्रत्येकमल्पान्तरमपि वक्ष्यान्तरमत एकत्र सूर्यगतिग्रहणमुचितमिति वाच्यम् विनिगमनाविरहात् पूर्वं सूर्यबिम्बस्यैव सूर्यस्पष्टगती गुणहरौ न महीव्यासस्य प्राप्त्यै तूभयोरिति स्थूलसूक्ष्मविनिगमके तु प्राप्त्यै सूर्यगतिग्रहणस्यौचित्याच्च। अथ महीव्यासस्य प्रथमखण्डस्य चन्द्रगतिग्रहणेन सूच्युक्तावेव द्वितीयखण्डस्य भूव्यासोनस्फुटरविबिम्बस्यार्थात् सूर्यगतिग्रहणं सूचितमिति न क्षतिरिति चेन्न व्याख्याप्रसङ्गे सूर्यगतिग्रहणे मानाभावात् उपपत्तेरप्रसङ्गाच्च। अन्यथात्रापि चन्द्रगतिग्रहणापत्तेरिति। एतेन यदा चन्द्रमध्यगत्या भूव्यासस्तदा चन्द्रस्पष्टगत्या क? इति भूव्यासरूपं खण्डं स्पष्टं सूचीसञ्ज्ञं यदा सूर्यबिम्बप्रमाणेनापरं भूव्यासोनस्फुटरविबिम्बखण्डं तदा चन्द्रबिम्बप्रमाणेन किमिति स्पष्टं द्वितीयं खण्डं तयोः स्पष्टयोरन्तरं स्पष्टा भूभेति सर्वमुपपन्नमिति निरस्तम्। उक्तानुपाताभ्यां तयोः स्पष्टत्वसिद्धौ मानाभावात् स्पष्टत्वस्याप्रसङ्गाच्च चन्द्रसूर्ययोर्मध्यबिम्बानुपपत्तेश्च” र॰ना॰।

अथ चन्द्रार्कयोर्ग्रहणद्वयसम्भवमाह।

“भानोर्भार्धे महीच्छाया तत्तुल्येऽर्कसमेऽपि वा। शशाङ्कपाते ग्रहणं कियद्भागाधिकोनके” सू॰सि॰।

“सूर्यात् सकाशात् षड्भान्तरे भूच्छाया सूर्यापरदिक्स्था। तत्तुल्ये सषड्भार्करूपच्छायाग्रेत्यादिना समे चन्द्रपाते अपि वाऽथवा सूर्यतुल्ये चन्द्रपाते सूर्यचन्द्रयोः प्रत्येकं ग्रहणम्। ननु समत्वाभावेऽपि ग्रहणमिष्यत एवेत्यत आह कियद्भागेत्यादि। सषड्भार्कादर्काद्वा कतिपयैर्भागैरधिके ऊनेऽपि चन्द्रपाते ग्रहणम्। तथा च न क्षतिः। भागाश्चन्द्रग्रहणे द्वादश, सूर्यग्रहणे तु नतांशवशशरसंस्कारात् सप्तेत्यापाततः। अत्रोपपत्तिः। सषड्भार्कार्कयोरन्यतरतुल्ये चन्द्रपाते शराभावश्चन्द्रस्य तत्तुल्यत्वात्। तदा चन्द्रो भूच्छायायां भवतीति ग्रहणम्। एवं शरसत्त्वेऽपि मानैक्यखण्डादल्पे भूच्छायायां मण्डलैकदेशस्य सत्त्वेन ग्रहणम्। एवं शराभावे मानैक्यखण्डादूनशरे च चन्द्रमण्डलं सूर्यमण्डलस्याच्छादकं भवति परन्तु तत्र शरो नति-

वत्ताधिकत्वात् त्रिज्याया विशेष्य शेषेणानुपातः। यद्य-नेन त्रिज्या लभ्यते तदा त्रिज्यया किमिति। अने-नानुपातेन स्फुटः कर्णः समुद्भवति। अत्र भूवीकर्मणा प्रत्यक्षप्रतीतिः" प्रमि०।

"इदानीं योजनात्मककर्णस्य स्फुटत्वमाह। "त्रिज्या-हृतिघ्नस्त्रिगुणेन भक्तः स्फुटो भवेद्योजनकर्ण एवम्" सि०। "स्पष्टार्थम्। अत्रोपपत्तिस्त्रैराशिकेन यदि त्रिज्याव्या-सार्धे एतावान् स्फुटः कर्णस्तदा योजनात्मकव्यासार्धे किमिति। फलं भूमध्याद्ग्रहोच्छ्रितियोजनानि" प्रमि०।

इदानीं योजनबिम्बान्याह। "बिम्बं रवेर्द्विद्विशरर्तु ६५२२ संख्यानीन्दोः खनागाम्बुधि ४८० योजनानि। भूव्यासहीनं रविबिम्बमिन्दुकर्णाहतं भास्करकर्णभक्तम्। भूविस्तृतिर्लब्धफलेन हीना भवेत् कुभाविस्तृतिरिन्दुमार्गे" सि०। "रवेर्योजनात्मकं बिम्बं मध्यमं द्विद्विशरषट्कतुल्यानि ६५२२ योजनानि (सौरागमे ६५०० मितबिम्बोक्तिः किञ्चिद-धिकपरत्वपरतया सङ्गमनीया)। इन्दोस्तु शून्यवसुवेद ४८० मितानि। अथ राहोरुच्यते। रविबिम्बं भूव्यासेन हीनं ४९४१ तावेन्दुकर्णेन स्फुटेन योजनात्मकेन संगुण्य स्फुटेन रविकर्णेन भजेत्। फलेन भूव्यासो वर्जितश्चन्द्रकक्षा-यां भूभाव्यासो भवति। एतानि योजनबिम्बानि। अ-त्रोपपत्तिः। यस्मिन् दिनेऽर्कस्य मध्यतुल्यैव स्फुटा गतिः स्यात् तस्मिन् दिने उदयकाले चक्रकलाव्यासार्धमितेन षष्टिद्वितयेन सूत्रनिबद्धेन तत्रस्थदृष्ट्या तदग्राभ्यां बिम्ब-प्रान्तौ विध्येत्। या तदग्रयोरन्तरकलाः ता रविबिम्बकला भवन्ति मध्यमाः। ताश्च द्वात्रिंशत् किंचिदधिकाः कलाविकलाधिकाः ३२ । ३१ । ३२ । एवं विधोरपि पौर्ण-मास्यां यदा मध्यैव गतिः स्पष्टा तदा विध्येत् तस्यैवं द्वात्रिंशत् कलाः ३१ । ० । ९ उत्पद्यन्ते। बिम्ब-कलानां योजनीकरणायानुपातः। यदि त्रिज्याव्यासार्धे एतावत्प्रमाणं बिम्बं तदा पठितश्रुतियोजनैः किमित्येव-मुत्पद्यन्ते द्विद्विशरर्तु ६५२२ संख्यानि योजनानि। वि-धोस्तु खनागाम्बुधि ४८० मितानीति। अथ भूभा-बिम्बस्योपपत्तिरुच्यते। अर्कबिम्बव्यासाद्भूव्यासो यतोऽ-ल्पोऽतो भूभा सूच्यग्रा भवति दीर्घतया चन्द्रकक्षामतीत्य दूरं बहिर्गच्छति। अतो भूविस्तृतेः कियत्यपचये जाते चन्द्रकक्षायां भूभाविस्तृतिर्भवतीति ज्ञानायानुपातः। यदि रविकर्णेन सूर्यबिम्बभूव्यासान्तरयोजनानि ४९४१ लभ्यन्ते तदा चन्द्रकर्णेन किमिति। फलं भूव्यासस्यापचययोज-नानि भवन्ति। अतस्तैर्भूव्यासो वर्जितश्चन्द्रकक्षायां भूभा-व्यासो भवतीत्युपपन्नम्" प्रमि०।

इदानीं योजनानां कलाकरणार्थमाह। "सूर्येन्दु-भूभातनुयोजनानि त्रिज्याहतान्यर्कशशाङ्ककर्णैः। भक्तानि तत्कालकलाविलिप्तास्तेषां क्रमान्मानकला भवन्ति" सि०। स्पष्टार्थम्। अत्रोपपत्तिस्त्रैराशिकेन यदि योजनात्मकव्यासार्धे एतावन्ति बिम्बमानानि तदा त्रिज्याव्यासार्धे कियन्तीति कलानां चापानि लघुज्याभि-प्रायेणोक्तानि" प्रमि०।

इदानीं प्रकारान्तरेण बिम्बकलानयनमाह "भानो-र्गतिः खदश १० भागयुतार्धिता वा बिम्बं विधोर्भुक्ति-स्त्रिगुणिता युगशैल ७४ भक्ता। तिथ्यद्रि ७१५ हीन-शशिभुक्तिरिषुद्वि २५ भक्ता नन्दाक्षि २९ युग् भ-वति वा विधुबिम्बमेवम्" सि०। "रवेर्गतिः स्वदशांशेन १० युताऽ-र्धिता च रवेः कलाबिम्बं भवति। अथ चन्द्रगतिस्त्रि-गुणिता युगशैल ७४ भक्ता तद्विधुबिम्बं भवति। अथ वा चन्द्रभुक्तिस्तिथ्यद्रिभि ७१५ र्हीना पञ्चविंशत्या २५ भक्ता फलमेकोनत्रिंशता २९ युतं चन्द्रबिम्बं भवति। अत्रोपपत्तिः त्रिज्यातो महति कर्णे ग्रहबिम्बं लघु भवति तथा गतिश्च लघ्वी भूमध्याद्दूरगतत्वाद्ग्रहस्य। अथाल्पे कर्णे बिम्बं पृथु गतिश्च महती तत्रासन्नत्वात्। बिम्बगत्योरुपचया-पचययोस्तुल्यकालत्वाद्गतेरपि बिम्बं साधयितुमुचितं भवति। तद्यथा तत्र त्रैराशिकम् यदि योजनात्मिकया गत्या पादोनगोऽष्टतिभूमितया ११८५८।४५ द्विद्विशरर्तु ६-५२२ संख्यं बिम्बं लभ्यते तदा कलागत्या किमिति। अत्र गुणकस्य द्विद्विशरर्तुसंख्यस्यैकादशभागेन ५९२। ५५ गुणकभाजकावपवर्तितौ जातो गुणकस्थाने एकादश ११। भाजके विंशतिः २०। अतो रविगतिः सुखार्थं दश-गुणा विंशत्या ह्रियते तावदर्धिता भवति यत एकादश-भिर्गुण्यातो दशांशेनाधिका कृतेत्युपपन्नम्। एवं चन्द्रस्य खनागाम्बुधि ४८० मितो गुणो भागहारो योजनगति-रेव ११८५८।४५। एतौ स्वल्पैः १६० रपवर्तितौ जातं गुणकस्थाने त्रयं भागहारस्थाने चतुःसप्ततिः ७४ अत्र परमं विकलात्रितयं यदन्तरं तत् सुखार्थमङ्गीकृतम्। अथ चन्द्रबिम्बानयने क्रियोपसंहारः सुखोपायार्थं कृतः। तत्र तिथ्यद्रि ७१५ तुल्यस्य गतिखण्डस्यैकोनत्रिंश २९ न्मितं बिम्बखण्डं लभ्यते। गतिशेषस्य पञ्चविंशत्या २५ भागे हृते बिम्बशेषं कलात्मकं १ लभ्यते। अतस्त-

छेदे द्वात्रिंश ३२ न्मध्यमं चन्द्रबिम्बम्। गतेरुपचयापचयवशात् स्फुटत्वे बिम्बस्यापि स्फुटत्वमुपपन्नम्" प्रमि०।

इदानीं राहोः प्रकारान्तरेण कलाबिम्बमाह। "भानोर्गतिः शर५हता रविभि१२र्विभक्ता चन्द्रस्य लोचन२गुणा तिथि१५भाजिता च। लब्धान्तरं भवति वाऽवनिभाप्रमाणं भूभा विधुं, विधुरिनं ग्रहणे पिधत्ते" शि०। "रविगतिः पञ्चगुणा द्वादशभक्ता फलं कलात्मकमनष्टं स्थाप्यम्। अथ शशिगतिर्द्विगुणिता पञ्चदशभाजिता इदमपि कलात्मकं फलम्। अनयोः फलयोरन्तरं भूभाबिम्बप्रमाणं भवति। इदानीं ग्रहणे छाद्यच्छादकमुच्यते भूभा विधुग्रहणे विधुं छादयति रविग्रहणे तु रविं विधुश्छादयति। अत्रोपपत्तिः। अत्र कर्णव्यासान्तरमितानां योजनानां रविकलायां कलाकरणायानुपातः। यदि गतियोजनैः ११८५८ गतिकला लभ्यन्ते तदा कर्णव्यासान्तरयोजनैः ४९४१ किमिति। अत्र रविगतेः कर्णव्यासान्तरं गुणः ४९४१। गतियोजनानि हरः। एतौ वसुवसुनवभि ९८८ रपवर्तितौ जातौ गुणस्थाने पञ्च ५। हरस्थाने द्वादश १२। फलं रविगतिपञ्चनिघ्नोऽपचयलिप्ताः। अथ भूव्यासस्य चन्द्रकलायां लिप्ताकरणार्थमनुपातः। यदि गतियोजनैः ११८५८चन्द्रगतिकला लभ्यन्ते तदा भूव्यासयोजनैः १५८१ किमिति। अत्र गुणकार्धेन गुणकभाजकावपवर्तितौ जातं गुणकस्थाने द्वयम् २। भागहारस्थाने पञ्चदश १५। फलं भूव्यासकलाः। एताभ्यः पूर्वकलाः शोध्याः। यत उपर्युपरि गच्छन्त्या भूभाया विस्तृतिरपचयिनी भवति" प्र०।

इदानीं चन्द्रविक्षेपानयनमाह। "सपाततात्कालिकचन्द्रदोर्ज्या खभै२७०र्हता व्यासदलेन भक्ता। सपातशीतद्युतिगोलदिक् स्याद्विक्षेप इन्दोः स च बाणसंज्ञः" शि०। "यस्मिन् काले विक्षेपः साध्यस्तस्मिन् काले तात्कालिकयोश्चन्द्रपातयोर्योगः कर्त्तव्य इति वासनाभाष्योक्तम्। इह चन्द्रग्रहणावगमे समकलस्य चन्द्रस्य तात्कालिकपातस्य च योगः कर्त्तव्यः। तस्य दोर्ज्या खभै २७० र्गुणिता त्रिज्यया भाज्या फलं कलात्मकचन्द्रविक्षेपः। स च बाणसंज्ञः। यदि षड्भाद्रूनः सपातचन्द्रस्तदोत्तरो ज्ञेयो यदा षड्भाधिकस्तदा दक्षिणो ज्ञेयः। अत्रोपपत्तिः। चन्द्रो हि विमण्डले भ्रमति क्रान्तिमण्डलस्य विमण्डलस्य च यः संपातस्तस्य पातसंज्ञा। स पातो मीनान्ताद्विलोमं गच्छति। तस्मात् पातादग्रतस्त्रिभेऽन्तरे तद्विमण्डलं सार्द्धैश्चतुर्भि ४,३० र्भागैः क्रान्तिवृत्तादुत्तरतो भवति। पातात् पृष्ठतस्त्रिभेऽन्तरे तैरेव भागै ४,३० र्दक्षिणतो भवति। अथ विमण्डलगतस्य चन्द्रस्य क्रान्तिमण्डलेन सह यदन्तरं स याम्योत्तरो विक्षेपः। तज्ज्ञानार्थं चन्द्रपातयोरन्तरं ज्ञेयम्। तच्च चन्द्रपातयोर्योगे कृते भवति पातस्य विलोमगत्वात्। तस्य सपातचन्द्रस्य दोर्ज्ययानुपातः। यदि त्रिज्यातुल्यया दोर्ज्यया परमः खमुनियम २७० कलातुल्यो विक्षेपस्तदानया कियानिति। फलमिन्दुविक्षेपः। यतः पातादग्रतः षड्भं क्रान्तिवृत्तादुत्तरतोऽन्यद्दक्षिणतोऽतः सपातशीतद्युतिगोलदिक इत्युपपन्नम्" प्रमि०। इदानीं ग्रहणे ग्रासप्रमाणमाह। "छाद्यच्छादकमण्डलैक्यखण्डं शरोनं स्थगितप्रमाणम्। तच्छाद्यबिम्बादधिकं यदा स्याज्ज्ञेयं च सर्वग्रहणं तदानीम्" शि०। "स्पष्टार्थम्। अत्रोपपत्तिः। रवेरग्रतो भार्धान्तरे क्रान्तिवृत्ते भूभा भ्रमति। अतः पौर्णमास्यन्ते भूभाचन्द्रौ समौ भवतः। किन्तु याम्योत्तरमन्तरं विक्षेपतुल्यं भवति स विक्षेपश्छाद्यच्छादकबिम्बमध्ययोरन्तरम्। यद्यदा बिम्बार्धैक्यसमं तदा बिम्बप्रान्तयोः समागमः स्यात्। यदा यावता मानैक्यार्द्धादूनं तावच्छाद्यबिम्बे छादकबिम्बं प्रविशति। अत उक्तं तत्स्थगितप्रमाणमिति। तत् स्थगितं छाद्यबिम्बादधिकं यदा भवति तदा सर्वग्रहणमित्यपि सुगमम्" प्रमिताक्षरा।

इदानीं स्थितिमर्दार्धयोरानयनमाह। "मानार्धयोगान्तरयोः कृतिभ्यां शरस्य वर्गेण विवर्जिताभ्याम्। मूले षट् ६० संगुणिते विभक्ते भुक्त्यन्तरेण स्थितिमर्दखण्डे" शि०। स्पष्टार्थम्। "अत्रोपपत्तिः। स्पर्शकाले तु बिम्बगर्भयोरन्तरं मानैक्यार्धम्। तच्च कर्णरूपं भवति। तत्र यः शरः सा कोटिः। कर्णकोट्योर्वर्गान्तरपदं भुजः। तच्च प्राङ्मध्यमार्गखण्डम्। तत्क्रमणकालायानुपातः। तच्चन्द्रार्कयोः प्राग्गमनात् भुक्त्यन्तरेण यदि भुक्त्यन्तरतुल्यकलाभिः षष्टि ६० घटीरर्केन्दू प्राप्नुतस्तदा लब्धाभिर्भुजकलाभिः कियत्य इति। फलं स्थित्यर्धघटिकाः। परं स्पर्शकालशराज्ञानान्मध्यग्रहणशरेणैतत् कर्म कृतमतः स्थूलं स्थित्यर्धं जातम्। अथ मर्दार्धमुच्यते। यदा छादकेन छाद्ये समये सर्वे संमीलनमाप्तं तदा बिम्बगर्भयोरन्तरे बिम्बार्धान्तरतुल्याः कला भवन्ति। ताश्च कर्णरूपाः। तस्मिन् काले यावान् विक्षेपस्तावती कोटिस्तयोर्वर्गान्तरपदं प्राङ्मध्यमार्गखण्डं भव-

ति । तत्रापि पूर्व्ववदसुपातेन घटिकात्मकः कालो मर्द्दखण्डं भवति । सोऽपि स्थूलः” प्रमिताक्षरा ।

इदानीं स्फुटीकरणमाह । “स्थित्यर्धनाडीगुणिता स्वभुक्तिः षष्ट्या ६० हृता तद्रहितौ युतौ च । तत्स्वेन्दुपातावसकृत्पराभ्यां स्थित्यर्धमाद्यं स्फुटमन्तिमं च” । “स्पष्टार्थम् । अत्र स्पर्शकालभवशरेण कोटिकर्मेण कर्म कार्य्यम् । एवं स्थित्यर्द्धमसकृत् स्फुटं भवतीति सुगमा वासना” प्रमिताक्षरा ।

“इदानीमेवं विमर्दार्धमपीत्यतिदिशति । “एवं विमर्दार्द्धं फलोनयुक्तस्वपातचन्द्रोद्भवसायकाभ्याम् । पृथक् पृथक् पूर्व्ववदेव सिद्धे स्फुटे स्त आद्यान्त्यविमर्दखण्डे” शि० स्पष्टार्थम् । इदानीमिष्टकाले भुजानयनमाह ।

“स्पर्शात् स्पार्शिकमिष्टमुक्तं प्राङ्मोक्षतो मौक्षिकमत्र पूर्वौ । कोटेन निघ्नाः स्थितिखण्डकेन भुजान्तरांशा भुज इष्टकाले । एवं विमर्दार्द्धहृताः पृथक् ते संमीलनोन्मीलनयोर्भुजौ स्तः” शि० । पूर्वार्द्धं स्पष्टार्थम् । इष्टोनेन स्थितिखण्डेन गुणिता भुजान्तरभागाः कलात्मको भुजो भवति । एवं त एव भुजान्तरांशाः प्रथमविमर्दार्द्धगुणाः संमीलनभुजो भवति । द्वितीयगुणास्तदोन्मीलनम् । अत्रोपपत्तिः । इष्टकाले यत्र ग्राहकबिम्बमध्यचिह्नं यत्र च मध्यग्रासचिह्नं तयोरन्तरं ग्राहकमार्गखण्डं भुज इत्युच्यते । तस्यानयनं त्रैराशिकेन । यदि घटीषष्ट्या भुजान्तरकला लभ्यन्ते तदिष्टोनस्थितिदलेन किमिति । अत्र गुणकभाजकयोः षष्ट्यापवर्त्तने कृते जाता भुजान्तरांशा गुणकस्थाने । हरस्थाने रूपम् । एवं विमर्दार्धाभ्यां विमर्दभुजौ” प्रमि०

इदानीं कर्णार्थमाह । “कोटिश्च तत्कालशरोऽथ कोटीदोर्वर्गयोगस्य पदं श्रुतिः स्यात् । मानैक्यखण्डं श्रुतिवर्जितं तद्ग्रासप्रमाणं भवतीष्टकाले” शि० । “इष्टकाले यावान् शरः सा तत्र कोटिः । कोटिभुजवर्गयोगपदं कर्णः । कर्णोनं मानैक्यार्धमिष्टकाले ग्रासप्रमाणं भवति । अत्रोपपत्तिः । भुजोऽत्र क्रान्तिवृत्ते प्राच्यपरस्तस्माद्याम्योत्तरः शरोऽतः कोटिः । तद्वर्गयोगपदं कर्णं इत्युचितम् । कर्णो नाम बिम्बमध्ययोरन्तरम् । स यावता मानैक्यार्धादूनो भवति तावद्ग्राह्यबिम्बं ग्राहके प्रविष्टम् । अतस्तावानिष्टकाले ग्रास इत्युपपन्नम्” प्रमि०।

इदानीं ग्रासात् तत्कालज्ञानमाह ।“ग्रासोनमानैक्यदलस्य वर्गात् तत्कालविक्षेपकृतिं विशोध्य पदं यत् । गत्यन्तरांशैर्वि-हृतं फलोनं स्थित्यर्धकं स्वं भवतीष्टकालः । तत्कालशरेण स्फुटः स्फुटोऽग्रे वक्ष्यऽन्यथा वा परिलेखतोऽसुम्”शि०। इष्टग्रासेनोनस्य मानैक्यार्धस्य वर्गात् तत्कालविक्षेपवर्गं विशोध्य मूलं गत्यन्तरांशैर्विभजेत् । फलेन स्पर्शस्थित्यर्धं हीनं यदि स्पार्शिको ग्रासः। यदि मौक्षिकस्तदा मौक्षिकं हीनम् । शेषमिष्टकालो भवति । स च स्थूलः । अथ तत्कालशरेण स आनीयते स सूक्ष्मासन्नः । एवमसकृत् स्फुटः स्यात् । अमुमिष्टकालमग्रे परिलेखादेव वक्ष्ये ।

अत्रोपपत्तिर्विलोमगणितेन,ग्रासोनमानैक्यार्द्धं कर्णस्तत्कालशरः कोटिस्तद्वर्गान्तरपदं भुजः । स गत्यन्तरांशैर्विहृतः फलमिष्टकालस्य मध्यग्रहस्य च यदन्तरं ततः स्थित्यर्धाच्छोधितमित्युपपन्नम्”प्रमि०।

इदानीं स्पर्शादिव्यवस्थितिमाह । “मध्यग्रहः पर्वविरामकाले प्राक् प्रग्रहोऽस्मात् परतश्च मुक्तिः । स्थित्यर्द्धनाड़ीष्वथ मर्दजासु संमीलनोन्मीलनके तथैव” शि० । स्पष्टार्थम् । इदानीं वलनानयनमाह । “खाङ्का ९० हतं स्वद्युदलेन भक्तं स्पर्शादिकालोत्थनतं लवाः स्युः । तेषां क्रमज्या पलशिञ्जिनीघ्नी भक्ता द्युमौर्व्या वलनाप्रवाम् । प्रजायते प्रागपरे नते क्रमादुदग्यमाख्यं वलनं पलोद्भवम्”शि०।“यस्मिन् काले वलनं साध्यं तस्मिन् काले या नतघटिकास्ताः खाङ्का ९०हताश्चन्द्रग्रहे रात्र्यर्धेन भक्ता अर्कग्रहे दिनार्द्धेन, फलमंशाः स्युः । तेषां क्रमज्याऽक्षज्यया गुण्या द्युजीवया भक्ता लब्धस्य चापं पलोद्भवं वलनं जायते । प्राङ्नते सौम्यं, पश्चिमनते याम्यम् । वलनानयनमुत्क्रमज्यया कैश्चित् कृतं तच्चिराधार्थमत्र क्रमज्येति विशेषणम् । न पुनरेतद्विशेषणत्वादन्यत्र सर्वत्रोत्क्रमज्याः प्राप्नुवन्ति”प्रमि० ।

इदानीमायनं वलनमाह । “युतायनांशोडुपकोटिशिञ्जिनी जिनांशमौर्व्या १३९७ गुणिता विभाजिता । द्युजीवया लब्धफलस्य कार्मुकं भवेच्च याम्यायनदिक्कमायनम्”शि० । “ग्रहस्य सायनांशस्य कोटिज्या जिनांशज्यया १३९७गुणया द्युज्यया भक्ता फलस्य चापमायनं वलनं भवति । तच्च यस्मिन्नयने ग्रहो वर्त्तते तद्दिक् भवति । अत्रोपपत्तिर्गोले” प्रमि० ।

इदानीं स्फुटवलनार्थमाह । “तयोः पलोत्थायनयोः समाशयोर्युतेर्वियुक्तेस्तु विभिन्नकाष्ठयोः । या शिञ्जिनी मानदलैक्यनिघ्नी त्रिज्योद्धृता तद्वलनं स्फुटं स्यात् । यैरुत्क्रमज्याविधिनैतदुक्तं सम्यक् ते गोलगतिं विदन्ति”शि०।

"तयोः पक्षोद्भवायनयोर्वलनचापयोः समाशयोर्योगो भिन्नाशयोरन्तरं तस्य ज्या मानैक्यार्द्धगुणा त्रिज्यया भक्ता फलं स्फुटा वलनज्या भवति। यैरिदं वलनद्वयसंस्कृक्रमज्याविधिनोक्तं सम्यक् न ते गोलगतिं विदन्तीति गोलं परिभाव्य दिशां वलनस्योत्क्रमज्ययोपपत्तयः क्रमज्यया वेति तैः सम्यक् क्वापि नावलोकितमित्यर्थः। अत्रोपपत्तिर्गोले सविस्तरा। इह समभण्डलं द्रष्टुः प्राची समभण्डलादिष्टे गते काले विषुवन्मण्डलप्राची यावता वलयिता तावत् तद्दिक् पक्षोद्भवं वलनं ज्ञेयम्। अथ विषुवन्मण्डलात् क्रान्तिवृत्तप्राची यावता वलयिता तदायनं तद्दिक् ज्ञेयम्। तयोर्योगवियोगात् स्फुटमिति। समभण्डलात् क्रान्तिमण्डलप्राची यावता वलयिता तत् स्फुटमित्यर्थः। एवं त्रिज्यापरिणतं तदनुपातेन मानैक्यार्द्धपरिणतं कृतम्। यतोऽत्र मानैक्यार्द्धवृत्ते वलनं देयम्" प्रमि०। इदानीमङ्गुलविभागमाह।

"त्रिज्योद्धृतत्त्वाभयोत्थशङ्कुः सार्द्धद्वि२,२० युक्तोऽङ्गुलभिप्तिकाः स्युः। स्थूलाः सुखार्थं द्युदलेन भक्तं यद्वनतं सार्धयुता२,२०न्वितं वा" शि०। "मध्यग्रहणकाले ग्रहस्य त्रिप्रश्नोक्तया शङ्कुः साध्यः। स शङ्कुस्त्रिज्यया भक्तः। फलं सार्धद्वियुक्तमङ्गुललिप्तिका भवन्ति। अथवोन्नतघटिका ग्रहस्य दिनार्धघटीभिर्भक्ताः फलं सार्धद्वियुक्तं सुखार्थं स्थूला अङ्गुललिप्तिका भवन्ति। अत्रोपपत्तिः। गगनमध्यस्थं यद्ग्रहबिम्बं तस्य निखिलकरनिकरपिहितपरिधित्वात् किञ्चित् सूक्ष्मं दृश्यते। अथोदये क्षितिजस्थं भूव्यवहिततत्करनिकरविशालमिव प्रतिभाति। तत् सूक्ष्मत्वं विशालत्वं चोपलभ्य बुद्धिमद्भिः कल्पितम्। तत्र गगनमध्ये सार्धत्रिकलं ३,२० । उदये सार्द्धद्विकलं २,२० अङ्गुलं कल्पितम्। अथान्तरेऽनुपातेन। यदि त्रिज्यातुल्ये शङ्कावङ्गुललिप्तान्तरं रूपं १ लभ्यते तदेष्टेन किमिति फलं सार्धद्वियुक्तमङ्गुललिप्तिकाः स्युरित्युपपन्नम्। अथवा स्थूलोऽनुपातः। यदा दिनार्धतुल्याभिरुन्नतघटिकाभी रूपं। लभ्यते तदेष्टाभिः किमिति" प्रमि०।

इदानीं वलनादीनामङ्गुलीकरणमाह "ताभिर्विभक्ता वलनेषुबिम्बदोर्मौर्व्यलिप्ताः स्युरथाङ्गुलानि। शरा यथाशा ग्रहणे खरांशोश्चन्द्रग्रहे व्यस्तदिशस्तु वेद्याः" शि०। "आभिरङ्गुलकलाभिर्वलनविक्षेपबिम्बच्छन्नभुजकोटिकर्णा भाज्याः। फलान्यङ्गुलानि भवन्ति। इह रविग्रहणे शरा यथागतदिश एव। चन्द्रग्रहणे तु व्यस्तदिशो ज्ञातव्याः। अत्रोपपत्तिः अङ्गुलकरणे तु कथितैव। शरान्ते हि चन्द्रः, शरमूले भूभाऽतश्चन्द्रविक्षेपादन्यदिशि भूभा वर्त्तते। तत्स्थानज्ञानार्थं चन्द्रग्रहणे व्यस्तदिशः शरा वेद्या इत्युपपन्नम्" प्रमि०। इदानीं परिलेखमाह।

"ग्राह्यार्धसूत्रेण विधाय वृत्तं मानैक्यखण्डेन च साधिताशम्। ग्राह्येऽत्र वृत्ते वलनं ज्यकावत् प्राक्चिह्नतः स्पर्शभवं हिमांशोः। सव्यापसव्यं खलु याम्यसौम्यं मौक्षं तथा पश्चिमतश्च देयम्। पर्व्यये पश्चिमपूर्वतस्तौ विक्षेपदिक्चिह्नित एव साध्यम्। सूत्राणि केन्द्राद्वलनाग्रका-न्यग्रान्यतः स्पर्शविमुक्तिबाणौ। ज्यावत्त्रिजाभ्यां वलनाग्रकाभ्यां देयौ यथाशं च मध्यबाणः। केन्द्रात् प्रदेयो वलनस्य सूत्रे तेभ्यः पृथग्ग्राह्यकखण्डकेन। वृत्तैः कृतैः स्पर्शविमुक्तिमध्यग्रासाः क्रमेणैवमिहावगम्याः" शि०। "समायामवनौ ग्राह्यार्धप्रमाणेन सूत्रेणेष्टस्थानकल्पितबिन्दोर्वृत्तं विलिख्य तस्मादेव बिन्दोर्मानैक्यखण्डप्रमाणेन सूत्रेणान्यद्वृत्तं कृत्वा तस्य बिन्दोरुपरि प्राच्यपरं याम्योत्तरं च सूत्रं घटिकाया उज्जयोत्पाद्य रेखे कार्ये। अथ मानैक्यार्धवृत्ते वलनं देयम्। तत्र चन्द्रस्य स्पार्शिकं प्राचीचिह्नतो मौक्षिकं प्रतीचीचिह्नतः। रवेस्तु स्पार्शिकं प्रतीचीचिह्नतो मौक्षिकं प्राचीचिह्नतः। अथ मध्यवलनं यदि विक्षेपो दक्षिणो देयस्तदा दक्षिणचिह्नाद्यदोत्तरस्तदोत्तरचिह्नात्। तत् कथं देयमित्याह। सव्यापसव्यं याम्यसौम्यमिति। यदि याम्यवलनं तदा सव्यक्रमेण प्राचीचिह्नाद्याम्यं, दक्षिणचिह्नात् पश्चिमं, पश्चिमचिह्नादुत्तरमुत्तरचिह्नात् पूर्वमिति सव्यम्। इतोऽन्यथापसव्यम्। तत्र वलनं ज्यावद्देयं न धनुर्वत्। एवं वलनानि दत्त्वा केन्द्राद्वलनाग्रगतानि सूत्राण्यङ्काणि। अथ स्पर्शवलनाग्रात् स्पार्शिको मोक्षवलनाग्रान्मौक्षिको विक्षेपो देयः। स च ज्यावत्। अथ मध्ये विक्षेपः केन्द्राद्वलनसूत्रे देयः। तेभ्यः शराग्रचिह्नेभ्यो ग्राह्यकार्धप्रमाणेन सूत्रेण वृत्तान्युत्पाद्य स्पर्शमुक्तिमध्यग्रासाः वेदितव्याः अत्र वासना। मानैक्यार्धवृत्ते ग्राहकग्राह्यस्य मध्यं यदा भवति तदा ग्राह्यग्राहकयोर्बिम्बप्रान्तौ संलग्नौ भवतोऽतो मानैक्यार्धवृत्तं यद्विलिखितं तत्र दिगङ्कितं तत्र या प्राची सा समभण्डलप्राची ततस्तस्या वलने दत्ते या केन्द्राद्वलनाग्रगा रेखा सा क्रान्तिवृत्तप्राची। एवं सर्वदिशां वलनम्। अथ वलनसूत्राच्छराग्रावधिर्विक्षेपः। यतः क्रान्तिवृत्ताच्चन्द्रविक्षेपो याम्योत्तरः। एवं स्पर्शमोक्षयोः सिद्ध। अथ

ग्रहो बुधैरमद्भिः" सि० स्पष्टार्थम् इति चन्द्रग्रहणाधिकारः।

अथ सूर्य्यग्रहणाधिकारः तत्रादौ नतिप्रयोजनोक्तिः । "दर्शान्तकालेऽपि समौ रवीन्दू द्रष्टा नतौ येन विभिन्नकक्षौ। कक्षोच्छ्रितः पश्यति नैकसूत्रे तल्लम्बनं तेन नतिं च वच्मि" सि०। "अमावास्यान्तकाले समकलावपि चन्द्रार्कौ नतौ खार्धादन्यत्र यतस्ततोऽपि वा स्थितौ भूपृष्ठगोच्छ्रितौ द्रष्टैकसूत्रे न पश्यति । येन कारणेन तौ विभिन्नकक्षौ । चन्द्रस्य कक्षा लघ्वी अर्कस्य महती । यथा चन्द्रग्रहणे येन चन्द्रस्य कक्षा सैव भूभाया अपि तत्र तिथ्यन्ते समौ भूभेन्दू नतावपि कक्षोच्छ्रितोऽपि द्रष्टैकसूत्रे पश्यति तथार्कग्रहणेऽर्केन्दू न पश्यति भिन्नकक्षत्वात् । तेन कारणेन तल्लम्बनाख्यमन्तरं नत्याख्यं च वच्मि" प्रमि० ।

इदानीं लम्बनस्य भावाभावं धनर्णत्वं च कथयति। "दर्शान्तलग्नं प्रथमं विधाय न लम्बनं वित्रिभलग्नतुल्ये । रवौ तदूनेऽभ्यधिके च तत् स्यादेवं धनर्णं क्रमतश्च वेद्यम्" सि० "अत्र लम्बनं ज्ञातुं दर्शान्तकाले लग्नं विधाय तत् त्रिभोनं कार्य्यम् । तेन त्रिभोनेन लग्नेन समे रवौ लम्बनं नास्ति । ऊनेऽभ्यधिके च स्यादिति वेदितव्यम् । तथा वित्रिभलग्नादूने रवौ यल्लम्बनमुत्पद्यते तद्धनं वेदितव्यम् । तिथ्यन्तघटिकासु योज्यमित्यर्थः । यदधिके तदृणं तिथ्यन्तघटिकाभ्यः शोध्यमित्यर्थः । अथ लम्बनस्योपपत्तिस्तावदुच्यते । इह किल सममण्डलयाम्योत्तरकोणवृत्तानामर्द्धव्यासेन परिकारवद्यद्वृत्तं निबध्यते तत् क्षितिजम् । तत्स्थं चक्रं भूगर्भस्थो द्रष्टा पश्यति । भूपृष्ठगस्तु भूच्छन्नं तत् क्षितिजमपि न पश्यति । किन्तु भूव्यर्द्धयोजनैस्तस्मात् क्षितिजादुपरि समगादन्यत् क्षितिजं स मन्यते । अतस्तस्मादूर्द्ध्वं च पश्यति । तदधः क्षितिजं दृक्सूत्रान्वितं न पश्यति अतो ग्रहकक्षायां दृङ्मण्डले तेषां योजनानां संबन्धिन्यो या लिप्तास्ताः कुण्डलिप्तास्ता एव परमलम्बनलिप्ताः परमावनतिलिप्ताश्च । तास्तु ग्रहभुक्तिपञ्चदशांशतुल्या भवन्ति । यतो गतियोजनानां पञ्चदशांशो भूव्यासार्द्धम् । यदा किल क्षितिजस्थस्तदा कुण्डलिप्ताभिर्नतत्वं गतः । अथ यदा खमध्यस्थो रविस्तदा तं भूगर्भस्थो द्रष्टा भूपृष्ठस्थोऽपि खमध्यस्थमेव पश्यति । न कुत्रोऽपि नतमतस्तत्र लम्बनाभावः । क्षितिजे तु कुण्डलिप्तातुल्यं परमं लम्बनम् अतो ज्ञातं खार्धाद्यते ग्रहे लम्बनमुत्पद्यते । एवं चन्द्रस्यापि । दर्शान्ते चन्द्रलम्बनलिप्ताभ्योऽर्कलम्बनलिप्तासु शुद्धासु शेषं रविलम्बनाधिकचन्द्रस्य परमा लम्बलिप्ताः । अथ यदा दृङ्मण्डलाकारं क्रान्तिवृत्तं भवति तदा परमलम्बनलिप्तानां घटीकरणायानुपातः । यदि गत्यन्तरकलाभिर्घटीषष्टिर्लभ्यते तदा गत्यन्तरपञ्चदशांशतुल्याभिः किमिति । फलं घटिकाचतुष्टयं परमं लम्बनम् । अतो घटिकाचतुष्टयानुपातेन लम्बनं साधयितुं युज्यते परं यदि दृङ्मण्डलाकारं क्रान्तिवृत्तम् । यदा तदपि तिरश्चीनं तदानुपातद्वयेन । लम्बनं हि दृङ्मण्डलवृत्ते घोत्पद्यते तच्च मध्यमं लम्बनम् । तत् किल कर्णरूपम् । तत् क्रान्तिवृत्तप्राचीपरिणतं कोटिरूपं स्फुटं भवति । यदा दृङ्मण्डलमेव क्रान्तिवृत्तं तदा तदेव स्फुटम् । अतः क्रान्तिवृत्तप्राच्यपरया लम्बनस्य स्फुटत्वम् । अतः क्रान्तिवृत्तस्य परमनीचस्थाने लम्बनस्य परमत्वम् । परमोच्चस्थाने लम्बनाभावः । तच्च तस्य परमोच्चत्वं वित्रिभलग्ने भवति । यदा वित्रिभं खमध्ये भवति तदा तच्छङ्कुस्त्रिज्यातुल्यः स्यात् । तदा मध्यममेव स्फुटं लम्बनम् । यदा तद्वित्रिभं खमध्याच्चलितं भवति तदा तच्छङ्कुस्त्रिज्यातो न्यूनो भवति तदा मध्यमलम्बनात् स्फुटं लम्बनं कोटिरूपकरणेन तदल्पतां याति । अतो वित्रिभलग्नशङ्कोरपचयवशेन लम्बनस्यापचयः । अतो वित्रिभलग्नशङ्कुना मध्यमलम्बनस्य स्फुटत्वकरणेऽनुपातः कर्त्तुं युज्यते" प्र०मि० ।

अमुमेवार्थं संप्रधार्यानुपातद्वयेन लम्बनमाह । "त्रिभोनलग्नं तरणिं प्रकल्प्य तल्लग्नयोर्वा समयोऽन्तरेऽसौ । त्रिभोनलग्नस्य भवेद्द्युयातः शङ्कुद्यतस्तस्य चरान्तकाद्यैः । त्रिभोनलग्नार्कविशेषशिञ्जिनी कृताहता व्यासदलेन भाजिता । हृतात् फलाद्वित्रिभलग्नशङ्कुना त्रिजीवयाप्तं घटिकादि लम्बनम्" सि०शि० । "दर्शान्तकाले लग्नं विधाय तदनष्टं वित्रिभं च कृत्वा तयोर्वित्रिभस्य भोग्यं लग्नस्य भुक्तमन्तरोदययुतं वित्रिभस्योदितः कालो भवति । तेन कालेन वित्रिभलग्नजनितकुज्याद्युज्यान्त्यादिभिश्च त्रिप्रश्नोक्त्या शङ्कुः साध्यः । शङ्कोश्च दृग्ज्या तच्छायाकर्णश्च साध्यः । अथ त्रिभोनलग्नार्कयोरन्तरस्य ज्या साध्या । अथ तया लम्बनार्थमनुपातः । यदि त्रिज्यातुल्यया वित्रिभलग्नार्कान्तरज्यया चतस्रो घटिका लम्बनं तदानयाभीष्टया किमिति फलं मध्यमलम्बनम् । अतस्तत्स्फुटीकरणार्थं द्वितीयोऽनुपातः । यदि त्रिज्यातुल्यवित्रिभलग्नशङ्कावेतावल्लम्बनं लभ्यते तदा

ऽभिन्नमन्तरानीते त्रिभिल्लवं लम्बनं स्फुटं भवति" प्रमि०।

इदानीं प्रकारान्तरेण स्फुटीकरणमाह। "फला-हृवि १२ भृत् त्रिभहोनलग्नकर्णेन लब्धं खलु लम्बनं वा" सि० शि०। "मध्यलम्बनात् द्वादशगुणाद्वित्रि-भलग्नसंभूतच्छायाकर्णेन भक्ताद्यल्लब्धं तद्वा स्फुटं लम्बनं भवति। अत्रोपपत्तिस्त्रैराशिकेन। तत्र वित्रि-भलग्नशङ्कोर्द्वादशांशेन वित्रिभलग्नशङ्कुच्छिज्या भाज-जिता जाता शङ्कुस्थाने द्वादश १२ कर्णस्थाने वित्रि-भलग्नकर्ण इत्युपपन्नम्" प्रमि०।

इदानीं प्रकारान्तरेण लम्बनमाह। "त्रिभोनलग्नस्य रवेश्च शङ्क्वोर्दृग्ज्ययोर्वर्गवियोगमूलम्। स्याद्दृक्-ऌतिर्वेद ४ गुणा त्रिभौर्व्या भक्ताथवा लम्बननाडिकाः स्युः" सि० शि०। "त्रिभोनलग्नस्य यः शङ्कुः साधित-स्तथा दर्शान्तकाले रवेः सोमकर्णैः शङ्कुरुत्पद्यते तावन्तौ स्थापयित्वा तयोः दृग्ज्ये साध्ये। अथ तयोः शङ्क्वोर्यद्वर्गान्तरपदं तद्दृक्कृतिसंज्ञं भवति। प्रथमप्र-कारोऽयम्। अथ दृक्नतेर्द्वितीयः प्रकारः। तयोर्दृग्-ज्ययोर्वर्गान्तरपदं दृक्नतिसंज्ञं भवति। अथ दृक्नते-र्लम्बनमुच्यते। दृक्नतिश्चतुर्गुणा त्रिज्यया भक्ता फलं लम्बननाडिकाः स्युः अत्रोपपत्तिः सैव। यदा वित्रिभलग्नं खमध्ये भवति तदा दृक्मण्डलमेव क्रान्तिवृत्तम्। त्रिभो-नलग्नार्कयोरन्तरज्या सैव तदार्कस्य दृग्ज्या। सा चतु-र्गुणा त्रिज्यया भक्ता लम्बनं भवति। तदेव स्फुटम् ऊर्ध्वस्थितत्वात् क्रान्तिवृत्तस्य। अथ यदा वित्रिभलग्नं खाधौंवतम् तिर्यक्स्थितत्वात् क्रान्तिवृत्तस्य तदा तत् प्राच्यपरया स्फुटं लम्बनं कोटिरूपं भवति। तच्च वित्रिभलग्नशङ्क्वनुपातेन तथा स्फुटं कोटिरूपं जा-तम्। तत् कथमिति चेत् तदर्थमुच्यते। मध्यलम्बनान-यने त्रिज्यैव वित्रिभलग्नशङ्कुः ततः स्फुटत्वार्थं यः साधितो वित्रिभलग्नशङ्कुः स दृक्क्षेपमण्डले स्फुटदृग्-ज्या भुजात्रिज्या कर्णः। वित्रिभलग्नस्य यद्दृङ्मण्डल-मिति गोले कथितम्। अतस्त्रिज्यापरिणतया मतज्यया यदानीतं तज्जातं कर्णरूपं तत् कोटिरूपस्य वित्रिभ-लग्नशङ्कोरनुपातेन कोटिरूपं नीतमित्युपपन्नम्। यदेव स्फुटलम्बनस्य कोटिरूपत्वमुपपन्नं तदेव प्रकारान्तरेणोप-पादितम्। रवेर्दृङ्मण्डले दृग्ज्या सा कर्णरूपिणी। वित्रिभलग्नस्य या दृग्ज्या स एव दृक्क्षेपः स भुज-रूपः। यतः क्रान्तिमण्डलप्राच्याः पश्चाद्दिशोत्तरं वाग्धीहिलिभलग्नोपरिगतं दृक्क्षेपमण्डलम्। तत्र वित्रिभलग्नस्य या दृग्ज्या स दृक्क्षेपः। तज्जनिता न-तिकला चन्द्रार्कयोर्याम्योत्तरमन्तरं सर्वत्र तुल्यमेव द्रष्टा पश्यति। यथोक्तं गोले। "ग्रहयोरन्तरं यत् स्याद्वि-त्रिभे सर्वतोऽपि तत्। नतिर्विप्रा भुजः कर्णो दृग्लम्बन-कलास्तयोः। तदन्तरपदं कोटिः स्फुटलम्बनलिप्तिकाः" गि०। यत् इदं लम्बनहेतुमतो दृक्क्षेपार्कदृग्ज्य-योर्वर्गान्तरपदतुल्या दृक्नतिर्भवितुमर्हति। परं यथा स्थिते गोले क्षेत्रोपरीयं न दृश्यते। यतो वित्रिभल-ग्नार्कयोरन्तरज्या वित्रिभलग्नशङ्कुव्यासार्धपरिणता सती दृक्नतिर्भवति। अत एवानेनापि प्रकारेण क्षितिजस्थे-ऽर्के परमा दृक्नतिर्वित्रिभलग्नशङ्कुतुल्या भवति। अतोऽयमपि प्रकारः पूर्वतुल्य एव। किन्तु दृक्क्षेपार्क-दृग्ज्ययोस्तुल्ये सत्याके भुजकर्णरूपे समायां भूमौ वि-न्यस्य तदन्तरे कोटिरूपां दृक्नतिं दर्शयेत्। एवमने-कविधान्युपपत्त्यनुसारेण क्षेत्राणि परिकल्प्य प्रलोकमो-मयं शारणार्याः कुर्वते। अथ प्रस्तुतमुच्यते। अत्र त्रिभ-लग्नस्य रवेश्च दृग्ज्ययोर्यद्वर्गान्तरपदं तावदेव तच्छ-ङ्क्वोरपि भवति। तत् कथमिति चेत् तदुच्यते। अत्र स्वस्वशङ्कुवर्गयोनौ त्रिज्यावर्गौ दृग्ज्यावर्गौ भवतः। तयोरन्तरे कृते त्रिज्यावर्गयोस्तुल्यत्वात्तयोः शङ्कुवर्गा-न्तरमेवावशिष्यते। एवं तत्र कुत्रचित्त्रिज्यार्धेऽपि भुज-ज्ययोर्वर्गान्तरतुल्यं तत्कोटिज्ययोर्वर्गान्तरं भवतीति। अत उक्तं त्रिभोनलग्नस्य रवेश्च शङ्क्वोर्दृग्ज्ययो-रिति"। दृक्कृतिस्त्रिज्यानुपातेन लम्बनस्य घटीक-रणम्" प्रमि०।

इदानीं प्रकारान्तरेण लम्बनमाह। "शङ्कोस्तयोर्दृग्गुण-योस्तयोर्वा त्रिज्याचतुर्थांशविभक्तयोः स्यात्। यद्वर्गविश्ले-षपदं द्विधैवं विलम्बनं तद्घटिकादिकं वा" सि० शि०।

"तयोरनन्तरकथितयोर्वित्रिभलग्नार्कशङ्क्वोस्त्रिज्याचतु-र्थांशेनापवर्त्तितयोर्यद्वर्गान्तरपदं तल्लम्बनं वा भवति। अथ तयोः शङ्क्वोर्ये दृग्ज्ये तयोस्त्रिज्याचतुर्थांशभक्त-वर्गान्तरपदं वा लम्बनं भवति। अत्रोपपत्तिः। अत्र निष्पन्नाया दृक्नतेः कोटिरूपाया घटीकरणेन त्रिज्यया चानुपातः। स तदुपकरणभूतयोः शङ्क्वो-स्तद्दृग्ज्ययोर्वा क्रियालाघवार्थं यदि क्रियते तदा घ-टिकात्मकैव दृक्नतिरुत्पद्यते। तदेव लम्बनम्। अतस्तथा कृते जातमन्यत् प्रकारद्वयम्" प्रमि०।

लम्बनप्रयोजनमाह । "तद्यंशतः पर्वविराम एवं स्फु-
टोऽसकृत् स ग्रहमध्यकालः" सि०शि० । "एवं यद्दर्शा-
न्तकाले लम्बनमुत्पन्नं तद्वित्रिभलग्नादूनेऽर्के धनमतो
दर्शान्तघटिकासु क्षेप्यम् । यदि वित्रिभादधिकेऽर्के जातं
तदृणं दर्शान्तघटीभ्यः शोध्यम् । एवमसकृल्लम्बनसंस्कृता-
द्दर्शान्तकालाल्लग्नमानीय वित्रिभं च कथितप्रकारेण लम्बनं
साध्यम् । तेन गणितागतो दर्शान्तः पुनः संस्कार्यः ।
एवं स्फुटशराद्विशेषः । एवं संस्कृतो दर्शान्तो ग्रहण-
मध्यकालो भवति । अत्रोपपत्तिः । यत् चन्द्रकक्षाया
भागखण्डत्वाद्रविकक्षाया दूरत्वात् कुपृष्ठस्थितद्रष्टृ रवि-
मण्डलगामि यत् सूत्रं तस्मादधश्चन्द्रोऽवलम्बितो दृश्यते
तल्लम्बनम् । क्रान्तिवृत्ते परमोच्चस्थाने किल वित्रिभम् ।
तस्मादूनो यदा रविस्तदार्कादवलम्बितश्चन्द्रः पृष्ठतो भव-
ति । चन्द्रो हि शीघ्रगतिः । शीघ्रे पृष्ठगते युतिरेष्या ।
अतो लम्बनं तिथौ धनम् । यदा वित्रिभलग्नादधिको-
ऽर्कस्तदा चन्द्रोऽवलम्बितोऽर्कादग्रतो भवति । शीघ्रेऽग्रगे
युतिर्जाता लम्बनतुल्येन कालेनातस्तस्य लम्बनमृणम् ।
एवं लम्बनसंस्कृतो दर्शान्तो ग्रहणमध्यकालः स्यादि-
त्युपपन्नम् । यदि त्रिज्यातुल्ययाऽर्कदृग्ज्यया परमा भु-
ज्यन्तरपञ्चदशांशतुल्या लम्बनलिप्ता ४८ । ४६ लभ्यन्ते
तदेष्टयाऽर्कदृग्ज्यया किमिति । फलं दृग्लम्बनकलाः ।
अथमनेनैवानुपातेन दृक्क्षेपाद्या लम्बनलिप्तास्तस्यान्ते ता
अवनतिलिप्ताः ता भुजरूपाः । दृग्लम्बनकलाः कर्णः
तयोर्वर्गान्तरपदं स्फुटलम्बनलिप्ताः । यतो दृङ्नत्यानय-
नेऽर्कदृग्ज्या कर्णो दृक्क्षेपो भुजः । अतो दृक्क्षेपाज्जनि-
ताऽवनतिर्भुजः । स्फुटलम्बनलिप्ताः कोटिः । इदमखिलं
गोले लम्बनोपपत्तौ कथितम् । तद्यथा । "यतः कुपृष्ठा-
स्थितो द्रष्टा चन्द्रं पश्यति लम्बितम् । साध्यते कुदले-
नातो लम्बनं च नतिस्तथा । दृष्टान्तवर्तितां पृथ्वीं कक्षे च
शशिसूर्ययोः । भित्तौ विलिख्य तन्मध्ये तिर्यग्रेखां त-
योर्ध्वगाम् । तिर्यग्रेखायुतौ कल्प्यं कक्षायां क्षितिजं
तथा । ऊर्ध्वरेखायुतौ खार्धं दृग्ज्याचापांशकैर्नतौ ।
ज्ञात्वार्केन्दू ससर्गास्तिं लम्बनस्य प्रदर्शयेत् । एवं भूमध्यतः
सूत्रं नयेद्भगणमण्डलम् । द्रष्टुर्भूपृष्ठगादन्यद्दृक्सूत्रं
तदुच्यते । कक्षायां सूत्रयोर्मध्ये यास्ता लम्बनलिप्तिकाः ।
गर्भसूत्रे यदा स्यातां चन्द्रार्कौ घनलिप्तिकौ । दृक्सूत्रा-
वस्थितचन्द्रस्तेन तल्लम्बनं कृतम् । दृग्गर्भसूत्रयोरैक्यात्
खमध्ये नास्ति लम्बनम् । अथ याम्योत्तरायां तु भित्तौ
पूर्वैः क्रमाल्लिखेत् । ये कक्षे मण्डले ते तु भवेते विक्षेपम-
ण्डले । त्रिभोनलग्नदृग्ज्या या स दृक्क्षेपो द्वयोरपि ।
तच्चापांशैर्नतौ विन्दू कल्प्यौ वित्रिभसंज्ञकौ । प्राग्वद्दृक्सूत्र-
तश्चन्द्रवित्रिभस्य नतिर्नतिः । कक्षयोरन्तरं यत् स्याद्वि-
त्रिभे सर्वतोऽपि तत् । याम्योत्तरं नतिः साऽतु दृक्क्षेपात्
साध्यते ततः । यत् तत्र नतादर्कादधश्चन्द्रावलम्बनम् । त-
द्वृत्तेऽन्तरं चन्द्रभान्वोः पूर्वापरं तु तत् । पूर्वापरं
च याम्योदग्जातं तेनान्तरद्वयम् । अस्तायमण्डलं प्राची
तत्तिर्यग्दक्षिणोत्तरा । यत् पूर्वापरभावेन लम्बनाख्यं
तदन्तरम् । यद्याम्योत्तरभावेन नतिसंज्ञं तदुच्यते । न-
तिलिप्ता भुजः कर्णो दृग्लम्बनकलास्तयोः । वर्गान्तरपदं
कोटिः स्फुटलम्बनलिप्तिकाः । परलम्बनलिप्ता ४८/४६स्मी
लिज्या २४२८ प्रा रविदृग्ज्यका । दृग्लम्बनकलास्ताः
सुरेवं दृक्क्षेपयोर्नतिः । गत्यन्तरस्य ७११/२७ विद्यांशः
४८/४६ परलम्बनलिप्तिकाः गतियोजन ११८५९/४५
तिथ्यंश ७९०/२५ कुदलस्य यतो मितिः। सुलम्बनकला-
नाड्यो गत्यन्तरलवोद्धृताः । प्राग्गतो रवेश्चन्द्रः पश्चात्
पृष्ठेऽवलम्बितः । शीघ्रेऽग्रगे युतिर्जाता यस्मात् पृष्ठगते
यतः । प्राक् ऋणं तद्धनं पश्चात् क्रियते लम्बनं तिथौ ।
याम्योत्तरं शरस्यावदन्तरं शशिसूर्ययोः । नतिस्तथा तया
तस्मात् संस्कृतः स्यात् स्फुटः शरः" प्रमि० ।

इदानीं प्रकारान्तरेण लम्बनमाह । "त्रिभोनलग्नस्य शर-
ज्ञिभू १२ भो दन्तै २२ र्विभक्तः परसंज्ञकः स्यात् ।
लग्नार्कयोरन्तरकोटिदोर्ज्ये विधाय दोर्ज्यापरयोर्वि-
योगात् । साग्राद्युतात् कोटिगुणस्य कृत्वा मूलं श्रुतिः
कोटिगुणात् परघ्नात् । श्रुत्या हृताल्लम्बनतःकलायाम्
वाऽथवा लम्बनजाः पलाः स्युः" सि०शि० । "त्रिभो-
नलग्नस्य नः स्यात् स लब्धोदयगुणो हारिसंज्ञकः
फलं परसंज्ञं भवति । दर्शान्तकाले यल्लग्नं तस्मादर्को-
नाद्भुजकोटिज्ये साध्ये तत्र दोर्ज्यायाः अनन्तरानीतस्य
च परस्य यो वियोगस्तस्माद्वर्गीकृतात् कोटिज्यावर्गेण यु-
ताद्यत् पदं स कर्णः । कोटिज्यापरयोर्घातात् तेन कर्णेन
भक्ताद्यत् फलं तस्य चापे यावन्तः कलास्तावन्तो लम्बना-
सवः पलादेव भवेयुः । अत्रोपपत्तिः । यदि त्रिज्यातुल्ये
१२० वित्रिभलग्नशङ्कोः परमलम्बनज्यातुल्यगुणकेन त्रि-
ज्या हरस्तदा त्रिभोदयगुणकेन कः । फलं हारिर्यत् ।
तस्य परसंज्ञा कृता । अधोऽधःस्थयोरपि चन्द्राऽर्कयोः
क्रियोपसंहारार्थमन्यथा कल्पितं लम्बनचेतम् । तत्र

न्तरं मौलिकं स्थित्यर्द्धम्। एवं मर्द्दखण्डेनोनाद्गणितागतात् सम्मीलनकालः। मर्द्दखण्डेन युक्तादुन्मीलनकालः। सम्मीलनमध्यग्रहकालयोरन्तरं प्रथमं स्फुटं मर्दार्द्धम्। उन्मीलनमध्यग्रहकालयोरन्तरं द्वितीयम्। यद्युक्तविधिना लम्बनं क्रियते तदैवम्। यदा पुनः उक्तविधिना लम्बनं तदा स्पर्शकालो मोक्षकालोऽपि सकृदेव स्फुटो भवति। किन्त्वत्रायं विशेषः। स्पर्शकाले मोक्षकाले वा पुनर्विलम्बनं कृत्वा तत्कालनतिः साध्या। तया तत्कालभवो विक्षेपः संस्कृतः सन् स्फुटः स्पार्शिकः। मौक्षिको वा स्फुटो भवति। मर्द्देऽप्येवं तदा स्फुटः। अत्रोपपत्तिः स्थित्यर्धानयने पूर्वोक्तैव। तत्स्फुटीकरणे प्रोच्यते। गणितागतो हि दर्शान्तकालो मध्यग्रहकालो भवितुमर्हति चन्द्रार्कयोस्तत्र तुल्यत्वात्। स्थित्यर्द्धोनो दर्शान्तकालः स्पर्शकालो भवति। युतो मोक्षकालः। अथ च द्रष्टुः कर्णोच्छ्रितत्वाल्लम्बनसम्भवम्। अतस्तेन संस्कृतो दर्शान्तो मध्यग्रहकालः स्फुटो भवति। एवं स्पर्शकालोऽपि तत्कालजनितलम्बनेन संस्कृतः स्फुटो भवितुमर्हति। या युक्तिर्मध्यग्रहकालस्य लम्बनसंस्कारे सैव स्पर्शमोक्षसम्मीलनोन्मीलनकालानां, किन्तु स्पर्शमोक्षकालस्य लम्बनसंस्कारे क्रियमाणे कालान्यत्वात्फलं किञ्चिदन्यथा भवति। नतिश्च किञ्चिदन्यादृशी। तत्संस्कृतिभवं स्थित्यर्धमपि किञ्चिदन्यादृशम्। अतस्तेनोने गणितागते दर्शान्ते तल्लम्बनं धनमृणं वा कर्तुं युज्यते। अत उक्तं तत्कालोत्थनतीषुसंस्कृतिभवस्थित्यर्धहीनाधिक इत्यादि। यद्युक्तविधिना लम्बनं तदा पुनः पुनर्लम्बनं नतिश्च। तया तत्कालशरः स्फुटः स्थित्यर्धं च क्रियते। तदा स्थित्यर्धं स्फुटं भवति। तदा तत्कालशरोऽपि स्फुटो भवति। स एव स्पार्शिकः शर इति वेदितव्यम्। यदा पुनः उक्तविधिना लम्बनं तदा पुनःपुनः शरस्य नतेश्चाकरणात् स्पार्शिकः शरः पुनः कर्तुं न युज्यते। अत उक्तं किन्त्वत्र बाणावनती पुनश्च तात्कालिकाभ्यां विधुविलम्बभाभ्यामिति" प्रमिताक्षरा।

इदानीं विशेषमाह।

"भेदं यथाङ्गग्रहणोक्तमत्र स्फुटेषुजेन स्थितिखण्डकेन। इतोऽन्य तेनैव हृतः स्फुटेन बाहुः स्फुटः स्यादुपरागेऽत्र भानोः। स्याच्च कालानयने फलं यत् स्फुटेन निघ्नं स्थितिखण्डकेन। स्फुटेषुजेनाप्तकृतं तत् स्थित्यर्द्धयुक्तं भवतीष्टकालः" इति सिद्धान्तशिरोमणिः।

"अत्र रविग्रहणे बिम्बवलनभुजकोट्यादीनामानयनं शशाङ्कग्रहणोक्तवत् वेदितव्यम्। किं त्वत्र भुजसाधने विशेषः अत्र पूर्वानयनेन यो भुज आगच्छति। असौ तत्कालस्फुटशरजनितेन स्थित्यर्धेन गुणितः स्फुटेन स्थितिखण्डकेन भाज्यः। स्पर्शमध्यकालयोरन्तरेण भाज्य इत्यर्थः। फलं स्फुटो भुजो भवति"। "ग्रासोनमानैक्यदलस्य वर्गाद्विक्षेपकृत्या रहितात् पदं यत्। गत्यन्तरांशैर्विहृतमिति" यत् फलं लभ्यते तस्य स्फुटीकरणम्। तत् फलं स्फुटेन स्थित्यर्धेन स्पर्शमध्यकालयोरन्तरेण गुणितं तत्कालस्फुटशरजनितेन स्थित्यर्धेन भक्तं स्फुटं भवति। तत् स्वस्थित्यर्धच्युतमिष्टकालो भवति। स च स्पर्शादग्रतो मोक्षात् पृष्ठतः। तस्मिन् काले नतिसंस्कृतं शरं पुनः कृत्वा ग्रासोनमानैक्यदलस्य वर्गाद्विक्षेपकृत्येत्यादिना फलं साध्यम् तत् फलं पुनः स्फुटं कर्त्तव्यम्। एवं यावदिष्टकालः स्फुटो भवति तावदसकृत्कर्म। अत्रोपपत्तिः। भुजानयने पूर्वोक्तैव। तत्स्फुटीकरणे प्रोच्यते। यथा चन्द्रग्रहणे स्थित्यर्धं शरमानैक्यार्धयोर्वर्गान्तरादुत्पन्नं तथेहानीतम्। तदस्फुटम्। लम्बनसंस्कारे कृते स्पर्शमध्यग्रहकालयोरन्तरं तत् स्फुटं स्थित्यर्द्धम्। लम्बनान्तरसंस्कृतमित्यर्थः। भुजो हि स्थित्यर्धसम्बन्धेनागच्छति। यथा चन्द्रग्रहे मध्यमेन स्थित्यर्द्धम्। तत्सम्बन्धेन यादृशो भुजस्तत्रागच्छति तादृशेनेहापि भवितव्यम्। शासनायास्तुल्यत्वात्। अथ च "वीष्टेन निघ्नाः स्थितिखण्डकेनेत्येवम्" यदानीयते तदा स्फुटस्थित्यर्धं वीष्टं कृत्वा गुणक आनीयते तदा स्फुटस्थित्यर्धसम्बन्धी भुजः स्यात्। सत्यावश्यक्। अतस्तस्य तत्कालस्फुटशरजनितस्थित्यर्द्धसम्बन्धीकरणायानुपातः। यदि स्फुटस्थित्यर्धेनैतावान् भुजस्तदा तत्कालजनितस्फुटशरभवस्थित्यर्धेन किमिति। फलं स्फुटो भुजो भवति। एतदेव विपरीतं कर्म ग्रासात् कालानयने। "ग्रासोनमानैक्यदलस्य वर्गात्" इत्यादिना यत् फलमागच्छति तन्मध्यमं स्थित्यर्धं वीष्टम्। तत् स्फुटस्थित्यर्धाद्यावद्विशोध्यते तावदस्याग्रतो भवति। अतस्तस्य फलस्य स्फुटस्थित्यर्द्धपरिणामायानुपातः। यदि मध्यमस्थित्यर्धेनैतावत् फलं तदा स्फुटस्थित्यर्द्धेन किमिति। अत्र यल्लभ्यते स्फुटं फलं तस्मिन् स्फुटस्थित्यर्धाच्छोधिते स्फुटमिष्टमवशिष्यत" इति प्रमिताक्षरा।

बृहत्संहितायां ग्रासप्रकारस्तद्भेदात् फलानि चोक्तानि यथा

विष्णुधर्म्मोत्तरे। "या तिथिस्तदहोरात्रं यस्यामभ्युदितो-
रविः। तया कर्म्माणि कुर्व्वीत ह्रासवृद्धी न कारणम्।
या तिथिस्तदहोरात्रं यस्यामस्तमितो रविः। तया कर्म्माणि
कुर्व्वीत ह्रासवृद्धी न कारणम्। शुक्लपक्षे तिथिर्ग्राह्या
यस्यामभ्युदितो रविः। कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्त-
मितो रविः"। तत्र तिथ्यन्तरसहायभावं विना प्रायेण
सम्भवति अतएव स्मृतिपरिशिष्टे युग्माग्न्येत्याद्यभिधाय "ति-
थ्योर्युग्मं महाफलम्" इत्युक्तं अस्य प्रयोजनन्तु तिथेः स्वरूप-
विशेषनियमनम्, अतिथ्या कर्म्मनिर्वाहे सहायभावेनान्य-
तिथ्यनुप्रवेशेनाहोरात्रसाध्योपवासाद्याचरणञ्च। एवञ्च
प्रातःकाले तत्तिथ्यलाभे तिथ्यन्तरेऽप्युपवाससङ्कल्पः अहो-
रात्राभोजनरूपस्य तस्य प्रातरारभ्यार्हत्वात्। संवत्सर-
प्रदीपेऽपि "प्रातःसन्ध्यां ततः कृत्वा सङ्कल्पं बुध आच-
रेत्" इत्युक्तम्। अत्र च कर्म्मणस्तावदपूर्व्वजनकत्वेन वि-
धेयत्वेन प्राधान्यम् तिथ्यादेर्गुणत्वेन कश्चिदुपलक्षणत्वमाह
गर्गः। "तिथिनक्षत्रवारादि साधनं पुण्यपापयोः। प्र-
धानगुणभावेन स्वातन्त्र्येण न ते क्षमाः" इति प्रधानस्य
कर्म्मणो गुणभावेनाकृत्येन। एवञ्च निराहारपदस्योपवास-
परत्वे न कलञ्जाधिकरणन्यायादेकादशीपदमतिवाह्य भो-
जनम्। निन्त्वेकादश्यामिति विहितैकादशीयुक्ताहोरा-
त्रपरम्। अथ कलञ्जाधिकरणम्। तत्र श्रुतिः "न
कलञ्जं भक्षयेत्" इति कलञ्जभक्षणाभावविषयकं कार्य्य-
मित्यर्थः। तत्र आख्यविशेषानुपादानाद्विधिप्रयुज्यमानक्रिया-
यां प्रवृत्तिमतो निषेधविधावधिकाराद्यावत्कालमेव तस्यां
तस्य निवृत्तिः। न हि कलञ्जभक्षणाद्यतः कुतश्चित् का-
रणाद्विरतस्य निषेधानुपालनं सम्पन्नमिति कलञ्ज-
भक्षणनिषेधो न पुनस्तं निवर्त्तयति किन्तु भक्षणप्र-
वृत्तिमत्तामात्रमधिकारिविशेषणं यदा यदा भवति तद
तदा एव निषेधविधिरपि तं निवर्त्तयति। न हि कल-
ञ्जभक्षणमुपक्रम्य यावत्कालं तन्नयति। अतस्त-
दितरकाले निवृत्तिः सिद्धैवेति भवति विफलो विधिः।
ननु भावी निवृत्तिरप्रवृत्तस्य निवृत्त्यनुपपत्तेः, सत्यं
प्रवृत्त्युपाधिना विनाशं प्राप्नुवन् प्रागभाव एव प्रवृत्ति-
निराकरणात् साध्यमानो निवृत्तिरुच्यते न तु प्रवृत्ति-
रपि साध्यतयोपदिश्यते किन्तु रागप्राप्तप्रवृत्तिमत एव नि-
षेधविधावधिकारः। यत्तु "मनसा तु प्रवृत्तस्य भूतचेष्टा-
वतोऽपि वा। यदनागतभावस्य वर्ज्जनं तन्निवर्त्तनम्" इति
तत्रापि पक्षेणाप्रवृत्तमात्रसङ्ग्रहान्न विरोधः भूतचेष्टावत

इति। "भूत" इत्यादौ पिशाचादौ जन्तौ क्लीवं निरू-
पिते। प्राप्ते वृत्ते समे सत्ये देवयोन्यन्तरे तु ना" इति
मेदिन्युक्तेः भूते प्राप्ते निषेध्ये चेष्टावत इत्यर्थः। त-
तश्च प्रागभाव एव कालान्तरसम्बन्धितया साध्यत्वेनोप-
दिश्यते। प्रागभावश्चानादिसंसर्गाभावमात्रपरः यथाप्रवृ-
त्तस्य भक्षणकारणमननुतिष्ठतः सिध्यत्येव। तस्मात् स-
त्क्रियापर्य्यवसायित्वे विफलो विधिः कादाचित्का-
रणस्य निषेधमन्तरेणापि प्राप्तेः। न च स्वर्गकामादिवत्
साध्यतया प्रवृत्तिमत्कर्त्तृकत्वमप्यङ्गं विषयमात्रानुष्ठाना-
धीनसिद्धत्वान्निषेधनियोगानामिति कर्त्तव्यताऽऽकाङ्क्षावि-
रहात् अतएव पुरुषत्वमपि तत्र नाङ्गम्। तस्मान्निषे-
धविधिषु काकवन्तो देवदत्तस्य गृहा इत्यादिवत्तटस्थत्वेना-
धिकारिविशेषणीभूतायाः प्रवृत्तेर्यावत्कालमनुवृत्तिस्ता-
वत्कालमेव निवृत्तौ साफल्यं पुनर्निमित्तान्तरवशप्रवृ-
त्तावनुष्ठानेनैव शास्त्रार्थसिद्धिः"। गदाधरस्तु विधिस्वरूपे
उपवासादिव्रतादेर्निषेधविधिबोध्यतया वैधत्वं कलञ्ज-
भक्षणादेश्च निषेधविषयतया निषिद्धत्वमङ्गीचकार। तस्या-
यमाशयः। विधिप्रत्ययार्थस्येष्टसाधनत्वादेर्धात्वर्थे एवान्वय-
व्युत्पत्तेः एकादश्यामुपवसेदित्यादिवाक्येन उपवासे वि-
ध्यर्थेष्टसाधनत्वस्यान्वयबोधनात् भोजनाभावरूपोपवासस्य
निषेधरूपतया तत्र च विध्यर्थान्वयात् निषेधविधित्वम् तदेक-
वाक्यतया च एकादश्यां न भुञ्जीतेत्यादौ भुजधातोरुप-
वासपरत्वकल्पनं नञ् तु तत्र तात्पर्यग्राहकः एवञ्च
तत्र निषेधरूपभोजनाभावे इष्टसाधनत्वबोधनान्निषेधवि-
धित्वम्। प्रकृत्यर्थे एव प्रत्ययार्थान्वयनियमेन तथान्वयस्यैवो-
चितम्। न कलञ्जं भक्षयेदित्यादौ तु नञा कलञ्जभक्षण
एव विध्यर्थेष्टसाधनत्वस्याभावबोधनात् निषेधरूपत्वम्। नञ्-
समभिव्याहृतस्थले यत्र यस्यान्वयः तत्समभिव्याहारे तु तत्र
तस्याभावान्वयनियमात् चैत्रः पचतीत्यादौ चैत्रे पाचकर्त्तृ-
त्वान्वयेन चैत्रो न पचतीत्यादौ तत्रैव कर्त्तृत्वाभावान्वयदर्श-
नात्। ननु एकादश्यां न भुञ्जीतेत्यत्रापि कुतो न तथान्वय
इति चेत् तत्र तथान्वयसम्भवेऽपि एकादश्यामुपवसेदि-
त्यादौ तथान्वयासम्भवात् तत्र धातुनैव भोजनाभावबो-
धस्थापनात् तत्रैव विध्यर्थान्वयौचित्यात् न च तत्र स्वा-
तन्त्र्येणाभावबोधकपदमस्ति येन विध्यर्थान्वयः स्यात्।
तदेकवाक्यतया च न भुञ्जीतेत्यादौ धर्म्मिभेदेन विधि-
त्वमुचितमिति। निषेधविधेश्च इष्टसाधनताज्ञानजनकद्वारा
प्रवर्त्तकत्वम् निषेधस्य तु उदीच्यानिष्टसाधनताज्ञानोपक्रम-

पात् निवर्त्तकत्वमिति भेदः विस्तरस्तु विधिसङ्घभे द्रष्टव्यः। प्राग्युक्त भवि० पु० वाक्यव्याख्यायाम् एका०त० रघु० "उपावृत्तस्य निवृत्तस्य पापेभ्यः पापकर्म्मभ्यः। केचित्तु दोषेभ्य इति पठित्वा दोषेभ्योरागद्वेषमात्सर्य्यादिनिषिद्धात्मधर्म्मेभ्य इत्यर्थमाहुः। गुणानाह गोतमः। "दया सर्व्वभूतेषु क्षान्तिरनसूया शौचमनायासोमङ्गलमकार्पण्यमस्पृहा चेति"। दयादिलक्षणान्याह बृहस्पतिः। "परे वा बन्धुवर्गे वा मित्रे द्वेष्टरि वा सदा। आत्मवद्वर्त्तितव्यं हि दयैषा प्रकीर्त्तिता"। परे उदासीने। आत्मवदित्यत्र आपत्सु रक्षितव्यमिति कल्पतरौ पाठः। अत्रमाह दक्षः। "यथैवात्मा परस्तद्वद्द्रष्टव्यः सुखमिच्छता। सुखदुःखानि तुल्यानि यथात्मनि तथा परे"। बृहस्पतिः। "बाह्ये चाध्यात्मिके चैव दुःखे चोत्पादिते क्वचित्। न कुप्यति न वा हन्ति सा क्षमा परिकीर्त्तिता। न गुणान् गुणिनो हन्ति स्तौति मन्दगुणानपि। नान्यदोषेषु रमते साऽनसूया प्रकीर्त्तिता। अभक्ष्यपरिहारस्तु संसर्गश्चाप्यनिन्दितैः। स्वधर्म्मे च व्यवस्थानं शौचमेतत् प्रकीर्त्तितम्। शरीरं पीड्यते येन सुशुभेनापि कर्म्मणा। अत्यन्तं तन्न कुर्वीत अनायासः स उच्यते। प्रशस्ताचरणं नित्यमप्रशस्तविवर्जनम्। एतद्धि मङ्गलं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः। स्तोकादपि च दातव्यमदीनेनैव चात्मना। अहन्यहनि यत् किञ्चिदकार्पण्यं हि तत् स्मृतम्। यथोत्पन्नेन सन्तोषः कर्त्तव्योऽप्यल्पवस्तुना। परस्याचिन्तयित्वार्थं साऽस्पृहा परिकीर्त्तिता"। देवीपुराणम्। "वस्त्रान्नं मज्जपः स्नानं तत्कथाश्रवणादिकम्। उपवासकृतो ह्येते गुणाः प्रोक्ता मनीषिभिः" सर्वभोगविवर्जितः वास्नानानुमतस्रग्गीतादिसुखरहितः" अत्र दन्तधावने नैमित्तिकत्वाच्च दूषितं तन्नैव। "अत वैतिकाः शङ्खशातातपोभोगविशेषान् प्रतिप्रसूते। "गन्धालङ्कारवस्त्राणि पुष्पमाल्यानुलेपनम्। उपवासी न दुष्येत दन्तधावनमञ्जनम्"। गौडीयस्मृतिः "उपवासे तथा श्राद्धे न खादेद्दन्तधावनम्। दन्तानां काष्ठसंयोगोहन्त्यासप्तमं कुलम्" तत्र योगीश्वरः "तस्मात् सर्वप्रयत्नेन भक्षयेद्दन्तधावनम्" इत्यभिधाय दन्तकाष्ठसंयोगं निषिध्य मृल्लोष्टादिना दन्तधावनमिति विरोधं परिजहारेति वदन्तोगतिं व्याचक्रुः तत्र वृद्धशातातपेन "सर्वे पर्वदिने भिन्नं मवल्प्रयतोनरः। तस्मात् सर्वप्रयत्नेन भक्षयेद्दन्तधावनम्" इत्यभिधाय तद्वचनाभिधानेन दन्तधावने दोषएवोक्तः। अन्यथा शौचस्या-

पत्तेः "अञ्जनं रोचनञ्चापि गन्धान् सुमनसस्तथा। पुलकौ चोपवासे च नियमेन विवर्जयेत्" इति हरिवंशात् मिताक्षरायाम्। "गात्राभ्यङ्गं शिरोभ्यङ्गं ताम्बूलं चानुलेपनम्। व्रतस्थोवर्जयेत् सर्वं यच्चान्यद्बलरागकृत्" इत्यनेनानुलेपनरागकृन्निषेधाच्च। अतएव प्रायश्चित्तविवेककृद्भिः शुद्धमुपवासेन छेदनेति"।

जीमूतवाहनेनापि उपवासे चेति पठित्वा चकारादनुक्तादिष्वपीति व्याख्यातम्। तस्माद्गन्धेत्यादि सर्व्वभोगसैत्र प्रदर्शकं तेन पिपासार्थमम्भसाद्विवर्ज्जनं कार्य्यम्। देवलः "उपवासः प्रणश्येत दिवास्वापात् च मैथुनैः। अत्यन्ते चाम्बुपाने च नोपवासः प्रणश्यति"। उपवासोऽपि नश्येतेति कल्पतरुपाठे अपिनात्यन्तं सङ्गृह्यत इति विशेषः। अष्टेदूरतैः। अतत्रवे नाशे सम्भाव्यमाने। मैथुने विशेषमाह देवलः। "उपवासे तथा बीजं हन्ति हष्टकुलानि वै। स्त्रीणां संप्रेक्षणात् स्पर्शात्ताभिः संकथनादपि। ब्रह्मचर्यं विपद्येत न दारेष्वृतुसङ्गमात्" संप्रेक्षणात् संकथनादित्यत्र सरागत्वं संग्रहसत्रार्थः साहचर्यात् स्पर्शोऽपि तथेति प्रायश्चित्तविवेकः। शातातपोऽपि "रेतःसेकात्मकं भोगकृतेऽप्यत्र क्षयः स्मृतः। तथाच दक्षः। "स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम्। सङ्कल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेव च। एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः। अनुरागात् कृतस्त्वेव ब्रह्मचर्य्यविरोधकम्"।

अनुकल्पमुख्यप्रधानपक्षयोर्यथायोगम् अन्यान्यपि वर्ज्यानि वाचना०उक्तानि यथा "कांस्यं मांसं मसूरांश्च चणकान् कोरदूषकान्। शाकं मधु परान्नञ्च त्यजेदुपवसन् स्त्रियम्" कूर्म्मपु०। "असकृज्जलपानञ्च दिवास्वापञ्च मैथुनम्। ताम्बूलचर्वणं मांसं वर्ज्जयेद्व्रतवासरे" विष्णुध०। "पतितपाषण्डनास्तिकसम्भाषणानृताश्लीलादिकमुपवासादिषु वर्ज्जयेत्" हारीतः। "बहिर्ग्रामान्त्यजान् सूतिं पतितं च रजस्वलाम्। न स्पृशेन्नाभिभाषेत नेक्षेत व्रतवासरे" कूर्म्मपु०। "स्मृत्यालोकनगन्धादिसेवनं परिकीर्त्तनम्। अन्नस्य वर्जयेत् सर्वं ग्रासानां चाभिकाङ्क्षणम्। गात्राभ्यङ्गं शिरोभ्यङ्गं ताम्बूलं चानुलेपनम्। व्रतस्थोवर्ज्जयेत् सर्वं यच्चान्यत् निराकृतम्" विष्णुर०। तत्र-वादस्तु उपवासे "यानि कानि च पापानि ब्रह्महत्यादिकानि च। अन्नमाश्रित्य तिष्ठन्ति संप्राप्ते हरिवासरे" इति भवि०पु०वचनमात्रस्य निषेधेऽपि मासमध्वादिनिषेधोऽ-

नुकल्पपक्षेऽधिकदोषाय । अतएव "अन्नं तु धान्य संभूतं गिरिजे! भुवि जायते । धान्यानि विविधानीह जगतां शृणु यत्नतः । श्यामाकमाषमुद्गाश्च धान्यकोद्रव सर्षपाः यवगोधूममुद्गाश्च तिलकलायकुलत्थकाः" इत्यादीन्य ष्टादश धान्यान्युक्त्वा "एतैरेव समुद्भूतमन्नं भवति शोभने ! । व्रतत्यागे व्रते भक्ष्ये एतान्येव विवर्जयेदिति" धान्योत्तर वाक्ये धान्यमात्रसंभूतान्नस्य निषेधात् । अतएव मत्स्यं हवि-ष्यान्नमोदनं वेत्यत्र ओदनपदेन सिद्धान्नमात्रमभि-प्रायानुकल्पतोक्ता ।

एकादश्युपवासेऽधिकारित्व एकादशीशब्दे वक्ष्यते । सभ-र्तृकायास्तु भर्त्तुरनुमतिं विनोपवासे नाधिकारः । "नास्ति स्त्रीणां पृथग् यज्ञो न व्रतं नाप्युपोषणम् । पतिं शुश्रूषते यत्तु तेन स्वर्गे महीयते" मनूक्तेः सावित्रीव्रतादौ विशेष-विधानात् भर्त्तनुज्ञयाऽधिकारः । अतएव शङ्खेन सामान्यत उक्तम् "कामं भर्त्तनुज्ञया व्रतोपवासनियमेज्यादीनाम भ्यासः स्त्रीधर्म्मः" "पत्यौ जीवति या नारी उपोष्य व्रत-माचरेत् । आयुः संहरते पत्युः सा नारी नरकं व्रजेत्" इति विष्णुवाक्यन्तु अनुमत्यभावविषयकम् ।

स च उपवासः नित्यः काम्यः नैमित्तिकश्चेति त्रिधा तत्रै-कादशीशिवरात्र्याद्युपवासो नित्यः । एकादशीशब्दे शिवरा-त्र्यादिशब्दे च तत्प्रमाणं दृश्यम् । काम्यस्तु "अमावस्या द्वादशी च संक्रान्तिश्च विशेषतः । एताः प्रशस्तास्तिथयो भानुवारस्तथैव च । अत्र स्नानं जपो होमो देवतानाञ्च पूज-नम् । उपवासस्तथा दानमेकैकं पावनं स्मृतम्" सं० "सप्त रात्रानुपोष्यैव सप्तधा संयतेन्द्रियः । सप्तजन्मकृतं पापं तत्-क्षणादेव नाशयेत्" सं०प्रदो० "नित्यं द्वयोरयनयोर्नित्यं विषुवतोर्द्वयोः । चन्द्रार्कयोर्ग्रहणयोर्व्यतीपातेषु पर्व्वसु । अहोरात्रोषितः स्नानं दानं होमं तथा जपम् । यः करोति प्रयत्नात्मा तस्य स्यादक्षयन्तु तत्" ब्रह्मपु० इत्यादौ विहितः तत्रायनविषुवत्तुनित्य इति भेदः । नैमित्तिकः प्रायश्चित्तरूपः "त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्याद-याचितम् । त्र्यहं परञ्च नाश्नीयात् प्राजापत्यं चरन् द्विजः" मन्वादिविहितः एवमन्यान्यपि प्रायश्चित्तविधाय-कानि वाक्यानि स्मृतितोऽन्वेष्याणि

तत्र काम्ये सर्व्वाङ्गशक्तिमानधिकारी अशक्तौ तु नैः सर्व्वाङ्गो पेतस्यैवाधिकारः । नित्ये तु यथाकथञ्चिदनुष्ठानमिति समर्थितम् एका०त० "एवञ्चैकादशीव्रतस्य नित्यत्वात् किञ्चिदङ्गवैकल्येऽपि प्रधानोपवासादेराचरणं यावज्जीवा-धिकरणन्यायात् । स च न्यायोयथा 'यावज्जीवमग्निहोत्रं जुहुयादिति' श्रूयते तत्र किं सर्व्वाङ्गोपसंहारेणैवाधिकारः उत यावज्जीवपदेन यावन्ति शक्नोतीत्युपसंहर्त्तुं यदा तदा तावद्भिरङ्गैरुपेतं प्रधानं कुर्व्वन्नधिकरोतीति संशयः । तत्राद्ये सर्व्वाङ्गोपेतस्य प्रधानस्य फलसाधनत्वादङ्गवैकल्ये फलानुदयात् सर्व्वाङ्गोपसंहार इति पूर्व्वपक्षः तत्र सिद्धान्तः "सायं प्रातर्जुहोतीति" श्रुतेः सायं प्रातःकालावच्छिन्नं जीवनमग्निहोत्रस्य निमित्ततया श्रूयते नत्वङ्गानां, सति निमित्ते नैमित्तिकमवश्यं भावि अन्यथा निमित्तत्वासम्भवात् । अतोऽशक्याङ्गपरित्यागेन प्रधानं कर्त्तव्यम् तावतैव शास्त्रबलात् फलसिद्धिरिति अतएव नैमित्तिकाधिकारे श्रीधरस्वामिधृता श्रुतिः "यथा शक्त्यानुयात्तथा कुर्या-दिति" । बौधायनोऽपि स्मरति । "यथा कथञ्चित् नित्यानि शक्त्यवस्तुनिक्रमतः । येन केनापि काम्यानि नैव नित्यानि लोपयेत्" ।

असमर्थस्यानुकल्पेनाप्याचरणम् अनुकल्पश्च कर्त्तृद्रव्यादिषु प्रतिनिधिरूपः तत्राह मनुः । "विश्वैश्च देवैः साध्यैश्च ब्राह्मणैश्च महर्षिभिः । आपत्सु मरणाद्भीतैर्विधिः प्रति-निधिः कृतः । प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते । न साम्परायिकं तस्य दुर्मतेर्विद्यते फलम्" । अत्रापत्-प्रतिनिध्यनुकल्पानां पर्यायता । कालविवेकधृतनरसिंहपुराणे "उपवासासमर्थस्तु किञ्चिद्भक्ष्यं प्रयोजयेत्" तथा एकाद-शीमधिकृत्य स्मृतिः "एकभक्तेन नक्तेन अयाचितेन वृद्धातुरः क्षिपेत्" नारदीये "अनुकल्पोऽस्ययां प्रोक्तः स्त्रीणां वर-वर्णिनि! । मूलं फलं पयस्तोयमुपभोज्यं भवेच्छुभम् । नत्वेवं भोजनं कैश्चिदेकादश्यां प्रकीर्त्तितम्"। एवमनुकल्पासामर्थ्ये ब्रह्मवैवर्त्तः । "उपवासासमर्थश्चेदेकं विप्रन्तु भोजयेत् । तावद्धनानि वा दद्यात् यद्भक्ताद्द्विगुणं भवेत् । सहस्र-सम्मितां देवीं जपेद्वा प्राणसंयमान् । कुर्य्याद्द्वादशसंख्या-कान् यथाशक्ति व्रते नरः" । देवीं गायत्रीम् । वायुपुराणे "उपवासनिषेधे तु किञ्चिद्भक्ष्यं प्रकल्पयेत् । न दुष्यत्यु-पवासेन उपवासफलं भवेत् । नक्तं हविष्यान्नमोदनं वा फलं तिलाः क्षीरमथाम्बु धान्यम् । यत् पञ्चगव्यं यदि वाथ वायुः प्रशस्तमत्रोत्तरमुत्तरञ्च" । उपवासनिषेधे तु असामर्थ्यमिव हविष्यादिरनुकल्पः । तानि च "अष्टौ तान्यव्रतघ्नानि आपोमूलं फलं पयः । हविर्ब्राह्मण काम्या च गुरोर्वचनमौषधम्" बौधायनः । एकादश्या-तिरिक्तोपवासे अनुकल्पपक्षे विशेषः नि०सि० । "नित्य-

स्नायी मिताहारो गुरुदेवद्विजार्चकः । क्षारं क्षौद्रञ्च लवणम् मधुमांसानि वर्जयेत्” इत्युप० कल्पत० । क्षाराश्च तत्रोक्ताः “तिलमुद्गादृते शिम्बिः गोधूमकोद्रवौ । धान्यकं देवधान्यञ्च शमीधान्यं तथैव च । शिम्बीधान्यं तथा पक्वं मूलं क्षारगणाः स्मृताः” गोधूमस्य क्षारत्वेऽपि उपवासानुकल्पे प्रतिप्रसवस्तत्रैव “व्रीहिषष्टिकमुद्गाश्च कलायः सतिलं पयः । श्यामाकश्चैव नीवारा गोधूमाद्या व्रते हिताः” । कुष्माण्डालाबुवार्त्ताकुपालङ्कीर्ज्योतिष्मतीस्त्यजेत् । चतुर्भिश्च सहकथाः शाकं दधि घृतं मधु । श्यामाकशालिनीवारा यावकं मूलतण्डुलम् । हविष्यं व्रतनक्तादावग्निकार्यादिके हितम् । मधुमांसं विहायान्यद्व्रते वा हितमीरितम्” । “चतुर्भिश्च सहकथाया-मधशाकपत्रोदधिघृतमूलफलोदकानि वर्जयेत्तु सुरोत्तरं प्रभातानि” मिता० गौत० । निर्णया० संव० । सेनहिंसको: वधस्य सत्वा सर्वस्य हिंसनम् । प्रायश्चित्तं व्रती कुर्यात् उपवासव्रततत्परम् । मिथ्यावादे दिवास्वापे बहुशोऽम्बु-निषेवणे । अष्टाक्षरं व्रती जप्त्वा शतमष्टोत्तरं शुचिः” । अतएव वमर्थस्य विहितस्यापि भङ्ग्या निषिद्धम् । “उपवासो यदा राम ! मानं नैमित्तिकं भवेत् । उपवासं तदा कुर्यादाभाद पितृसेवितं मिति” काला० ।

अथ व्रते प्रतिनिधिः अशक्तौ प्रतिनिधिनाऽपि उपवासादिव्रतं कार्यमित्याह स्कन्दपु० । “पुत्रञ्च विनयोपेतं भगिनीं भ्रातरन्तथा । एषामभाव एवान्यं ब्राह्मणं विनियोजयेत्” गरुडपुरा० । “भार्या भर्तुर्व्रतं कुर्याद्भार्यायाश्च पतिस्तथा । असामर्थ्ये द्वयोस्ताभ्यां व्रतभङ्गो न जायते” । वराहपुराणे “पितृमातृपतिभ्रातृस्वसृगुर्वादिभूभुजाम् । उद्दिश्यार्थमुपोष्यैव नायस्य फलभाग्भवेत्” ।

अत्र नि० सि० निकामप्रपञ्चने विशेषः “काम्ये प्रतिनिधिर्नास्ति नित्ये नैमित्तिके च सः । काम्येऽप्युपक्रमादूर्ध्वं केचित् प्रतिनिधिं विदुः । न स्यात् प्रतिनिधिर्मन्त्रस्वामि-देवाग्निकर्मसु । न देशकालयोर्नास्ति नारणेरग्निरेव वा । नापि प्रतिनिधातव्यं निषिद्धं वस्तु कुत्रचित्” । ततश्च शक्तौ उपोषणादिकमनुकल्पादिना कार्यं पूजादिकं तु स्वयमशक्तौ अन्येन कारयेदिति एका० त० रघु० ।

नित्यकाम्ययोरुपवासयोरस्य भेदः “उपवासफलं प्रेप्सुर्जह्यात् भक्तचतुष्टयमिति” काशखा० भारतम् “जह्याद्भक्तद्वयं नित्ये काम्ये भक्तचतुष्टयम् । सायमाद्यन्तयोर्भक्तमेकैकं मध्यमे द्वयम्” एका० त० स्मृति । अत्र सायमित्यस्य एकभोजनमात्रपरत्वम् तेन दैवात् पूर्वदिने दिवाऽभोजने रात्रिभोजनेऽपि न फलाप्राप्तिः “अह्नोरात्र्यन्तयोरह्नमेकैकं मध्यमे द्वयम् । उपवासफलप्रेप्सोर्जह्याद्भक्तचतुष्टयमिति” वाराहात् ।

उपवास व्रतस्य वैधतया तत्सिद्धेः पूर्व्वसङ्कल्प कर्त्तव्यता तत्निरूपणाय प्रतिपदमारभ्य पञ्चदशविशेषनियमन कालमा० दर्शितं तमादौ प्रतिपत्प्रकरणे यथोक्तं तदुच्यते ततो “मार्गशिरे मासि प्रतिपद्यपरेऽहनि । दद्या गुरवेऽपत्र-दैवाहारेभ्यः चरन्नुरिति” । नतु पूर्वविद्धायां शुक्ल-प्रतिपदि योऽयमुपवासो विहितस्तस्य संकल्पः किं प्रातः कार्यः किं वा परत्र, नाद्यः प्रातस्तदभावेन संकल्पायोगात् । अतएव बौधायनः “योयस्य विहितः कालः कर्मण-स्तमुपक्रमे । तिथिर्याऽभिमता या तु कार्या सोपक्रमोऽस्य-तेति” स्कन्दपुराणेऽपि “योयस्य विहितः कालः कर्मणस्त-दुपक्रमे । विद्यमानो भवेदङ्गं नोऽज्ञातोपक्रमेण तु”(सब्ब-दार्थः) । न द्वितीयः प्रातःकालस्यैव संकल्पाङ्गत्वात् तथा च स्मर्यते “प्रातः संकल्पयेद्विद्वानुपवासव्रतादिकमिति” । तथा “प्रातरारभ्य मतिमान् कुर्याद्व्रतादिकम् । नापराह्णे न मध्याह्ने पित्र्यौ कालौ हि तौ स्मृताविति” । अत्रोच्यते यथोक्तवचनवशात् प्रातरेव संकल्पः कार्यः तदानीं ज्योतिः-शास्त्रप्रसिद्धप्रतिपदभावेऽपि स्मृतिभिरापादितायाः प्रतिपदः सत्त्वात् अतएव देवलः “यां तिथिं समनुप्राप्य अस्तं याति दिवाकरः । तिथिः सा सकला ज्ञेया दानाध्ययनकर्मस्विति” अत्र दानाध्ययनयोरुपवासादिनिखिलदैवोपलक्षणार्थत्वविवक्षया कर्मस्विति बहुवचनं निर्दिष्टम् । अस्तगमयात् पूर्वं मुहूर्त्तत्रयव्यापिनीं तिथिं समनुप्राप्येति व्याख्येयम् । न तु ततोऽल्पव्याप्तिर्विवक्षिता तथा सति पूर्वोत्तरवे-धाभावेनोत्तरतिथेरेव प्राह्यत्वप्रसङ्गात् तथा च त्रिमुहूर्त्त-व्याप्तिः स्कन्दपुराणे दर्शिता । “यान्तिथिं समनुप्राप्य यात्यस्तं पद्मिनीप्रियः । सा तिथिस्तद्दिने प्रोक्ता त्रिमु-हूर्त्ता यदा भवेदिति” । निगमस्कन्दपुराणयोरपि “यां प्राप्यास्तमुपैत्यर्कः सा चेत् स्यात्त्रिमुहूर्त्तिका । धर्म-कृत्येषु सर्वेषु संपूर्णां तां विदुर्बुधाः” इति । वृद्धवसि-ष्ठोऽपि “उदयात्प्राक् समायात् सार्व्वस्तु त्रिमुहूर्त्तकैः । यागदानजपादिभ्यस्तामेवोपक्रमेत् तिथिमिति” । नतु सायन्तनत्रिमुहूर्त्तशुक्लप्रतिपद्युपेतायां तिथौ प्रातरेव संकल्प्य प्रतिपदुपवासः कार्य इति युग्मादिवचनमाश्रि-त्य निर्णीतं सत्तिथिवचने तथाऽस्तु हावस्थोस्तु सर्वादि

प्रतिपच्चैव कर्त्तव्या साम्मुखी तिथिः"। पैठी॰उक्तेः "साम्मुख्यं नाम सायाह्नव्यापिनी दृश्यते यदा" इति स्कन्दपुराणोक्तसाम्मुख्ययुक्तायाः प्रतिपदो ग्राह्यता सायाह्नव्याप्तिश्च मुहूर्त्तान्यूनत्वेन ग्राह्यमिति। उभयदिने तत्प्राप्तौ त्रिसन्ध्यव्यापित्वे तु परैवोपोष्या "त्रिसन्ध्यव्यापिनी या तु सैव पूज्या सदा तिथिः। न तत्र युग्मादरणमन्यत्र हरिवासरात्" इति पराशरवाक्येन तदपवादः एतच्च जयन्तीशिवरात्र्यादि विशेषेतरपरमिति ति॰त॰ तेनोक्तम्। अत्र प्रागुक्तविशेषवचनानुसारिमाधवमतमेव न्याय्यम्। गौडानामपि रघुनन्दनमतन्तु सामान्यशास्त्रानुसारित्वात् दुर्बलमिति सुधीभिरपक्षपातिभिर्विवेच्यम्।

अन्यासु तिथिषु व्यवस्था तु तत एवावगन्तव्या दिङ्मात्रमिह दर्शितम् तिथिशब्दे विवृतिः। उपवासे दीयते कार्य्यं वा व्युष्टा॰ अण्। औपवास तत्र देये तत्र कार्य्ये च त्रि॰। तस्मै प्रभवति विमुक्ता॰ ठञ्। औपवासिक तस्मै पर्य्याप्ते त्रि॰।

**उपवासक** त्रि॰ उप+वस–ण्वुल्। १अनाहारकारिणि। उपवासे हितम् कन्। २व्रतभेदे त्रि॰ "नैव यज्ञक्रियाः काश्चिन्नाद्यं नोपवासकम्" भा॰ २०४ अ॰।

**उपवासन** न॰ उप+वास–उपसेवायाम् भावे ल्युट्। उपसेवने। "यदा सन्ध्यामुपाधाने यज्ञोपवासने कृतम्" अथ॰ १४,२,६२।

**उपवासिन्** त्रि॰ उप+वस–णिनि। अनाहारकर्त्तरि "दिनोपवासी तु निशाभिभाषी जटाधरः सन् कुटाभिलाषी" हारार्णवः "त्रिमासैर्हंससंयुक्तैर्यान्ति मासोपवासिनः" भा॰ अ॰ १६९ अ॰।

**उपवाहन** न॰ उप+वह–णिच्-भावे ल्युट्। समीपनयने।

**उपवाह्य** पु॰ उप उत्कर्षे प्रा॰स॰। राजवाह्यहस्तिनि हेम॰

**उपविद्** स्त्री उप+विन्दतेः वेत्तेर्वा सम्प॰ क्विप्। १उपलब्धौ प्राप्तौ २ज्ञाने च "उपविदा वह्निर्विन्दते वसु" ऋ॰ ८,२३,३। "उपविदा उपवेदनेनैते हवींषि देवार्थं न प्रयच्छन्तीत्येतज्ज्ञानेन" भा॰। कर्त्तरि क्विप्। ३प्राप्तरि ४बोद्धरि च त्रि॰।

**उपविन्दु** पु॰ उपगतो विन्दुम् अत्या॰स॰। राजभेदे तस्यापत्यम् बाह्वा॰ इञ्। औपविन्दवि तदपत्ये पुंस्त्री॰।

**उपविष** पु॰ उपमितं विषेण व्या॰स॰। "अर्कक्षीरं स्नुहीक्षीरं तथैव कलिकारिका। धत्तूरः करवीरश्च पञ्च चोपविषाः स्मृताः" इत्युक्तेषु १अर्कक्षीरादिषु २कृत्रिमविषे न॰ हेम॰। ३अतिविषायां (आतइच्) स्त्री।

**उपविष्ट** त्रि॰ उप+विश–कर्त्तरि क्त। कृतोपवेशने "उपविष्ट होमाः स्वाहाकारप्रदाना जुहोतयः" कात्या॰ १,२,७।

**उपवीणय** वीणया उपगायति उप+वीणा+णिच् नामधातुः सक॰ उभ॰ सेट्। उपवीणयति ते उपाविवीणत् त। उपवीणयाम् बभूव आस चकार चक्रे उपवीणितः "श्रितगोकर्णनिकेतमीश्वरम् उपवीणयितुं ययौ रवेरुदयावृत्तिपथेन नारदः" रघुः।

**उपवीत** न॰ उप+व्ये–क्त सं प्र॰। बहिर्भूतदक्षिणहस्ततया वामांसस्थापिते कार्पासादि १यज्ञसूत्रे। तच्च त्रिगुणीकृतस्य सूत्रस्य पुनस्त्रैगुण्ये भवति यथाह छन्दो॰प॰ "ऊर्द्ध्वं तु त्रिवृतं कार्य्यं तन्तुत्रयमधोवृतम्। त्रिवृतञ्चोपवीतं स्यात् तस्यैकोग्रन्थिरिष्यते"। तथा च प्रथमं ऊर्द्ध्ववर्त्तनेन सूत्रत्रयमेकीकृत्य पुनस्तथाभूतसूत्रत्रयस्याधआवर्त्तनेन नवसूत्रात्मकमेकत्र पिण्डीकृतं भवति तच्च पुनस्त्रिवृतमसंवृतरूपेण पिण्डीकृतमेकग्रन्थियुक्तमेकमुपवीतं भवति। व्यक्तमाह देवलः "यज्ञोपवीतकं कुर्य्यात् सूत्राणि नव तन्तवः" इति। एकमेव सर्व्वदा धार्य्यम् उत्तरीयवस्त्राभावे तु तत्त्रितयं धार्य्यम् "यज्ञोपवीते द्वे धार्य्ये श्रौते स्मार्त्ते च कर्मणि। तृतीयमुत्तरीयार्थं वस्त्राभावेऽतिदिश्यते" आ॰त॰ स्मृतेः। तद्ग्रन्थिश्च सावित्रीमन्त्रेण कार्य्यः 'सावित्रीग्रन्थिसंयुक्तमुपवीतं तवार्प्यत' विष्णुपूजने ब्रह्मपुराणात् "लौकिकास्तु सावित्रीग्रन्थिं प्रवरसंख्यया वैदिकग्रन्थिरित्याहुः" आ॰त॰ रघु॰ अत्र सावित्रीग्रन्थिरित्युक्तेः देवपूजादौ सावित्रीग्रन्थिः देवान्यत्र सावित्रीग्रन्थि ब्रह्मग्रन्थिर्वेति शाखाभेदाद्व्यवस्था। तत्सूत्रभेदश्च मनुना वर्णभेदेन उक्तः "कार्पासमुपवीतं स्यात् विप्रस्योर्द्धवृतं त्रिवृत्। शणसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम्"। "ऊर्द्धवृतं दक्षिणावर्त्तितम्" कुल्लू॰। इदञ्चोपनयनकाले उत्तरकाले तु सर्व्वेषामेव कार्पासमयमिति भेदः। धनिनान्तु यथेच्छसूत्रमयम् अत एव माघे "विहङ्गराजाङ्गरुहैरिवायतैर्हिरण्मयोर्वीरुहवल्लितन्तुभिः। कृतोपवीतं हिमशुभ्रमुच्चकैः" 'मुक्तायज्ञोपवीतानि बिभ्रतो हैमवल्कलाः' कुमारे च वर्णितम्।

यद्यप्युपनयनप्रकरणे उपवीतधारणं गृह्यसूत्रादौ न विहितं तथापि प्रागुक्तमनुवचने 'मेखलामजिनं दण्डमुपवीतं कमण्डलुम्। अप्सु प्राश्य विनष्टानि गृह्णीतान्यानि मन्त्रवत्" इति मनुवचने समन्त्रकधारणविधानात् 'सदोपवीतिना भाव्य

देशमात्रो वा तत्करणप्रकारः "मूलादुपवेषं करोति" का० ४,१,१२, दर्शितः "प्रथमं तूष्णीं शाखामूलमरत्निप्रमाणा- धिकप्रमाणं छित्त्वा पृथक् कार्यं ततस्तादुपवेषं क- रोति उपवेषश्चारत्निमात्रः प्रादेशमात्रो वा पराशरोक्तः" कर्कः । स च हस्ताकृतिः "धृष्टिरसीत्युपवेषमादायाग्नम् ङ्गारात् प्राचः करोति" कात्या० २,४,२६, व्या० "उप- वेषोऽङ्गारापोहनसमर्थं हस्ताकृति काष्ठम्" कर्कोक्तेः "हस्ता- दभिवासयति प्रकृतौ वेदेनोपवेषेण वा" कात्या० २,५,२५,

**उपवैणव** न० उपवेणु—अण् उत्तरपदवृद्धिः । त्रिसन्ध्ये हेम० ।

**उपव्याख्यान** न० उप+वि+आ+ख्या—ल्युट् । फलमाहात्म्यो- पासनप्रकारादिकथने । "ओमित्युद्गायति तस्योपव्या- ख्यानम्" छा० उ० "तस्याक्षरस्योपव्याख्यानम् एवमुपास- नम्, एवं विभूतिः, एवं फलमित्यादिकथनम्" शा० भा० । "आदित्यो ब्रह्मेत्यादेशस्तस्योपव्याख्यानम्" "ओमित्ये- तदक्षरं सर्वं तस्योपव्याख्यानम्" इति च छा० उ० ।

**उपव्याघ्र** पु० उपमितो व्याघ्रेण अवा० स० । १व्याघ्रतुल्ये मृगा- न्तके (चितावाघ) चित्रकाख्ये पशुभेदे । सामीप्ये अव्ययी० । २व्याघ्रसमीपे अव्य० ।

**उपव्युषस** अव्य० विगता उषाः व्युषाः प्रा० स० ततः विभक्त्यर्थे सामीप्ये वा अव्ययी० अच् समा० । विगताया उष- सोऽर्थे "उपव्युषं सशरीरा दक्षिणा गच्छन्ति" कात्या० २१,३,१२, "उषसि विगच्छन्त्याम्" कर्कः । २विगच्छन्त्या उषसः समीपे च ।

**उपशम** पु० उप+शम—घञ् अवृद्धिः । १इन्द्रियाणां निग्रहे २तृष्णानाशे, ३रोगोपद्रवशान्तौ च । "तेषां पैत्तिका- नां व्याधीनामुपशमो हेमन्ते, श्लैष्मिकाणां, निदाघे वाति- कानां घनात्यये स्वभावत एव त एते सञ्चयप्रकोपोप- शमाः" "तस्मात्तमेव कालेऽपि मूलतस्योपशमार्थम्" इति च सुश्रु० । ४निवृत्तौ "जगत्युपशमं याते नष्टयज्ञोत्- सवाकुले" भा० व० २०अ० ।

**उपशमन** न० उप+शम—भावे ल्युट् । उपशमार्थे "व्याधीना मुपशमनार्थम्" सुश्रु० । उप+शम—णिच्—ल्युट् । अवृ- द्धिः २निवारणे । तस्मै हितम् छ । उपशमनीय रोग- शान्तिहेतौ आयुर्वेदे । कर्म्मणि अनीयर् । निवारणीये । "कटुकौषधिशमनीयस्य" सा० द० ।

**उपशय** पु० उप+शी—अच् । १समीपशयने । "हेतुव्याधिविप- र्य्यस्तविपर्य्यस्तार्थकारिणाम् । औषधान्नविहाराणा मुपयोगं सुखावहम् । विद्यादुपशयं व्याधेः स हि सात्म्य- मिति स्मृतः" इति निदानोक्ते व्याधिहेतुविपरीतौषधा- दितः २सुखावहयोगे । शयः हस्तः तस्मिन् तत्सामीप्ये वा अव्ययी० । ३हस्ते इत्यर्थे ४हस्तसमीपे च अव्य० ।

**उपशरद्** अव्य० विभक्त्यर्थे सामीप्ये वा अव्ययी० अच् समा० । १शरदि इत्यर्थे २शरत्समीपे च

**उपशल्य** न० उपगतं शल्यम् अस्थिस्थानं (भागाड़) अत्या० स० । ग्रामान्ते "अन्तं च विशालोपशल्ये कमप्याक्रीडमासाद्य" दशकुमा० । "उपशल्यनिविष्टैस्तैः" "अथोपशल्ये रिपुमग्नशल्यः" रघुः । उपचारात् २प्रान्तभागे च । "शै- लोपशल्यनिपतद्रथनेमिधारा" इति माघः ।

**उपशान्ति** स्त्री उप+शम—क्तिन् । निवृत्तौ उपशमे । "मन- कार्त्तभयोपशान्तये" रघुः "वेदनोपशान्तिरसृक्प्रसादो- लाघवञ्च" सुश्रु० । ["निशोपशायः कर्त्तव्यः" भट्टिः ।

**उपशाय** पु० उप+शी—घञ् । यामिकभटानां पर्य्यायेण शयने ।

**उपशायिन्** त्रि० उप+शी—णिनि । समीपशयनशीले "ब्र- ह्मचार्य्यग्निनित्यधारी धीरहोम्यग्निमुपशायी द्वादशरात्रं पञ्चात्तं त्रिरात्रमन्ततः" कात्या० ४,१०,१६, "अग्निमुपशायी अग्निसमीप एव भूमौशयः" कर्कः । शीलार्थत्वात् नात्र कर्म्मणि षष्ठी । "आहूताध्यायी गुरुकर्म्मस्वचोद्यः पूर्व्वोत्थायी चरमं चोपशायी । मृदुर्दान्तो धृतिमानप्रमत्तः स्वाध्यायशीलः सिध्यति ब्रह्मचारी" भा० आ० ८१अ० ।

**उपशिक्षा** स्त्री उप+शिक्ष—अ । सम्यक्शिक्षणे "उपशिक्षाया अभिप्रश्निनम्" यजु० ३०,१०, ल्युट् । उपशिक्षण तत्रार्थे न० ।

**उपशिङ्घन** न० उप+शिघि—आघ्राणे ल्युट् । १आघ्राणे । णिच्-ल्युट् । २आघ्रापणव्यापारे च । (शोङ्घान) "तीक्ष्णा- ञ्जनावपीडाभ्यां तीक्ष्णगन्धोपशिङ्घनैः । वर्त्तिप्रयोगैरथ वा धमयन्तिं प्रवर्त्तयेत्" सुश्रु० । तत्र शिङ्घनैः शिंहनैरिति वा पाठः प्रामादिकः गणपाठे शिघिधातोरेव पाठात् सिंघिधातोर्दन्त्यसिंहधातोश्चाभावाच्च ।

**उपशिष्य** पु० उपगतः शिष्यम् अत्या० स० । शिष्यशिष्ये "स्वतःप्रमाणं परतःप्रमाणं शुकाङ्गना यत्र समुद्गिरन्ति । शिष्योपशिष्यैरुपगीयमानमवेहि तन्मण्डनमिश्रधाम" शङ्क० ।

**उपशुन** अव्य० शुनि, तस्य समीपे वा अव्ययी० अच् समा० । १कुक्कुर इत्यर्थे २कुक्कुरस्य सामीप्ये वा ।

**उपशोभ** स्त्री उपगता शोभां सादृश्येन अत्या० स० । आरो- पितशोभायाम् "विहितोपशोभमुपयाति माधवे" माघः ।

**उपशोषण** न० उप+शुष—णिच्—ल्युट् । १शोषणसाधने व्या- पारे । उपशोषयति कर्त्तरि ल्यु । २तत्कारके त्रि०

रैति" छा०उ० । "यद्रमते रतिश्चानुभवति इष्टादि संयोगात्तदुपसदैः समानतामेति उपसदाश्च पयोव्रतनिमित्तं सुखमल्पि अल्पभोजनीयानि याहानि आसन्नानीति प्रवासोऽशनादीनामुपसदाश्च सामान्यम्" शा०भा०। "पयोव्रतत्वं पयोभक्षणं क्षुत्तम् यस्ते याज्यहान्यभोजनीयानि तानि प्रसन्नानि उपसत्सु क्रियमाणासु प्रवासः खास्य्यविशेषः अशनादिषु सोऽस्तीति प्रसिद्धमित्यनुत्सवनिमित्तत्वं क्रियहेतुत्वञ्च सामान्यम्" आ०गि०

**उपसदन** न०उप+सद—ल्युट् । १सेवायामुपसेवने २आनुगत्यादिना प्राप्तौ "तत्रोपसदनं चक्रे द्रोणस्येन्द्रकर्मणि" भा० व० २०८ अ० 'प्रतिगृह्य च तान् सर्वान् द्रोणश्चैवं समब्रवीत् । रहस्येकः प्रतीतात्मा कृतोपसदनांस्तथा' आ० १३२अ०सामीप्ये अव्ययी०। ३स्वस्थसमीपे अव्य० । "तस्योऽश्याद्रनुगृहीतोऽस्मि यस्य मे मुनिपुङ्गव ! । यत्तोपसदनं ब्रह्मन् प्राप्तोऽसि मुनिभिः सह" रामा० । अत्राव्ययीभावस्यापि यत्नेन समासः आर्षः ।

**उपसदी** स्त्री उप+सद—घञर्थे क गौ० ङीष् । सन्ततौ धारायाम् । "समृद्धेऽस्योपसद्यां मा चर्तुषीत् प्रजाता च पशुभिश्चायितम् शत०१४,८,४,२२ । अस्य यजमानस्य उपसद्यां सन्ततौ" भा०। सन्ततिश्च द्वेधा कालिकी दैशिकी च । तत्र समानानेककालिककार्य्यमात्रधर्मत्वं कालिकसन्ततित्वम् । विभिन्नकालीनघटपटादिकार्य्यमात्रवृत्तिधर्मघटत्वादौ सन्ततित्ववारणाय समानेति सामान्यत्वाव्यवितावच्छेदकधर्मेण । तेन सत्त्वद्रव्यत्वादिना घटपटयोः सत्त्वेऽपि न क्षतिः । सत्त्वद्रव्यत्वादिकमादाय तद्वारणाय कार्य्यमात्रेति । एककालोत्पन्नेषु बहुषु घटेषु तद्वारणाय अनेककालिकेति । दैशिकसन्ततित्वञ्च समानानेकवृत्ति कार्य्यमात्रधर्मत्वमितिभेदः । तत्र कालिकसन्ततेः प्रवाहादिपदेन व्यपदेशः यथा ज्ञानप्रवाहः, दुःखप्रवाहः इत्यादि दैशिकसन्ततौ तु श्रेणिप्रभृतिशब्दव्यवहारः यथा वृक्षश्रेणी वृक्षपङ्क्तिरित्यादि । उभयसन्ततौ तु सन्ततिधारादि शब्दप्रयोगः यथा ज्ञानधारा सुखधारा दुःखसन्ततिरित्यादि एवं जलधारा तैलधारा तैलसन्ततिरित्यादि । तादृशधर्मश्च सुखत्वदुःखत्वज्ञानत्वादिकं दृष्टत्वतैलत्वादिकञ्च । उभयविधापि सन्ततिः पुनर्द्विविधा अविच्छिन्ना विच्छिन्ना च देशकालयोरव्यवधानेऽविच्छिन्ना यथा धारावाहिक स्थले ज्ञानादिधारा । तयोर्व्यवधाने विच्छिन्ना यथा विच्छिद्य विच्छिद्य जायमानदुःखानाम । विच्छिन्नसन्ततिमादायैव सुखदुःखसन्ततिरित्यादिव्यवहारः । प्रवाहः ।

**उपसद्य** त्रि०उपसदं सेवामर्हति यत् उप+सद—कर्म्मणि वा० यत् वा । १सेवनीये २नैकट्येन प्राप्ये च "भरेषु हव्यो नमसोपसद्योगन्ता" ऋ० २,२३,१२ । "उपसद्याय मीढुष आस्ये जुहुता हविः" ऋ० ७,१५,१ ।

**उपसद्वन्** त्रि० उप+सद—क्वनिप् स्त्रियां ङीप् वचान्तादेशः । १उपसत्तरि २सेवके च । कर्म्मणि क्वनिप् । ३सेव्ये च । "नमस्ते अस्तु मीढुषे नमस्त उपसद्वने" अा०श्रौ०२,५,८ ।

**उपसद्व्रत** न० उपसत्सु विहितं व्रतम् । उपसद्विहिते पयोव्रते । "आपूर्य्यमाणपक्षस्य द्वादशाहमुपसद्व्रती भूत्वा" छ०उ० । 'उपसत्सु व्रतमुपसद्व्रतमुपसदः प्रसिद्धाः ज्योतिष्टोमे । तत्र स्तनोपचयापचयद्वारेण पयोभक्षणं व्रतं तत्र च तत्कर्माङ्गपसंहारात् वीवत्सिति कर्म्मव्रतान्तरम्यं पयोभक्षणमात्रमुपादीयते । उपसद्व्रती पयोव्रती सन्नित्यर्थः शा०भा० ।

**उपसन्न** त्रि० उप+सद—क्त । १उपस्थिते, २निकटागते ३उपसेवके च ४आनुगत्येन नैकट्यमाप्ते "अधीहि भगवन्निति उपससादोऽनुशाधीह भोः" भा०शा०२८९ अ०। "भगवन्नुदधौ महतिजन्मजले सुखदुःखवहे पतितं व्यथितम् । कृपया शरणागतमुद्धर मामनुशाध्युपसन्नमनन्यगतिम्" "तस्मै स विद्वानुपसन्नाय—प्रोवाच तत्त्वतो ब्रह्मविद्याम्" श्रुतिः ।

**उपसमाधान** न० उप+सम—आ—धा—ल्युट् । राशीकरणे, "निधाननिचितशरीरोपसमाधानेत्यादि" पा०। "उपसमाधानं राशीकरणम्" सि०कौ०। २समिधः प्रक्षिप्य ज्वालने। "विवाहाग्निमुपसमाधाय पश्चादस्य" आश्व०गृ०१,८,८, "उपसमाधाय समिधः प्रक्षिप्य प्रज्वाल्य" ना०वृत्ति। "अग्निमुपसमाधाय" गो०सू० "उपसमाधाय ज्वालयित्वे ति सं तत्त्वे च समापूर्व्वधाञ्धातोस्तथार्थदर्शनात् तथार्थत्वम् ।

**उपसमिध(ध्)** अव्य०समिधः समीपे अव्ययी०वा अच्समा०। समिधः समीपे ।

**उपसम्पत्ति** स्त्री उप+सम्+पद—क्तिन् । अभिनवत्वेन सम्पत्तौ । "प्रथमोऽचिरोपसम्पत्तौ" पा० "अभिसम्पत्तौ अभिनवत्वे" सि०कौ०। सम्पत्तिशास्तुद्भावाभावः सि०कौ०

**उपसम्पन्न** त्रि०उप+सम्—पद+क्त । १प्राप्ते २मृते च हेम०। "श्रोत्रिये तूपसम्पन्ने त्रिरात्रमशुचिर्भवेत्" मनुः ।

**उपसम्भाषा** स्त्री उप+सम्+भाष—भावे अ । उपसान्त्वने । "भासनोपसंभाषाज्ञानयत्नेत्यादि" पा० "उपसम्भाषा उपसान्त्वनम्" सि०कौ० ।

उपसर पु० उप+सृ "प्रजनने सर्त्तेः" पा० अप्। गर्भग्रहणार्थं स्त्रीपशुषु पुम्पशुगमने। "प्रजननं प्रथमगर्भग्रहणम्। गवामुपसरः" सि० कौ०। उपचारात् २ नैरन्तर्य्येणनिगमने "सीतामुपसरं दृष्ट्वा" भट्टिः "सीतामुपसरं नैरन्तर्य्येण निर्गमनम् दृष्ट्वा उपसर इव उपसरः नैरन्तर्य्यमात्रेणोपलक्षितत्वात् उपसरो हि स्त्रीगवीषु पुङ्गवानामभिगमनमुच्यते स च नैरन्तर्य्येण भवति" जय मङ्गलः।

उपसरण न० उप+सृ–ल्युट्। १उपसरार्थे २समीपगमने च। "यस्तूर्भयो वा भेषजवेगं प्रहतमप्रत्याहितनिघ्नन्ति तस्योपसरणं कुर्वन्ति दोषाः" "परिस्रावः प्रवाहिका हृदयोपसरणं विबन्धः" सुश्रु० कर्मणि ल्युट्। २उपसर्त्तव्ये उपगम्ये च। "अथ सत्यायोः सर्वोऽहितोपसरणानीत्युपाहीत" छा० उ०। "उपसरणानि उपसर्त्तव्यानि उपगन्तव्यानि ज्ञेयानि" भा०।

उपसर्ग पु० उप+सृज–घञ्। १रोगविकारे २उपद्रवे, शुभाशुभसूचके ३दिव्यादिविकाररूपे उत्पाते, व्याकरणोक्तेषु "निपाताश्चादयोऽत्रेयाः प्रादयस्तूपसर्गकाः। द्योतकत्वात् क्रियायोगे लोकादवगता इमे" इत्युक्तलक्षणेषु क्रियायोगे ४प्रादिषु च। "उपसर्गाः क्रियायोगे" पा०। "यत्र प्रादीनामन्वयस्तं प्रत्येवोपसर्गतेतिद्योतनाय योगग्रहणम्। तेन निर्गतः सेचको यस्मादिति वाक्ये निःसेचक इत्यादौ न षत्वम्" मनोरमा०। ते च द्वाविंशतिविधा यथा, प्र, परा अप, सम्, अनु, अव, निस्, निर् दुस्, दुर्, वि, आङ्, नि, अधि, अपि, अति, सु, उत्, अभि, प्रति, परि, उप एते प्रादयः। निस् दुस् इति सान्तौ "निसस्तपतावनासेवने" पा० सूत्रे निस इति निर्देशात्। निष्कृतं दुष्कृतमित्युदाहृत्य इदुदुपधस्य रो विसर्जनीयः" इति भाष्योक्तेश्च 'निरःकुष इति" "इदुदोरधिकरणे" इति च पा० निर्देशात् रान्तावपि" मनो०। निर्दुरोरभेदारोपेण क्वचिद्विंशतिवाचनं द्रष्टव्यम्। "तत्र त्रिधा प्रवृत्तिः "धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्त्तते। तमेव विशिनष्ट्यन्य उपसर्गगतिस्त्रिधा। क्रमेणोदाहरणानि यथा। आदत्ते प्रसूते प्रणमतीति। अपि च। "उपसर्गेण धात्वर्थो बलादन्यत्र नीयते। प्रहाराहारसंहारविहारपरिहारवत्"। "विभाषोपसर्गे" "द्व्यन्तरुपसर्गेभ्योऽप ईत्"पा०।

प्रादयस्तूपसर्गा न सार्थकाः, सार्थकाश्चादयो निपाता वाचकत्वात् उपसर्गास्तु न तथा किन्तु द्योतका इति नैयायिकाः। वैयाकरणास्तु उभयेऽपि द्योतका इति मेनिरे तदेतत् वै० भू० दर्शितम् "प्रादयो द्योतकाश्चादयो वाचका इति नैयायिकमतमयुक्तम् वैषम्ये बीजाभावादिति भ्रमवन्निपातानां द्योतकत्वं समर्थयते। 'द्योतकाः प्रादयो येन निपाताश्चादयस्तथा। उपास्येते हरिहरौ लकारो दृश्यते यथा" येन हेतुना प्रादयो द्योतकास्तेनैव हेतुना चादयो निपातास्तथा द्योतका इत्यर्थः। अयं भावः। ईश्वरमनुभवतीत्यादावनुभवादिः प्रतीयमानो न धात्वर्थः भवतीत्यत्रापि तत्प्रत्ययापत्तेः। नोपसर्गार्थः तथा सत्यप्रकृत्यर्थतया तत्राख्यातार्थानन्वयापत्तेः प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः अनुगच्छतीत्यादौ अनुभवादिप्रत्ययापत्तेश्च। न विशिष्टार्थः गौरवात्। तथा च धातोरेव विद्यमानत्वादिवाचकस्य तथा उपसर्गस्तात्पर्यग्राहक इत्यस्तु। तथा च तात्पर्यग्राहकत्वमेव द्योतकत्वमिति। तत्र चादिष्वपि तुल्यम् चैत्रमिव पश्यतीत्यादौ सादृश्यविशिष्टं चैत्रपदलक्ष्यम् इवशब्दस्तात्पर्यग्राहक इत्यस्य सुवचत्वादिति। अथ युक्त्यन्तरमाह। उपास्येते इति। अत्र ह्युपासना किमुपसर्गार्थः? विशिष्टस्य? धातुमात्रस्य? वा। नाद्यः तथा सति स्वार्थफलव्यधिकरणव्यापारवाचकत्वरूपसकर्मकत्वस्याऽऽसधातोरुपासनारूपफलवाचकत्वेनाभावादकर्मकत्वापत्तेस्ततः कर्मणि लकारो न स्यात्। न द्वितीयः गौरवात्। तृतीये त्वागतं द्योतकत्वं तात्पर्यग्राहकत्वस्याभावात् इति भावः। दृश्यते इत्यत्र कर्मणीति शेषः। तच्चादिष्वपि तुल्यमित्याह। "तथाप्यत्र निपातेऽपि लकारः कर्मवाचकः। विशेषणाद्ययोगोऽपि प्रादिवच्चादिके समः"। (अन्यत्र) साक्षात्क्रियते अलङ्क्रियते उरीक्रियते शिव इत्यादौ। अत्रापि धातोस्तदर्थे कर्मणि लकारसिद्धये तत्तदर्थवाचकत्वं वाच्यमित्युपसर्गशब्देनातत्वसमीचीनमपीत्यर्थः। यद्यपि कृधातोः सकर्मकत्वमस्त्येव तथाप्येतदर्थेषु सकर्मकता न स्यात्। अन्यथा चायुर्विकुरुते सैन्धवा विकुर्वत इत्यत्रापि स्यादिति भावः। अथोपासनासाक्षात्कारादि निपातार्थोऽस्तु "साक्षात्प्रत्यक्षतुल्ययोरिति" कोषस्मरणात् तदनुकूलो व्यापार एव धात्वर्थोऽस्तु स्वसमुक्तनिपातान्यतरार्थफलव्यधिकरणव्यापारवत्त्वं सकर्मकत्वमपि सुवचमिति दृष्टान्तदार्ष्टान्तिकावयुक्ताविति नेदं बाधकमिति चेन्न नामार्थधात्वर्थयोर्भेदेन साक्षादन्वयासम्भवेन निपातधात्वर्थयोरन्वयासम्भवात्। अन्यथा तण्डुलः पचतीत्यत्रापि कर्मतया तण्डुलानां धात्वर्थेऽन्वयापत्तेरिति। किञ्च प्रादीनां वाचकत्वे भूयान् प्रपञ्चः कोऽयोनिषय इतिक्रु-

स्यात् प्र. वीरयोर्निरर्थेऽपि स्यात् । अथ कथं प्रादेरनर्थ-
कत्वात् तद्भिन्न इत्यत एव द्योतकता तेषां स्यादिति ।
वाचकान्तरमभिप्रेत्याह । विशेषणेति । शोभनः घटश्च
नीलघटश्च इति यथा शोभनश्च दृष्टश्च इत्यस्यान्वयापत्तेरनुभव-
बाधेतरत्वादिति भावः। अपि च निपातानां वाचकत्वे प्राति-
पदिकार्थयोर्विना षष्ठ्यादिकं भेदेनान्वयाभावः । अन्यथा
राजा पुरुष इत्यस्य राजसम्बन्धी पुरुष इत्यर्थापत्तेरित्य-
भिप्रेत्याह स्याद्वेति । घटपटादिरयोः घटश्च इति घटस्य
च आदिरस्य चेत्येव स्यादिति भावः । ननु प्रातिपदिकार्थ-
योरभेदान्वयबोधे विभक्तिजन्योपस्थितिर्हेतुरिति कार्य-
कारणभावो निपातातिरिक्तविषय एवेति नोक्तदोष इत्या-
शङ्क्याह। "पदार्थः सदृशान्वेति विभागेन कदाचन। नि-
पातैतरसङ्कोचे प्रमाणं किं विभावय" । (सदृशा) सदृशेन
समानाधिकरणेनेति यावत् । (अन्वेति) अभेदेनेति शेषः ।
(विभागेन) असदृशेन असमानाधिकरणेनेति यावत् ।
अयमर्थः समानाधिकरणप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्ति
र्निपातातिरिक्तविषयेति कल्पने मानाभावो गौरवञ्च । अ-
स्माकं निपातानां द्योतकत्वाद्भिन्न एव नास्तीति नायं
दोषः अतएव घटोनास्तीत्यादौ घटपदं तत्प्रतियोगिके
लाक्षणिकमिति नैयायिकाः। अपि च निपातानां वाचकत्वे
आख्यातार्थान्वयो न स्यादिति बाधकान्तरमाह । "शरैरुस्रै-
रिवोदीच्यान् उद्धरिष्यन् रसानिव । इत्यादावन्वयो न
स्याद्वाच्यत्वं ततः" । अस्यार्थः शरैः उस्रैरिवो-
दीच्यानुद्धरिष्यन्नित्यर्थः । अत्र चौरादिपदार्थानां त-
त्सादृश्यत्वे इवशब्दस्य द्योतकत्वे च सङ्गच्छते । अन्यथा
प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तिविरोधः ।
तथाहि । उस्रैरिति करणे तृतीया । न चोस्रोऽन्य-
करणम् इवार्थस्य करणत्वेऽपि तस्य करणत्वं नानेन
बोधयितुं शक्यम् अप्रकृत्यर्थत्वात् । इवशब्दस्य वाच-
कत्वार्थकतया तदुत्तरतृतीयाया अप्रसङ्गात् । सम्भवे वा
स्वतन्त्रपदत्वात् । उपपदोत्तरतृतीयानन्वयप्रसङ्गाच्चेत्याह ।
रसानु चेति । रसानुवतस्येत्यर्थः । अकारादुत्तरपदोत्तर-
तृतीयानान्वयः घटश्चोच्यते इत्यादाविवादिपदात् "वाग-
र्थाविव सम्पृक्तौ वन्दे पार्वतीपरमेश्वरौ" इत्यत्र वागर्थयो-
र्नित्यकर्मत्वाभावात्तदुत्तरद्वितीयाया अनन्वयः इवार्थस्य
कर्मत्वान्वयबोधासम्भवश्च संगृह्यते । यदि च विशेषण-
विभक्तिरभेदार्था साधुत्वमात्रार्था वा तदापि इवशब्दस्य
वाचकत्वेऽनन्वय एव उसस्तदुपराणां समानाधिकरणपदो-
पस्थाप्यतया भेदेनान्वयायोगात् । नाम्नाऽभेदेनापि न
च । नञ्सामिवयत्राभिन्नः पर इत्यर्थ उदयः" ।

उत्पातरूप उपसर्गस्य त्रिविधः "अन्तरीक्षभौमदिव्याद्या
नास्तिक्याद्याऽप्यधर्मतः । नरापचारान्नियतमुपसर्गः प्रवर्त्तते ।
अतोऽपचारान्नियतमपवर्ज्जन्ति देवताः । ताः सृजन्त्यद्भुतां-
स्तावद्विविधानाम्भूमिजान् । तएव त्रिविधा लोके उत्-
पाता देवनिर्मिताः । विचरन्ति विनाशाय रूपैः सम्भा-
वयन्ति च" गर्गः । "उपसर्गकृते चैव सद्यः शौचं विधी-
यते" पराश० । उपद्रवरोगकृतास्त्वोपसर्गाः सुश्रु० उक्ताः "दैव-
बलप्रवृत्ता ये देवद्रोहादभिशस्तका अथर्व्वकृता उपसर्गकृता-
श्च तेऽपि द्विविधा विद्युदशनिकृताः पिशाचादिकृताश्च पुनश्च
द्विविधाः संसर्गजा आकस्मिकाश्च" "उपसर्गादयोरोगा
ये चाप्यागन्तवः स्मृताः" "चौर्यं कृत्याश्चोपसर्गाः प्रसूताः"
सुश्रुतः उपद्रवशब्दे विवृतिः । "उपसर्गानयोऽसौ मह्ला-
कारोपलक्षणात् । तथा त्रिविधमुत्पातं कारणं च
गच्छेथान" देवीभा० । तच्च प्रभवति यत्नापा० तेन
निर्वृत्तम् वा ठञ् । औपसर्गिक तत्र पर्याप्ते तेन निर्वृ-
त्ते च त्रि० । औपसर्गिकाल्लन्तमरकपीड़ायाम् सुश्रु०।

**उपसर्ज्जन** त्रि० उप+सृज–ल्युट् । १दैवाद्युपद्रवे "निषीते
भूनिपतने ज्योतिषाञ्चोपसर्ज्जने" मनुः। २अप्रधाने गौणे-
विशेषणे "गोपसर्ज्जनस्य" 'गोस्त्रियोरुपसर्ज्जनस्य' पा०।
"उपसर्ज्जनं प्रधानस्य धर्मतो नोपपद्यते" मनुः "उप-
सर्ज्जनमप्रधानम्" कुल्लू० । "अनुपसर्ज्जनात्" "आपा-
र्थोपसर्ज्जनत्वान्तेवासी" पा० उपसृज्यतेऽनेन करणे ल्युट् ।
३संमार्गसाधने त्रि० स्त्रियां ङीप् । "अथैत उपसर्ज्जनी-
भिरेभिः" शत० १,२,२,२, "पिष्टसमार्जनार्थाश्च अप
पिष्टसमार्ज्जनार्थत्वोपसर्ज्जनं साधनानि उपसर्जन्यः" भा०
"प्रथमानिर्दिष्टमुपसर्ज्जनम्" पा० उक्ते । समासविधायकशा-
स्त्रे ४प्रथमान्तपदनिर्दिष्टे । "एकविभक्ति चापूर्वनिपाते"
विग्रहवाक्ये नियतविभक्तिकं तदुपसर्जनसंज्ञम् इत्युक्तेः
पाणिनिसूत्रोक्ते ५शब्दभेदे च 'उपसर्ज्जनं पूर्व्वम्' पा०
समासे उपसर्ज्जनस्य पूर्व्वप्रयोगः यथा "द्वितीया श्रिते-
त्यादि" पा० सूत्रे द्वितीयेति प्रथमान्तम् पदं तदेव प्राक्
प्रयोज्यम् यथा कष्टं श्रित इत्यादि वाक्ये कष्टश्रित इत्यादि

**उपसर्पण** न० उप+सृप–भावे ल्युट् । समीपगमने "न ताव-
दयमुपसर्पणकालः" विक्र० । "कथितोपसर्पणमात्रक-
मित्यादि" कुमा० ।

**उपसर्पिन्** त्रि० उप+सृप–गतौ णिनि । समीपगन्तरि

"एकमेव दहत्यग्निर्नरं दुरुपसर्पिणम्" मनुः। "युक्तं मात्रा कृतं तेषां परपीड़ोपसर्पिणाम्" भा॰आ॰२०अ॰।

**उपसर्य्या** स्त्री उपसर्य्यतेऽसौ उप+सृ-कर्मणि यत्। गर्भग्रहणयोग्यायाम् ऋतुमत्यां स्त्रीगव्यादौ। अप्रजनार्थे तु ण्यत् उपसार्य्य प्राप्ये त्रि॰।

**उपसि** अव्य॰ उप+सो बा॰ कि। समीपस्थाने "आसीन ऊर्द्ध्वामुपसि क्षिणाति" ऋ॰१०,२७,२। "उपसि समीपस्थाने" भा॰ "पि मे युव उपसि प्रेवः" ऋ॰५,४२,७।

**उपसीर** अव्य॰ सीरे हले तत्सामीप्यं वा अव्य॰। १हले इत्यर्थे २हलसमीपे वा। ततो भवार्थे परिमुखा॰ ञ्य। औपसीर्य्य तद्भवे त्रि॰ आश्व॰श्रौ॰। हलोपगते त्रि॰ ततोभवार्थेऽचेव। औपसीर तद्भवे त्रि॰

**उपसुन्द** पु॰ दैत्यभेदे तत्कथा भा॰आ॰ "महासुरस्यान्वाये हिरण्यकशिपोः पुरा। निकुम्भो नाम दैत्येन्द्रस्तेजस्वी बलवानभूत्। तस्य पुत्रौ महावीर्य्यौ जातौ भीमपराक्रमौ। सुन्दोपसुन्दौ दैत्येन्द्रौ दारुणौ क्रूरमानसौ। तावेकनिश्चयौ दैत्यावेककार्य्यार्थसम्मतौ। निरन्तरम् वर्त्तां समदुःखसुखावुभौ। विनान्योन्यं न भुञ्जाते विनान्योन्यं न गच्छतः। अन्योन्यस्य प्रियकरावन्योन्यस्य प्रियंवदौ। एकशीलसमाचारौ द्विधैवैकं यथा कृतौ। तौ विवृद्धौ महावीर्य्यौ कार्य्येष्वप्येकनिश्चयौ। त्रैलोक्यविजयार्थाय समाधायैकनिश्चयम्। दीक्षां कृत्वा गतौ विन्ध्यं तावुग्रं तेपतुस्तपः। तौ तु दीर्घेण कालेन तपोयुक्तौ बभूवतुः। क्षुत्पिपासापरिश्रान्तौ जटावल्कलधारिणौ। मलोपचितसर्वाङ्गौ वायुभक्षौ बभूवतुः। आत्ममांसानि जुह्वन्तौ पादाङ्गुष्ठाग्रधिष्ठितौ। ऊर्द्ध्वबाहू चानिमिषौ दीर्घकालं धृतव्रतौ। तयोस्तपःप्रभावेण दीर्घकालं प्रतापितः। धूमं प्रमुमुचे विन्ध्यस्तदद्भुतमिवाभवत्। ततो देवा भयं जग्मुरुग्रं दृष्ट्वा तयोस्तपः। तपोविघातार्थमथो देवा विघ्नानि चक्रिरे। रत्नैः प्रलोभयामासुः स्त्रीभिश्चोभौ पुनः पुनः। न च तौ चक्रतुर्भङ्गं व्रतस्य सुमहाव्रतौ। अथ मायां पुनर्देवास्तयोश्चक्रुर्महात्मनोः। भगिन्यो मातरो भार्य्यास्तयोश्चात्मजनस्तथा। प्रपात्यमाना वित्रस्ताः शूलहस्तेन रक्षसा। स्रस्ताभरणकेशान्ता स्रस्ताभरणवाससः। अभिभाष्य ततः सर्व्वास्त्राहीति विचुक्रुशुः। न च तौ चक्रतुर्भङ्गं व्रतस्य सुमहाव्रतौ। यदा क्षोभं नोपयाति नार्त्तिमन्यतरस्तयोः। ततः स्त्रियस्ता भूतञ्च सर्व्वमन्तरधीयत। ततः पितामहः साक्षादभिगम्य महासुरौ। वरेणच्छन्दयामास सर्व्वलोकहितः प्रभुः। ततः सुन्दोपसुन्दौ तौ भ्रातरौ दृढ़विक्रमौ। दृष्ट्वा पितामहं देवं तस्थतुः प्राञ्जली तदा। ऊचतुश्च प्रभुं देवं ततस्तौ सहितौ तदा। आवयोस्तपसाऽनेन यदि प्रीतः पितामहः। मायाविदावस्त्रविदौ बलिनौ कामरूपिणौ। उभावप्यमरौ स्याव प्रसन्नो यदि नौ प्रभुः। ब्रह्मोवाच। ऋतेऽमरत्वं युवयोः सर्व्वमुक्तं भविष्यति। अन्यद्वृणीतं मृत्योश्च विधानममरैः समम्। प्रभविष्याव इति यन्महदभ्युद्यतं तपः। युवयोर्हेतुनानेन नामरत्वं विधीयते। त्रैलोक्यविजयार्थाय भवद्भ्यामास्थितं तपः। हेतुनानेन दैत्येन्द्रौ न वां कामं करोम्यहम्। सुन्दोपसुन्दावूचतुः। त्रिषु लोकेषु यद्भूतं किञ्चित् स्थावरजङ्गमम्। सर्व्वस्मान्नौ भयं न स्यादृतेऽन्योन्यं पितामह!। पितामह उवाच। यत्प्रार्थितं यथोक्तञ्च काममेतद्ददानि वाम्। मृत्योर्विधानमेतच्च यथावद्वां भविष्यति। नारद उवाच। ततः पितामहो दत्त्वा वरमेतत्तदा तयोः। निवर्त्त्य तपसस्तौ च ब्रह्मलोकं जगाम ह। लब्ध्वा वराणि दैत्येन्द्रावथ तौ भ्रातरावुभौ। अवध्यौ सर्व्वलोकस्य स्वमेव भवनं गतौ" २११अ॰ "तावत्तरोत्थमुत्सृज्य दैत्यौ कामगमावुभौ। देवानामेव भवनं जग्मतुर्युद्धदुर्म्मदौ। तयोरागमनं ज्ञात्वा वरदानञ्च तत् प्रभोः। हित्वा त्रिविष्टपं जग्मुर्ब्रह्मलोकं ततः सुराः। ताविन्द्रलोकं निर्जित्य यक्षरक्षोगणांस्तथा। खेचराण्यपि भूतानि जग्मतुस्तीव्रविक्रमौ। अन्तर्भूमिगतान् नागान् जित्वा तौ च महारथौ। समुद्रवासिनीः सर्व्वा म्लेच्छजातीर्विजिग्यतुः। ततः सर्व्वां महीं जेतुमारब्धावुग्रशासनौ। सैनिकांश्च समाहूय सुतीक्ष्णं वाक्यमूचतुः। राजर्षयो महायज्ञैर्हव्यकव्यैर्द्विजातयः। तेजो बलञ्च देवानां वर्द्धयन्ति श्रियं तथा। तेषामेवं प्रवृत्तानां सर्व्वेषामसुरद्विषाम्। सम्भूय सर्व्वैरस्माभिः कार्य्यः सर्व्वात्मना वधः। एवं सर्व्वान् समादिश्य पूर्व्वतीरे महोदधेः। क्रूरां मतिं समास्थाय जग्मतुः सर्व्वतोमुखौ। यज्ञैर्यजन्ति ये केचिद्याजयन्ति च ये द्विजाः। तान् सर्व्वान् प्रसभं हत्वा बलिनौ जग्मतुस्ततः। आश्रमेष्वग्निहोत्राणि ऋषीणां भावितात्मनाम्। गृहीत्वा प्रक्षिपन्त्यप्सु विश्रब्धं सैनिकास्तयोः। तपोधनैश्च ये क्रुद्धैः शापा उक्ता महात्मभिः। नाक्रामन्त तयोस्तेऽपि वरदाननिराकृताः। नाक्रामन्त यदा शापा बाणा मुक्ताः शिलास्विव। नियमान् सम्परित्यज्य व्यद्रवन्त द्विजातयः। पृथिव्यां ये

तपःस्थिता दान्ताः यज्ञपरायणाः । तयोर्भयाद्दुद्रुवुस्ते वैनतेयादिवोरगाः । मथितैराश्रमैर्भग्नैर्विकीर्णकलशस्रुवैः । शून्यमासीत् जगत् सर्वं कालेनेव हतं तदा । ततो राजन्नदृश्यद्भिर्ऋषिभिश्च महासुरौ । उभौ विनिश्चयं कृत्वा विकुर्वाते वधैषिणौ । प्रभिन्नकरटौ मत्तौ भूत्वा कुञ्जररूपिणौ । संलीनानपि दुर्गेषु निन्यतुर्यमसादनम् । सिंहौ भूत्वा पुनर्व्याघ्रौ पुनश्चान्तर्हितावुभौ । तैस्तैरुपायैस्तौ क्रूरावृषीन् दृष्ट्वा निजघ्नतुः । निवृत्तयज्ञस्वाध्याया प्रनष्टनृपतिद्विजा । उत्सन्नोत्सवयज्ञा च बभूव वसुधा तदा । हाहाभूता भयार्त्ता च निवृत्तविपणापणा । निवृत्तदेवकार्य्या च पुण्योद्वाहविवर्जिता । निवृत्तकृषिगोरक्षा विध्वस्तनगराश्रमा । अस्थिकङ्कालसङ्कीर्णा भूर्बभूवोग्रदर्शना । निवृत्तपितृकार्य्यञ्च निर्वषट्कारमङ्गलम् । जगत् प्रतिभयाकारं दुष्प्रेक्ष्यमभवत्तदा । चन्द्रादित्यौ ग्रहास्तारा नक्षत्राणि दिवौकसः । जग्मुर्विषादं तत् कर्म दृष्ट्वा सुन्दोपसुन्दयोः । एवं सर्वा दिशो दैत्यौ जित्वा क्रूरेण कर्मणा । निःसपत्नौ कुरुक्षेत्रे निवेशमभिचक्रतुः" २११अ० । तत तिलोत्तमासृष्टिमुपवर्ण्य तस्यास्तत्समीपगमनं तयोस्तदासक्तत्वमुक्त्वा तत्कृतोऽन्योन्ययुद्धे नान्योन्यवधः २१२अ०उक्तः यथा "ततस्तिलोत्तमा तत्र वने पुष्पाणि चिन्वती । वेषमाक्षिप्तमाधाय रक्तेनैकेन वाससा । नदीतीरेषु जातान् सा कर्णिकारान् प्रचिन्वती । शनैर्जगाम तं देशं यत्रास्तां तौ महासुरौ । तौ तु पीत्वा परं पानं मदरक्तान्तलोचनौ । दृष्ट्वैव तां वरारोहां व्यथितौ सम्बभूवतुः । तावुत्पत्यासनं हित्वा जग्मतुर्यत्र सा स्थिता । उभौ च कामसम्मत्तावुभौ प्रार्थयतश्च ताम् । दक्षिणे तां करे सुभ्रूं सुन्दो जग्राह पाणिना । उपसुन्दोऽपि जग्राह वामे पाणौ तिलोत्तमाम् । वरप्रदानमत्तौ तावौरसेन बलेन च । धनरत्नमदाभ्याञ्च सुरापानमदेन च । सर्वैरेतैर्मदैर्मत्तावन्योन्यं भ्रुकुटीकृतौ । मदकामसमाविष्टौ परस्परमथोचतुः । मम भार्य्या तव गुरुरिति सुन्दोऽभ्यभाषत । मम भार्य्या तव वधूरुपसुन्दोऽभ्यभाषत । नैषा तव ममैषेति ततस्तौ मन्युराविशत् । तस्या रूपेण संमत्तौ विगतस्नेहसौहृदौ । तस्या हेतोर्गदे भीमे संगृह्णीतामुभौ तदा । प्रगृह्य च गदे भीमे तस्यां तौ काममोहितौ । अहंपूर्वमहंपूर्वमित्यन्योन्यं निजघ्नतुः । तौ गदाभिहतौ भीमौ पेततुर्धरणीतले । रुधिरेणावलिप्ताङ्गौ द्वाविवार्कौ नभश्च्युतौ" । सुन्दोपसुन्दशब्दः ।

उपसूर्य्यक न० उपगतं सूर्य्यं चन्द्रं वा संज्ञायां कन् । चन्द्रार्कसमीपे मण्डलाकारे परिधौ ।

उपसृष्ट न० उप+सृज–क्त । १मैथुने । २व्याकरणोक्ते प्राद्युपसर्गयुक्ते, "क्रुधद्रुहोरुपसृष्टयोः" पा० । ३विसृष्टे ४उपद्रुते च त्रि० । ५राहुग्रस्ते चन्द्रेऽर्के पु० "नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन । नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम्" मनुः ६बाधिते "उपसृष्टा इव क्षुद्राधिष्ठितभवना" काद० । ७व्याप्ते च "रोगोपसृष्टतनुदुर्वसतिं मुमुक्षुः" रघुः । [करणे ।

उपसेक पु० उप+सिच–भावे घञ् । जलादिसेचनेन आर्द्री

उपसेचन त्रि० उप+सिच–ल्यु । उपसेककर्त्तरि "तस्य कोशास उपसेचनासः" ऋ०७,१०१,४, ऋच् । उपसेक्तृतदर्थे त्रि० "कोशेभ्य उपसेक्तारमवकाल्ये" यजु०३०,१२, स्त्रियां ङीप् । भावे ल्युट् ।२उपसेके न० "दुहन्त्यूधरुपसेचनाय कम्" ऋ०१०,७६,७, "पर्य्यूह्य पाद्योपसेचनात् क्षत्रं" कात्या०८,५,२६, वा० कर्त्तरि ल्युट् । ३उपसेचके त्रि० स्त्रियां ङीप् "वेति त्वामुपसेचनी" ऋ०१०,२१,२, उपसेचनी उपरिक्षरणशीला आहुतिः भा० । करणे ल्युट् । ४तत्साधने

उपसेवक त्रि० उप+सेव–ण्वुल् । उपभोगादिना १सेवनासक्ते २भोगप्रसक्ते । "अदत्तादाननिरतः परदारोपसेवकः" याज्ञ० ३उपेत्य सेवके च ।

उपसेवन न० उप+सेव–भावे ल्युट् । १उपभोगप्रसक्तौ । "नहीदृशमनायुष्यं लोके किञ्चन विद्यते । यादृशं पुरुषस्येह परदारोपसेवनम्" मनुः २समीपस्थित्वा सेवने च । "निरताहं सदा सत्ये ! भर्त्तॄणामुपसेवने" भा०व०२१२ अ० ३तत्तत्कर्म्मणि अनुष्ठानरते "अजीर्णाध्यशनाच्चाविरुद्धान्नोपसेवनात्" "एवंविधानां द्रव्याणामत्यर्थं चोपसेवनात्" सुश्रु० भावे अ उपसेवा । तत्रैवार्थे स्त्री । "गोभिरश्वैश्च यानैश्च अप्सा राजोपसेवया" । "परदारोपसेवा च शारीरं त्रिविधं स्मृतम्" "विषयोपसेवा चाऽजस्रम्" मनुः ।

उपसेविन् त्रि० उप+सेव–णिनि । उपसेवके "अभिवादनशीलस्य नित्यं वृद्धोपसेविनः । तेषां सततयत्नानां विषयांस्तूपसेविनाम्" मनुः । "ये हितं पाक्यतन्त्रञ्च विपरीतोपसेविनः" सुश्रु० । "कृष्णाक्षा पुलिनयनान्तरोपसेवी" सुश्रु० स्त्रियां ङीप् ।

उपसोम पु० उपगतः सोमम् अत्या०स० । सोमोपगते सोमयाजिनि । अत्र तत्पुरुषत्वात् ह्रस्वत्वाभावादन्तोदा-

त्तता । उपगतः सीमोऽनेन प्रा० स० । तत्रार्थे सामीप्ये अव्ययी० । २सीमसामीप्ये अव्य० एतयोर्नान्तोदात्ततेति भेदः

**उपस्कर** पु० उप+कृ-भावे अप् हिंसने सुट् । १हिंसने उपस्करोति उप+कृ-अच् भूषणे समवाये प्रतियत्ने विकारे अध्याहारे च सुट् । २भूषके कटककुण्डलादौ ३समुदिते संहते । ४व्यञ्जनसंस्कारकपिष्टधन्याकादिद्रव्ये (बाटना) । गृहसंस्कारके ५सम्मार्ज्जन्यादौ । ६विकृते अध्याहारेण ७कथके च "पञ्च सूना गृहस्थस्य चुल्ली पेषण्युपस्करः" । "वध्यो भवति हुत्वाग्निं गृहकारी ह्युपस्करम्" मनुः ।

**उपस्करण** न० उप+कृ-भावे ल्युट् हिंसने सुट् । १हिंसने । उप+कृ-भावे ल्युट् उपस्कारशब्दोक्तभूषणादौ सुट् । २भूषणे ३संघाते ४सतोगुणान्तराधानरूपसंस्कारे ५विकारे ६वाक्याध्याहारे च । उभाभ्यां करणे ल्युट् । उक्तसदर्थेषु सुट् । ७हिंसासाधने ८भूषणादिसाधने कटकादौ च न० ।

**उपस्कार** पु० उप+कृ-भावे घञ् उपस्करशब्दोक्त भूषणादौ सुट् । १भूषणे २संहृते ३प्रतियत्नरूपसंस्कारे ४विकारे ५अध्याहारे च । "शाकाङ्कमनुपस्कारं विषृगगति निराकुलम्" किरा० ।

**उपस्कीर्ण** त्रि० उप+कृ-क्त हिंसने सुट् । हिंसिते

**उपस्कृत** त्रि० उप+कृ-क्त उपस्कारशब्दोक्तभूषणादौ सुट् । १भूषिते २संहते ३संघाते ४विकृते ५अध्याहृते च । भावे क्तिन् उक्तार्थेषु सुट् । उपस्कृति उपस्कारशब्दार्थे स्त्री । उप+कृ-भावे क्तिन् हिंसने सुट् । उपस्कीर्णि हिंसने स्त्री ।

**उप(ष्ट)स्तम्भ** पु० उप+स्तम्भ घञ् । पतनप्रतिरोधने अवलम्बने "भूमिकस्योपस(ष्ट)म्भे केनापि कारणेनात्र भवितव्यम्" हितो० । नि० षत्वम् । उपष्टम्भ १उपस्तम्भशब्दार्थे २आलम्बने ३स्थितौ ४सहकारे च "स्थानात् बीजादुपष्टम्भात् प्रस्यन्दात् निधनादपि" पात० भा० गाथा । भावे ल्युट् । उपस्तम्भन तत्रार्थे न० । करणे ल्युट् । तत्साधने शकटाद्याधारकाष्ठे च "यदुपस्तम्भनमसीत्युपस्तम्भनेनोपस्तभ्नाति" शत० ब्रा० १,१,४,२५, "उपस्तभ्यते प्रतिरुध्यते इत्युपस्तम्भनं शकटाद्याधारकाष्ठम्" भा० "देवानामित्युपस्तम्भनस्य पठादीनाम्" कात्या० २,१,१४, "शकटस्य काष्ठमीषा तदग्रस्य भूमिस्पर्शो मा भूदिति तदाधारत्वेन स्थापितं काष्ठमुपस्तम्भनम्" वेददी० । ततो स्तु । उपस्त(ष्ट)म्भक

वा नि० षत्वम् । उपस्त(ष्ट)म्भक त्रि आधिक्याधायके त्रि० ।

**उपस्तरण** न० उप+स्तृ-ल्युट् । १आस्तरणे (बिछान) २भूमेः समकरणे च । "पुनर्नवोत्कृष्टलेपनोपस्तरणैः" आ० गृ० २, २.आधारे ल्युट् । १आस्तरणाधारे "अमृतोपस्तरणमसि" भोजनस्यादौ जलपानमन्त्रः 'अथाचमनीयमापामति अमृतोपस्तरणमसीति" आ० गृ० १,२४,११, । "स्तरणमाच्छादनम् उपस्तरणं भूमेः समीकरणम्" ना० वृत्तिः

**उपस्ति** पु० उप+स्त्यै-इन् नि० । वृते । "उपस्तिरस्तु सोऽस्माकम्" यजु० १२,१०१, "उपास्यावन्ति उपकारायोपद्रव निराकरणाय च समीपे संहताभिरत्नीत्युपस्तयः वृत्ताः वेददी० ।

**उपस्तिर्** त्रि० उप+स्तृ-कर्म्मणि क्विप् । आस्तीर्यमाणे आस्तरणीये । "अभि शुक्रमुपस्तिरम्" ऋ० ९,६२,२८,

**उपस्तुत** त्रि० उप+स्तु-क्त । समीपस्तुते अनवयोग्यस्तवेन स्तुते "चोदद्राध उपस्तुतश्चिदर्वाक्" ऋ० ३,२७,२, "त्वं त्वमुहयथा उपस्तुतः पूर्व्वेभिरिन्द्र" ऋ० १०,९६,५ ।

**उपस्तुति** स्त्री उप+स्तु-क्तिन् । समीपस्तवे अनवयोग्यस्तुतिवाक्ये 'कर्मोपस्तुतिं भरमाणस्य' ऋ० १,१४८,२,

**उपस्तुत्य** त्रि० उप+स्तु-क्यप् । समीपे स्तवनीये । "उपस्तुत्यं महिजातं ते अर्व्वन्" ऋ० १,१६३,१,

**उपस्थ** पु० न० अर्द्धर्चादि । उप+स्था-क । १स्त्रीपुंसयोरिन्द्रियविशेषे तत्र पुमिन्द्रिये "स्थानमौनोपवासेज्यास्वाध्यायोपस्थनिग्रहाः" याज्ञ० । स्त्रीन्द्रिये "दक्षिणेन पाणिना उपस्थमभिमृशेत् विष्णुर्योनिं कल्पयत्वित्येतयर्चा" गोभि० । "यितिष्ठन्तां मातरश्चा उपस्थानानारूपाः पशवो जायमानाः" अथ० १४,२,२५ । "पुत्रदम् ब्राह्मणस्योपस्थदेशं स्त्रियाः" शत० १२,८,१,११ । उभयेन्द्रिये "हस्तौ पायुरुपस्थश्च वाक् पादौ चेति पञ्च वै । कर्म्मेन्द्रियाणि जानीयात्" याज्ञ० । "उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमम्" मनुः "सर्वेषामानन्दानामुपस्थ एकायनम्" शत० ब्रा० १४,५,४,११ । उपस्थश्च न तयोर्चिह्नस्थानमात्रं किन्तु तत्स्थानाधिष्ठितः प्रजापतिदेवताधिष्ठितशक्तिक आनन्दनव्यापारकारकः कर्म्मेन्द्रियभेदः । तत्र "प्रजेन्द्रोपेन्द्रमित्रकाः" इति शा० ति० तस्य कमद्धयाधिप्रजापतिदेवताकत्वमुक्तम् शत० ब्रा० उक्तवाक्ये आनन्दनव्यापारसाधनत्वमुक्तम् तथैवापाटवे कर्त्तव्यम् । इन्द्रियाणां भौतिकत्वमते तस्य पृथिवीरजोगुणोपदानकता आहङ्कारिकत्वमते गन्धतन्मात्रसहिताहङ्कारोपदानकता । स च स्त्रूप्य

लिङ्गदेहान्तर्गत इति वेदान्तिनः सांख्याश्चाहुः । तेन जीवति चेतना० ठप् । औपस्थिक जारकर्मोपजीविनि जारभेदे पु०। वेश्यायां स्त्री। २उत्सङ्गे क्रोडे ३अन्तराले "आ मन्दुपस्थेन प्रकस तोम" यजु० १९,९२ । "वरीयसोभा पृथन्तो पितोरुपस्था" ऋ०१,१२४,५ । "उपस्था उपस्थे उत्सङ्गेऽन्तरालदेशे वा" भा० "तस्याः कुमारमुपस्थ आदधुः" गोभि० "उपस्थे उत्सङ्गे" सं०त० "भूम्या उपस्थेऽरपज्जघन्यान्" ऋ०२,१४,७ । "रथोपस्थ उपाविशत्" गीता । उप+स्था घञर्थे भावे क ।सर्वाङ्गुलीभिः भूमिमाश्रित्य ४स्थितौ 'समस्त अङ्गोदरतलाभ्यां जानुभ्यां चोपस्थं कृत्वा" आश्व०श्रौ० ६,५,५ । "उपस्थं कृत्वा भूमिमाश्रित्येत्यर्थः पादाङ्गुलीभिश्च भूमिमाश्रित्य वस्तुपविशेत्" नारा०वृ० । "प्राङ्मुख उपविश्योपस्थं कृत्वा" आश्व०गृ० २,२,२, । उप+तिष्ठति स्था— क । "उपस्थकृतस्तेऽशाश्विनं शंसेत्" आ०श्रौ०६,५,५ । ५सन्निहिते त्रि० ।

**उपस्थपत्र** पु० उपस्थं स्त्रीचिह्नमिव पत्रमस्य । अश्वत्थे वृक्षे तत्पत्रस्य तदाकारत्वात्तथात्वम् अतएव नैष०दमयन्त्यास्तदङ्गवर्णने ।अश्वत्थस्य चलपत्र नामता कारणतयोत्प्रेक्षितम् । "अङ्गेन केनापि विजेतुमस्या गवेष्यते किं ? चलपत्रपत्रम् । नो चेद्विशेषादितरच्छदेभ्यस्तस्यास्तु कम्पस्तु कुतो भवेन" उपस्थदलादयोऽप्यत्र । उपयमपक्षे स्त्रीवचने च तदङ्गस्य अश्वत्थदलाकारतोक्ता ।

**उपस्थातृ** त्रि०उप+स्था-तृच्।१उपासके,२उपगते, च ३यथोक्तकाले उपगते "अन्यथादौ क्रियार्हो यो नोपस्थाता निरन्तरः। व्याहूतप्रपलायी च हीनः पञ्चविधः स्मृतः" मिता०स्मृतिः । ४ऋत्विग्भेदे पु० ।

**उपस्थान** न० उप+स्था-ल्युट् । १उपेत्य स्थितौ, २अनुध्याने स्मरणे "तत्पततेरुपस्थानात् मनोयोगात् परिक्षयात्। कर्मणां सन्निकर्षाच्च सतां योगः प्रवर्त्तते"याज्ञ०। "कर्मार्थविहितं नैव बुद्धौ विपरिवर्त्तते । यस्मात्तु तदुपस्थानसम्पादेवे गुणो भवेत्" भट्टका० । ३उपसेवने उपासने"सूर्योपस्थाने विनियोगः"सन्ध्याप्रयोगः "तूष्णीं योपस्थानम्" कात्या०४,१२,२०, ४उपसर्पणे । "तयोन्नमुपस्थानम्"आश्व०श्रौ०५,१२,२,"उपस्थानं प्रसर्पणम्" नारा०वृ०। ५आनतीकरणायोपगतौ "सुरद्विषश्चैव जगच्च सर्वं ह्युपस्थाने सप्तमन्ति प्रभावात्" भा०आ० ७६ । ६समीपस्थाने "कुर्यान् यथावाचनोपस्थानेषु प्रोक्षेत्" पार०गृ० । उपस्थीयतेऽत्र आधारे ल्युट् । ७उपासनाधारे स्थण्डिलादौ । "पार्थिवैर्मुकुटैः कीर्णमुपस्थानं दिदृक्षुभिः" भा०स०४७ अ० "उपस्थानगृहैर्भद्रैर्वसुभोभिश्च शोभितम्" भा०आ०१२८ अ० अनुध्यानस्य कारणम् तस्य च चित्तेऽनुभवाहितसंस्कारेणोपस्थितत्वात् तथात्वम् ।

**उपस्थानीय** त्रि० उप+स्था-"भव्येत्यादि"पा०नि० कर्त्तरि अनीयर् । १उपासके । कर्मणि अनीयर् ।२उपास्ये त्रि०

**उपस्थापक** त्रि० उप+स्था-णिच्-ण्वुल् । १स्मारके अनुभवजन्यसंस्कारेण चित्तेऽनुध्यानसम्पादके । उपस्थितौ च समानविषयत्वं तन्त्रम् यद्विषयकोऽनुभवस्तद्विषयकः संस्कारस्तद्विषयिकैव स्मृतिरिति कार्यकारणभावः स च समवायेनैव, तेनान्यानुभवसंस्काराभ्यां नान्यस्य स्मरणम् । तत्र च सादृश्यादिज्ञानादि सहकारि कारणम् तत्सन्निहितसंस्कारस्यैव स्मृतौ हेतुत्वात् । उपेक्षात्मकज्ञानेन च संस्कारो न जन्यते । संस्कारश्च चरमफलनाश्यः तेन स्मृतधारायां न संस्कारान्तरकल्पनमिति वेदा०प० । क्वचिच्च दीर्घकालरोगादिना जन्मान्तरेण वा तन्नाशः । जन्मान्तरन्तु कर्मविशेषाभावसहकृतमेव तन्नाशकम् तेन "जातिं स्मरति पौर्विकीम्" इत्यादिमन्वाद्युक्तकर्मविशेषसत्त्वे न तन्नाशः । उपस्थापकश्च यथा पदज्ञानं पदार्थस्य हस्तिज्ञानं हस्तिपकस्येत्यादि एकसम्बन्धिज्ञानस्यापरसम्बन्धिस्मारकत्वनियमात् पदपदार्थयोश्च शक्तिसम्बन्धेन सम्बन्धितेति तथात्वम् । भावे ल्युट् । उपस्थापन-उपस्थिति साधन व्यापारे उद्बोधकसमवधाने तत्सहकारे। उपस्थापनं प्रयोजनमस्य प्रप्रवचना०छ।उपस्थापनीय उपस्थापनसाधने उद्बोधकादौ त्रि० उप+स्थापि-कर्मणि अनीयर् । स्मार्य्ये त्रि० ।

**उपस्थावरा** स्त्री उप+स्था-बा०कर्मणि वरच् । उपसेवनीये पुरुषमेधयज्ञाङ्गे देवताभेदे "सरोभ्योधैवरमुपस्थावराभ्यो-दाशम्" यजु० ३०,१६,

**उपस्थित** त्रि० उप+स्था-क्त । १समीपस्थिते, २समीपागते "तदनुपस्थितमग्निहोत्रं तस्मादनुपस्थितिमन्वनुपस्थिता इमाः प्रजाः प्रजायन्तेऽनुपस्थितो ह वै श्रिया प्रजाया प्रजायते" शत०ब्रा० २,३,१, १३, "उपस्थितेयं कल्याणी" रघुः । "हैयङ्गवीनमादाय घोषवृद्धानुपस्थितान्" भट्टिः । ३प्राप्ते, उपस्थितपरित्यागे प्रमाणाभावात्" न्यायवाक्यम् 'अनुपस्थितकल्पनाऽ

म्बाया” इति मेमा० ४वेदाप्रयुक्ते अनार्षे च । “अ-ग्रु तवदुपस्थिते” पा०। “उपस्थितोऽनार्षः” सि० कौ० “उद्युद्धस्त्कारेण चित्ते उपगते ५स्मृते “तौ जौ गुरु-णेयमुपस्थिता” वृ० र० उक्ते दशाक्षरपादके ६छन्दोभेदे स्त्री “उपस्थितमिदं जसौ तगौ यदि गुरुः स्यात्” इति वृ० र० उक्ते त्रयोदशाक्षरपादके ७छन्दोभेदे न० । ८सेविते त्रि० । भावे क्त सेवने ९उपस्थाने न० । तेन जीवति वेतना० ठक् । औपस्थितिक सेवनोपजीविनि त्रि०

**उपस्थिति** स्त्री उप+स्था—क्तिन् । १उपसेवने २उपगतौ ३स्मृतौ च “आसत्तिरव्यवधानेन पदजन्यपदार्थोपस्थितिः सा० द० आसत्तिग्रन्थे उपसर्गग्रन्थे च उदा० ।

**उपस्थूण** अव्य० स्थूणायां तत्समीपं वा अव्ययी० । १स्थूणा-यामित्यर्थे २तत्समीपे च तत्र भवः परिमुखा० ञ्य । औप-स्थूण्य तद्भवे त्रि० । उपगता स्थूणाम् अत्या० स० । ३स्थू-णासमीपगते त्रि० ततो भवार्थे अण्, न ञ्य इति भेदः

**उपस्थेय** त्रि० उप+स्था—सेवार्थत्वात् कर्मणि यत् । उपसेव्ये “आत्मप्रं त्वोपस्थेयं येत्” कात्या० १७,१,२, “वदोदयै-रङ्गं विप्रैरुपस्थेयैरुपस्थितः” रामा० ।

**उपस्नेह** पु० उप+स्निह—घञ् । स्निग्धस्य गैकत्वसम्बन्धेन क्लेदे “मूत्रयुक्त उपस्नेहात् प्रविश्य कुरुतेऽश्मरीम्” । “तस्य मातुराहाररसवीर्यमभिवहन्ति तेनोपस्नेहेनास्या भिवृद्धिर्भवति” । “सर्वशरीरावयवानुसारिणीनां रसव-हानां तिर्य्यग्गतानां धमनीनामुपस्नेहो जीवयति” सुश्रु० ।

**उपस्पर्श** पु० उप+स्पृश—घञ् । १स्पर्शे, २स्नाने च । उपस्पृ-श्यन्ते इन्द्रियाण्यत्र आधारे घञ् । विधिना जलपान-पूर्वके मुखादिस्पर्शयुक्ते ३वैधाचमने तत्र हि “त्रिः प्राश्या-पो द्विरुन्मृज्य मुखमेतानुपस्पृशेत् । आस्यनासाक्षि कर्णांश्च नाभिवक्षःशिरोऽंसकान्” छन्दो० आस्यनासिकादिस्पर्शो विहित इति तस्य तथात्वम् । “तथेत्युपस्पृश्य पयः पवि-त्रम्” रघौ आचमनार्थे उपात्स्पृशतेः प्रयोगात् । भावे ल्युट् । उपस्पर्शनम् तत्रार्थे न० “अथात उपस्पर्श-नम्” कात्या० ५,१०, २०

**उपस्रवण** न० उप+स्रु—भावे ल्युट् । सम्यक्क्षरणे उपरतं स्रवणम् प्रा० स० । १विरतस्रवणे आरणनिवृत्तौ “पत्न्यु द-क्या दीक्षाकृपाणि निधाय सिकतास्वासीतोपस्रवणात्” का० २५,११,१२, “ज्योतिष्टोमादौ दीक्षितस्य पत्नी रज-स्वला दीक्षाकृपाणि यष्ट्यादीनि निधाय सिकतासु आ-सीत आ रजःस्रावविरमणात्” कर्कः ।

**उपस्वत्व** न० उपगतमुत्पत्तिक क्षेत्र प्राप्तं स्वत्वं यत्र । स्वत्वा-स्पदीभूतभूम्यादिभ्य उत्पन्नशस्यादिद्रव्ये । लोकव्यवहारः । अन्यस्य द्रव्यस्य प्रतिग्रहार्जनाधीनं स्वत्वं न तु उत्पत्ति-कालात्, अस्य तु तत्काले एव स्वत्वसत्त्वेन तथात्वम् ।

**उपस्वावत्** पु० सत्राजितो नृपस्य पुत्रभेदे । “सत्राजितो-दश त्वासन् भार्यास्तासां शतं सुताः । ख्यातिमन्त-स्त्वयस्तेषां भङ्कारस्तु पूर्वजः । वीरोवातपतिश्चैव उ-पस्वावांस्तथैव च” हरिवं० ३८अ०

**उपस्वेद** पु० उप+स्विद—करणे घञ् । १वह्न्यादिसमीपस्था-नात् जाते जले “तयोरङ्गानि निदधः प्रहृष्टाः परि-चारिकाः । सोपस्वेदेषु भाण्डेषु सप्त वर्षशतानि च” भा० आ० १६अ० “सोपस्वेदेषु जघनेषु तत्र ह्यस्यान्तर्जलमू-ष्मणा प्राप्तं घनीभवतीति” नी० क० “अतान्महाविद्यत्त्व बीजं यत्नेन गोप्यताम् । सोपस्वेदेषु पात्रेषु घतपूर्णेषु भागशः” भा० व० १०६अ० । भावे घञ् । २उपतापे

**उपहत** त्रि० उप+हन—क्त । १तिरस्कृते “करोत्यवन्धोपहतं पृ-थग्जनम्” किरा० । “उपहतं तिरस्कृतम्” मल्लि० । २दू-षिते “क्रिमेभिराशोपहतात्मवृत्तिभिः” कुमा० “आशया उपहता दूषिता” मल्लि० । ३विनाशिते ४उत्पातपक्षे अशुद्धद्रव्यसंयोगेन ५अशुद्धे च “शारीरैर्मलैः सुराभिर्म-द्यैर्वा यदुपहतं तदत्यन्तोपहतम्” विष्णुः । ६अभिभूते “मधुमुपहतयः सहसा” किरा० ।

**उपहति** स्त्री उप+हन—क्तिन् । १उपघाते । २कार्य्यक्षमार्थ्य प्रयोजकापाटवे ३प्रतिहनने च ।

**उपहत्नु** त्रि० उप+हन—क्नु । उपहन्तरि “मृगं न भीममु-पहत्नुमुग्रम्” ऋ० २,३३,११,

**उपहन्तृ** त्रि० उप+हन—तृच् स्त्रियां ङीप् । उपघातके (नाशकः) “स्त्यशुक्रमेदसामुपहन्ता चेति” सुश्रु० ।

**उपहरण** न० उप+हृ—ल्युट् । १परिवेषणे २उपायनदाने च

**उपहर्त्तृ** त्रि० उप+हृ—तृच् स्त्रियां ङीप् । परिवेषण-कर्त्तरि “अनुमन्ता विशसिता नियन्ता क्रयविक्रयी । संस्कर्त्ता चोपहर्त्ता च खादकश्चेति घातकाः” मनुः । २उपायनदातरि च ।

**उपहव** पु० उप+ह्वे—अप् संप्र० गुणः । आह्वाने, “सीना-मुपहरं दृष्ट्वा तेऽन्योन्योपहवाः गुरुम्” भट्टिः । “अ-ध्वर्युर्होतर्युपहवं काङ्क्षते” आ० श्रौ० ५,७,४, “प्रति-गृह्योपहवमिच्छाऽवेक्षेत” ६,१२.१,

**उपह्वय** पु० उपहूयतेऽत्र उप+ह्वे—बा० आधारे यत् । यज्ञ-

दशस्तोमकेषु पञ्चसु क्रतुषु मध्ये क्रतुभेदे। ते च क्रतवः कात्या० २२, दर्शिताः यथा। “सप्तदशाः पञ्च” ६, “वक्ष्यमाणाः पञ्च क्रतवः सप्तदशस्तोमका भवन्तीत्यर्थः” कर्कः। “उपहव्योऽनिरुक्तो ग्रामकामस्य” ७ “उपहव्य इति विशेषसंज्ञा स ग्रामकामस्य भवति अनिरुक्तश्च” कर्कः। “अनृतेनाभिशस्यमानस्य” ८ “अलीकेनाभिशस्यमानस्याप्युपहव्यो भवति” कर्कः “श्यावोऽश्वो दक्षिणा तं ब्रह्मणे ददाति” ९, इत्युपक्रम्याथे चत्वारस्तत्र दर्शिताः।

**उपहसित** न० उप+हस–भावे क्त। उपहासे (ठाट्टाकरा) निन्दासूचके हासभेदे। कर्मणि क्त। २हासेन सूचितनिन्दे त्रि०।

**उपहस्त** पु० उपहस्ति–भावे अच्। हस्तेन ग्रहणे प्रतिग्रहे तेन जीवति वेतना० ठञ्। औपहस्तिक तदुपजीविनि त्रि०।

**उपहस्ति** हस्तेन उपगृह्णाति उप+हस्त–णिच् नामधातुः उभ० सक० सेट्। उपहस्तयति ते उपा(ज)जीहसत् त।

**उपहस्तिका** स्त्री उपगता हस्तम् अत्या० स० संज्ञायां कन् अत इत्वम्। (वेट्रया) वस्त्रादिनिर्मिते ताम्बूलाद्याधारपात्रभेदे। “उपहस्तिकायास्ताम्बूलं कर्पूरसहितमुद्धृत्य मह्यं दत्त्वा” दशकु०।

**उपहार** पु० उप+हृ–घञ्। (भेट) १उपढौकने उपायने “ततः सपर्यां सपशूपहाराम्” “रत्नपुष्पोपहारेण छायामानर्च पादयोः” रघुः कर्मणि घञ्। २उपढौकनीये उपायनद्रव्ये “बन्धुप्रीत्या भवनशिखिभिर्दत्तनृत्योपहारः” मेघ० उपगतः हारम् अत्या० स०। ३हारसमीपस्थे तदुपशोभके द्रव्ये। अव्ययी०। ४हारसमीपे अव्य०। उभयत्र “उरोभुवा कुम्भयुगेन जृम्भितं नवोपहारेण वयस्कृतेन किम्” नै०। “ज्योतिषां प्रतिबिम्बानि प्राप्नुवन्त्युपहारताम्” कुमा०। [प्रत्युक्तौ वत्त। कुन्तदेशे हेम०।

**उपहालक** पु० हले प्रहृतः वा० वुण् उपगतोऽहालको हल-

**उपहास** पु० उप+हस–भावे घञ्। निन्दासूचके हासे (ठाट्टा) “कथमस्योपहासस्य सद्यःप्राप्तासि पात्र माम्” रघुः

**उपहास्य** त्रि० उप+हस–कर्मणि ण्यत्। उपहासेन निन्दनीये “गमिष्याम्युपहास्यताम्” रघुः।

**उपहित** त्रि० उप+धा–क्त। १निहिते २अर्पिते ३समीपस्थापिते ४आरोपिते च। “कनकोपहितशोभां तूर्णमावादयोध्याम्” भट्टिः। “शुभं प्रवालोपहितं यदि स्यात्” कुमा०। ५उपाधियुक्ते उपलक्षिते “अन्तःकरणोपहितं चैतन्यं जीवः अज्ञानोपहितं चैतन्यमीश्वरः” वेदान्तप०।

**उपहूत** त्रि० उप+ह्वे–क्त संप्रसारणे दीर्घः। समाहूते आचितादित्वाद्गतिपूर्वकत्वेऽपि नान्तोदात्तता।

**उपहूति** स्त्री उप+ह्वे–क्तिन् संप्रसारणे दीर्घः। आह्वाने “षडहप्रमादविहितोपहूतयः” माघः।

**उपहृत** त्रि० उप+हृ–क्त। १उपढौकिते उपहाररूपेण दत्ते “उपहृतपशुरुद्रः” सि० कौ०।

**उपहोम** पु० उपगतः होमं प्रधानहोमम् अत्या० स०। प्रधानयागसमीपे स्विष्टकृतः पूर्वं होतव्ये अग्न्यादिदशदेवताके प्रत्येकं दशाहुतिके दशदक्षिणाके होमभेदे। स च शत० ब्रा० ११,४,२,८, अवधि१७,पर्य्यन्तेषु दर्शितः। “एतानुपहोमानपश्यत्” इत्युपक्रम्य “अग्निरन्नाद इत्यादि१” “सोमो राजेत्यादि२” “वरुणः सम्राडिति३ “मित्रः क्षत्रमिति४ “इन्द्रो बलमिति५” बृहस्पतिर्ब्रह्मेति६ “सविता राष्ट्रमिति७ “पूषा भगमिति८” “सरस्वती पुष्टिमिति९” “त्वष्टा रूपाण्यमिति १०” इत्येतद्दश देवता उक्ता “तावत्येता दश देवता, हवींषि दशाहुतयो दश, दश दक्षिणाः” इति यथोक्तविशेषणतया दर्शितः।

**उपह्वर** उप+ह्वृ–आधारे अप्। निर्जने रहस्योपगमाधारे “उपह्वरे पुनरित्यशिवमं धनमिलम्” दशकु०। “यत्सोमुपह्वरे विदत्” ऋ० ८,६९,६, “परन्तमुपह्वरे नद्यः” ऋ० ८,९६,१४, “उपह्वरे अत्यन्तगुह्यस्थाने” भा०। २अन्तिकस्थाने “अभीतरङ्गैर्जाह्नव्याः समानीतामुपह्वरम्” भा० व० २०८अ० ३भूप्रदेशमात्रे च “उपह्वरे यदुपरा अपिन्वन्” ऋ० १,६२,६, “कौटिल्यलक्षणगतिवाचिनात्र गतिमात्रं लक्ष्यते उपह्वरन्ति गच्छन्त्यस्मिन् चः इत्युपह्वरो भूप्रदेशः” भा०। कर्मणि च। ४गन्तव्ये “उपह्वरेषु यदचिध्वम्” १,८७,२। “उपह्वरेषु गन्तव्येषु” भा० ५प्रान्तभागे। उपह्वरे गिरीणां संगथे च” ऋ० ८,६,२८ “उपह्वरे प्रान्तभागे” भा०।

**उपह्वान** न० उप+ह्वे–ल्युट्। १आह्वाने २मन्त्रोच्चारणे आह्वाने च “द्यावापृथिव्योरुपह्वाने यजधस्म्” कात्या० २,४,१९, “आग्नीध्रे भक्षणं वषट्कारोपह्वानाभ्याम्” १०,६,२२,

**उपांशु** अव्य० उप+अन्श–उ। १निर्जने “परिचेतुमुपांशु धारणाम्” रघुः। “उपांशु विजने” मल्लि०। २अप्रकाशे च। “जिह्वोष्ठौ चालयेत् किञ्चित् देवतागतमानसः। निजश्रवणयोग्यः स्यादुपांशुः स जपः स्मृतः” इत्युक्तलक्षणे ३मन्त्रादेर्जपभेदे पु०। जपोऽपि त्रिविधः नरसिंह पु० उक्तः।

"त्रिविधो जपयज्ञःस्यात् तस्य भेदान् निबोधत । वाचिकश्च उपांशुश्च मानसश्च त्रिधा मतः । त्रयाणां जपयज्ञानां श्रेयान् स्यादुत्तरोत्तरः । यदुच्चनीचस्वरितैः स्पष्टशब्दवदक्षरैः । मन्त्रमुच्चारयेद्व्यक्तं जपःप्रोक्तः स वाचिकः । शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ प्रचालयेत् । किञ्चिच्छब्दस्वरं विद्यादुपांशुः स जपःस्मृतः । धिया यदक्षरश्रेण्या वर्णाद्वर्णं पदात् पदम् । शब्दार्थमानसाभ्यासः स उक्तोमानसोजपः" । तेन स्वरादिसव्यक्तवर्णोच्चारणात् वाचिकः स्वयंश्रवणयोग्यः किञ्चिच्छब्दवान् उपांशुः । जिह्वोष्ठचालनमन्तरेण वर्णार्थानुध्यानात् मानसः" आ॰त॰ । हारीतः "यदुच्चनीचस्वरितैः शब्दैःस्पष्टं पदाक्षरैः । मन्त्रमुच्चारयेत् वाचा जपयज्ञस्तु वाचिकः । शनैरुच्चारयेन्मन्त्रं किञ्चिदोष्ठौ प्रचालयेत् । किञ्चिच्छ्रवणयोग्य स्यात् स उपांशुर्जपः स्मृतः । धिया पदाक्षरश्रेण्या अवर्णमपदाक्षरम् । शब्दार्थचिन्तनाभ्यासं तदुक्तं मानसं स्मृतम्" "तेषामुत्तरोत्तरफलतारतम्यमाह" मनुः "विधियज्ञाज्जपयज्ञोविशिष्टोदशभिर्गुणैः । उपांशुःस्याच्छतगुणः साहस्रोमानसः स्मृतः" "उपांशुदेवतां यजत्यनिरुक्तं वा उपांशु इति शत॰ ब्रा॰२,३,५,२, उक्ते ४ अनिरुक्तभाषे ५मौने । "उपांशु वै रेतः सिच्यते" शत॰६,२,२,२, मैथुनकाले मौनविधानात् तस्योपांशुत्वम् । ६निगूढे च "अस्य त्वेकमुपांशु व्रतम्" भा॰ आ॰ २अ॰ । परप्रदर्शनायोग्यतया निगूढमित्यर्थः नील॰क॰

**उपांशुयाज** पु॰ यज–घञ् कर्माकृत्वात् प्रयाजादिवत् न कुत्वम् । उपांशु अनुष्ठेयो याजः । यागभेदे तच्च शत॰ ब्रा॰१,६,२,३ दर्शयित्वा "एतेन वै देवा: उपांशुयाजेन यं यमसुराणामकामयन्त तमुपत्सत्य वज्रेण वषट्कारेणाघ्नंस्त एवैव एतेनोपांशुयाजेन पाप्मानं द्विषन्तं भ्रातृव्यमुपतस्य वज्रेण वषट्कारेण हन्ति तस्मादुपांशुयाजं यजते" तत्फलमुक्तम् । "उपांशुयाजमन्तरा यजति" प्रयाजादियागेतिकर्त्तव्यतायां श्रुतिः ।

**उपाक** पु॰ उप+अक–अच् । १परस्परं समीपगते सन्निहिते "आहुत्यवनी यजते उपाके" यजु॰२८,११, उपाके परस्परसमीपगते" वेददी॰ । "आ भन्दमाने उषसा उपाके" ऋ॰३,४,६, "आभन्दमाने उपाके" १,१४२,७, २अन्तिके च । "दूरे उपाकचक्षसम्" ऋ॰८,६,२५, "उपाक इत्यन्तिकनाम" भा॰ ।

**उपाकरण** न॰ उप+आ+कृ–ल्युट् । १उपावर्त्तध्वमित्येवं स्तोत्रप्रैषे "नापव्याहरेदोपाकरणादुपावर्त्तध्वमित्येवाध्वर्युरुद्गातृभ्यः" शत॰ब्रा॰ ४,९,२,१२, "यदा उद्गातारः स्तोत्रमारभेरन् तावदध्वर्युप्रभृत्यादनन्तरं नापव्याहरेत्" भा॰ "प्राप्ता च प्रवर्हितोः प्रातरनुवाकोपाकरणम्" कात्या॰ ८,१,१०, । "सोमे च पशुं पश्चात्स्तोत्रोपाकरणात्" ९,२,१७, उपावर्त्तध्वमित्ययं स्तोत्रप्रैषः उपाकरणशब्देनोच्यते कर्कः । तथा प्रैषणे हि स्तोत्रस्यारम्भणात्तस्य तथात्वम् । २यज्ञियपशुसंस्कारविशेषे च "गोतमस्तोमः प्रथमं द्वितीयस्याह्नः पशोरुपाकरणकालेऽश्वमानीय बर्हिर्वेद्याञ्चावेक्षापयेयुः" आश्व॰श्रौ॰१०,८,२ । "तमपस्थितमुपाकरणाय यदक्रन्दस्तोकादशभिः स्तोत्रं प्रणुवन्" ५ "पशुकल्पेन पशुं संज्ञप्य प्रोक्षणोपाकरणवर्ज्जं वपामुत्खिद्य जुहुयात्" आश्व॰गृ॰ २,४,१५, ३आरम्भे च । "अथातोऽध्यायोपाकरणम्" आश्व॰गृ॰ ३,२,२, "उपाकरणमारम्भः" ना॰वृ॰ । उपाकर्म्मशब्दार्थे च तत्प्रकारकालादिकं वक्ष्यते

**उपाकर्म्मन्** न॰ उप+आ+कृ-करणे मनिन् । येन कर्मविशेषेण वर्षान्ते पुनर्वेदः पठितुमारभ्यते तादृशे, कर्मभेदे तच्च "अथातोऽध्यायोपाकरणम्" इत्युपक्रम्य आश्व॰गृ॰दर्शितम् तत्कालकर्त्तव्यतादि च तत्रैवोक्तः विशेषस्तु नि॰सि॰उक्तो यथा "तत्र बह्वृचानां प्रयोगपारिजाते शौनकः । "अथातः श्रावणे मासि श्रवणर्क्षयुते दिने । श्रावण्यां श्रावणे मासि पञ्चम्यां हस्तसंयुते । दिवसे विदधीतैतदुपाकर्म यथोदितम् । स्वाध्यायोपाकृतिं कुर्य्यात्तस्योपासनवह्निना" अत्र पौर्णमासी उपसंहारन्यायेन यजुर्वेदपरेति हेमाद्रिः । अत्र हस्तयुक्ता पञ्चम्युक्ता कारिकायामपि "तन्मासि हस्तयुक्तायां पञ्चम्यां वा तदिष्यते" इति । केवलपञ्चम्यां हस्तयुतेऽन्यस्मिन् वा दिन इति तु हेमाद्रिः । उपासनवह्निनेति तु "कर्मद्वयमिदं केचिल्लौकिकाग्नौ प्रकुर्वते" इति कारिकोक्तलौकिकाग्निना विकल्प्यते । तत्र "अध्याय्यैरन्वारब्धः" इति सूत्रात् शिष्यत्वेन तदधिकारित्वात् नाचार्य्याग्नौ "नान्यस्याग्नावन्योजुहुयादिति" निषेधाल्लौकिक एव । तदभावे स्मार्त्त इति निर्णयः । यद्यपि दीपिकायाम् । "वेदोपाकृतिरोषधिप्रजनने पक्षे सिते श्रावणे" इति शुक्लपक्षोऽपि सर्वेषां मुख्यकालत्वेनोक्तः । वक्ष्यमाणगार्ग्यवचनेन छन्दोगान् प्रति विहितस्य तस्याविशेषितः सर्वान् प्रति निवृत्तिश्च । तथापि श्रावणमाससंबन्धस्य नक्षोक्तत्वात् कृष्णपक्षेऽपि कार्य्यमिति वृद्धाः । तथा च आश्व॰

हस्तौ परःकार्य्या वर्जयित्वा तु पैतृकमिति" ज्योतिःपराशरोक्तेः "उत्कर्षः कालवृद्धौ स्यादुपाकर्म्मादिकर्म्मणि। अभिषेकादिहोमानां न तूत्कर्षो युगादिष्विति" कात्यायनोक्तेश्च। यत्तु "उपाकर्म्म च चोत्सर्गं ह्येतदिष्टं हयादित" इति बह्वृचवचनन्तु सामगविषयम् तेषां सिंहार्के एवोक्तेः। एतच्चापराह्णे कार्य्यम्। "उपाकर्म्मापराह्णे स्यादुत्सर्गः प्रातरेव त्विति" "अध्यायानामुपाकर्म्म कुर्य्यात् कालेऽपराह्णके। पूर्व्वाह्णे तु विसर्गः स्यादिति वेदविदो विदुरिति" हेमाद्रौ गोभिलोक्तेः। वस्तुतस्तु "भवेदुपाकृतिः पौर्णमास्यां पूर्व्वाह्ण एव त्विति" प्रचेतोवचनात् पूर्व्ववाक्यं सामगविषयम्। तेषामपराह्णे एवोक्तेरित्यनुपदं वक्ष्यते। दीपिकापि। "अस्य तु विधिः पूर्व्वाह्णकालः स्मृत" इति। याजुषास्तु पर्व्वणि कुर्य्युः। तत्रापस्तम्बैरौदयिकं ग्राह्यम्। अन्यैस्तु पूर्व्वम्। "पर्व्वण्यौदयिके कुर्य्युः श्रावणं तैत्तिरीयकाः। बह्वृचाः श्रवणे कुर्य्युर्ग्रहसंक्रान्तिवर्जिते" इति गर्गोक्तेः "संप्राप्तवान् स्तुतीर्यस्मा पर्व्वण्यौदयिके पुनः। अतो भूतदिने तस्मिन्नोपाकरणमिष्यते" इति कालिकापुराणात्। "अथ चेद्दोषसंयुक्ते पर्व्वणि स्यादुपाक्रिया। दुःखशोकामयप्रस्ताराद्भिः तस्मिन् द्विजातयः" इति मदनरत्ने गर्गोक्तेः। अत्र विष्णुभट्टीये विशेषः। "यदा तु श्रावणं पर्व्व सङ्क्रमग्रहवद्भवेत्। तदैवौदयिकं कार्य्यं नान्यदौदयिकं भवेत्"। पराशरमाधवीयेऽपि गार्ग्यः "श्रावणी पौर्णमासी तु सङ्गवात्परतो यदि। तदैवौदयिकी ग्राह्या नान्यदौदयिकी भवेत्"। कर्म्मकालमाह कालादर्शे निगमः। "श्रावण्यां प्रौष्ठपद्यां वा प्रतिपत्सम्मुखं कृतैः। विद्धा स्याच्छन्दसां तत्रोपाकर्म्मोत्सर्जनं भवेत्"। अत्र पौर्णमासी श्रवणहस्तयोरुपलक्षणं तेन तावपि सङ्गवस्पर्शौ ग्राह्यौ। "उदये षड्घटीस्पर्शे स्थिते पर्व्वणि वा भे। कुर्य्युर्नभस्युपाकर्म्म ऋग्यजुःसामगाः क्रमात्" इति पृथ्वीचन्द्रः। "विष्णूक्ते घटिकाद्वयमिति" पूर्व्वोक्तविरोधात् सामान्यवाक्यादौदयिकी कर्म्मपर्य्याप्ता ग्राह्या न पूर्व्वा। सङ्गवानिमित्तपूर्व्वविद्धापवादाभावात् भाद्रादौ कालान्तरे वास्तु न तु निषिद्धम्। न हि प्रौष्ठलाभे निषिद्धमाश्रयणं युक्तम्। अतएव परेद्युः सङ्गवव्याप्तौ पूर्व्वनिषेधः। तदभावे तु नेति मूर्ख्यव्यवस्थाप्यपास्ता विधिवैयर्थ्यात् सावनिषेधे तथापत्तेश्च। पूर्व्वविद्धावचनमन्यो हि का युज्यते। एवं ग्रहणेऽपि ज्ञेयम्। एतच्चानुदाधिकारपरं तेन यथाग्निहोत्रादौ सायं प्रातः काललाभे सामान्यस्य जीवनार्थकालस्य रनुष्ठानम्। यथा प्रौष्ठश्रवणाद्यभावे यागादिप्रवर्त्तिनिषिद्धकालेऽप्येव तथात्र सङ्गवाभावेऽनिषिद्धावश्यकर्म्मपर्य्याप्तौदयिके कालान्तरे वानुष्ठानं न तु कदापि निषिद्धे अपवादाभावे उत्सर्गस्यैव प्राप्तेः। कात्यायनादीनान्तु दिनद्वये पूर्व्वाह्णव्याप्तौ एकदेशस्पर्शे वा पूर्व्वैवेति हेमाद्रिः। घटिकाद्वयमिति पूर्व्वोक्तविरोधात् तेन प्रायस्त्वमात्रपरमिदम्। यदपि "श्रावणी दौर्गनवमी दूर्वा चैव हुताशनी। पूर्व्वविद्धा प्रकर्त्तव्या शिवरात्रिर्बलेर्दिनमिति" ब्रह्मवैवर्त्तम् तद्रक्षापवित्रविषयमिति हेमाद्रिः। मदनपारिजातेऽपि पूर्व्वविद्धायां श्रावण्यां वाजसनेयिनामुपाकर्म्मोक्तम् मदनरत्नेऽपि "पर्व्वण्यौदयिके कुर्य्युः श्रावणं तैत्तिरीयकाः" इति बह्वृचपरिशिष्टाद्बह्वृचान् प्रति कर्म्मविधानार्थं प्रवृत्ते तत्र तैत्तिरीयककर्म्मविध्ययोगात् पूर्व्वोक्तकालिकापुराणादौ सामान्यत औदयिकपर्व्वप्राप्तेस्तन्निषेधेन बह्वृचानां श्रवणविधानात्तैत्तिरीयकपदम् अनुवादत्वात्तस्य च प्राप्त्यधीनत्वात् प्राप्तेश्च यजुर्वेदमात्रपरत्वात् सर्व्वयजुर्वेद्युपलक्षणार्थम्। अवयुत्यनुवादो वा। न तु विधायकम्। तेन विशेषविधिना उपसंहारः स्यात्। अनुवादत्वात्तथा न दोषः। अन्यथौदयिकपर्व्वविशिष्टोपाकर्म्मोद्देशेन कर्त्तृविधौ कर्त्तृविशिष्टे वौदयिकपर्व्वविधौ वाक्यभेदापत्तेः। तस्मात्तैत्तिरीयकपदाविवक्षया सर्व्वयजुर्वेदिनामौदयिकमेव पर्व्वोक्तम्। तत्र न तावत्परिशिष्टे बह्वृचान् प्रत्येव विधिः। धनिष्ठाप्रतिपद्युक्तत्वात् "त्वाष्ट्रऋक्षसमन्वितमित्यादि" तदुदाहृते एव परिशिष्टे वेदान्तरधर्म्मविधीनां दर्शनात्। नाप्यनुवादोऽयम् कालिकापुराणाद्बह्वृचादीनामपि तदापत्तेः कुर्य्युरित्यस्य विधित्वेन तस्यैवार्थवादत्वेनैतत्प्राप्तानुवादित्वाच्च। न च तैत्तिरीयकाणां स्मृत्यन्तरे तद्विधिरस्ति येनानुवादः स्यात्। न च वाक्यभेदः। तैत्तिरीयकपदमात्रस्य कर्त्तृमात्रस्य वा उद्देश्यत्वायोगेन हविरार्त्तिवदुद्देश्ये ब्राह्मणमुपनयीतेतिवद्ब्राह्मणत्वविशिष्टोद्देश्यत्वात्। अन्यथोत्तरार्द्धे बह्वृचपदस्याप्यविवक्षापत्त्या श्रावणस्य सर्व्वसाधारण्यापत्तेः। तस्मात् हेमाद्रिमतमेव युक्तमिति दिक्। इदं च। शिष्यानध्यापयत आवश्यकेऽन्यो अनध्यापयतोनाधिकार इति कर्कः। श्रावणस्यामपि पञ्चम्यादिदुष्टायां कातीयभिन्नैः प्रौष्ठपद्यां कार्य्यं तैस्तु श्रावणपञ्चम्याम्। "संक्रान्तिर्ग्रहणं वापि पौर्णमास्यां यदा भवेत्। उपा-

हस्तिस्तु पञ्चम्यां कार्या वाजसनेयिभिरिति" स्मृतिमहार्णवे वाजसनेयिपरत्वादिति हेमाद्रिः। इदं सामगोक्त कालपरत्वात् बह्वृचपरमपि। माध्यायनैस्तु हस्ते कार्यम्। आपस्तम्बैराथर्वणैश्च प्रौष्ठपद्याम्। यत्तु बौधायनः "श्रावण्यां पौर्णमास्यामाषाढ्यां वोपाकृत्येत्युक्ते। तत् प्रौष्ठपद्यामपि दोषे आषाढ्यां कार्यमित्येवमर्थम्। तच्छाखीयविषयं वा। सामगास्तु श्रावणे हस्ते कुर्युः। "बह्वृचाः श्रावणे चैव हस्तर्क्षे सामवेदिन" इति निर्णयामृते गोभिलोक्तेः। सोऽप्युत्तरः "धनिष्ठाप्रतिपद्युक्तं त्वाष्ट्रऋक्षसमन्वितम्। श्रावणं कर्म कुर्वीरन्नृग्यजुःसामपाठकाः" इति मदनरत्ने परिशिष्टोक्तेः। गर्गोऽपि "सिंहे रवौ तु पुष्यर्क्षे पूर्वाह्णेऽविवरे बहिः। छन्दोगामिलिताः कुर्युरुत्सर्गं सर्वच्छन्दसाम्। शुक्लपक्षे तु हस्तेन उपाकर्मापराह्णिकमिति"। पुष्यर्क्षे पूर्वाह्णे उत्सर्गः आपराह्णिकमुपाकर्मेत्यन्वयः। अविवरे ग्रहादिदोषरहिते। अन्योविशेषः पूर्वमुक्तः। प्रयोगपारिजाते गोभिलः "उपाकर्मोत्सर्जनं च वनस्थानामपीष्यते। धारणाध्ययनाङ्गत्वाद्गृहस्थानां ब्रह्मचारिणाम्। उत्सर्जनं च वेदानामुपाकरणकर्म च। अकृत्वा वेदजप्येन फलं नाप्नोति मानवः"। सर्वथा लोपे तु कृच्छ्र उपवासश्च "वेदोदितानां नित्यानामिति" मनुनाऽभोजनोक्तेः। एवमुत्सर्गेऽपि।

अथ प्रसङ्गादुत्सर्गोत्सर्जनमुच्यते। तत्र पौषमासि रोहिण्यां तत्कृष्णाष्टम्यां वा कार्यम्। "पौषमासस्य रोहिण्यामष्टकायामथापि वा। जलान्ते छन्दसां कुर्यादुत्सर्गं विधिवद्बहिरिति" याज्ञ० उक्तेः। आषाढ्यां प्रौष्ठपद्यां चोपाकृतौ क्रमेण पौषशुक्लप्रतिपदि, माघशुक्लप्रतिपदि च कार्यम् "अर्द्धपञ्चमासानधीयीतेति" तेनैवोक्तेः। यत्तु हारीतः "अर्धपञ्चमान्मासानधीत्योर्ध्वमुत्सृजेत् पञ्चार्धषष्ठान्वेति"। तदाषाढ्युपाकर्मविषयम्। बौधायनास्तु पौष्यां माघ्यां वा कुर्युः। "पौष्यां माघ्यां वोत्सृजेदिति" तदुक्तत्वात्। तैत्तिरीयैस्तु तैष्यां कार्यं "तैष्यां पौर्णमास्यां रोहिण्यां वा विरमेदिति" तदुक्तत्वात्। बह्वृचैस्तु माघ्यां कार्यम् "अध्यायोत्सर्जनं माघ्यां पौर्णमास्यां विधीयते" इति कारिकोक्तेः। कातीयास्तु भाद्रपदे कुर्युः। "उत्सर्गश्च सदा तिष्यातिथ्यां प्रौष्ठपदेऽपि वेति" कात्यायनोक्तेः। सामगास्तु सिंहार्के पुष्ये कुर्युः। तथा च सिंहे रवौ चेति गार्ग्यवचनं पूर्वमुक्तम्। सर्वैरुपाकर्मदिने वा कार्यम्। "पुष्ये तूत्सर्जनं कुर्यादुपाकर्मदिनेऽथवेति" हेमाद्रौ खादिरगृह्योक्तेः। यदा सिंहस्थे सूर्ये सति तन्मध्यस्थश्रवणनक्षत्रात्प्राक् पुष्यः कर्कस्थो भवति तदा तस्मिन् पुष्ये उत्सर्गं कृत्वा तदुत्तरहस्ते उपाकर्म सामगाः कुर्युः। "मासि प्रोष्ठपदे हस्तात् पुष्यः पूर्वो भवेद्यदि। तदा तु श्रावणं कुर्यादुत्सर्गं छन्दसां द्विजः" इति तत्रैव परिशिष्टोक्तेः। अत्र द्वावपि सौरौ मासौ ज्ञेयौ तेषां सौरस्यैवोक्तेः। अत्र विशेषमाह कार्ष्णाजिनिः। "उपाकर्मणि चोत्सर्गे यथाकालं यथेष्ट च। ऋषीन्दर्भमयान् कृत्वा पूजयेत्तर्पयेत्ततः। संप्राप्ते श्रावणस्यान्ते पौर्णमास्यां दिनोदये। स्नानं कुर्वीत मतिमान् श्रुतिस्मृतिविधानतः। उपाकर्मोदितं प्रोक्तमृषीणाञ्चैव तर्पणम्। शूद्राणां मन्त्ररहितं स्नानं दानं प्रशस्यते"। "उपाकर्मण्युत्सर्गे च त्रिरात्रं पक्षिणीमहोरात्रं वानध्याय" इति मिताक्षरायामुक्तम्। अत्र नदीनां रजोदोषो नास्ति। "उपाकर्मणि चोत्सर्गे रजोदोषो न विद्यते इति" गर्गोक्तेः। "उपाकर्मणि चोत्सर्गे प्रेतस्नाने तथैव च। चन्द्रसूर्यग्रहे चैव रजोदोषो न विद्यते" छन्दो० उक्तेश्च उपाकर्मणि चोत्सर्गे युगादौ मृतवासरे। निषेधेऽपि दिने कुर्यात्तर्पणं तिलमिश्रितम्" स्मृतिः। "त्रयोदशादितो वर्ज्यं दिनानां नवकं ध्रुवम्। मङ्गलेषु समस्तेषु ग्रहणे चन्द्रसूर्ययोरिति" वाक्यान्तरो ग्रहणे दिननवकनिषेधस्तु अनियतकालीनकर्मपरः न तु नियतकालीनकर्मपरः। "नित्ये नैमित्तिके जप्ये होमे यज्ञक्रियासु च। उपाकर्मणि चोत्सर्गे ग्रहदोषो न विद्यते इति नि० सि० स्मृत्युक्तेर्नोपाकर्मणि ग्रहणवेधदोषः। आषाढ्यामपि उपाकर्मविधानात् आषाढीप्रयोजनकत्वात् दण्डस्यापाठनामता वेदपठनस्य दण्डपूर्वकत्वात् तथात्वमिति बोध्यम्। करणे क्तिन् उपाकृतिरप्यत्र स्त्री कर्मकरणयोरभेदोपचारात् उपाक्रियाप्यत्र स्त्री।

उपाकृत त्रि० उप+आ+कृ—क्त। यज्ञे हननार्थं १कृतसंस्कारे पशौ, "अनुपाकृतमांसानि देवान्नानि हवींषि च" अभक्ष्ये मनुः। "पशुयागादौ मन्त्रकरणेन पशोः स्पर्शरूपोपाकरणं तद्रहितपशुरनुपाकृतः" कुल्लू०। "पशवे उपाकृतः पशावेत वायवे तमनुदिश्य तदर्थं तद्युपमालभेत" कात्या० २५,८,१ २स्तोत्रप्रैषेण प्रेषिते च "उपाकृत उद्गातार आहोतृप्रैषात्" कात्या० २,२,१८। ३आरब्धे च। भावे क्त। १उपाकरणे वैयज्ञियपशुसंस्कारे २आरम्भे च न०। ततः इष्टा० कर्त्तरि इनि। उपाकृतिन् उपा-

करणकर्त्तरि त्रि० स्त्रियां ङीप् उपार्जितनी ।

**उपाक्ष** अव्य० अक्ष्णः समीपम् अव्ययी० नि० टच्समा० । नेत्रसमीपे "कुमतीरत्नगवाजसमव्ययीभावे" पा० अन्तोदात्तता अत्रैव अक्षेतिनिर्द्देशात् नि० टच्समा०

**उपाख्या** स्त्री उप+आ+ख्या—भावे अ । १प्रत्यक्षे "द्वितीयेऽ-चानुपाख्ये" पा० । उप ख्या प्रत्यक्षं तच्छून्ये ऽनुमान-गम्ये इत्यर्थः । २शब्दादिभिर्निर्वचने च । "ज्ञानविज्ञान-युक्तानां निरुपाख्या निरञ्जना । कैवल्या या गतिर्देवैः परमा च गतिर्भवेत्" भा० अनु० २६अ० । निरु-पाख्योऽभावः । तस्य च भावभिन्नत्वादिना यथा निर्व्वक्तु-मशक्यत्वं तथाऽभावशब्दे उक्तम् "प्रतिसंख्याऽप्रतिसंख्या-निरोधावाकाशञ्चेति" शा० सू० भाष्ये "तदवस्तु अभाव-मात्रं निरुपाख्यम्" "न हि भावानां निरन्वयो निरु-पाख्यो विनाशः सम्भवति" "निरोधद्वयमाकाशञ्चेति निरु-पाख्यम्" । "तत्र निरोधद्वयस्य निरुपाख्यत्वम् पुरस्ता-न्निराकृतमाकाशस्येदानीं निराक्रियते" "आकाशे च न युक्तो निरुपाख्यत्वाभ्युपगमः" इत्येवम् सौगतमतनिरा-करणे अभावपरतयाऽवतङ्कृतम् ।

**उपाख्यान** न० उप+आ+ख्या—ल्युट् । १पूर्व्ववृत्तकथने "रामोपाख्यानमत्रैवेति" भा०आ०१अ० । एवं नलोपा-ख्यानाद्युपाख्यानानि बहून्युपाख्यानानि तत्र सन्ति । "चतुर्विंशतिसाहस्रीं चक्रे भारतसंहिताम् । उपाख्यानै-र्विना तावत् भारतं प्रोच्यते बुधैः" भा०आ० १अ० । २विशेषकथने । "सर्व्वाख्यानं श्रुतं ब्रह्मन् अतीव परमा-द्भुतम् । अधुना श्रोतुमिच्छामि दुर्गोपाख्यानमद्भु-तम्" "हृष्ण नारद श्रोष्यामि सर्वोपाख्यानमद्भुतम्" इति च ब्रह्मवै० । तत्र साधु यत् । उपाख्यानस्य तत्प्रति-पादके ग्रन्थभेदे स्वार्थे यत् । कथनमात्रे च । [गते च ।

**उपागत** त्रि० उप+आ+गम—क्त । १सम्यगुपस्थिते २अभ्युप-

**उपागम** पु० उप+आ+गम "यमहृदादिनिश्चिगमश्च" पा० अप् । १स्वीकारे २समीपगमने च ।

**उपाग्रहण** न० उप+आ+ग्रह—ल्युट् । संस्कारपूर्व्वकवेद-प्रारम्भे अमरटीकायां रायमु० ।

**उपाग्रहायण(णि)** अव्य० आग्रहायण्याः समीपं अव्ययी० वा० टच्समा० । आग्रहायणीसमीपे

**उपाङ्ग** न० उपमितमङ्गेन अवा०स०। १प्रधानस्याङ्गोपयोगिनि "साङ्गोपाङ्गैरशेषादिकम्" इत्यमरः २वेदाङ्गषट्के शास्त्रभेदे उपाङ्गानि शास्त्राणि वे "पुराणन्यायमीमांसाधर्म्मशा-स्त्राणि । सतार्थ्युपाङ्गानि इत्युक्तानि तेषां अङ्गवत् वेदार्थस्य बहुल करणादुपाङ्गत्वम् । "साङ्गोपाङ्गोपनिषदः" हरि० २५अ० "साङ्गोपाङ्गाश्चतुर्वेदाः सरहस्याः क्रमेण तु" विक्र-मो० । "षडङ्गेदग्रास्त्रं तत्रापि तत्समर्पित प्रतिष्ठितम् । तत्र पुत्रे महावाहो साङ्गोपाङ्गं महात्मनि" भा०अ०१०० अ० । अङ्गं देहस्तदुपयोगिनि ३प्रत्यङ्गे प्रत्यङ्गानि च अङ्गशब्दे ७२ पृ० दर्शितानि ४तिलके पु० जटाधरः ।

**उपाजिन** त्रि० उपगतोऽजिनम् अत्या०स० । समीपगते उ-पात् अजिनान्ततत्पुरुषत्वात् अन्तोदात्तता । अजिनस्य समीपम् अव्ययी० । २चर्म्मसमीपे अव्य० । निरुदकादि-त्वात् अन्तोदात्तता । उपगतमजिनं येन प्रा०ब० । ३उपगतचर्म्मके त्रि० अत्र प्रकृतिस्वरः इति भेदः

**उपाजे** अव्य० उप+अज—बा० के वीभावाभावः । दुर्बलस्य बला-धाने "उपाजे अन्वाजे" पा० कृञि परे तस्य गतित्वम् तेन समासे उपाजेकृत्य असमासे तु उपाजे कृत्वेति दुर्बलस्य बलमाधायेत्यर्थः" सि०कौ० । एतौ च विभक्तिप्रतिरूप-काव्यये इत्यन्ये

**उपाञ्जन** न० उप+अन्ज-ल्युट् । १लेपने "मार्ज्जनोपाञ्ज-नैर्वेश्म पुन पाकेन मृन्मयम्" मनु २गोमयादिनानु-लेपने च "सम्मार्जनोपाञ्जनेन सेकेनोल्लेखनेन च । गवाञ्च परिवासेन भूमिः शुध्यति पञ्चभिः" "स्नानं तयोऽग्निरा-हारो मृण्मनो वाय्वुपाञ्जनम् । वायुः कर्मकालौ च शुद्धेः कर्त्तृणि देहिनाम्" मनुः उपाञ्जनमनुलेपनम्" कुल्लू० । आधारे ल्युट् । ३अञ्जनाधारे फलादौ च । "चतुर्थेन आङ्क्षीतस्मोपयमनीष्वाज्यमीप्रीयस्याज्योपाञ्जने च" कात्या०८,६,२४, हतोयं चतुर्भागमज्योपाञ्जने अधः-धुरावमन्त्रणाञ्जनार्थाज्यशेषे पत्नीपाणावित्यर्थः" कर्कः । अक्षधुराञ्जनप्रकारस्तत्रैव "दक्षिणया द्वाराऽऽनीता पत्नी पाणिभ्यां शेषं प्रतिस्थाऽक्षधुरावनक्ति "परास् देवश्रुति-रिति" "प्रतिप्रस्थाता समानीता पत्नी होमशेषेणाक्ष-नाभ्यावयवभागावपक्षवादिति सूत्रार्थः" वेददी० ।

**उपात्त** त्रि० उप+आ—दा—क्त । १स्वीकृते, २प्राप्ते च "यं केचिदुपात्तस्य दुरितस्य प्रपद्यते" वावा० । ३अन्तर्गतमदे गजे पु० हलायुधः ।

**उपात्यय** पु० उप+अति—इण्-अच् । १लोकशास्त्राचारादति-क्रमे, २व्यतिक्रमे, क्रमोल्लङ्घने, ३नाशे च । "परावनुपात्यय इणः" पा० क्रमप्राप्तस्यानतिपातोऽनुपात्ययः" सि०कौ० ।

**उपादान** न० उप+आ+दा—ल्युट् । १ग्रहणे "विषयं ग-

मनीषिणः । यदुपास्तिमसावत्र परमात्मा निरूप्यते" कुसु०।

**उपास्त्र** न० उपगतमस्त्रम् उपकरणत्वेन अत्या० स०। अस्त्रोपकरणे तूणादौ"। "राजानौ नीतिमार्गज्ञौ अस्त्रोपास्त्रकृतिनौ भा० व० १८६ अ० ।

**उपास्य** त्रि० उप+आस—सेवनार्थत्वात् कर्मणि यत् । १सेवनीये २चिन्तनीये "पुत्रश्च ततो रक्ष्या उपास्या गुरवश्च ते" भा० अनु० ८अ०। "गङ्गा सदैवात्मवशैरुपास्या" भा० अनु० २६अ०। उप+आस—ल्यप् । ३सेवित्वेत्यर्थे ४चिन्तयित्वेत्यर्थे च अव्य० । "उपास्य सन्ध्यां विधिवत्" स्मृतिः ।

**उपाहित** पु० उप आसन्नमाहितं यतः । १उल्कापातादौ जन्तुत्पातरूपे उपद्रवे उप+आ—धा—क्त । २आरोपिते, त्रि०

**उपेक्ष** पु० गान्दिनीसुते अक्रूरभ्रातृभेदे । "अक्रूरः सुषुवे तस्मात् श्वफल्कात् भूरिदक्षिणः । उपमद्गुस्तथा मद्गुर्मुदरश्चारिमेजयः । अविक्षिपस्तथोपेक्षः शत्रुघ्नोऽथारिमर्दनः" हरि० ३४ तत्रैव ३८अध्याये च गान्दिनीसुतत्वमस्योक्तम्

**उपेक्षक** त्रि० उप+ईक्ष—ण्वुल् । उपेक्षाकारके योगिनि "उपेक्षकोऽसङ्कुसुको मुनिर्मोक्षधर्मान्वितः" मनुः "दृष्टा मयेत्युपेक्षक एको दृष्टाहमित्युपरता अन्या" सां० का०

**उपेक्षण** न० उप+ईक्ष—भावे ल्युट् । १त्यागे २औदासीन्ये च ३राज्ञां सप्तविधोपायान्तर्गते उपायभेदे "साम्ना दानेन भेदेन दण्डेनोपेक्षणेन च" भा० द० १५० । उपेक्षणस्य सप्तोपायत्वं तथा उपायशब्दे उक्तम् ।

**उपेक्षणीय** त्रि० उप+ईक्ष—अनीयर् । १त्याज्ये २प्रतीकारार्थमनालोचनीये च "नगरात् पुरस्तादुपेक्षणीयम्" रघुः ।

**उपेक्षा** स्त्री उप+ईक्ष—अ । १त्यागे इदं न मम स्यादिति इच्छाभेदे २औदासीन्ये ३अनपेक्षणे च । उपेक्षा च परस्वत्वानभिसन्धानापूर्वकस्वत्वप्रागभावासमानकालीनस्वत्वाविषयकेच्छा । उपेक्षायाः त्यागात्मकत्वम् दत्तौ व्यवस्थापितम् "उपेक्षानात्मक तत्र नियमः कारणं भवेत्" आचे०ता ४इदमुपादेयं न भवतीत्याकारज्ञानभेदे च "कुर्यामुपेक्षां हतजीवितेऽस्मिन्" रघुः । ६योगशास्त्रोक्ते चित्तप्रसादनार्थभावनाचतुष्टयान्तर्गते भावनाभेदे । "मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम्" पात० सू०

**उपेत** त्रि० उप+इण—क्त । १उपगते २समीपगते सेवादिधर्मेण ३प्राप्ते ४उपनीते च । "यं प्रव्रजन्तमनुपेतमपेतकृत्यम्" भा० १स्क० । "न स्त्री जुहुयादनुपेतः" स्मृतिः । "अनुपेतः अनुपनीतः" म० त० रघु०। गर्भाधानार्थं ५स्त्रियमुपगते च "गर्भाधानमुपेतो ब्रह्मगर्भं सन्दधाति" हारीतः "उपेतः स्त्रियमुपगतः" सं० त० रघुनन्दनः।

**उपेन्द्र** पु० उपगत इन्द्रम् अनुजत्वात् अत्या० स०। १विष्णौ । स हि कश्यपात् अदितौ इन्द्रादनन्तरं वामनरूपतया संजातः इति तस्य तथात्वम् । "उपेन्द्रो वामनः प्रांशुः" विष्णु स०। अत्र भाष्ये अन्यापि निरुक्तिर्दर्शिता यथा । "ममोपरि यथेन्द्रस्त्वं स्थापितो गोभिरीश्वरः । उपेन्द्र इति कृष्ण ! त्वां गास्यन्ति दिवि देवताः" इति हरिवंशवचनात् उपरि इन्द्रः उपेन्द्रः" इति । अत्र वासुदेवस्यैव यथोपेन्द्रनामता, तथा गोवर्द्धनोद्धारणेन गोषु रक्षितासु तत्प्रीतये गोभिस्तस्य सर्वोपरिलोकस्थितत्वेन उपेन्द्रनामतयाऽभिषेकः कृत इति वर्णितं हरिवं० ७६अ० यथा । "अधःपातालवासोऽयं तस्योपरि महीधराः । नागानामुपरिष्टात्तु पृथिव्युपरि मानुषाः । मनुष्यलोकादूर्ध्वं तु खगानां गतिरुच्यते । आकाशस्योपरि रविर्द्वारं स्वर्गस्य भानुमान् । देवलोकः परस्तस्माद्विमानगगनो महान् । यत्राहं कृष्ण ! देवानामैन्द्रे विनिहितः पदे । स्वर्गादूर्द्ध्वं ब्रह्मलोको ब्रह्मर्षिगणपूजितः । तत्र सोमगतिश्चैव ज्योतिषाञ्च महात्मनाम् । तस्योपरि गवां लोकः साध्यास्तं पालयन्ति हि । स हि सर्वगतः कृष्ण ! महाकाशगतो महान् । उपर्युपरि तत्रापि गतिस्तव तपोमयी । यां न विद्मो वयं सर्वे पृच्छन्तोऽपि पितामहम् । लोकास्त्वधो दुष्कृतिनां नागलोकस्तु दारुणः । पृथिवी कर्मशीलानां क्षेत्रं सर्वस्य कर्मणः । खमस्थिराणां विषयो वायुना तुल्यवर्त्मनाम् । गतिः शमदमाढ्यानां स्वर्गः सुकृतकर्मणाम् । ब्राह्मे तपसि युक्तानां ब्रह्मलोकः परा गतिः । गवामेव तु गोलोको दुरारोहा हि सा गतिः । स तु लोकस्त्वया कृष्ण ! सीदमानः कृतात्मना । धृतो धृतिमता वीर ! निघ्नतोपद्रवं गवाम् । तदहं समनुप्राप्तो गवां वाक्येन नोदितः । ब्रह्मणश्च महाभाग ! गौरवात्तव चानघ ! । अहं भूतपतिः कृष्ण ! देवराजः पुरन्दरः । अदितेर्गर्भपर्याये पूर्वजस्ते पुरातनः । तेजस्तेजस्विनश्चैव यत्ते दर्शितवानहम् । मेघरूपेण तत्सर्वं तत्क्षमस्व मे विभो ! । एवं क्षान्तमनाः कृष्ण ! स्वेन सौम्येन तेजसा । ब्रह्मणः शृणु मे वाक्यं गवाञ्च गजविक्रम ! । आह त्वां भगवान् ब्रह्मा गावश्चाकाशगा दिवि । कर्मभिस्तोषिता दिव्यैस्तव संरक्षणादिभिः । भवता रक्षिता लोका गोलोकश्च महामयम् । तदयं पुङ्गवैः सार्द्धं वह्निभिः मघवैस्तथा । कर्म-

मान् पुष्करैर्वाद्यैर्नैध्येन हविषा सुरान्। त्विदं पञ्चत्-प्रसूतेन तर्पयिष्याम: कामदा:। तदस्माकं गुरुस्त्वं हि प्राणदश्च महाबल!। अद्यप्रभृति नो राजा त्वमिन्द्रो वै भव प्रभो!। तस्मात्त्वं काञ्चनैः पूर्णैर्दिव्यस्य पयसो घटैः। एभिरद्याभिषिच्यस्व मया हस्तावनामितैः। अहं किलेन्द्रो देवानां त्वङ्गवामिन्द्रतां गतः। गोविन्द इति लोकास्त्वां स्तोष्यन्ति भुवि शाश्वतम्। ममोपरि यथेन्द्रस्त्वं स्थापितो गोभिरीश्वरः। उपेन्द्र इति कृष्ण! त्वां गास्यन्ति दिवि देवताः"।

"ततः शक्रस्तु तान् गृह्य घटान् दिव्यपयोधरान्। अभिषेकेण गोविन्दं योजयामास योगवित्। दृष्ट्वाऽभिषिच्यमानं तं गावस्ताः सह यूथपैः। स्तनैः प्रस्रवसंयुक्तैः सिषिचुः कृष्णमव्ययम्। मेघाश्च दिवि मुक्ताभिः सावृताभिः समन्ततः। सिषिचुस्तोयधाराभिः सिच्यमानं तमव्ययम्। वनस्पतीनां सर्वेषां सुस्रावेन्दुनिभं पयः। ववर्षुः पुष्पवर्षञ्च नेदुस्तूर्याणि चाम्बरे। स्तुवन्ति मुनयः सर्वे वाग्भिर्मन्त्रपरायणाः। एकार्णवविनिर्मुक्ता दधार वसुधा वपुः। प्रसादं सागरा जग्मुर्ववुर्वाता जगद्धिताः। मार्गस्थो विबभौ भानुः सोमो नक्षत्रसंयुतः। रैतवः प्रथमं जग्मुर्जग्मुर्निर्वैरतां नृपाः। प्रवालपत्रशबलाः पुष्पसंवृतपादपाः। मदं प्रस्रुवुर्नागा याताश्चोषं वने मृगाः। अलङ्कृता धातुरसैर्धातुभिर्भान्ति पर्वताः। देवलोकोपमो लोकस्तृप्तोऽमृतरसैरिव। आसीत् कृष्णाभिषेके हि दिव्यः स्वर्गरसोक्षितः। अभिषिक्तन्तु तं गोभिः शक्रो गोविन्दमव्ययम्। दिव्यमाल्याम्बरधरं देवदेवोऽब्रवीदिदम्। एष ते प्रथमः कृष्ण! नियोगो गोषु यः कृतः"। हरिवं १७अ०। "शक्रस्तु स्वयमागत्य दैवतैः सह हृष्टवान्। अभिषिच्याब्रवीत् कृष्णमुपेन्द्रेति शचीपतिः"। वासुदेवस्येन्द्रेण उपेन्द्रनाम्नाऽभिषेकः कृतः इत्युक्तम्। भा०दश०२२अ० तु वामनस्यैव तन्नामतोक्ता यथा वामनेन बलेर्दमनानन्तरम्। "कश्यपस्यादितेः प्रीत्यै सर्वभूतभवाय च। लोकानां लोकपालानामकरोत् वामनं पतिम्। वेदानां सर्वदेवानां धर्मस्य यशसः श्रियः। मङ्गलानां व्रतानाञ्च कल्पं स्वर्गापवर्गयोः। उपेन्द्रं कल्पयाञ्चक्रे इति सर्वविभूतये इति" "प्राप्य त्रिभुवनञ्चेन्द्र उपेन्द्रभुजपालितः" इति तत्रैव। वामनस्य उपेन्द्रत्वमिन्द्रानुजातत्वात् वासुदेवस्य तु पूर्वोक्तप्रकारेण तन्नामता उभयोरेव एक परमेश्वरांशत्वान्न विरोधः। "तदिन्द्रसन्दिष्टमुपेन्द्र! यद्वचः" माघे नारदस्य वासुदेवसम्बोधनतया प्रयोगः।

**उपेन्द्रवज्रा** स्त्री "उपेन्द्रवज्रा जतजास्ततो गौ" इति वृ०र० उक्ते एकादशाक्षरपादके छन्दोभेदे। अस्याश्च इन्द्रवज्रया संमेलने यथोपजातित्वं तथा इन्द्रवज्राशब्दे दर्शितम्।

**उपेय** त्रि० उप+इण्-यत्। १उपायसाध्ये, २प्राप्तव्ये च। ३उपगम्ये "उपेतारमुपेयञ्च सर्वोपायांश्च कृत्स्नशः" मनुः "ज्ञातिभिर्नानुपेयास्ताः" मनुः। ४अन्विष्य गम्ये "भूधरस्थिरमुपेयमागतम्" माघः। "उपेयमन्विष्य गम्यम्" मल्लि०

**उपेयिवस्** त्रि० उप+इण-क्वसु लोकेऽपि नि०। उपगते "पश्चाद्धृदमुपेयुषे" कुमा० "उपेयिवांसि कर्त्तारः पुरीमाजातशात्रवीम्। राजन्वकानि" "उपेयुषो मोक्षपथं मनस्विनः" माघः। स्त्रियां ङीपि उपेयुषी।

**उपोढ** त्रि० उप+वह-क्त। सन्निवेशविशेषयुक्ते १व्यूढे सैन्ये २निकटे, "तदुपोढैश्च नभश्चरैः पृथक्" किरा० ३ "वराहमुपोढैः प्रत्यासन्नैः" मल्लि०। ३ऊढे कृतविवाहे च। भावे क्त। सैन्यविन्यासभेदे व्यूहे न०।

**उपोत** त्रि० उप+वेञ् क्त। उपस्यूते। गौरा० ङीष्। पूतिकायां स्त्री शब्दरत्ना०

**उपोत्तम** त्रि० उपगतमुत्तमम् अव्यवधानेन अत्या० स०। उपान्तिमे अन्त्यात् पूर्व्वतने। "गुरूपोत्तमयोः ष्यङ् गोत्रे"। "योपधाद्गुरूपोत्तमाद्वुञ्" "अस्युपोत्तमम्" "उपोत्तमं रिति" पा०

**उपोदक** पु० उपगतमुदकम् अत्या०स०। उदकसमीपस्थे। "प्रजापतौ त्वा देवतायामुपोदके" यजु०२५,६, "अयं वै लोक उपोदकस्तदेनं प्रजापतौ देवतायामुपोदके लोके निदधाति" शत०ब्रा०१३,८,२,२, सामीप्ये अव्ययी०। २उदकसमीपे अव्ययम्।

**उपोदकी** स्त्री उपगतमुदकमत्र गौरा० ङीष्। पूतिकायाम् (पुइशाक)। राजनि०। "द्वादशीं पारणं कुर्य्याद्वर्जयित्वाप्युपोदकीम्" ति०त० कूर्म्मपुराणम्।

**उपोदिका** स्त्री. उपाधिकमुदकं यत्र उदादेशः संज्ञायां कन् अत इत्त्वम्। पूतिकायाम् अमरः तत्पाकादिप्रकारगुणादि वैद्यके उक्तम्। "एकाङ्गं मञ्जनोपेता त्रिमन्यैर्व्यञ्जनान्तरैः। तच्छुन्तैरानतव्याजैर्हस्त्येषा उपोदिका। वटपत्रवच्छुभपत्रिका परितप्ततैलसुपाचिता। नवहिङ्गुवासवासिता परिभोक्तृपित्तविकारिका। शतप्रवर्तैलविपाचिता सुषमाम्लतक्रसुपाचिता। सुपोदिकाप्यभर्ज्जिता भोक्तृराशु रसनाप्यनर्त्तकी। पोदिका शीतला स्निग्धा

वातपित्तहा । पथ्याल दीपयमनो निद्रापुष्टिकरी मता" उपाधिकादर्शं यत्र उदाहेयः गौरा० ङीप् स्वार्थे कन् वा ह्रस्वः । उपोदीकाप्यत्र स्त्री

उपोद्ग्रह पु० उप+उद्+ग्रह-अप् । ग्रहणे । "तस्माद् उ-पतपोद्ग्रहमिति" शा०ब्रा०। "उपोद्ग्रहपूर्वकप्रश्नैः ग्रहणार्थ-त्वदर्शनात् तथार्थत्वम् ।

उपोद्घातः पु० समीपवर्त्तिनः प्रकृतस्य उद्घातः उन्नमनम् ज्ञानं चिन्तनम् यत्र । उप+उद्+हन-गतौ गत्यर्थत्वात् ज्ञानार्थतः आधारे घञ् । १प्रकृतसिद्ध्यर्थमालोचनात्मके सङ्गतिप्रभेदे ।"चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः" अवसरशब्दे विवृतिः । २तदर्थवर्णने च । "अथवोपोद्घातेन विधिविशेषस्य कारणत्वं व्यवस्थापयति" दीधि० ३प्रारम्भे च

उपोद्बलन न० उप+उद्+बल-ल्युट् । उद्दीपने उत्तेजने ।

उपोषण न० उप+उष-ल्युट् । उपवासे अहोरात्राभोजने । "प्राप्ते श्रीरामनवमीदिने मर्त्त्यो विमूढधीः । उपोषणं न कुरुते कुम्भीपाके पच्यते" । "उपोषणं नवम्यां तु दशम्यामेव पारणम्" ति० त० अगस्त्यसं० । उपवास-शब्दे विवृतिः । उपवासस्य उपदाहकसाधनत्वात् तथात्वम् ।

उपोषित न० उप+वस+भावे-क्त । १उपवासे । "नास्ति स्त्रीणां पृथग्यज्ञः न व्रतं नाप्युपोषितम्" मनुः । कर्त्तरि क्त । २उपवासकर्त्तरि त्रि० । "उपोषितो द्वितीयेऽह्नि पूजयेत् पुनरेव ताम्" दुर्गो० त०पु० ।

उपोष्य त्रि० उप+वस-अकर्मकधातुयोगे कालस्य कर्मसंज्ञा विधानात् कर्मणि वा० क्यप् । १उपवासेन यापनीये तिथ्यादौ । "त्रिसन्ध्यव्यापिनी या तु सैवोपोष्या सदा तिथिः" कालमा०पु०। उप+वस-ल्यप् । २उपवासं कृत्वेत्यर्थे अव्य० ।

उप्त त्रि०वप-क्त । १कृतवापे धान्यादौ अधिकरणे क्त । २उप्त-धान्यादौ क्षेत्रे ।"सर्वं क्षणेन तदभूदपदीय ! रिक्तं भस्मन् हुतं कुहकराद्धमिवोप्तमूष्याम्" भाग० । ३मुण्डिते च । "मध्युप्रशिरस्कमिति" पार०गृ० । परितः सर्व्वतोभावेन उप्तशिरस्कम् मुण्डितशिरस्कम्" हरिनाथः। भावे क्तिन् । उप्ति वपने स्त्री "बीजानामुप्तिविच्च स्यात्" मनुः ।

उप्तकृष्ट त्रि० पूर्व्वमुप्तं पश्चात् कृष्टं पूर्व्वकालेत्यादिना स० । बीजवपनानन्तरं कृष्टे क्षेत्रे (बीजाकृते क्षेत्रे) । (आउड़ान)

उप्तिम त्रि० वप+क्त्रि मप् च । वपनजाते ।

उप्य त्रि० वप-वा० कर्मणि क्यप् । वपनीये शस्यादौ "दोषितश्चेदुपतप्येतोप्यानां वेनेच्छेद् विचिनुयेद्" कात्या० २५,१२,२० । "उप्यानां व्रीहियवादीनाम्" कर्कः ।

उब्ज आर्जवे तुदा०पर० सक० सेट् । उब्जति औब्जीत् । णिचि उब्जयति ते औब्जिजत् त । "इन्द्राग्नी रक्ष उब्ज-तम्" ऋ० १,२१,५ । "उब्जन्तु तं सुभ्वः पर्वतासः" ६,५२,१ । घञ् नि० बस्य दः समुद्रः अभ्युद्गः । नि+उब्ज (उबडान) उत्तानस्यावनतावस्थाकरणे न्युब्जति उत्तानं वस्तु अवतानं करोतीत्यर्थः ।

उब्जक त्रि० उब्ज-ण्वुल् । आर्जवयुक्ते । ततः तिका० फिञ् औब्जायनि तदपत्ये पुंस्त्री । तिककितवादित्वात् गोत्रप्रत्ययस्य बहुषु तस्य लुक् । उब्जकाः ।

उभ(म्भ) पूर्त्तौ तुदा० प० सक० सेट् । उभति औभीत् । उवोभ । उम्भति उम्भीत् अयं मुचादिरिति कविकल्प-लतायां "औम्भीत्" नोपधत्वात् नोपधालोपः उम्भाम् बभूव आस चकार । वेदे गणव्यत्ययः उभ्नाति उम्भाति "दृढा-न्यौभ्नादुशमानश्चोजः" ऋ० ४,१९,४ । "इषमूर्जं मा वे भागम् परिवन्नभ्रिम्" ऋ०८,१,१५ ।"सर्व्वमौम्भीत् काकुत्स्थमौम्भत्तोयैः शिलीमुखैः" भट्टिः । पा०मते तुकि रूपम् । अन्यमते तुकि रूपम् ।

उभ त्रि०द्वि०। उभ्यगतौ-अच् । उभ-पूर्त्तौ क वा । द्वित्वविशिष्टे एकत्वापेक्षाबुद्ध्या प्रथमं द्वित्वस्यैव जननेन द्वित्व-स्यैकत्वेन ज्ञानद्वारा गम्यमानत्वात् पूर्णत्वाच्चोपचारात् तथात्वम् ।"उभौ यदि व्योम्नि पृथक् पतेताम्" माघः । "उभावपि हि तौ धन्यौ सम्प्रयुक्तौ मनीषिभिः"ब्रह्मणा त्वपराभुभौ" "आचम्य प्रयतोनित्यमुभे सन्ध्ये समाहितः" मनुः । ततः उत्तिमात्रे नित्यम् अयच् । "उभयपक्ष-विनीतनिद्राः"रघुः । उभयविधः, उभयथा उभयतः उभयत्र । अस्य सर्वादि०सर्व्वनामकार्य्यम् तेनास्य द्विवचना-न्तत्वेन अन्यकार्य्याभावेऽपि टेरकच् । उभकौ नायकौ । स्वार्थे तद्धितकणि तु अयच्प्रसङ्गः । अतः प्रथमायत्तभौ समासार्थे तद्धित अयच् । उभयतः । ताभ्यां द्वाविन्वर्थे द्वयोरित्यर्थे च अव्य० "तज्जः पुमानुभयतः पुरुषा-नेकविंशतिम्" याज्ञ० । "यस्मिं घोभयतस्त्वाकाराश्च दृश्यमेव वा"।"ओषध्यः फलपाकान्ता बहुपुष्पफलोपगाः । अपुष्पाः फलवन्तो ये ते वनस्पतयः स्मृताः । पुष्पिणः फलिनश्चैव वृक्षास्तूभयतः स्मृताः" मनुः । प्रकारे थाल् अयच् । उभयथा द्विप्रकारार्थे अव्य० । "नैव नः प्रियतमोभयथाऽसौ कञ्चुकं च शुचते ह्युकते वा" नैष०।"विकाशे नार्हे वा तव यति विशोषीऽप्युभयथा"।

प्रयो०। सप्तम्यर्थे तस् अयच्। उभयत्र द्वयोरित्यर्थे अव्य० "उभयत्रचरौ मुनीन्द्राः" जातकप०"द्वौ दैवे पितृकार्ये त्रीनेकैकमुभयत्र वा" छन्दो०। अह्नि द्यस् एद्युस् वा-अयच्। उभयद्युस् उभयेद्युस् च द्वयोरह्नोरित्यर्थे अव्य०। "यो अन्येद्युरुभयद्युरभ्येति" अथ०१,२५,४। "उभयेद्युस्तया प्राप्तौ परोपोष्या मनीषिभिः" स्मृतिः।

**उभय** त्रि०उभ+अयच्। द्व्यर्थत्वे द्वित्वविशिष्टे अस्य द्वित्वबोधकत्वेऽपि एकवहुवचनान्ततयैव प्रयोगः न द्विवचनप्रयोगः। सि०कौ०।"उभयमानशिरे वसुधाधिपाः"रघुः। सर्वादि० सर्वनामकार्यम्। उभयस्मै उभयेषाम्। "यथा न उभयेषाममृत मर्त्यानाम्"ऋ०१,२६,९। जसि वा शी। उभये उभयाः। "परेऽवर उभया अमित्राः"ऋ०२,१२,१८। "ये जना उभये भुञ्जते विशः"२,२४,१०। "किं तत्साध्यं यदुभये साधयेयुर्न सङ्गताः" रघुः। स्त्रियां गौरा०ङीप्।"उभयी सिद्धिमुभाववापतुः"रघुः।

**उभय(त्र)चर** पुं स्त्री०उभयत्र उभयोर्वा चरति चर–ट। भूम्यन्तरिक्षचरे पक्षिभेदे स्त्रियां ङीप्। सूर्याक्रान्तराशेर्द्वितीयस्थयहयोगभेदे स्त्री"सूर्याद्व्ययेऽपि च धने च तयोभयत्र संस्थैर्विना विधुमपास्य नभैस्तु योगान्। वेशौ च वोशिमुभयत्रचरीं मुनीन्द्राः स्पष्टं फलानि विविधानि वदन्ति तेषाम्" "समो राजोभयचरीप्रभवो बहुभृत्यभाक्" जातकपद्धतिः।

**उभयतोदत्(न्त)** पुं स्त्री उभयतोदन्ताः दन्तपङ्क्तिरस्य वा दन्तादेशः। उभयदन्तपङ्क्तियुक्ते मनुष्यादौ। "पशून् मृगान् मनुष्यांश्च व्यालांश्चोभयतोदतः" मनुः। स्त्रियां ङीप्। दन्तादेशाभावपक्षे तत्र्वार्थे स्त्रियां वा ङीप्। "उभयतोदन्ताः प्रजाः प्रजायन्ते" शत०ब्रा० १,६,२,२,

**उभयतोमुख** त्रि० उभयतो मुखे यस्य। द्विमुखे घटादौ "उभयतोमुखाभ्यां पात्राभ्याम्" शत०ब्रा० ४,७,१,७, स्त्रियां स्वाङ्गत्वाभावे टाप् स्वाङ्गे तु ङीष्। उभयतोमुखी धेनुः।"यावत्सा रोमतुल्यानि युगान्युभयतोमुखी। दाताऽस्याः स्वर्गमाप्नोति पूर्वेण विधिना ददत्। यावद्वत्सस्य पादौ द्वौ मुखं योनौ च दृश्यते। तावत् गौः पृथिवी ज्ञेया यावद्गर्भं न मुञ्चति" याज्ञ०उक्तो धेनुभेदः। अन्यत्र रूपमेव स्तुत्क्रान्तिसंज्ञयोक्ता। "उत्क्रान्ते तु प्रयन्नस्य सूर्योत्क्रान्तिमवाप्नुयात्। तथ्यं संप्रददे नाम्ना नावमुत्क्रान्तिसंज्ञिताम्" विधा० पा० वहानमन्त्रः।

**उभयतश्शीर्ष्णी** स्त्री उभयतः शीर्षे यस्याः शीर्षन्नादेशः ङीप् अल्लोपः विसर्गस्य वा षः। उभयतःशीर्षत्वप्रायणोदयादियुक्तायां गवि "अदितिरस्युभयतश्शीर्ष्णी" यजु० ४,१९, "उभयतः शीर्षे यस्याः ज्योतिष्टोमस्याद्यन्तयोः प्रायणीयोदयनीययोः शीर्षत्वम्"द्वे शीर्षे प्रायणीयोदयनीये" यास्कोक्तेः" वेददी०।

**उभयवेतन** पु०उभयोः भेद्ये स्वामिनि च वेतनं यस्य अयच्। दूतभेदे यो हि स्वामिसकाशात् प्रच्छन्नां भृतिं स्वीकृत्य तद्भेद्यमनुपगम्य तदीयदासत्वेनात्मानं ख्यापयित्वा तत्सकाशात् भृतिं स्वीकुर्वन्नपि पूर्वस्वामिनोऽवहितमवृत्तिनिपक्षयार्थमनुसरेत् वनिवादिभेदं जनयति स उभयवेतन इत्युच्यते।"अज्ञातदोषैर्दोषज्ञैरुद्दूष्योभयवेतनैः। भेद्याः शत्रोरभिव्यक्तशासनैः सामवायिकाः" माघः। तादृशदूताश्च मुद्राराक्षसे चाणक्यप्रेषिता बहवो वर्णिताः तैश्च मलयकेतोः प्रधानसचिवादीन् राक्षसादीन् ततो विभिद्य चाणक्यकार्यं साधितवन्तः तत्र तत एवावसेयं विस्तरभयान्नोक्तम्।

**उभयादन्ति** अव्य०उभौ दन्तौ प्रहरणं यत्र युद्धे द्विदण्ड्या० इच् समा०अयच्। उभयदन्तसाध्ये युद्धे एवम् उभयाञ्जलि उभयाबाहु उभयाहस्ति उभयाकर्णि इत्यादयोऽपि नि० साध्याः तत्तत्साधनयुद्धे। उभाहस्ति उभाकर्णि उभाबाहु उभादन्ति इत्यादयः नि० साध्याः तत्र नायच्। तेऽपि तत्तदर्थेषु।

**उम्** अव्य० उ–बा०डुमि। १रोषे, २स्वीकारे, ३प्रश्ने च।

**उमा** स्त्री ओः शिवस्य मा लक्ष्मीरिव उं शिवं माति मन्यते पतित्वेन मा+क वा। शिवपत्न्याम् १दुर्गायाम् "उ मेति मात्रा तपसो निषिद्धा पश्चादुमाख्यां सुमुखी जगामेति"कुमारे निरुक्तायां २पार्वत्याम्। "यदाह तपसे पुत्रीं वनं गन्तुञ्च मेनका। उ मेति,तेन सोमेति नाम प्राप तदा सती" कालि०पु०। "मात्रा निषिद्धा तपसे यदा वा यथामुमाख्यां भवभक्तिभाविनी"शिवपु०अत्र पक्षे उ मेति शब्दः नामहेतुत्वेनाख्यस्याः अर्श आ०अच्"यस्येति"पा० अलोपे टाप्। "उमामुखे विम्बफलाधरोष्ठे""उमामुखन्तु प्रतिपद्य लोला" "उमारूपेण ते यूयम्""उमा वधूर्भवान् दाता" इति च कुमा०। "नियोजयितुकामस्तु उमायां चन्द्रशेखरम्" शि०दु० उमामाहेश्वरव्रतम्। व्रतशब्दे वक्ष्यते। वे–बा०मक् संप्रसारणम्।३हरिद्रायाम् ४अतसीवृक्षे (मसिना) उमाकटः उम्यः औमीनः।५कीर्त्तौ ६कान्तौ, ७शान्तौ च।

**उरभ्रसारिका** स्त्री सुश्रुतोक्ते कीटभेदे कीटशब्दे विवृतिः ।

**उररी** अव्य० उर–बा०अरीक् । १अङ्गीकारे, २विस्तारे च । कृञि अस्य गतित्वात् तेन सह समासः उररीकृत्य इति "कास्यगिव भेदमुररीकृत्य" सा०द० । घञ् उररीकार अङ्गीकारे पु० । क्त । उररीकृत स्वीकृते त्रि०

**उरल** त्रि० उर–बा० कलच् । गतियुक्ते ततो चक्रा०चतुरर्थ्यां यत् । उरल्य तत्सन्निकृष्टदेशादौ त्रि० ।

**उरश** पु० मुनिभेदे तस्यापत्यम् पाठान्तरे तिका०फिञ् औरशा-यनि तस्य भर्गा०स्त्रियां तत्प्रत्ययस्य न लुक् औरशायनी ।

**उरश्छद** पु० उरश्छाद्यतेऽनेन छद–णिच्-घ ह्रस्वः । कवचे

**उरस्** बलार्थे कण्ड्वा०प०अक०सेट् । उरस्यति बलवानुभवतीत्य-र्थः औरसीत् औरसीत् उरस्याम्(साम्)बभूव आस चकार

**उरस्** न०ऋ-असुन् धातोरुश्च रपरः । वक्षःस्थले । "कवाटविस्ती-र्णमनोरमोरःस्थलस्थित श्रीललनस्य तस्य" "अनितमुदमु-दस्यादुच्चकैरच्छतोरःस्थलनियतनिषण्णश्रीस्तनं शुश्रुवान् सः" माघः । "उरोमुकुलितस्तनं जघनमंसबन्धोद्धुरम्" मालती० अस्य ब०व्री० अन्तस्य समासान्तः "व्यूढोरस्को वृषस्कन्धः" रघुः । "प्रकाम विस्तीर्णोरस्कः" कुमा० । क्वचित् । "हारोरा नगमार सा" सुप्रसिद्धपद्यम् । तेन निर्मित अण् औरस, पुत्रभेदे "औरसः क्षेत्रजश्चैव दत्तः कृत्रिमएव चेति" याज्ञ० उ०उरोजातमात्रे च औरसं भयम् । पक्षे यत् उरस्य । वक्षोगते । २श्रेष्ठे न० । तस्य ६त० अन्ते अच् समा० । अश्वोरस अश्वप्रधाने । २ऋषिभेदे पु० तस्यापत्यम् तिका० फिञ् औरसायनि । उरशवत् भर्गादिकार्यम् । उरः प्रायस्त्वेनास्य अर्शआ० अच् । उरस प्रशस्तोरस्के त्रि० । पाठान्तरे तिकादिषु उरसशब्दोऽपि पठ्यते उर-शवत् फिञ् भर्गादिकार्यं च ।

**उरसिज** पु० उरसि जायते जन–ड त० सप्तम्या अलुक् । स्त्रीवक्षोजाते स्तने । "परिपस्पृशिरे चैनं पीनैरुरसिजैः मुहुः" रामा० । उरसिजातोरसिरुहादयोऽप्यत्र । "केनानामुरसिरुहेषु हारलीलाम्" माघः

**उरसिल** त्रि० उरः प्रायस्त्वेनास्त्यस्य पिच्छा० इलच् । प्रशस्तो-रस्के । पक्षे मतुप् मस्य वः । उरस्वत् तत्रार्थे स्त्रियां ङीप् ।

**उरस्कट** पु० उरः कटते आवियतेऽनेन कट–घञर्थे करणे क । १नागनामसुत्तरीयभेदे तदीये यज्ञोपवीताकारे २वस्त्र-भेदे च । (दुपट्टा ) । त्रिका० ।

**उरस्तस्** अव्य० उरएकदेशे दिक् तसिः, पञ्चम्याद्यर्थे तसिल् वा । १हृदयैकदेशभवे पुत्रे २वक्ष प्रत्याद्यर्थे च अस्य लिङ्गत्वात् स्वरितस्वर इतिभेदः । [ ल्युट् । उरस्त्राणमप्यत्र न० ।

**उरस्त्र** न० उरस्त्रायते त्रै–क । वक्षोरक्षके कवचे । करणे

**उरस्य** पु० उरसैकदिक् यत् । वक्षसैकदेशगत "कर्मणा याम्युरस्येन वक्षो यस्य विदारितम्" हरिवंशः निर्मिताद्यर्थे यत् । २पुत्रे

**उरी** अव्य० उर–गतौ बा० ईक् । १अङ्गीकारे, २विस्तारे च । ऊर्यादि० कृञि गतित्वम् तेन समा० । ल्यप् उरीकृत्य "तदुरीकृत्य कृतिभिर्वाचस्पत्यं प्रतायते" सा०

**उरीकार** पु० उरी+कृ–घञ् । १स्वीकारे, विस्तारे च ।

**उरीकृत** त्रि० उरी+कृ–क्त । १अङ्गीकृते, २विस्तृते, च ।

**उरु** त्रि० ऊर्णु–कु नुलोपो ह्रस्वश्च । १विशाले, २महति च "विस्तीर्णं हृदयमुरस्थलप्रकाशं तेऽगाधं निधिसदृशमत्य-शमनन्तम्" भा० शा० २२अ० । ३बहुले निघ० "तुविजाता उरुक्षया" ऋ०१,२,९, "उरुगाय अङ्गुनि-वासी" भा० "रथे सुदृशमुरुक्रे" । ४विस्तीर्णे च उरुत्वस्य विस्तीर्णायतत्वात् । "अनाय उरु वातं सुज-निमा चकार" ऋ०७,१००,४, "स्वस्तिमदुरुषितो स्वयोर्हि" ऋ०६,८४,१, उरुगायः "उरुगव्यूतिरभयानि" ऋ० ६,९०,४, "अक्षोषिदसा उरुपतिरद्भुतः" २,२६,४, "अन्यामिषसुरुधारामरकृतम्" ८,१,१०, "उरुप्रथाः प्रथमानम्" यजु०२०,२९, "गायवोरो रथ उरुयुगे" ऋ० ८,९८,९, ।५दीर्घे च "गतोरुमार्गाः" माघः भाषितपुंस्क-त्वात् क्लीबे ततीयादावचि वा पुंवत् । उरुणे उरवे इ आदि स्त्रियां गुणवचनत्वात् वा ङीप् । "शिरोभिस्ते स्वहोत्वोर्वी सञ्जसारक्त्रय यशः" मनुः उरोर्भावः इम्ना० इमनिच् । वरिमन् तद्भावे । पक्षे त्व, उरुत्व न० । तल् उरुता स्त्री ष्यञ् औरव न० । तद्भावे ।

**उरुकाल** पु० उरुः कालः पाकोऽस्य । (राखालशशा) १महा-कालकतायाम्" रत्नमा० । कर्म० । २दीर्घकाले ।

**उरुक्रम** पु० उरवः भूम्यादिव्यापकत्वात् क्रमाः पादविक्षेपा अस्य । १वामनरूपे भगवदवतारे "यस्योरुषु त्रिषु विक्रमणेष्वधि-क्षियन्ति भुवनानि विश्वा" ऋ०१,१५४,२, "यस्य विष्णो-रुरुषु विस्तीर्णेषु त्रिसंख्याकेषु विक्रमणेषु पादप्रक्षेपेषु विश्वा सर्वाणि भुवनानि भूतजातान्याश्रित्य निवसन्ति स विष्णुः स्तूयते" भा० । इति तस्योरुक्रमत्वे विक्रमुक्तम् । "शं न इन्द्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः" ऋ०१,९०,९, उरु विस्तीर्णं क्रामति पादान् विक्षिपतीत्युरुक्रमः विष्णुः" भा० । उरु प्रधानं पदमाश्रम क्रामति क्रम–

**उरुष्या** स्त्री उरुष्यं रक्षणमिच्छति क्यच् अ यलोपः रक्षणेच्छायाम्। "उरुष्या पायुरभवत् सखिभ्यः" ऋ० ६,४४,७। "उरुष्या रक्षणेच्छया" भा० तृतीयाया लुक्। ततः उ। "उरुष्यु रक्षणेच्छावति "इमे मा पीता यशस उरुष्यवोरथम्" ऋ० ८,४८,५। "उरुष्यवः रक्षाकामाः" भा०।

**उरूची** स्त्री उरु अञ्चति क्विप् ङीप् अल्लोपे पूर्व्वाणो दीर्घः। अतिव्यापिन्यां स्त्रियाम्। "उरूची विश्वे यजते निपातम्" ऋ० ४,५६,४। "शं न उरूची भवतु स्वधाभिः" ऋ० ७,३५,३ "विश्रयमाणो अमतिमुरूचीम्" ऋ० ७, ४५,३ "या ते जिह्वा मधुमती सुमेधा अग्ने देवेषूच्यत उरूची" ऋ० ३,५७,५। स्त्रीभिन्ने उरूच् तदर्थे यथादावपि उरूचः उरूचा इत्यादि।

**उरुव्यचस्** त्रि० उरु दीर्घे नासिके तस्य सकारादेशः वेदे नि०णत्व दीर्घश्च। दीर्घनासिकायुक्ते "उरुणसावसुतृपा" ऋ० १०,१४,१२।

**उरोज** पु० उरसि जायते जन—ड "जे विभाषा" पा० सप्तम्या लुक्। स्तने "दधत्युरोजद्वयमुर्वशीतुलाम्" "रेजाते रुचिरदृशामुरोजकुम्भौ" माघः स्तनादिकं स्त्रीपुंसयोः समानं तत्रापि यौवने उद्भिद्यते। यथाह भावप्रका०। "बालानां शुक्रमस्त्येव किन्तु सौक्ष्म्यान्न दृश्यते। तेषां तदेव तारुण्ये पुष्टत्वादुपलप्स्यति कुसुमानां प्रफुल्लानां गन्धः प्रादुर्भवेद्यथा। रोमराज्यादयः पुंसां नारीणामपि यौवने। जायन्ते तत्तयोर्भेदो ज्ञेयो व्याख्यानतः स च"। तथा च पुंसां रोमराजीश्मश्रुप्रभृतयः नारीणां तु रोमराजीस्तनस्तन्यार्त्तवप्रभृतयः"। आर्त्तवस्तनोद्भेदकालश्च एकादशवर्षादुत्तरः स्मृतावुक्तः। "अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी। दशमे कन्यका प्रोक्ता तत ऊर्द्धं रजस्वला" उ०त० स्मृतिः। इदमपि वक्ष्यमाणविषयम् मात्रभेदेन तत उत्तरमपि भवतीति लोके दृश्यते पञ्चाशन्माधिका दशमाद्द्वादशीं देवेति तत्त्वम्। दृश्यते तु द्वादशवर्षोपरि रजःप्रभृत उक्तः। "द्वादशाद्वत्सरादूर्द्ध्वं रजः स्त्रीणाम् मासि मासि त्र्यहं स्रवेत्। तद्वर्षाद्द्वादशादूर्द्धं याति पञ्चाशतः क्षयम्" रजःपदं स्तनोद्भेदस्याप्युपलक्षणम्। गर्भिण्याः पीनस्तनत्वे दुग्धवत्त्वे च कारणमुक्तम् भा०प्र०। "स्फीतगर्भायाः स्त्रीणामार्त्तव वहानां स्रोतसां गर्भेणावरोधादार्त्तवं न स्रवति तदेव प्रतिहतमूर्द्ध्वमागतमुपचीयमानमपरा भवति शेषञ्चोर्द्ध्वतरमागतं पयोधरौ याति तस्माद् गर्भिण्याः पीनोन्नतौ पयोधरौ भवतः" इति। उरोभूप्रभृतयोऽप्यत्र "उरोभुवा कुम्भयुगेन जृम्भितम्" नैष०।

**उरोभूषण** न० उरो भूष्यतेऽनेन भूष—करणे ल्युट् ६त०। १वक्षोऽलङ्कारे हारे। उरोभूषयति ल्यु। २तदर्थे त्रि०।

**उरोबृहती** स्त्री वैदिके छन्दोभेदे। "बृहती जागतस्त्रयश्च गायत्राः। पथ्या पूर्व्वश्चेत्तृतीयः। न्यङ्कुसारिणी द्वितीयः। स्कन्धोग्रीवी क्रौष्टुकेः। उरोबृहती यास्कस्य" कात्या० उक्तेः यास्कमते द्वितीयचरणस्य जागतात्मकत्वे अन्येषां त्रयाणां गायत्रात्मकत्वे च सा भवतीत्यर्थः।

**उरोहस्त** न० उरसि हस्तचपेटाघातोऽत्र। बाहुयुद्धभेदे बाहुयुद्धप्रकारः भा०स०२२अ० दर्शितः यथा "करग्रहणपूर्वन्तु कृत्वा पादाभिवादनम्। कर्णैः कर्ण्यां विधुन्वानावास्फोटं तत्र चक्रतुः। स्कन्धे दोर्भ्यां समाहत्य निहत्य च मुहुर्मुहुः। अङ्गमङ्गैः समाश्लिष्य पुनरास्फालनं विभो!। चित्रहस्तादिकं कृत्वा कक्षाबन्धं च चक्रतुः। गलगण्डाभिघातेन सस्फुलिङ्गेन चाशनिम्। बाहुपाशादिकं कृत्वा पादाहतशिरावुभौ। उरोहस्तं ततश्चक्रे पूर्णकुम्भौ प्रयुज्य तौ। करसंपीडनं कृत्वा गर्जन्तौ वारणाविव। इर्दान्तौ मेघसङ्काशौ बाहुप्रहरणावुभौ। तलेनाहन्यमानौ तु अन्योन्यं कृतवीक्षणौ। सिंहाविव सुसंक्रुद्धावाकृष्याकृष्य युध्यताम्। अङ्गेनाङ्गं समापीड्य बाहुभ्यामुभयोरपि। आवृत्य बाहुभिश्चापि उदरं च प्रचक्रतुः। उभौ कट्यां सुपार्श्वे तु तक्षवन्तौ च शिक्षितौ। अधोहस्तं स्वकण्ठे तूदरस्योरसि चाक्षिपत्। सर्वातिक्रान्तमर्यादं पृष्ठभङ्गञ्च चक्रतुः। संपूर्णमूर्च्छां बाहुभ्यां पूर्णकुम्भं प्रचक्रतुः। तृणपीडं यथाकामं पूर्णयोगं समुष्टिकम्। एवमादीनि युद्धानि प्रकुर्वन्तौ परस्परम्"। व्याख्यातञ्चैतत् नीलकण्ठेन "कर्णैः दोर्मूलैः कर्ण्यां प्रकोष्ठगतां रज्जुं धुन्वानौ। ततः तत्र कर्णे आस्फोटं चक्रतुः बाहुमूलास्फालनेन अङ्गदमण्डलरज्जुघोषं कृतवन्तावित्यर्थः। चित्रहस्तादिकं हस्तस्यातिवेगेन आकुञ्चनप्रसारणोपर्यधश्चालनमुष्टीकरणानि चित्रहस्ताः आदिपदात् पादस्याप्याकुञ्चनादि। कक्ष्याबन्धं परस्परकक्ष्यायां हस्तौ कृत्वा बन्धनम् गलेन गण्डेन आगण्डेशेनाभिघातस्तेन पाषाणवज्रयाङ्गत्वात्तयोरभिघातेन विस्फुलिङ्गोत्पत्त्याऽशनिं वज्रमिव सञ्जनयत इत्यर्थः। बाहुपाशादिकं चरणपाश आदिपदार्थः। पादाभ्याम् आहताः

बुधपुत्रे पुरूरवसि स्मृते उर्वशीवल्लभादयोऽप्यत्र ।

**उर्वारु** पु॰ उरु-वरा तया ऋच्छति ऋ—उण् । कर्कट्याम् । स्वार्थे कन् अत्रैव । "उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्" ऋ॰ ७,५९, १२, । यजु॰ ३,६, "उर्वारुकमिव बन्धनादितो मुक्षीय मामुतः" ३,७, अस्य स्त्रीत्वमपि अप्राणिजातिवचनत्वात् ऊङ् । उर्वारूः तदर्थे 'विन्ध्यस्य मध्यनं भूवमूर्वार्वा इव" अथ॰ ६,१४,१,

**उर्वी** स्त्री उरु+गुणवचनत्वात् स्त्रियां वा ङीप् । १इहत्त्वयुक्तायां स्त्रियाम् "उर्वी' ऋजमु"उरुशब्दे उदा॰ २पृथिव्यां च तस्यास्तत्त्वात् तथात्वम् ।"तैरुर्वीनिहितपत्रपदं प्रचेले माघः । "अनन्यशासनामुर्वी शशासैकपुरं मिव" "स्थितः सर्वोन्नतेनोर्वीम्" रघुः वेदे "सुपांसुलुगित्यादिना"पा॰ सप्तविभक्तौ डियजादेशः "विष्णुर्नचोद उर्विया व्यस्तैत्" ऋ॰ १,९२,१२, "उर्विया महती" भा॰ "प्रतीची चक्षुरुर्विया विभाति" १,९२,९ । ३नद्याम् निघ॰ ।

**उर्वीधर** पु॰ उर्वीं धरति धृ—अच् ६त॰। पर्वते तेषां कीलकरूपेण अवष्टम्भनेन पृथिव्याधारकत्वात् तथात्वम् भूधरादयोऽप्यत्र "गर्भोऽभवत् भूधरराजपत्न्याः" कुमा॰

**उर्वीधव** पु॰ ६त॰। पृथिवीनाथे राजनि । उर्वीशोर्वीश्वर तन्नाथादयोऽप्यत्र

**उर्वीभृत्** पु॰ उर्वीं बिभर्त्ति धारयति पालयति वा भृ-क्विप् तुक् ६त॰। १पर्वते २राजनि च एवं पृथिवीभृद्धरणीभृदादयोऽप्यत्र ।"उदयति स्म तदद्भुतमालिभिर्धरणीभृद्भुवि तत्र विस्मयं तत् । अनुमितोऽपि हि बाष्पनिरीक्षणात् व्यभिचचार न तापकरोऽनलः" नैष॰ तत्र धरणीभृत् राजा पर्वतश्च अत्र व्यभिचारश्च साधनसमानाधिकरणाभावप्रतियोगित्वरूपः तेन साध्ये तत्सम्भवः तादृशव्यभिचारश्च उपाधिवादे चिन्तामणौ अङ्गीकृतः तत्र उपाधिशब्दे दर्शितम्

**उर्वीरुह** पु॰ उर्व्यां रोहति रुह-क ७त॰ । वृक्षे "स्फुरदुरुधौरुहोर्वीरुहवल्लितन्तुभिः" माघः

**उर्व्या** स्त्री उरोर्भावः वा॰ व्यत् उलोपश्च । महत्त्वे "रुद्राणामुर्व्यायां स्वादित्याः" शत॰ ब्रा॰ १,५,१,१७, "उर्व्यायां महत्त्वे" भा॰

**उल** दाहे (चौरा॰)पर॰ सक॰ सेट् । ओलति औलीत्

**उल** पु॰ उल—दाहे कर्मणि घञर्थे क । मृगभेदे "उलो-हलिक्ष्णो वृषदंशस्ते धात्रे" यजु॰ २४,३१ । "उलोमृगभेदः" वेददी॰। ततः चतुरर्थ्यां बला॰ य । उल्य तन्निकटदेशादौ त्रि॰ ।

**उ(औ)लड** उत्क्षेपे इदित् वा चुरा॰ उभ॰ पक्षे भ्वा॰ पर॰ सक॰ सेट् । उ(ओ)लण्डयति ते उ(ओ)लण्डति औलिलण्डत् त औलण्डीत् अयं लडि ओदित् इत्येके ।

**उलन्द्र(न्द)** पु॰ राजभेदे तेन निर्वृत्तम् अरीहणादि॰ वुञ् । औलिन्द(न्द्र)क तन्निर्म्मितपुरादौ त्रि॰

**उलप** पु॰ न॰ वल—कपच् संप्रसारणञ्च । १शाखापत्रप्रचययुतायां लतायाम् २कोमले तृणभेदे न॰ (उलुखड) । "नवोलपप्रकृतयैनखाभः" "उत्तीर्णभारलघुनाप्यलघूपलौघसौहित्य निःसहतरेण तरोरधस्तात्" माघः ।

**उलप्य** पु॰ उलपे भवः यत् । रुद्रभेदे । "नमोलोप्याय चोलप्याय" यजु॰ १६,४५, रुद्राध्यायः

**उलिन्द** पु॰ वल-बा॰ किन्दच् संप्र॰। देशभेदे उणादिकोषः।

**उलु** त्रि॰ उर रक्ष कः । १इहति २हर्षियुक्तशब्दे च विवाहादौ स्त्रीभिरुच्चार्य्ये शब्दभेदे "प्रकारे गुणवचनस्य" पा॰ प्रकारे द्वित्वम् । उलूलु उरुप्रकारे । "उच्चैरुलूलुध्वनिरुच्चचार" नैष॰ "यत्तदजायत सोऽसावादित्यस्तं जायमानं घोषा उलूलवोऽनूदतिष्ठन् सर्वाणि च भूतानि सर्वे च कामास्तस्मात्तस्योदयं प्रति प्रत्यायनं प्रति घोषा उलूलवोऽनुतिष्ठन्ति" छा॰ उ॰ । "उलूलवा उरुरवः विक्रोशरवाः" शा॰ भा॰।

**उलुप** पु॰ उर पायते रक्ष्यते अस्मात् पा रक्षणे—अपादाने घञर्थे क रस्य लः । उलपतृणे । "तृणोलुपपुलाकपिञ्जानुमेयैर्जरत्कान्तारकूपैरिव" कादं॰

**उलुलि** पु॰ उल—उलि । हर्षसूचकशब्दे । "पृथग् घोषा उलूलयः केतुमन्त उदीरताम्" अथ॰ ४,१९,६,

**उलूक** पु॰ वल—समवाये ऊक संप्रसारणम् ।१पेचके, जातित्वात् स्त्रियां ङीप् उलूकी सा च ताम्रायाः कन्यायाः सन्त्याः कन्या "षट् सुतास्तु महासत्त्वास्ताम्रायाः परिकीर्त्तिताः" इत्युपक्रम्य "शुकी शुकानजनयदुलूकी प्रत्युलूककान्" विष्णुपु॰। २इन्द्रे, कैतव्ये ३दुर्य्योधनदूतभेदे ४तृणभेदे । (उलुखड़) "त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः" माघः "ग्रामौघोलूककाकांश्च क्रुद्धत्वात्रतं चरेत्" मनुः "यदुलूको वदति मोघमेतत्" ऋ॰ १०,१६५,४, "विविधांश्चैव सम्पीड़ाः काकोलूकैश्च भक्षणम्" मनुः । अत्र काकोलूकैरित्युक्तेः काकोलूकमित्यादि विरोधे समाहारैकत्वविधानं प्रायिकमिति गम्यते । "उलूकान् कुष्ये काकी श्येनी श्येनान् व्यसृयत" भा॰ आ॰ ६२ । उलूकनामा दूतश्च युधिष्ठिरादीनां समीपे दुर्य्योधनेन प्रेषितः यथा "आहूयोपह्वरे

राजन् उलूकमिदमब्रवीत् । उलूक! गच्छ कैतव्य! पाण्डवान् सहसोमकान्" इत्यादिना भा० उ० ५०१अ० । उलूकस्य कैतव्यः कितवस्यापत्यम् । तदागमनमधिकृत्यैव उलूकदूतगमनपर्व उद्योगपर्वान्तर्गतं पर्व ।४देशभेदे । "उलूकवासिनं राजन् वृहन्तमुपजग्मिवान्" । "उलूकानुत्तरांश्चैव तांश्च राज्ञः समानयत्" भा० स०प० । अयञ्च देशः "मध्यमाश्चोत्तरां तस्माद्दिशं धनदपालिताम्" इत्युपक्रम्य तस्य कीर्त्तनात् धनञ्जयस्य उत्तरदिग्विजय एव तस्य उलूकदेशस्य वर्णनाच्च उत्तरदेशवर्त्तीति गम्यते । ५तद्देशजे च "उत्तरं पर्वतोद्देशं ये ते दुर्गसहा नृपाः । आरोहन्त गिरिं हन्तो वज्रप्रतिमगौरवाः । उलूकः कैतवेयश्च" हरिवं० ८८ ।

**उलूकयातु** पु० उलूकरूपेण याति या–तुन् । असुरभेदे । "उलूकयातुं शुशुलूकयातुं जहि" ऋ० ७,१०४,२२ । "उलूकरूपेण यातमुलूकयातम्" भा० ।

**उलूखल** न० ऊर्द्ध्वं खम् उलूखं पृषो० तत् लाति गृह्णाति ला–क । धान्यादिकण्डनसाधने काष्ठमये १पात्रे (उखरो) तच्च यज्ञियपात्रभेदः । तल्लक्षणमुक्तम् "उलूखलमुसले अरत्निमात्रे औदुम्बरे प्रादेशमात्रे चतुरस्रमुलूखलं मध्यसंग्रहीतमूर्द्ध्वं वृत्तम्, मुसलं दक्षिणमुलूखलात्" कात्या० १७,५,२ । तदुत्तरत्र सूत्रेऽपि दृष्टा० । "वनस्पतिभ्य इत्येव मुसलोलूखले हरेत्" मनुः "स्फ्यशूर्पशकटानाञ्च मुसलोलूखलस्य च । अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससाम्" तस्य मनूक्तशौचं ज्ञेयम् उलूखलशब्दस्य वाक्येनान्यथा निरुक्तिर्दर्शिता यथा । "उरुकरं वोरुकरं वोरु मे करदित्यब्रवीत्तदुलूखलमभवदुरुकरं वै तदुलूखलमित्याचक्षते परोक्षेण" । स्वार्थे कन् तत्रार्थे "गृहे गृह उलूखलके" ऋ० १,१२८,५ । तदस्य साधनत्वेनास्त्यस्य ठन् । उलूखलिकः । तत्साधनके जने "दन्तोलूखलिकोऽपि वा" मनुः ।२गुग्गुलौ पु०

**उलूखलसुत** पु० ३त० । उलूखलेनाभिषुते सोमरसे "उलूखलसुतानामवेद्विन्द्रः" ऋ० १,२८,१,२,१ ।

**उलूत** पु० उल–भा० अतच् । अजगरसर्पे त्रिका० ।

**उलूपिन** पु० स्त्री० उलुपी: रूपमस्त्यस्य इनि रस्य लः । शिशुमारे अमरः । पु० रूपपाठोऽपि तत्रैव उलूपिन् इत्यपि पाठः क्वचित् तत्रार्थे ।

**उलूपी** स्त्री कौरव्यनागकन्याभेदे तत्कथा भा० आ० २१४अ० । "उलूप्युवाच ऐरावतकुले जातः कौरव्यो नाम पन्नगः । तस्यास्मि दुहिता राजन्! उलूपी नाम पन्नगी । साऽहं त्वामभिषेकार्थमवतीर्णं समुद्रगाम् । दृष्ट्वैव पुरुषव्याघ्र! कन्दर्पेणाभिमूर्च्छिता । तां मामनङ्गग्लपितां त्वत्कृते कुरुनन्दन! । अनन्यां नन्दयस्वाद्य प्रदानेनात्मनोऽनघ! । अर्जुन उवाच । ब्रह्मचर्य्यमिदं भद्रे! मम द्वादशवार्षिकम् । धर्मराजेन चादिष्टं नाहमस्मि स्वयंवशः । तव चापि प्रियं कर्त्तुमिच्छामि जलचारिणि! । अनृतं नोक्तपूर्वञ्च मया किञ्चन कर्हिचित् । कथञ्च नानृतं मे स्यात्तव चापि प्रियं भवेत् । न च पीड्येत मे धर्म्मस्तथा कुर्य्यां भुजङ्गमि! । उलूप्युवाच । जानाम्यहं पाण्डवेय! यथा चरसि मेदिनीम् । यथा च ते ब्रह्मचर्य्यमिदमादिष्टवान् गुरुः । परस्परं वर्त्तमानान् द्रुपदस्यात्मजां प्रति । यो नोऽनुप्रविशेन्मोहात् स वै द्वादशवार्षिकम् । वने चरेद्ब्रह्मचर्य्यमिति वः समयः कृतः । तदिदं द्रौपदीहेतोरन्योऽन्यस्य प्रवासनम् । कृतवांस्तत्र धर्म्मार्थमत्र धर्म्मो न दुष्यति । परित्राणञ्च कर्त्तव्यमार्त्तानां पृथुलोचन! । कृत्वा मम परित्राणं तव धर्म्मो न लुप्यते । यदि वाऽप्यस्य धर्म्मस्य सूक्ष्मोऽपि स्याद्व्यतिक्रमः । स च ते धर्म्म एव स्याद्दत्त्वा प्राणान्ममार्जुन! । भक्ताञ्च भज मां पार्थ! सतामेतन्मतं प्रभो! । न करिष्यसि चेदेवं मृतां मामुपधारय । प्राणदानान्महाबाहो! चर धर्म्ममनुत्तमम् । शरणञ्च प्रपन्नाऽस्मि त्वामद्य पुरुषोत्तम । दीनाननाथान् कौन्तेय! परिरक्षसि नित्यशः । साऽहं शरणमभ्येमि रोरवीमि च दुःखिता । याचे त्वां चाभिकामाऽहं तस्मात्कुरु मम प्रियम् । स त्वमात्मप्रदानेन सकामां कर्त्तुमर्हसि । वैशम्पायन उवाच । एवमुक्तस्तु कौन्तेयः पन्नगेश्वरकन्यया । कृतवांस्तत्तथा सर्व्वं धर्म्ममुद्दिश्य कारणम् । स नागभवने रात्रिं तामुषित्वा प्रतापवान् । उदितेऽभ्युत्थितः सूर्य्ये कौरव्यस्य निवेशनात् । आगतस्तु पुनस्तत्र गङ्गाद्वारं तया सह । परित्यज्य गता साध्वी उलूपी निजमन्दिरम् । दत्त्वा वरमजेयत्वं जले सर्व्वत्र भारत! । साध्या जलचराः सर्व्वे भविष्यन्ति न संशयः" ।

**उल्का** स्त्री उष–दाहे क नि० षस्य लः । देवाकारे गगनात् पतत्तेजःपुञ्जे । अद्भुतसागरे ६२पृष्ठे तत्स्वरूपफलादिकमुक्तम् । "बाधेतोल्काक्षपितचमरीबालभारो दवाग्निः" मेघ० । "उल्काभिघातकेतूंश्च ज्योतींष्युच्चावचानि च" । "उल्कापाते दिशां दाहे गोमायुविरुते तथा" "विद्युत्स्तनितवर्षेषु महोल्कानां च संप्लवे" मनुः । "स्फुर-

जालाकृति विक्षिपन्नेषु" किरा०। उल्काकारपतनम् चोपतिना "यासां न तर्द्दिवि भवेन्नियतेन गम्या तारकाः सकलखेचरतोऽतिदूरे। तिष्ठन्ति या अनिशमोद्गतयश्च ताराचन्द्रादयोऽपि निवसन्ति तदन्वितास्ताः। शीतांशुवज्ज्वलनवासपनात् स्फुरन्ति ताश्चावहप्रवहमारुतसन्निविष्टाः। पूर्व्वानिलेन विनतभावमपागतेऽस्मिंस्ताराः पतन्ति कुहचिद्दुतवायुवेग"। (अवलम्बटेरनुड़ा) २शुष्कतृणतरुवादिदीपिते (मशाल) इति प्रसिद्धे ३दीपभेदे च। "तुलाराशिं गते भानौ अमावास्यां नराधिपः। स्नात्वा देवान् पितॄन् भक्त्या संपूज्याथ प्रणम्य च। कृत्वा तु पार्व्वणश्राद्धं दधिक्षीरगुड़ादिभिः। ततोऽपराह्णसमये घोषयेन्नगरे नृपः। लक्ष्मीः संपूज्यतां लोकाः! उल्काभिश्चापि वेष्टताम्" ति०त०ज्यो० उल्कादाने दर्शद्वैधे निर्णयः। "तुलासंस्थे सहस्रांशौ प्रदोषे भूतदर्शयोः। उल्काहस्ता नराः कुर्युः पितॄणां मार्गदर्शनम्" ति०त०ज्यो०वचनात् प्रदोषव्यापिदर्शे कार्यम्। उभयत्र प्रदोषप्राप्तौ परदिने एव, युग्मादिवाक्यात्। "दण्डैकरजनीयोगोदर्शस्य स्यात् परेऽहनि। तदा विहाय पूर्वेद्युः परेद्युः सुखरात्रिका" ज्योतिर्वचनाच्च। उभयत्र प्रदोषाप्राप्तावपि उल्कादानं पूर्वोक्तपार्वणानुरोधात्, न पूर्व्वदिने भूताहे ये प्रकुर्वन्ति उल्काग्रहमचेतसः। निराशाः पितरो यान्ति शापं दत्त्वा सुदारुणम्" ज्योतिर्वचनात्। उल्काग्रहणादि पितृकृत्यत्वात् प्राचीनावीतिना दक्षिणाभिमुखेन कार्यम्। "प्राचीनवीतिना सम्यगपसव्यमतन्द्रिणा। पित्र्यमा निधनात् कार्यं विधिवद्दर्भपाणिना" मनूक्तेः। तद्दानमन्त्रादि ति०त० द्रष्टव्यम्। ४ज्योतिषोक्ते नाक्षत्रिकदशाभेदे। "मङ्गला पिङ्गला धान्या भ्रामरी भद्रिका तथा। उल्का सिद्धा सङ्कटा च ह्यष्टौ प्रोक्ता महादशाः" ज्यो०। तदानयनञ्च "वह्निभाज्जन्मनक्षत्रा- [?]ष्टिरभादय" इत्युक्तेः मतभेदेन कृत्तिकानक्षत्रात् पूर्व्वभाद्रपदचतुर्थपादात् जन्मनक्षत्राद्वाऽऽरभ्य एकैकास्त्रिराद्यन्त्या क्रमेण मङ्गलादिका दशा भवन्ति इत्येवं चतुर्विंशतिनक्षत्रेषु त्रिरावृत्त्या अष्टौ दशा अवसेयाः ततोऽन्तिमत्रिभेषु मङ्गलाद्यास्तिस्रो भवन्ति। एवमन्यत्राप्यूह्यम्। तासां भोगकालश्च। "एकाद्येकोत्तरा अष्टयोगिनीवत्सरा मताः" इत्युक्ता मङ्गलायाः १एकोवर्षः पिङ्गलायाः २द्वौ, धान्यायास्त्रयः, भ्रामर्याः ४वर्षाः, भद्रिकायाः पञ्च, उल्कायाः षट्, सिद्धायाः सप्त, सङ्कटायाः अष्टौ वर्षाः, तेषां योगेन ३६वर्षा मङ्गलाद्यानां भोगकाला, इत्येवं त्रिरावृत्त्या अष्टोत्तरशतवर्षास्तासां भोगकालः। अन्तर्दशादिकं योगिनीशब्दे वक्ष्यते।

उल्काचक्र न० रुद्रयामलोक्ते मन्त्रस्य शुभाशुभज्ञापक चक्रभेदे "उल्काचक्रं सर्व्वसारं मन्त्रदोषादिनिर्णयम्। नराकारमूर्द्धमुखं सर्व्वमन्त्रादिविपक्षकम् [?]। स्कन्धदेशावधि नाथ! पुच्छपर्य्यन्तमेव च। अकाराक्षरमारभ्य द्वादशाक्षरमात्मकम्। विलिखेत् पृष्ठदेशं तु शुभाशुभविशुद्धये। त्रयोदशाक्षरान्नाथ! एकविंशाक्षरान्तकम्। नेतव्यं साधकैर्नित्यं पृष्ठस्थं समुदाहृतम्। तथा श्रीशुभदं प्रोक्तं षष्ठादिपुच्छकान्तकम्। द्वाविंशादि चतुस्त्रिंशदक्षरान्तं शुभं मतम्। पुच्छस्थं नापि गृह्णीयात् वक्षस्थञ्च तथा भयम्। शीर्षस्थञ्चापि गृह्णीयात् तदग्रं शृणु प्रभो!। पञ्चत्रिंशादि द्वाचत्वारिंशद्वर्णान्तमेव च। मस्तकस्थं शुभं प्रोक्तं सुवर्णान् शृणु प्रभो। त्रिचत्वारिंशवर्णादि एकपञ्चाशदन्तकम्। मुखस्थमन्त्रं मन्त्री तु न गृह्णीयात् कदाचन। मुखस्थं शृणु यत्नेन निरर्थकमघार्त्तिदम्। भ्रमो गात्रस्य पीडाभिः देवता कुप्यतेऽनिशम्। द्विपञ्चाशदक्षरादि एकषष्टिमान्तिकान्। वर्णान् पुच्छस्थितान् प्रोक्तान् नेत्रस्थान् शृणु वल्लभ!। द्विषष्टितमवर्णादि चतुष्षष्ट्यक्षरान्तकम्। अङ्कं लोचनमन्त्रस्य ततोऽन्यत् रसनास्थितम्। तत् सर्वं शुभदं प्रोक्तं एतदन्यत्तथा शृणु। वैष्णवानाञ्च शैवानां शाक्तानां मन्त्रजापनम्। अन्यदेवेषु भक्तानां भक्तिरुक्तिरिदं नृणाम्"। "एतच्च चतुःषष्टिस्त्रिःषष्टिर्वा वर्णाः शम्भुमते मताः। स्वराविंशतिरेकश्च स्पर्शानां पञ्चविंशतिः। यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः। अनुस्वारो विसर्गश्च+कँपौ चापि पराश्रितौ। दुःस्पृष्टश्चेति विज्ञेयो लृकारः प्लुत एव च" इति शिक्षोक्तविभागाभिप्रायं चतुःषष्टेरन्यकथनम् लृकारस्य दीर्घस्वत्वमतेनेति बोध्यम्।

उल्काजिह्व पु० उल्केव जिह्वाऽस्य। रामा० प्रसिद्धे राक्षसभेदे

उल्कामुख पु० उल्केव मुखमस्य। प्रेतभेदे "वान्ताश्युल्कामुखः प्रेतो विप्रो धर्म्मात् स्वकात् च्युतः" मनुः (खेकशियालि) इति प्रसिद्धे जन्तुभेदे स्त्री ङीप्।

उल्कुषी स्त्री उल्–दाहे क्विप् उषा दाहेन कुष्णाति कुष–क गौ० ङीप्। उल्कायाम्। "अशनिरेव प्रथमोऽहयाजः ह्रादुनिर्द्वितीय उल्कुषी तृतीयः"। "उल्कुष्यनु जहीति तृतीयम्" 'उल्कुषीव तमन्तयाजोऽहन्ति' एव-

सदक्षिणापथाः स्वयं व्रजन्त्यचिरमत्र दुर्गद्रोद्भवैः । निहन्ति शुक्रः क्षितिजेऽग्रतः प्रजा क्षुताग्निशस्त्रक्षुदवृष्टितस्करैः। चराचरं व्यक्तमथोत्तरापथं दिशोऽग्निविद्युद्रजसा च पीडयेत् । यहस्ततो हन्ति पुरःस्थिते सितः सितं समस्तं द्विजगोसुरालयान् । दिशं च पूर्वां करकासृजोऽम्बुदा गलेगदा भूरि भवेच्च शारदम् । सौम्योऽस्तोदययोः पुरो भृगुसुतस्तत्रस्थितस्तोयकृद् रोगान् पित्तककामलांश्च कुरुते पुष्णाति च पैत्तिकम् । हन्यात् प्रव्रजिताग्निहोत्रिकभिषक्कोपजीव्यान् हयान् वैश्यान् गाः सह वाहनैर्नरपतीन् पीतानि पश्चाद्रिपुम् । शिखिभयमनलाभे शस्त्रकोपश्च रक्ते कनकनिकषगौरे व्याधयो दैत्यपूज्ये । हरितकपिलरूपे श्वासकासप्रकोपः पतति न सलिलं खाद्भस्मरूक्षासिताभे । दधिकुमुदशशाङ्ककान्तिभृत् स्फुटविकसत्किरणो बृहत्तनुः ।सुगतिरविकृतो जयान्वितः कृतयुगरूपकरः सिताह्वयः” “उशने काव्याय” ऋ० ६,२०,११।“उशने उशनसे” भा० छान्दसम् ।

**उशनसस्तोम** पु० उशनसः स्तोमो यत्र अलुक्समा० वा विसर्गस्य लुक् । एकाहसाध्ये यागभेदे “उशनसस्तोमेन गरगीर्णमिवात्मानं मन्यमानो यजेत” आ०श्रौ०९,५,१ । “उशनसस्तोमोनाम एकाहसाध्यः पुनः स्तोम इति चास्यैव संज्ञा गरोविषं गीर्णो येन स गरगीर्णः यो बहुप्रतिग्रहादिना पापादिभयात् गरगीर्णमिवात्मानं मन्यते स एतेन यजेत” नारा० वृ० “उशना यत् सहस्यैरयातं सम्पीयदवेतुर्वयायेति सूक्तमुक्तोत्रे” इति तत्रैव सूक्तप्रारम्भः २सूक्ते उक्तः ।

**उशाना** स्त्री वश—तारकोत्वं चानच् । सोमसाधनभूतायां गिरिजातायामोषधौ । “यद्यदाप्यायन्ति देवो वै सोमो दिवि हि सोमो वृत्रो वै सोम आसीत् तस्यैतच्छरीरं यद्गिरयः यदश्मानस्तदेषोशाना नामौषधिर्जायत इति श्वाह श्वेतकेतुरौद्दालकिस्तामेतदाहृत्याभिषुण्वन्ति” शत०ब्रा० ३,४, ३,१० । “उशानाख्या ओषधिर्जायते इत्येवं श्वेतकेतुराह अतस्तामेव गिरावुत्पन्नाम् इदानीन्तना यजमाना अभिषुण्वन्ति न साक्षात् सोमम्” भा० ।

**उशिज्** पु० वश—इजि किच्च संप्र० । १अग्नौ २घृते च उज्ज्व० तत्र यज्ञैः हविःकामयमानत्वात्, घृतस्य तु काम्यमानत्वात् तथात्वम् । ३कामयमाने त्रि० । “उशिगसि कविरिति” “उशिगसि वसुभ्य इति”च ता०ब्रा०“हवन्नुशिजोवयाविधः” ऋ० १, १२१,५, “उशिजः कामयमानान् यजमानान्” भा०। उशिजोमनीषिणः” ऋ० २,२१,५, “उशिज इन्द्रं कामयमानान्” भा० । “स हव्यवाडमर्त्य उशिग्दूतश्च नोहितः” ३,११,२ । “उशिक् हविःकामयमानः” भा०“उशिजोयविष्ठो वञ्चितमानाम्” ३,१५, २२। “प्र पूर्वादिगुरुशिजः”यजु०“उशिजः हवींषि कामयमानान्”वेददी०४कास्य “उशिक् त्वं देव ! सोमाग्नेः प्रियं पाथोऽपीहि” यजु०८,५५ “उशिक् कामयमानः” वेददीपः । “उशिगसि कविः” ५,३२, । उशिक्कामयमानः” वेददी० ५अयं तस्य काम्यमानत्वात्तथात्वम् । “उशिजा वसुभ्योवसून् जिन्व:” यजु० १५,६ । उशिजा वश कान्तौ इति उशिगग्नं तेन”वेददी०। ततः प्रज्ञा स्वार्थे ण। औशिजः उक्तार्थे । करणे इजि । ६इच्छा हेतौ मेधायाम् निरु० । मेधारूपज्ञानस्येच्छाहेतुत्वात् तथात्वम् । ततः अस्त्यर्थे अर्श० अच् । उशिजः मेधाविनि त्रि० निरु०

**उशी** स्त्री वश—ई—संप्र० । इच्छाभेदे उशीनरः ।

**उशीनर** पु० १वृष्णिवंशोद्भवे क्षत्रियभेदे ।“उशीनरश्च विक्रान्तो वृष्णयस्ते प्रकीर्त्तिताः” भा०आ० १८६ अ० । २पौरवे नृपभेदे “शृणु पूरोर्महाराज ! वंशमुत्तमपौरुषम्” इत्युपक्रम्य “सृञ्जयस्याभवत् पुत्रो वीरो राजा पुरञ्जयः । जनमेजयो महाराजो पुरञ्जयसुतोऽभवत् । जनमेजयस्य राजर्षेर्महाशालोऽभवत् सुतः । महामना नाम सुतो महाशालस्य धार्मिकः । महामनास्तु द्वौ पुत्रौ जनयामास भारत ! । उशीनरं च धर्मज्ञं तितिक्षुञ्च महाबलम्” हरिवं० ३१अ० तस्य चरितं वर्णितम्” भा०व० “अत्रागच्छन्नृपवरं ज्ञातुमग्निः सवासवः । जिज्ञासमानो वरदो महात्मानमुशीनरम् । इन्द्रःश्येनः कपोतोऽग्निर्भूत्वा यज्ञेऽभिजग्मतुः । ऊरुं राज्ञः समासाद्य कपोतः श्येनजाद्भयात् । शरणार्थी तदा राजन् ! निलिल्ये भयपीड़ितः” १३०अ० । “श्येन उवाच । धर्मात्मानं त्वा रेकं सर्वे राजन्महीक्षितः । स वै धर्मविरुद्धं त्वं कस्मात् कर्म चिकीर्षसि ? । विहितं भक्षणं राजन् ! पीड्यमानस्य मे क्षुधा । मा रक्षीर्धर्मलोभेन धर्ममुत्सृष्टवानसि । राजोवाच। सन्त्रस्तरूपस्त्राणार्थी त्वत्तो भीतो महाद्विज ! । मत्सकाशमनुप्राप्तः प्राणगृध्नुरयं द्विजः । एवमभ्यागतस्येह कपोतस्याभयार्थिनः । अप्रदाने परं धर्मं कथं श्येन ! न पश्यसि ? । प्रस्पन्दमानः संभ्रान्तः कपोतः श्येन ! लक्ष्यते । मत्सकाशे जीवितार्थी

वेददी० ४ब्राह्मणमुहूर्त्ते "उषाव्यं वायस्य मेध्यस्य विव्याथ" इ०उ०। "उषा ब्राह्मो मुहूर्त्तकालः" ब०भा० । ५दितीहदिक्ष्टदेवतायाम् स्त्री प्रौढ़मनोरमा ।

उषसी स्त्री उषं तापकत्वात् दिवसं स्यति सो–क गौरा० ङीप् । सायं सन्ध्यायाम् मेदिनिः ।

उषस्ति पु० ऋषिभेदे "उषस्तिर्ह चाक्रायणः" छा०उ०। उषस्तोऽप्यत्र "अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ" "ततो होषस्तश्चाक्रायण उपरराम" इति च शत०ब्रा०१४,६,५,१।

उषा स्त्री ओषत्यन्धकारम् उष+क। १प्रातरादिसन्ध्यासु "वेनीरन्तरतरपालिताः" ऋ०८,४१,२ । तिस्र प्रातःसायं मध्याह्नरूपा उषाः" भा० ।"उषा विभातीरनु भाति पूर्व्वीः" २,६,७, "तेजःपरिहानिरुषा भानोरर्द्धोदयं यावत्" इ० सं०उक्ते २काले नक्षत्रप्रकाशयं काल उषा। तेन पञ्चपञ्चाशद्दण्डिकोत्तरमारभ्य सूर्य्योर्द्धोदयपर्य्यन्तः स कालः। गमनाद्यारम्भे उषाकाले यात्रा शस्ता यथाह ज्यो० "प्रस्फुरद्द्युतितारका स्फुटतटी प्राची भवेन्निर्म्मला यीषद्रक्तविलोहितान्तनयना दैवैः सदा वाञ्छिता । नो वारं न तिथिं न योगकरणं लग्नञ्च नामेक्षते कृत्वा दोषसहस्रमप्युषा मूनं करोत्युन्नतिमिति" । "तिथ्यादिषु निषिद्धेषु चन्द्रताराविलोमतः । उषां गोधूलियोगं वा सीकृत्य गमनं चरेत् । प्राच्यामुषां प्रतीच्यान्तु गोधूलिं वर्जयेत् । दक्षिणेऽभिजितं चैवमुत्तरे च निशां तथा"। "बारकविन्नं रजनीविरामं वदन्त्युषायोगमिह प्रवीणाः। आसः" "चाद्युः प्रयातुः सकलार्थसिद्धिः संजायते चक्रवालिस्मितेव" ज्यो०त०व्यासः ।अन्धकारेण सन्तापकारित्वात् ३रात्रौ मेदि० "अधिकयचिरमेवाममुषां जागरिता" माघः । ४बाणपुत्र्यां । ततः कचित् गौरा० ङीप् । "अथान् कृतं कुक्कुराजसिंहप्रमुखाम्"भाग० ५स्त्रीगव्यां वेन० ६उकायां स्त्रियः ७स्थाल्यां रत्नमालायः । बाणराजसुतायाश्च तत्र दीर्घादित्वमपि भारतादौ तत्रैव निर्द्देशात्। तस्या च कथा अनिरुद्धः पतित्वेभाग्नः तथा वर्णितं भाग०१०स्क०६२अ०यथा (बादराय) "तस्योषा नाम दुहिता स्वप्ने प्राद्युम्निना रतिम् । कन्या लब्धतकान्तेन प्राग्दृष्टश्रुतेन सा । सा तत्र तमपश्यन्ती क्वासि कान्तेति वादिनी । सखीनां मध्य उत्तस्थौ विह्वला व्रीडिता भृशम् । बाणस्य मन्त्री कुम्भाण्डश्चित्रलेखा च तत्सुता । सख्यपृच्छत् सखीं मूषः कौतूहलसमन्विता । कं त्वं मृगयसे सुभ्रु ! कीदृशस्ते मनोरथः । हस्तपाहं न तेऽद्यापि राजपुत्र्युपलक्षये । उषोवाच । दृष्टः कश्चिन्नरः स्वप्ने श्यामः कमललोचनः । पीतवासा बृहद्बाहुर्योषितां हृदयङ्गमः । तमहं मृगये कान्तं पाययित्वाऽधरं मधु । क्वापि यातः स्पृहयतीं क्षिप्त्वा मां वृजिनार्णवे । चित्रलेखोवाच । व्यसनमपकर्षामि त्रिलोक्यां यदि भाव्यते । तदानेष्ये वरं ! यस्ते मनोहर्त्ता तमादिश । इत्युक्त्वा देवगन्धर्व्वसिद्धचारणपन्नगान् । दैत्यविद्याधरान् यक्षान् मनुजांश्च यथाऽलिखत् । मनुजेषु च सा वृष्णीन् शूरमानकदुन्दुभिम् । व्यलिखद् रामकृष्णौ च प्रद्युम्नं वीक्ष्य लज्जिता । अनिरुद्धं विलिखितं वीक्ष्योषाऽवाङ्मुखी ह्रिया । सोऽसावसाविति प्राह स्मयमाना महीपते ! । चित्रलेखा तमाज्ञाय पौत्रं कृष्णस्य योगिनी । ययौ विहायसा राजन् ! द्वारकां कृष्णपालिताम् । तत्र सुप्तं सुपर्य्यङ्के प्राद्युम्निं योगमास्थिता । गृहीत्वा शोणितपुरं सख्यै प्रियमदर्शयत् । सा च तं सुन्दरवरं विलोक्य मुदिताननः । दुष्प्रेक्ष्ये स्वगृहे पुंभिः रेमे प्राद्युम्निना समम् । परार्द्ध्यवासःस्रग्गन्धधूपदीपासनादिभिः । पानभोजनभक्ष्यैश्च वाक्यैः शुश्रूषयार्च्चितः । गूढः कन्यापुरे शश्वत् प्रवृद्धस्नेहया तया । नाहर्गणान् स बुबुधे उषयोपहृतेन्द्रियः" विस्तरस्तु हरिवं०१७६अ० । प्रातःकाले अव्य० मेदि०अव्ययत्वात् ततो भवार्थे त्युट् तुट् च। उषातन तद्भवे त्रि० स्त्रियां ङीप्।

उषाकल पु० उषायां कलो रवो यस्य। कुक्कुटे ।

उषापति पु० ६त०। कृष्णपौत्रे प्रद्युम्नपुत्रे यदुवंश्ये अनिरुद्धे तत्पतित्वप्राप्तिकथा उषाशब्दे उक्ता उषानामादन्तोपात्, अमरे 'अनिरुद्ध उषापतिरिति" मूलपाठः भारतादौ तु दीर्घपाठः ;

उषित त्रि० वस क्त । १पर्युषिते २कृतवासे च । उष–दाहे क्त । ३दग्धे मेदि० । ४चरिते भरतः । भावे क्त । ५वासे न० "चास्तकालैकषितं यत्र" शु०त० देवलः ।

उषीर पु०न० उष–कीरन्। वीरणमूले रायमुकुटः ।

उष्ट्र पु० उष–दाहने ष्ट्रन् वेदे नेट् । १भग्नकर्षेतरि बलीवर्द्दे । तस्यासोढवीर्य्यत्वात् तथात्वम् "कोष्टारौ वा" कात्या० ५,११,१२ । "कोष्टारौ महाबलीवर्द्दौ कर्कः । आ+सम्यक् उष्टारौ इति विग्रहः । "उष्टारेव फर्वरेषु श्रयेथे" ऋ० १५,१०६,२ । गोवैर तु उषित इत्येव । वेष्टरि त्रि० स्त्रियां ङीप् ।

उष्ट्र पुं०स्त्री० उष+ष्ट्रन् कित् । (उट) प्रसिद्धे पशुभेदे

शरदिशिपापयाः स्वयं प्रजन्त्यचिरमहृदयोद्वेगैः । निहन्ति शुक्रः क्षितिजेऽग्रतः प्रजा हुताशयक्षास्तुदर्शितस्वरैः । चराचरं व्यक्तमथोत्तरापथं दिशोऽग्निविद्युद्रजसा च योजयेत् । दक्षिणतो हन्ति पुरःस्थिते सितः सितं समस्तं द्विजगोसुराश्रयान् । दिशं च पूर्वां करकाम्बुजोऽम्बुदा गवेगदा भूरि भवेच्च शारदम् । सौम्योऽस्तोदययोः पुरो भृगुसुतस्यावस्थितस्तोयकृत् रोगान् पित्तकफामयांश्च कुरुते पुष्णाति च ग्रैष्मिकम् । हन्यात् प्रव्रजिताग्निहोत्रिकभिषक्रङ्गोपजीव्यान् हयान् वैश्यान् गाः सह वाहनैर्नरपतीन् पीतानि पश्चाद्धिमम् । शिखिभयमनलाभे शक्रचापस्य रक्ते कनकनिकषगौरे व्याधयो दैत्यपूज्ये । हरितकपिलरूपे श्वासकासप्रकोपः पतति न सलिलं खाद्भस्मरूक्षासिताभे । दधिकुमुदशशाङ्ककान्तिभृत् स्फुटविकसत्किरणो बृहत्तनुः । सुगतिरविकृतो जयान्वितः कृतयुगरूपकरः सिताह्वयः" "उशने काव्याय" ऋ० ६,२०,११। "उशने उशनसे" भा० छान्दसम् ।

**उशनस्स्तोम** पु० उशनसः स्तोमो यत्र अलुक्समा० वा विसर्गस्य लुक् । एकाहसाध्ये यागभेदे "उशनस्स्तोमेन गरगीर्णमिवात्मानं मन्यमानो यजेत" आ०श्रौ०९,५,१ । "उशनस्स्तोमोनाम एकाहसाध्यः पुनः स्तोम इति चास्यैव संज्ञा गरोविषं गीर्णं येन स गरगीर्णः यो बहुप्रतिग्रहादिना पापादिभयात् गरगीर्णमिवात्मानं मन्यते स एतेन यजेत" नारा० वृ० "उशना यत् सहस्यैरयातं गृहमपीयदवेतुर्वयावेति स्तृतमुशीते" इति तत्रैव सूत्रप्रारम्भः २सूत्रे उक्तः ।

**उशाना** स्त्री वश-ताच्छील्ये चानश् । सोमसाधनभूतायां गिरिजातायामोषधौ । "यद्यदाप्यायन्ति देवो वै सोमो दिवि हि सोमो वृत्रो वै सोम आसीत् तस्यैतच्छरीरं यद्गिरयः तदश्मानस्तदेषोशाना नामौषधिर्जायत इति श्वाह श्वेतकेतुरौद्दालकिस्तामेतदाहृत्याभिषुण्वन्ति" शत०ब्रा० ३,४,३,१० । "उशानाख्या ओषधिर्जायते इत्येवं श्वेतकेतुराह अतस्तामेव गिरावुत्पन्नाम् इदानीन्तना यजमाना अभिषुण्वन्ति न साक्षात् सोमम्" भा० ।

**उशिज्** पु० वश-इजि किच्च संप्र०। १अग्नौ २घृते च उज्ज्व० तत्र वह्नेः हविःकामयमानत्वात्, घृतस्य तु काम्यमानत्वात् तथात्वम् । ३कामयमाने त्रि० । "उशिगसि कविरिति" "उशिगसि वसुभ्य इति"च ता०ब्रा० "इयन्नुशिजोयथाविषः" ऋ० १, १२१,५, "उशिजः कामयमानान् यजमानान्" भा०। उशिजोमनीषिणः" ऋ० २,२१,२, "उशिज इन्द्रं कामयमानान्" भा० । "स हव्यवाडमर्त्य उशिग्दूतश्चनोहितः" ३,११,२ । "उशिक् हविःकामयमानः" भा० "उशिजोयविष्ठो वञ्चितमानाम्" १,१५,२२। "प्र पूर्वादिशुशिजः"यजु० "उशिजः हवींषि कामयमानान्" वेददी० ४काम्ये "उशिक् त्वं देव ! सोमाग्नेः प्रियं पाथोऽपीहि" यजु०८,५५ "उशिक् काम्यमानः" वेददीपः । "उशिगसि कविः" ५,३२, । उशिक्कामयमानः" वेददी० ५अश्वे तस्य काम्यमानत्वात्तथात्वम् । "उशिजा वह्निभ्यो वसून् जिन्वः" यजु० १५,६ । उशिजा वश कान्तौ इति उशिगश्वं तेन"वेददी०। ततः प्रज्ञाद्यर्थे अण् । औशिजः उक्तार्थे । करणे इजि । ६इच्छाहेतौ मेधायाम् निरु० । मेधायाः प्रज्ञानस्येच्छाहेतुत्वात् तथात्वम् । ततः अस्त्यर्थे अर्श० अच् । उशिजः मेधाविनि त्रि० निरु०

**उशी** स्त्री वश-ई-संप्र० । इच्छाभेदे उशीनरः ।

**उशीनर** पु० १वृष्णिवंशोद्भवे क्षत्रियभेदे । "उशीनरश्च विक्रान्तो वृष्णयस्ते प्रकीर्त्तिताः" भा०आ० १८६ अ० । २पौरवे नृपभेदे "शृणु पूरोर्महाराज ! वंशमुत्तमपौरुषम्" इत्युपक्रमे "सुद्युम्नस्याभवत् पुत्रो वीरो राजा पुरञ्जयः । जनमेजयो महाराजो पुरञ्जयसुतोऽभवत् । जनमेजयस्य राजर्षेर्महाशालोऽभवत् सुतः । महामना नाम सुतो महाशालस्य धार्मिकः । महामनास्तु द्वौ पुत्रौ जनयामास भारत ! । उशीनरं च धर्मज्ञं तितिक्षुञ्च महाबलम्" हरिवं० ३१अ० तस्य चरितं वर्णितम्" भा०व० "अत्रागच्छन्नृपवरं भ्रातृभिः सवासवः । जिज्ञासमानो वरदो महात्मानमुशीनरम् । इन्द्रः श्येनः कपोतोऽग्निर्भूत्वा यज्ञेऽभिजग्मतुः । ऊरुं राज्ञः समासाद्य कपोतः श्येनजाद्भयात् । शरणार्थी तदा राजन् ! निलिल्ये भयपीडितः" १३०अ० । "श्येन उवाच । धर्मात्मानं त्वा रेकं सर्वे राजन्महीक्षितः । स वै धर्मविरुद्धं त्वं कस्मात् कर्म चिकीर्षसि ? । विहितं भक्षणं राजन् ! पीड्यमानस्य मे क्षुधा । मा रक्षीर्धर्मलोभेन धर्ममुत्सृष्टवानसि । राजोवाच । संत्रस्तरूपस्त्राणार्थी त्वत्तो भीतो महाद्विज ! । मत्सकाशमनुप्राप्तः प्राणगृध्नुरयं द्विजः । एवमभ्यागतस्येह कपोतस्याभयार्थिनः । अप्रदाने परं धर्मं कथं श्येन ! न पश्यसि ? । प्रस्पन्दमानः संभ्रान्तः कपोतः श्येन ! लक्ष्यते । मत्सकाशे जीवितार्थी

वेददी० ४ब्राह्ममुहूर्त्ते "उषाय बन्धस्य मेध्यस्य विद्यात्" ह०उ०। "उषा ब्राह्मो मुहूर्त्तकालः" प्र०भा०। ५दिवोदुहितृदेवतायाम् स्त्री मौद्गमनोरमा।

**उषसी** स्त्री उषं तापकत्वात् दिवसं स्यति षो–क गौरा० ङीष्। सायं सन्ध्यायाम् मेदिनिः।

**उषस्ति** पु० ऋषिभेदे "उषस्तिश्च चाक्रायणः" छा०उ०। उषस्तोऽप्यत्र "अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ" "ततो होषस्तश्चाक्रायण उपरराम" इति च शत०ब्रा०१४,६,५,१।

**उषा** स्त्री ओषत्यन्धकारम् उष+क। १प्रातरादिसन्ध्यासु "वेनीरनुव्रतमुषास्त्रिणः" ऋ०८,४१,३। तिस्रः प्रातःसायं मध्याह्नरूपा उषाः" भा०। "उषा विभातीरनु भासि पूर्व्वीः" २,६,७, "तेजःपरिहाणिरुषा भानोरर्द्धोदयं यावत्" ह०सं०उक्ते २काले नक्षत्रप्रभाशून्ये काले उषा। तेन पञ्चपञ्चाशद्घटिकातः समारभ्य सूर्य्यार्द्धोदयपर्य्यन्तः स कालः। तन्नाद्यलाभे उषाकाले यात्रा शस्ता यथाह ज्यो० "प्रलुप्तद्युतितारका स्फुटतटी प्राची भवेन्निर्म्मला तीव्रद्युतिविलोहितान्तगगना देवैः सदा वाञ्छिता। नो वारं न तिथिं न योगकरणं लग्नञ्च नापेक्षते कृत्वा दोषसहस्रमल्पयमुषा नूनं करोत्युन्नतिमिति"। "तिथ्यादिषु निषिद्धेषु चन्द्रताराविलोमतः। उषां गोधूलियोगं वा स्वीकृत्य गमनं चरेत्। प्राच्यामुषां प्रतीच्याञ्च गोधूलिं वर्जयेन्नृप। दक्षिणेऽभिजितं चैवमुत्तरे च निशां तथा"। "आरक्तबिम्बं रजनीविरामं वदन्त्युषायोगमिह प्रवीणाः। व्यासः" "आहुः प्रयातुः सकलार्थसिद्धिः संलक्ष्यते हस्तगतस्थितेव" ज्यो०त०व्यासः। अन्धकारेण सन्तापकारिण्यां ३रात्रौ मेदि० "अधिकरुचिरशेषामप्युषां जागरित्वा" माघः। ४आरभूमौ। ततः कचित् गौरा० ङीष्। "भवान् कुर्तं कुहकराह्वमितोप्रसुप्याम्" भाग० ५स्त्रीगव्यां हेम० ६उखायां त्रिका० ७स्थाल्यां रमानाथः। ८बाणराजसुतायाञ्च तत्र दीर्घादित्वमपि भारतादौ तथैव निर्देशात्। तया च यथा अनिरुद्धः पतित्वेनाप्तः तथा वर्णितं भाग०१०स्क०६२अ०यथा (बाणस्य) "तस्योषा नाम दुहिता स्वप्ने प्राद्युम्निना रतिम्। कन्यालभत कान्तेन प्रागदृष्टश्रुतेन सा। सा तत्र तमपश्यन्ती क्वासि कान्तेति वादिनी। सखीनां मध्य उत्तस्थौ विह्वला व्रीडिता भृशम्। बाणस्य मन्त्री कुम्भाण्डश्चित्रलेखा च तत्सुता। सख्यपृच्छत् सखीं भूयः कौतूहलसमन्विता। कं त्वं मृगयसे सुभ्रु! कीदृशस्ते मनोरथः। हस्तग्राहं न तेऽद्यापि राजपुत्र्युपलक्षये। उषोवाच। दृष्टः कश्चिन्नरः स्वप्ने श्यामः कमललोचनः। पीतवासा बृहद्बाहुर्योषितां हृदयङ्गमः। तमहं मृगये कान्तं पाययित्वाऽधरं मधु। क्वापि यातः स्पृहयतीं क्षिप्त्वा मां वृजिनार्णवे। चित्रलेखोवाच। व्यसनं तेऽपकर्षामि त्रिलोक्यां यदि भाव्यते। तदानेष्ये नरं यस्ते मनोहर्त्ता तमादिश। इत्युक्त्वा देवगन्धर्वसिद्धचारणपन्नगान्। दैत्यविद्याधरान् यक्षान् मनुष्यांश्च तथाऽलिखत्। मनुजेषु च सा वृष्णीन् शूरमानकदुन्दुभिम्। व्यलिखद् रामकृष्णौ च प्रद्युम्नं वीक्ष्य लज्जिता। अनिरुद्धं विलिखितं वीक्ष्योषाऽवाङ्मुखी ह्रिया। सोऽसावसाविति प्राह स्मयमाना महीपते!। चित्रलेखा तमाज्ञाय पौत्रं कृष्णस्य योगिनी। ययौ विहायसा राजन्! द्वारकां कृष्णपालिताम्। तत्र सुप्तं सुपर्य्यङ्के प्राद्युम्निं योगमास्थिता। गृहीत्वा शोणितपुरं सख्यै प्रियमदर्शयत्। सा च तं सुन्दरवरं विलोक्य मुदितानना। दुष्प्रेक्ष्ये स्वगृहे पुंभी रेमे प्राद्युम्निना समम्। परार्ध्यवासःस्रग्गन्धधूपदीपासनादिभिः। पानभोजनभक्ष्यैश्च वाक्यैः शुश्रूषयार्च्चितः। गूढः कन्यापुरे शश्वत् प्रवृद्धस्नेहया तया। नाहर्गणान् स बुबुधे उषयोपहृतेन्द्रियः" विस्तरस्तु हरिवं०१७६अ०। प्रातःकाले अव्य० मेदि० अव्ययत्वात् ततो भवार्थे ट्युल् तुट् च। उषातन तद्भवे त्रि० स्त्रियां ङीप्।

**उषाकल** पु० उषायां कलो रवो यस्य। कुक्कुटे।

**उषापति** पु० ६त०। कृष्णपौत्रे प्रद्युम्नपुत्रे यदुवंश्ये अनिरुद्धे तत्पतित्वप्राप्तिकथा उषाशब्दे उक्ता उषानाथादयोऽप्यत्र, अमरे "अनिरुद्ध उषापतिरिति" ह्रस्वपाठः भारतादौ तु दीर्घपाठः।

**उषित** त्रि० वस क्त। १पर्य्युषिते २कृतवासे च। उष–दाहे क्त। ३दग्धे मेदि०। ४त्वरिते धरणिः। भावे क्त। ५वासे न० "वाष्पजालैरुषितं यत्र" सु०त० देवलः।

**उषीर** पुंन० उष–कीरच्। वीरणमूले रायमुकुटः।

**उष्ट्र** पु० उष–सेचने ष्ट्रन् वेदे नेट्। १ककुद्मति बलीवर्द्दे। तस्यामोघवीर्य्यत्वात् तथात्वम् "ओष्टारौ वा" कात्या० ५,११,१२। "ओष्टारौ महावलीवर्द्दौ" कर्कः। आ+उष्ट्र उष्टारौ इति विग्रहः। "उष्टारेव फर्वरेषु श्रयेथे" ऋ० १०,१०६,२। लोके तु उक्षितः इत्येव। सेक्तरि त्रि० स्त्रियां ङीप्।

**उष्ट्र** पुंस्त्री० उष+ष्ट्रन् किच्च। (उट) प्रसिद्धे पशुभेदे

स्त्रियां जातित्वात् ङीष्। “हस्तिगोऽश्वोष्ट्रदमको नक्षत्रैर्यश्च जीवति” “नाधीयीताश्वमारूढो न रथं न च हस्तिनम्। न नावं न खरं नोष्ट्रं नेरिणस्थो न यानगः” मनुः। तद्यानिषेधमाह “उष्ट्रयानं समारुह्य खरयानं तु कामतः। स्नात्वा तु विप्रो दिग्वासाः प्राणायामेन शुध्यति” मनुः। कामतः” इत्युक्त्या कर्म्मभेदे तद्याने न दोष इति सूचितम् अतएव ‘उष्ट्रमारोक्ष्यन्नभिमन्त्रयते त्वाष्ट्रोऽसि” पार० गृ०सू० मन्त्रलिङ्गेन तद्यानं विहितम्। तस्य मांसं न भक्ष्यम् “भक्ष्यान् पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतोदतः” मनूक्तेः। तेनास्य एकदन्तपङ्क्तियुक्तत्वम्। “गौरजो महिषः शशः सूकरो गवयो रुरुः। द्विशफाः पशवश्चेमे अविरुष्ट्रश्च सप्तम!” भाग० उक्तेः गवादयः उष्ट्रान्ता द्विशफाः इति बोध्यम्। एषां तद्घाते दोषः “मनुष्यमारणे क्षिप्रं चौरवत् किल्बिषं भवेत्। प्राणभृत्सु महत्सु च गोगजोष्ट्रहयादिषु” मनूक्तेः। ब्रह्महत्यादिपापेन तज्जातिर्भवति यथाह मनुः “यां यां योनिन्तु जीवोऽयं येन येनेह कर्म्मणा। क्रमशो याति लोकेऽस्मिंस्तत्तत् सर्वं निबोधत। बहून् वर्षगणान् घोरान्नरकान् प्राप्य दारुणान्। संसारान् प्रतिपद्यन्ते महापातकिनस्त्विमे। श्वसूकरखरोष्ट्राणां गोऽजाविमृगपक्षिणाम्। चण्डालपुक्कसानाञ्च ब्रह्महा योनिमृच्छति”। यानहरणपापेऽप्युष्ट्रयोनिप्राप्तिमाह हृत्वेत्यनुवृत्तौ मनुः “स्त्रीऋक्षः क्रोकोवारि, यानान्युष्ट्रः, पशूनजः। तद्वधे प्रायश्चित्तमाह “हयस्त्रागाविकोष्ट्रेषु गर्द्दभेषु च मारणात्। प्राजापत्यार्द्धमेवेह प्रायश्चित्तं विधीयते” प्रा० वि० विष्णुः। तद्भक्षणे प्रायश्चित्तमाह भुक्त्वेत्यनुवृत्तौ प्रा० वि० यमः “नामकं कुञ्जरोष्ट्रौ च सर्वं पञ्चनखं तथा। क्रव्यादं कुक्कुटं ग्राम्यं कुर्य्यात् संवत्सरव्रतम्” “अथोष्ट्रवामीशतवाहितार्थः” रघुः। “इतिश्च तत्र कुर्वीत यानप्रोष्ट्रावलोकयेत्” मनुः। “अन्योन्यतः पथि यतोर्विसीतामिभोष्ट्रौ” माघः। तन्मूत्रगुणाः सुश्रु० उक्ताः। “अथ मूत्राणि गोमहिषाजाविगजहयखरोष्ट्राणां तीक्ष्णानि कटून्युष्णानि तिक्तानि लवणानुरसानि लघूनि शोधनानि कफवातकृमिमेदोविषगुल्मार्शउदरकुष्ठशोफारोचकपाण्डुरोगहराणि हृद्यानि दीपनानि च सामान्यतः। भवन्ति चात्र। मूत्रं कटु तीक्ष्णोष्णं लवणानुरसं लघु। शोधनं कफवातघ्नं कृमिमेदोविषापहम्। अर्शोजठरगुल्मघ्नं शोफारोचकनाशनम्। पाण्डुरोगहरं भेदि हृद्यं दीपनपाचनम्”। सामान्यत उक्त्वा “अर्शोघ्नं कारभं मूत्रमिति” विशेषगुण उक्तः। तन्मांसगुणाः सुश्रुते उक्ताः तच्च उरभ्रशब्दे दर्शितम्। तस्य ग्राम्यत्वं तत्रोक्तम्। तच्च उरभ्रशब्दे दर्शितम्। किन्तु तस्यारण्यत्वमपि अतएव “उष्ट्रमारण्यमनु ते दिशामि” यजु० १२.२४, तस्यारण्यत्वमुक्तम्। तस्य त्वष्टृदेवतायै अश्वमेधे देयतोक्ता “बृहस्पतये गवयांस्त्वष्ट्र उष्ट्रान्” यजु० २४,२८, द्वित्वे गोयुगच् उष्ट्रगोयुग उष्ट्रद्वित्वे न० शालायां गोष्ठच्। उष्ट्रगोष्ठ उष्ट्रशालायां न० षट्त्वे षड्गवच्। उष्ट्रषड्गव उष्ट्रषट्त्वे न०। तस्येदम् अण्। औष्ट्र तत्सम्बन्धिमांसादौ त्रि०। “परं चौष्ट्रं मेषं नरमहिषयोश्छागमपि वा” कर्पूरस्तवः।

**उष्ट्रकर्णिक** पु० उष्ट्रस्य कर्णः भेदनम् कर्ण+भिदि—अच्। सोऽस्त्यस्य ठन्। दक्षिणस्थे जनदेशभेदे तद्देशवासिभिर्हि भोजनार्थम् उष्ट्रभेदनात् तद्देशस्य तथात्वम्। सहदेवदक्षिणदिग्विजयवर्णने “कच्छ्रांस्तालवनांश्चैव कलिङ्गानुष्ट्रकर्णिकान्। आटवीं च पुरीं रम्यां यवनानां पुरीं तथा” भा० स० २० अ० उष्ट्रतुल्यकर्णजनवत्त्वाद्वा तथात्वम्।

**उष्ट्रकाण्डी** स्त्री उष्ट्र इव काण्डोऽस्य जातित्वात् ङीष् (उटाटी) क्षुपभेदे राजनि०।

**उष्ट्रग्रीव** पु० उष्ट्रग्रीवा आकारत्वेनास्त्यस्य अर्श० अच्। सुश्रुतोक्ते पैत्तिके भगन्दररोगभेदे। तन्निदानस्वरूपादि तत्रोक्तं यथा “वातपित्तश्लेष्मसन्निपातागन्तुनिमित्ताः शतपोनकोष्ट्रग्रीवपरिस्राविशम्बूकावर्त्तोन्मार्गिणो यथासङ्ख्यं पञ्च भगन्दरा भवन्ति। ते तु भगगुदवस्तिप्रदेशदारणाच्च भगन्दरा इत्युच्यन्ते। अपक्वाः पिड़काः पक्वास्तु भगन्दराः। तेषान्तु पूर्वरूपाणि कटीकपालवेदना गुदकण्डूर्दाहः शोफश्च गुदस्य भवति” इत्युपक्रम्य। “पित्तन्तु प्रकुपितमनिलेनाधःप्रेरितं पूर्ववदवस्थितं रक्तां तन्वीमुच्छ्रितामुष्ट्रग्रीवाकारां पिड़कां जनयति। साऽऽस्य चोषादीन्वेदनाविशेषान् जनयत्यप्रतिक्रियमाणा च पाकमुपैति क्षाराग्निसाराभ्यामिव दह्यते दुर्गन्धमुष्णमास्रावं स्रवत्युपेक्षितश्च वातमूत्रपुरीषरेतांसि विसृजति, तं भगन्दरमुष्ट्रग्रीवमित्याचक्षते”। उष्ट्रशिरोधरोऽप्यत्र “प्रकोपणैः पित्तमतिप्रकोपितं करोति रक्तां पिड़कां गुदागताम्। तदाशुपाकाहिमपूतिवाहिनीम् भगन्दरं तूष्ट्रशिरोधरं वदेत्” निदानम्।

**उष्ट्रधूसरपुच्छी** स्त्री उष्ट्रस्येव धूसरः पुच्छ इव मञ्जरी यस्याः जातित्वात् ङीष्। (पिचाति) वृक्षभेदे रत्नमाला स्वार्थे कन् क्षुपः। तत्रार्थे।

**उष्ट्रपादिका** स्त्री उष्ट्रस्य पादा इव पादोमूलमस्याः कपि अत इत्त्वम् । (मदनमाली) भूमिलतायाम् रत्नमा०

**उष्ट्रस्थान** न०६त०। उष्ट्रस्य शालायाम् । तत्र भवः अण् । स्थानान्तत्वात् तस्य लुक् । उष्ट्रस्थान तत्रभवे त्रि० तद्धित लकि विशेष्यलिङ्गत्वनियमात् त्रिलिङ्गत्वम् ।

**उष्ट्रासिका** स्त्री आसनम् आसिका आस–भावे ण्वुल् उष्ट्र-स्येवासिका । उष्ट्रस्येव आसने । "उष्ट्रासिकाः आसते" पा० भाष्यम् अत्र क्रियाविशेषणस्यापि यथा बहुवचना-न्तताऽऽक्षीबता च तथाकारे समर्थितम् तच्च शब्दार्थरत्ने अस्माभिर्दर्शितम् ।

**उष्ट्रिका** स्त्री उष्ट्रस्याकारः पृष्ठावयव इव आकारोऽस्त्यस्याः ठन् । मृण्मये मद्यभाण्डभेदे विश्वः "भूर्भङ्गविक्षेपविदारि-तोष्ट्रिका" माघः। उष्ट्री+स्वार्थे कन्। उष्ट्रजातिस्त्रियाञ्च ।

**उष्ण** पु० उष+नक् । १ग्रीष्मे, ऋतौ, २आतपे, ३पलाण्डौ ४नरकभेदे, ५शीतविरोधिस्पर्शे च । अर्श०अच् ।६तद्वति, ७आलस्यरहिते दक्षे च त्रि० । "ऋतके ऋतके चैव न स्नायादुष्णवारिणा" स्मृतिः "आदत्ते नातिशीतोष्णः नभ स्वानिव दक्षिणः" रघुः "अर्भोऽस्यमुष्णैरपि तस्य शोषणः" "स्नापयन्नभिमानोष्णैर्वनमालां सुखानिलैः" माघ: ८तापे पु० "मृणालभृष्णं ततिभिस्तदुष्णाम्" माघः "उष्णं तापम्" मल्लि० । तत्र ग्रीष्मस्य सूर्यतापाधिक्ययुक्तत्वात् उष्णत्वम् "ग्रीष्मातीव्रकरोभानुर्न हेमन्ते तथाविधः" इति प्रश्ने "अत्रा सन्नतया तेन ग्रीष्मे तीव्राः कराः रवेः । देवभागे-ऽसुराणान्तु हेमन्ते मन्दताऽन्यथा" सू० सि० तत्रैवोक्तेः । विवृतञ्चेदं रङ्गनाथेन "तेन उत्तरदक्षिणगोलयोः सूर्य-स्योत्तरदक्षिणसञ्चाररूपकारणेनेत्यर्थः । देवभागे जम्बूद्वीपे आसन्नतया सूर्यस्यात्यन्तनिकटस्थत्वेन ग्रीष्मे ग्रीष्मर्त्तौ सूर्यस्य तेजोगोलकस्य किरणास्तीव्रा अत्युष्णाः । असु-राणां देवभाग इत्यस्य समन्वयाद्दैत्यानां भागे सप्तद्वाद्-क्षिणप्रदेशे हेमन्ते हेमन्तर्त्तौ तत्कारात् सूर्यस्यात्युष्णाः किरणाः सूर्यस्यात्यासन्नत्वात् । अन्यथा सूर्यस्य दूर-स्थत्वे मन्दता किरणानामुष्णताभावः । देवभागे हेमन्तर्त्तौ कराणां मन्दता । अतएव तत्र शीताधिक्यम्, दैत्यभागे ग्रीष्मे कराणां मन्दता शीताधिक्यञ्च । तथाच देव-भागे दक्षिणगोले सूर्यस्य दूरस्थत्वमुत्तरगोले निकट-स्थत्वं मध्यगतदेशानां क्रमेणाधिकाल्पत्वादीति भावः" । अतएवोक्तं "मेषकर्कटयोर्मध्ये गाढं तपति भास्करः" ति०त० पु० । एतच्च देवभाग एव नासुरभागे, ग्रीष्म ऋतुश्च ज्यैष्ठाषाढात्मकः । "मधुश्च माधवश्च वासन्तिकावृतुः शुक्रश्च शुचिश्च ग्रीष्मावृतुः" काल०मा० इष्टकोपधानमन्त्रोक्तेः । ततो भावे इमनिच् । उष्णिमन् पु० तल् उष्णता स्त्री त्व उष्णत्व न० ष्यञ् औष्ण्य न० । उष्णस्पर्शे स्वार्थे कन् उष्णस्पर्शाद्यर्थे । उष्णस्पर्शस्तु तेजसोगुणः "स्पर्श उष्ण-स्तेजसस्तु" भाषोक्तेः जलादीनां तेजःसंयोगविशेषादौ-पाधिकः । देहस्य तथात्वे कारणभूतनृमन्त्रे वक्ष्यते गुणव-चनत्वात् प्रकारे द्वित्वम् उष्णोष्ण उष्णप्रकारे । "उष्णो-ष्णशीकरसृजः" माघः

**उष्णक** त्रि०उष्णमिव करोति कन् । १आतुरे, क्षिप्रकारिणि क्षिप्रकारी हि आशाधावकमालस्यमनादृत्य सकलंकर्म व्याप्रियते इति तस्य तथात्वम् । उष्णं करोति उष्ण+ णिच्-ण्वुल् । २ज्वरे पु० ।

**उष्णकर** पु० उष्णः करः किरणोऽस्य । १सूर्ये । उष्ण-किरणोष्णदीधिति प्रभृतयोऽप्यत्र । उष्णं करोति कृ–अच् ६त०। २उष्णकारके त्रि०

**उष्णकाल** पु०कर्म०६त०वा । ग्रीष्मे ऋतौ । "तक्रं नैव पिबे-दद्यात् नोष्णकाले न दुर्बले" सुश्रुतः ।

**उष्णग** पु०उष्णमुष्णस्पर्शं गच्छति यत्र गम–वा० आधारे ड । ग्रीष्मे काले "मातङ्गोऽप्यपतत् भूमौ नदीरोधस्युष्णगे" भा०अ०१२२अ०। आधारे घञ् उष्णगमोऽप्यत्र हेम०।

**उष्णगु** पु० उष्णागावः कराः अस्य प्रभुः । सूर्ये । उष्णर-श्म्यादयोऽप्यत्र "कुबेरगुप्तां दिशमुष्णरश्मौ" कुमा० ।

**उष्णङ्करण** न० ६त०करणे परे मुम् । उष्णसाधने ।

**उष्णनदी** स्त्री कर्म०। "यमद्वारे महाघोरे तप्ता वैतरणी नदी" इत्युक्तायाम् तप्तायां वैतरण्याम् नद्याम् ।

**उष्णवारण** न०उष्णं वारयति वृ–णिच्–ल्यु ६त०। आतपत्रे, छत्रे "यद्यर्थमम्भोजमिवोष्णवारणम्" कुमा०आसीदुत्पत्त्या-दिकम् आतपत्रशब्दे ६४८ पृ० उक्तम् । तल्लक्षणं वृ०सं० दर्शितं यथा "निचितं तु हंसपक्षैः कृकवाकु-मयूरसारसानां च । दौकूलेन नवेन तु समन्ततश्छादितं शुक्लम् । मुक्ताफलैरचितप्रलम्बमालाविलं स्फटिकमू-लम् । षड्ढस्तशुद्धहैमं नवपर्व नगैकदण्डं च । दण्डार्ध-विस्तृतं तत् समावृतं रत्नविभूषितमूर्धम् । नृपतेस्तदात-पत्रं कल्याणकरं विजयदं च । युवराजनृपतिपत्न्याः सेनापतिदण्डनायकानां च । दण्डोऽर्धपञ्चहस्तः समपञ्च-कृतार्धविस्तारः । अन्येषामुष्णघ्नं प्रसादपट्टैर्विभूषितशिर-स्कम् । व्यालम्बिरत्नमालं छत्रं कार्यं च मायूरम् ।

आघेषां च नराणामातपवारणं तु चतुरस्रम्। समवृत्तदण्डयुक्तं छत्रं कार्य्यं तु विप्राणाम्" उष्णमादयो ऽपत्र। तद्धारणे गुणाः सुश्रुते उक्ता यथा "वर्षानिलरजोघर्महिमादीनां निवारणम्। वर्ण्यं चक्षुष्यमोजस्यं मङ्गलं छत्रधारणम्"।

**उष्णवीर्य्य** पु० उष्णमुष्णं वीर्य्यं यस्य। १शिशुमाराख्ये जलजन्तौ। २उष्णवीर्य्यवति त्रि० हेम०। उष्णवीर्य्यद्रव्याणि च सुश्रुते नानास्थाने उक्तानि तानि तत्र एवावगन्तव्यानि

**उष्णांशु** पु० उष्णाः अंशवोयस्य। सूर्य्ये।

**उष्णागम** पु० उष्ण आगम्यतेऽत्र गम+आधारे-अप्। निदाघकाले। उष्णाभिगमोऽप्यत्र शब्दच०।

**उष्णालु** त्रि० उष्णं न सहते आलु। उष्णाऽसहने। "उष्णालुः शिशिरे निषीदति तरोर्मूलालवाले शिखी" विक्रमो०।

**उष्णासह** पु० उष्णा आसह्यतेऽत्र आ+सह-अप्। १हेमन्तर्तौ। उष्णं न सहते अच्। २उष्णाक्षमे त्रि०।

**उष्णिका** स्त्री अल्पमन्नमस्याम् अल्पार्थे कन् नि० अन्नस्य उष्णादेशः। १यवाग्वाम् (याउ)। उष्णकशब्दात् स्त्रियां टाप् अत इत्त्वम्। २दक्षायाम् स्त्रियाम्।

**उष्णिज** पु० उष-इजिक् बा० तुट्। उषस्सम्भूते ततः प्रज्ञा० स्वार्थे अण्। औष्णिज तदर्थे।

**उष्णिह्** स्त्री उत्स्निह्यति क्विन् नि०उदोऽन्त्यलोपे षत्वम्। अष्टाक्षरपादके १छन्दोभेदे। झलादौ कुः उष्णिक्। उष्णिग्भ्याम्। "गायत्र्युष्णिगनुष्टुप् च वृहती पङ्क्तिरेव च" इ०र०। "अथ छन्दांसि गायत्र्युष्णिगनुष्टुब्बृहती" इत्युपक्रम्य "द्वितीयमुष्णिक् त्रिपदान्त्योऽष्टादशकः। आद्यश्चेत् पुरउष्णिक्, मध्यमश्चेत् ककुप्। त्रैष्टुभ जागतगाथाः ककुब्न्यङ्कुशिरोकाद्यिनोः परः षट्कस्तुशिराः मध्ये चेत् पिपीलिका मध्याद्यपञ्चकावोऽष्टका अनुष्टुब्गर्भा चतुःसप्त औष्णिगेव" सर्वानु० ५अ०। "एकमेवोष्णिहं सवितारं ग्रीवास्वनूके" इति सर्वानु० ४अ० उक्तेः तस्याः सवितृदेवताकत्वेन ग्रीवासु अनूके च न्यासः। तस्या उपधानप्रकारः शत०ब्रा० ८,६,२,२, आदौ दर्शितः तत एवावसेयः। २तदभिमानिदेवभेदे च। अश्वमेधे "त्रिवत्सा अनुष्टुभे तुर्य्यवाह उष्णिहे" यजु० २४,१२१। पशुविशेषाणामुक्तदेवताविशेषोद्देशेन यूपादौ बन्धनमुक्तम्। अस्य हलन्तत्वेऽपि अजादि०टाप्। उष्णिहा "उष्णिहा छन्द इन्द्रियम्" यजु० २१,१२, "बृहत्युष्णिहा ककुप् सूचीभिः शम्यन्तु त्वा २३,३३, "शृणातु ग्रीवाः प्र स्कन्धा नूष्णिहा इवस्येव शचीपतिः" अथर्ववेदे ६,१२४,१,

**उष्णीगङ्ग** न० उष्णीभूता गङ्गा नदीभेदो यत्र मध्यपदलोपः। भृगुतुङ्गपर्वतस्थे तीर्थभेदे "अपां ह्रदं च पुण्याख्यं भृगुतुङ्गं च पर्वतम्। उष्णीगङ्गे च कौन्तेय! सामात्यः समुपस्पृश" भा०व०१३५ अ०।

**उष्णीष** पु०न० उष्णमीषते हिनस्ति ईष-क शक० पररूपम्। १शिरोवेष्टनवस्त्रे(पागड़ि) २किरीटे च "अथास्मा आध्वर्युरुष्णीषं प्रयच्छति तदञ्जलिना प्रतिगृह्य त्रिःप्रदक्षिणं शिरः सम्मुखं वेष्टयित्वा" का०श्रौ०सू०६,७। "लोहिता लोहितोष्णीषा निस्त्रिंशिनो याजयेयुः" का०श्रौ० ८,७,४। "लोहितोष्णीषा ऋत्विजश्चरन्तीति" श्रुतिः। समावर्त्तनकाले च तस्य धारणमाचार्य्याय दानं च विहितम्। "अथैतान्युपकल्पयीत समावर्त्तमाने मणिकुण्डले वस्त्रयुगं छत्रमुपानद्युगं दण्डं स्रजमुन्मर्दनमनुलेपनमाञ्जनमुष्णीषमित्यात्मने आचार्य्याय च"। "यद्युभयोर्न विन्देताचार्य्यायैव" आ० गृ० ३,८,१,२। तद्धारणगुणः सुश्रु० उक्तः "पवित्रं केश्यमुष्णीषं वातातपरजोऽपहम्। वर्षानिलरजोघर्महिमादीनां निवारणम्"।

**उष्णीषिन्** त्रि० उष्णीष+अस्त्यर्थे इनि। १उष्णीषधारिणि स्त्रियां ङीप् २महादेवे पु०। "उष्णीषी च सुवक्त्रश्च उदग्रो विनतस्तथा" शिवस्तुतौ भा०अनु०१७। "उष्णीषिणे सुवक्त्राय सहस्राक्षाय मीढुषे" भा० अनु० ८।

**उष्णोदक** न० कर्म०। अग्निना तप्तजले क्वाथ्यमानपादशेषार्द्धावशेषपादादिहीनके जले तद्गुणादि भावप्र० "अष्टमेनांशशेषेण चतुर्थेनार्द्धकेन वा। अथवा क्वथनेनैव सिद्धमुष्णोदकं वदेत्"। तद्गुणाः "श्लेष्मामवातमेदोघ्नं वस्तिशोधनदीपनम्। कासश्वासज्वरान् हन्ति पीतमुष्णोदकं निशि। क्वाथ्यमानन्तु निर्वेगं निष्फेनं निर्म्मलं तथा। अर्द्धावशिष्टं यत्तोयं तदुष्णोदकमुच्यते। ज्वरकासकफश्वासवातपित्तामेदसाम्। नाशनं वस्तिसंशोधि पथ्यमुष्णोदकं सदा। त्रिपादशेषं सलिलं प्रोक्तं शरदि शस्यते। हिमेऽर्द्धशेषं शिशिरे तथा वर्षावसन्तयोः" अन्ये तु "निदाघे त्वर्द्धपादोनं पादहीनन्तु शारदम्। शिशिरे च वसन्ते च हिमे चार्द्धावशेषितम्। अष्टमांशावशेषन्तु वारि वर्षासु शस्यते" केचित्तु "विशिष्यन्ते वाक्येषु वेदेषु त्रिषु पञ्चयोः। एकभागावशेषं स्यादम्बु वर्षादिषु क्रमात्"। अत्र दोषाणां वयोल्पता हीनता वा तथा व्यवस्था कल्पनीया। "तत् पादहीनं पित्तघ्न-

# ऊ

ऊकारः स्वरवर्णभेदः "ओष्ठ्यावुपू" इत्युक्तेः ओष्ठस्थानोच्चारणीयः स च उदात्तानुदात्तस्वरितभेदात् त्रिविधः दीर्घश्च द्वाभ्यां मात्राकालाभ्यामुच्चार्यत्वात् तस्य प्लुतत्वोक्तिविरहात् त्रिमात्रकालस्यैव प्लुतत्वात् व्यञ्जनाकारभेदाच्च प्लुतस्य पार्थक्येनानुक्तिः त्रिमात्रकालाकारेणैव लेखनसमाधानात्। त्रिविधोऽपि अनुनासिकानुनासिकभेदात् द्विधा तेन षड्विधः तस्योच्चारणे विवार आन्तरप्रयत्नः "स्वराणामूष्मणाञ्चैव विवृतं करणं स्मृतम्" शिक्षोक्तेः विवृतत्व जिह्वाग्रादेः स्पर्शाभावः। "अचोऽस्पृष्टा यणस्त्वीषत्, नेमस्पृष्टाः शलः स्मृताः" इति शिक्षोक्तेः तस्य तन्त्रे शुक्लाद्याकारतया ध्येयतोक्ता यथा "शुक्लकुन्दसमाकार ऊकारः परकुण्डली" कामधेनुतन्त्रम्। तस्य वामकर्णे सबिन्दुकतया निर्बिन्दुकतया वा मातृकान्यासे न्यासः। अतएव वामकर्णशब्देन तस्याभिधेयता "ईशानः सेन्दुवामश्रवणपरिगतो बीजमन्यन्महेशि।" कर्पूरस्तवे हुङ्कारमन्त्रोद्धारः। तत. स्वरूपे कारप्रत्ययः। तप्रत्ययश्च। अधिकं स्वरवर्णशब्दे वक्ष्यते।

ऊ अव्य० वेञ् क्विप्। १सम्बोधने, २वाक्यारम्भे, ३दयायां, ४रक्षायाञ्च मेदि० उञः स्थाने इतौ परे अनुनासिक ऊँ इति आदेशे तदर्थे तस्य प्रगृह्यत्वादितौ न सन्धिः।

ऊ पु० अवतीति अव–क्विप् ऊठ्। १महादेवे २चन्द्रे च। ३पालके त्रि० मन्त्ररत्ना०

ऊढ़ पु० वह–प्रापणे ज्ञानार्थत्वात् १कर्त्तरि क्त। १कृतविवाहे पुंसि "परिवेत्तानुजोऽनूढे ज्येष्ठे दारपरिग्रहात्" अमरः अनूढ अऊढवत् तत्रैव पु०। कर्मणि क्त। कृतविवाहायां स्त्रियाम् स्त्री। "भार्योढं तमवाप्य तस्य सौमित्रयेऽसको" भट्टिः "कन्या पितृगृहेऽनूढा सवर्णाद्या यदा भवेत्" दायतत्त्वम् "अऊढाग्रूढासवर्णावेऽनूढैव प्रथमं धनहारिणी" दायक्र०। ऊढस्यापत्यं इति वाक्ये औऊढि न सि० कौ० औऊढि न इत्यन्ये। २कृतवहने धृते त्रि०। अस्य प्रशब्देन प्रा० स० वृद्धिः। प्रौढः "प्रौढकन्यावादोपदर्शनात्" रघु० "अप्रवरूपस्यैव नार्थकत्वेति" परिभाषया प्रोढशब्दनिष्पन्नस्य न वृद्धिः

ऊढकङ्कट पु० ऊढो धृतः कङ्कटः कवचोयेन। धृतकवचे वर्णिते।

ऊढि स्त्री वह–भावे क्तिन् संप्र०। १वहने २विवाहे च। प्र+ऊढि प्रा० स० वृद्धिः। प्रौढिः। ऊढिमाख्यत् औजिढत् न सि० कौ० औढिढत् इत्यन्ये।

ऊत त्रि० वेञ्–क्त संप्र० दीर्घः। १कृतवयने २ग्रथिते। अवीतन्तुसन्ताने क्त। ३स्यूते "यस्मिन्नोतञ्च प्रोतञ्च" श्रुतिः। अव–क्त ऊठ्। ४रक्षिते त्रि०।

ऊति स्त्री अव–क्तिन् ऊठ्। १रक्षणे। "देवस्य यन्त्यूतयो विविधाः" ऋ० २,१४,६, "मतमचान् सङ्गमूतयः" ४,२१,१०, कर्त्तरि क्तिच् ऊठ्। २रक्षितरि "उपस्थिताम्भसाध्योदघ्ना न ऊती" ऋ० ४४,२, "ऊतीः ऊतयः रक्षन्तः" भा० अव–वेञ् वा क्तिन्। ३सीवने (सेलाइ) ४वयने (वोना) ५स्मरणे मेदि०। ६लीलायाम् "न यस्य कश्चिन्निपुणेन धातुरवैति जन्तुः कुमनीष ऊतीः" भा० १,५,३८, "ऊतीर्लीलाः" श्रीधरः वेञ्–कर्मणि कर्त्तरि वा क्तिन् क्तिच् वा। ७पुराणलक्षणमध्ये कर्मवासनारूपे तल्लक्षणभेदे। "तदिदं भागवतं पुराणं दशलक्षणम्" इत्युक्त्वा "अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः। मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः" इति दश लक्षणान्युद्दिश्य तेषां लक्षणान्युक्तानि यथा "भूतमात्रेन्द्रियधियां जन्म सर्ग उदाहृतः। ब्रह्मणो गुणवैषम्यात् विसर्गः पौरुषः स्मृतः। स्थितिर्वैकुण्ठविजयः पोषणं तदनुग्रहः। मन्वन्तराणि सद्धर्म ऊतयः कर्मवासनाः। अवतारानुचरितं हरेश्चास्यानुवर्त्तिनाम्। पुंसामीशकथाः प्रोक्ता नानाख्यानोपबृंहिताः। निरोधोऽस्यानुशयनमात्मनः सह शक्तिभिः। मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः। आभासश्च निरोधश्च यतोऽस्त्यध्यवसीयते। स आश्रयः परं ब्रह्म परमात्मेति शब्द्यते" भाग० २,१०,२,८ "कर्मणां वासनाः ऊयन्ते कर्मभिः सन्तन्यन्ते इत्यूतय यहा इत्यार्थात् संज्ञापायोहा वयतेर्धातोरिदं रूपम्। ऊयन्ते कर्मभिर्बध्यन्ते संश्लिष्यन्ते वा ऊतयः" श्रीधरः

ऊधन् न० ऊधस्+पृषो० सस्य नः। स्त्रीपश्वोः दुग्धाधारस्थाने (बेड) "वत्सो न मातरूप सर्ज्यूधनि" ऋ० ९,६९,१। "यदा पीतासो अंशवो गावो न दुह्र ऊधभिः" ८,९,१९। "प्र धेनवः सिस्रते दुग्ध ऊधः" ऋ० ४,२२,६।

ऊधर न० ऊधस्+पृ० सस्य रः। स्त्रीगव्यादेः ऊधसि (बेड) "ऊधर्नग्ना जरन्ते" ऋ० ८,२,१२।

ऊधस् न० उन्द–क्लेदने असुन् किच्च दीर्घः। स्त्रीगव्यादेः दुग्धाधारे स्थाने (बेठ) "गवामूधस्सु वक्षणासु" ऋ० १०,४९,१०।

"यदैव स्त्रियै सत्ताय्याप्यायेते ऊधः पशूनाम्" शत० ब्रा० २,५,१,५। अस्य बहु० ब०अनङ् समा० ङीप्। पीनोध्नी घटोध्नी। "भुवं कोष्णेन कुण्डोध्नी मेध्येनावभृथादपि" रघुः। "अस्त्रियान्तु न कुण्डोधैंनुकाम्" सि०कौ०। अनन्तरत्वेनैवोपपत्तौ अनङ्विधानं समासे अन्तप्रयोगवारणार्थम्। समासान्तविधेरनित्यत्वात् क्वचित्र "भद्राङ्-कनेतां आकारां पीनोधसमनिन्दिताम्। अभिगम्य स तां राजन्नन्दिनीं गाधिनन्दनः" भा० आ० १७५ अ०। आर्षत्वाद्वा तथा प्रयोगः। लोके तु न तथा। तत्र भवः शरीरावयवत्वात् यत्। ऊधस्य तद्भवे दुग्धे न०। "ऊधस्यमिच्छामि तवोपभोक्तुम्" रघुः। प्राशस्त्ये मतुप् मस्य वः ङीप्। ऊधस्वती प्रशस्तोधोयुक्तायां गवि। "पिपिवुःश्च व्रजान् गावः पयसोधस्वतीर्मुदा" भा० १, १०,५। ऊधसे हितम् गवादि० यत् अनङ् च। ऊधन्य ऊधसोहिते द्रव्यभेदे, यद्भोजने आपीनं पीनं भवति तस्मिन् द्रव्ये त्रि०। २रात्रौ निघ०। तत्राप हि मकरवत्सम्बन्धेन तद्योगात्तथात्वम्।

ऊन परिहाणे अदन्तचुरा० उभ० सक० सेट्। ऊनयति ते औनिनत् त लुङि पा चङ् औनयीत् औनयिष्ट। ऊनः ऊनितः। "मा त्वावतोऽजरितस्तोमूनयीः" ऋ० १,५,२,२।

ऊन त्रि० ऊन—हानौ अच्।१हीने, २असंपूर्णे च।"ऊनं न सत्त्वेष्वधिकोबबाधे" "किञ्चिदूनमनूनर्द्धेः शरदामयुतं ययौ" रघुः। "ऊने दद्यादृणमनेन यावत् सर्व्वमृणं भवेत्" ह० र०। "ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धवा वहिः" मनुः "ऊनं वाभ्यधिकं वापि विलेख्यो राजशासनम्" याज्ञ०। ऊनार्थयब्दयोगे तृतीया। एकेनोनः। ऊनार्थकशब्देन वा तृतीयास०। माषेणोनः माषोनः कलोनः कलयोनः। एकोनविंशतिः एकोनत्रिंशत् एकोनचत्वारिंशत् एकोनपञ्चाशत् एकोनषष्टिः एकोनसप्ततिः एकोनाशीतिः एकोननवतिः एकोनशतम्। तत्तत्संख्याया एकैकोनसंख्यायाम्। एवं द्व्यूनविंशत्यादयोऽपि अष्टादशादिसंख्यासु। संख्यासु एकत्वस्य प्रथमोपस्थितत्वात् एकशब्दाप्रयोगेऽपि एकत्वेनैवोनत्वावगमात् ऊनविंशत्यादिशब्दानामेकोनविंशत्यादीनां बोधकत्वम्। "एकेन द्वाभ्यामित्यूनके निपातः" वर्त्तु०।

ऊनचत्वारिंश त्रि० ऊनचत्वारिंशतः पूरणः डट्। ऊनचत्वारिंशत्संख्यापूरणे एवमूनविंश ऊनत्रिंश ऊनपञ्चाशाद्याः तत्तत्संख्यापूरणेषु। स्त्रियां ङीप्। तत्रार्थे तमप्। ऊनचत्वारिंशत्तम तदर्थे। एवमूनविंशतितमादयः तत्तत्संख्यापूरणेषु स्त्रियां ङीप्।

ऊबध्य न० ऊ—ईषदर्थे बध्यं जीर्णम्। ईषज्जीर्णे तृणादौ "यदूवध्यमुदरस्यापवाति" ऋ० १,१६२,१० "ऊबध्यम् अजीर्णं तृणादि" भा० "अपामतिं दुर्मतिं बाधमाना ऊबध्यं वातं सब्वं तदारात्" यजु० १६,८४, "ऊबध्यमाशयगतम्" वेददी०। २तत्स्थाने च "एतद्वोऽत्र तदरध्रमिति सर्वेभ्योवत्तेभ्यऊबध्यं यावत्तु तं भवति तदरन्ति सर्पाः" आश्व०गृ० ४,८,२६। अस्य अन्तःस्थ व मध्यत्वमित्येके।

ऊबध्यगोह पु० ऊबध्यस्य गोहः प्रच्छादनं यत्र। आन्त्रप्रच्छादनस्थाने। "सव्यावृतः शामित्रोऽबध्यगोहश्चात्वालोत्करास्त्रावान्" आश्व० श्रौ० ५,२,१६, "ऊबध्य गोहोनाम आन्त्रप्रच्छादनस्थानम्" नारा०वृ०। [याचने।

ऊम् अव्य० ऊय—डमु।१रोषोक्तौ,२प्रश्ने, ३निन्दायां,४स्वीकारे।

ऊम न० अव—मन् किच्च ऊठ् च। नगरभेदे उज्ज्वलद०। कर्त्तरि मन्।२रक्षितरि त्रि०।"परि च ऊमेभ्यः सिञ्चता मधु" ऋ० १०,२२,५, "ऊमेभ्यो रक्षितृभ्यः" भा०। भावे मन्। ३रक्षणे न०।"ये मर्त्तं पृतनवान्तमूमैः" १,१६९,७,ऊमैः रक्षणैः" भा०। उज्ज्वलदत्तस्तु तस्य मा० गुणं प्रकल्प्य उमाशब्दमाह। स च उमाशब्दार्थे। वेदोक्तपस्तु यदि साऽवतीः रूपमुभयथापि वा०छन्दस इति बोध्यम्

ऊय तन्तुसन्ताने भ्वा० ईदित् आत्म० स० सेट्। ऊयते औयिष्ट। ईदित्त्वात् निष्ठायां नेट् अतः ऊतवान् ऊतिः

ऊररी अव्य० ऊर—बा० ररीक्।१अङ्गीकारे,२विस्तारे च। ऊर्ज्जिगतिस० ऊररीकृत्य। ऊररीकृत अङ्गीकृते विस्तीर्णे च त्रि०। घञ् ऊररीकार: अङ्गीकारे विस्तारे च पु०।

ऊरव्य पुंस्त्री ऊरौ भवः शरीरावयवत्वात् यत्।१वैश्ये तज्जातिस्त्रियां टाप् योपधत्वात् न ङीप्। वैश्यानां ब्रह्मण ऊरुजातत्वात् "ब्राह्मणोऽस्य मुखमासीत् बाहू राजन्यः कृतः। ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत" यजु० ३१,११, उक्तेः "लोकानां तु विवृद्ध्यर्थं मुखबाहूरुपादतः। ब्राह्मणं क्षत्रियं वैश्यं शूद्रञ्च निरवर्त्तयत्" मनूक्तेश्च। तस्य वृत्तिरपि तत्रोक्ता। "ऊरव्याकृपमज्जानां पृथक् कार्य्यार्थसन्निता:" इत्युपक्रम्य "पशूनां रक्षणं दानमिज्याध्ययनमेव च। वणिक्पथं कुसीदञ्च वैश्यस्य कृषिमेव च"। २ऊरुभवमात्रे त्रि०।

ऊरी अव्य० ऊय—बा० रीक्। १अङ्गीकारे, २विस्तारे च।

ऊर्व्वादि॰ कत्रि गतिसमासादि ऊररीवत् द्रष्टव्यम्।

ऊरु पु॰ ऊर्णूयते आच्छाद्यते ऊर्णु-कर्मणि कु नुलोपश्च। जानूपरिभागे तस्य वस्त्रादिभिराच्छादनीयत्वात् तथात्वम्। "नितान्तनारीपरिधानधूननस्फुटागसाप्यूरुषु लोलचक्षुषः" "करभकरोरुभिदुरुभिदंधानैः" माघः। "कदली कदली, करभः करभः करिराजकरः करिराजकरः। भुवनत्रितये न बिभर्त्ति तुलामिदमूरुयुगं न चमूरुदृशः" प्रसन्नरा॰। "धात्रीकराभ्यां करभोपमोरुः" "भुजमूर्द्धोरुबाहुल्यादेकोऽपि धनदानुजः" रघुः अस्य उपमानपूर्व्वत्वे उत्तरपदस्थस्य बहु॰स॰ स्त्रियाम् ऊङ्। करभोरूः "करभोरु! रतिप्राप्ते द्वितीये पश्चमेऽप्यहम्" विद्यासुन्द॰ संहितशफलक्षणवामपूर्वकस्यापि ऊङ्। संहितोरूः सम्यग्घितोरूका इत्यर्थः शफाविव संश्लिष्टौ ऊरू यस्याः शफोरूः। लक्षणयुक्तावूरू यस्याः लक्षणोरूः। वामौ मनोहरौ ऊरू यस्याः वामोरूः "लसन्तो जलशफरीविघट्टितोर्व्वामोरूरतिशयमाप विभ्रमस्य" किरा॰। सहितसहपूर्व्वकस्यापि तादृशस्य ऊङ्। सहितौ हितयुतौ ऊरू यस्याः सहितोरूः। भारं सहेते सहावूरू यस्याः सहोरूः। ऊरौ भवः शरीरावयवत्वात् यत्। ऊरव्य ऊरुभवे वैश्ये पुंस्त्री तद्भवमात्रे त्रि॰। स्वाङ्गतयाऽस्मात् निष्ठान्तात् बहु॰स स्त्रियां ङीष्। ऊरुभिन्नी।

ऊरुग्राह पु ऊरू गृह्णाति स्तम्भाति ग्रह-अण् उप॰स॰। ऊरुस्तम्भरोगे ऊरुस्तम्भशब्दे विवृतिः। "ऊरुग्राहगृहीताश्च केचित्तत्राभवन् भुवि" भा॰द्रो॰१४६ अ॰।

ऊरुज पुंस्त्री ऊरोर्जायते जन-ड। वैश्ये स्त्रियां जातित्वात् ङीष्। २ऊरुजातमात्रे त्रि॰ ऊरुजातोरुजन्मादयोऽप्यत्र। ३भृगुवंश्ये और्व्वे ऋषिभेदे पु॰ तस्य ऊरुतोजन्मकथा भा॰ आ॰१७८,७९ अ॰ "कृतवीर्य्य इति ख्यातो बभूव पृथिवीपतिः। याज्यो वेदविदां लोके भृगूणां पार्थिवर्षभः। स तानग्रभुजस्तात! धान्येन च धनेन च। सोमान्ते तर्पयामास विपुलेन विशाम्पते!। तस्मिन्नृपतिशार्दूले स्वर्यातेऽथ कथञ्चन। बभूव तत्कुलेयानां द्रव्यकार्य्यमुपस्थितम्। भृगूणान्तु धनं ज्ञात्वा राजानः सर्व्व एव ते। याचिष्णवोऽभिजग्मुस्तांस्तात भार्गवसत्तमान्। भूमौ तु निदधुः केचित् भृगवो धनमक्षयम्। ददुः केचिद्द्विजातिभ्यो ज्ञात्वा क्षत्रियतो भयम्। भृगवस्तु ददुः केचित्तेषां वित्तं यथेप्सितम्। क्षत्रियाणां तदा तात! कारणान्तरदर्शनात्। ततो महीतलं तात! क्षत्रियेण यदृच्छया। खनताधिगतं वित्तं केनचिद्भृगुवेश्मनि। तद्वित्तं ददृशुः सर्व्वे समेताः क्षत्रियर्षभाः। अवमन्य ततः क्रोधाद्भृगूंस्तान् शरणागतान्। निजघ्नुः परमेष्वासाः सर्व्वांस्तान्निशितैः शरैः। आगर्भादवकृन्तन्तश्चेरुः सर्व्वां वसुन्धराम्। तत उच्छिद्यमानेषु भृगुष्वेवं भयात्तदा। भृगुपत्न्यो गिरिं दुर्गं हिमवन्तं प्रपेदिरे। तासामन्यतमा गर्भं भयाद्दध्रे महौजसम्। ऊरुणैकेन वामोरूर्भर्त्तुः कुलविवृद्धये। तद्गर्भमुपलभ्याशु ब्राह्मण्यास्तु भयार्द्दिता। गत्वैका कथयामास क्षत्रियाणामुपह्वरे। ततस्ते क्षत्रिया जग्मुस्तं गर्भं हन्तुमुद्यताः। ददृशुर्ब्राह्मणीं तेऽथ दीप्यमानां स्वतेजसा। अथ गर्भः स भित्त्वोरुं ब्राह्मण्या निर्जगाम ह। मुष्णन् दृष्टीः क्षत्रियाणां मध्याह्न इव भास्करः। ततश्चक्षुर्विहीनास्ते गिरिदुर्गेषु बभ्रमुः। ततस्ते मोहमापन्ना राजानो नष्टदृष्टयः। ब्राह्मणीं शरणं जग्मुर्दृष्ट्यर्थं तामनिन्दिताम्। ऊचुश्चैनां महाभागां क्षत्रियास्ते विचेतसः। ज्योतिःप्रहीणा दुःखार्त्ताः शान्तार्च्चिष इवाग्नयः। भगवत्याः प्रसादेन गच्छेत् क्षत्रं सचक्षुषम्। उपरम्य च गच्छेम सहिताः पापकर्म्मणः। सपुत्त्रा त्वं प्रसादं नः कर्त्तुमर्हसि शोभने!। पुनर्दृष्टिप्रदानेन राज्ञः सन्त्रातुमर्हसि। ब्राह्मण्युवाच। नाहं गृह्णामि वस्ताता! दृष्टीर्नास्मि रुषान्विता। अयन्तु भार्गवो नूनमूरुजः कुपितोऽद्य वः। तेन चक्षूंषि वस्ताता! व्यक्तं कोपान्महात्मना। स्मरता निहतान् बन्धूनादत्तानि न संशयः। गर्भानपि यदा नूनं भृगूणां घ्नत पुत्त्रकाः!। तदायमूरुणा गर्भो मया वर्षशतं धृतः। षडङ्गश्चाखिलो वेद इमं गर्भस्थमेव ह। विवेश भृगुवंशस्य भूयः प्रियचिकीर्षया। सोऽयं पितृवधाद्व्यक्तं क्रोधाद्वो हन्तुमिच्छति। तेजसा तस्य दिव्येन चक्षूंषि मुषितानि वः। तमिमं तात! याचध्वमौर्व्वं मम सुतोत्तमम्। अयं वः प्रणिपातेन तुष्टो दृष्टीः प्रमोक्ष्यति। वसिष्ठ उवाच। एवमुक्तास्ततः सर्व्वे राजानस्ते तमूरुजम्। ऊचुः प्रसीदेति तदा प्रसादञ्च चकार सः। अनेनैव च विख्यातो नाम्ना लोकेषु सत्तमः। स और्व्व इति विप्रर्षिरूरुं भित्त्वा व्यजायत। चक्षूंषि प्रतिलब्ध्वा च प्रतिजग्मुस्ततो नृपाः"।

ऊरुदघ्न त्रि॰ ऊरु+"प्रथमश्च द्वितीयश्च ऊर्द्ध्वमाने मतौ मम" वार्त्तिकोक्तेः ऊर्द्ध्वमाने दघ्नच्। ऊरुपर्य्यन्तोर्द्ध्वमानान्विते जलादौ। "यावानुदकः पुरुषस्तावत् क्षत्रियस्य

कुर्य्यात् षोडशम् आग्नयोपसदम् स्त्रिया अपदम् वैश्वकर्मीयरम् ऋत्वसेवंवीर्य्याणि ते" शत०ब्रा० १२,८,२,११ । "ऊरुदघ्नो द्वितीयोजानुदघ्नस्तृतीयः १२,२,१,२ । अत्रार्थे द्वयसच् तत्परिमाणे उभयत्र स्त्रियां ङीप् ।

ऊरुपर्व्वन् पु० ऊर्वोः पर्व्वेव । जानुनि (हाँटु) ।

ऊररी अव्य० ऊय-ररीक् । १अङ्गीकारे २विस्तारे च ऊर्य्यादि० गणित्वात् क्रिया स० । ऊररीकृत्य । क्त्वा । ऊररीकारः अङ्गीकारे विस्तारे च पु० । क्त । ऊररीकृत अङ्गीकृते विस्तीर्णे च त्रि० ।

ऊरुस्तम्भ पु० ऊरू स्तम्भाति स्तन्भ-अण् उप०स०। १रोगभेदे स च रोगः भावप्र० सनिदानपूर्व्वरूपादिर्दर्शितः यथा "शीतोष्णद्रवसंशुष्कगुरुस्निग्धैर्निषेवितैः । जीर्णाजीर्णे तथायासं संक्षोभस्वप्नजागरैः । सश्लेष्ममेदःपवनः साममत्यर्थसञ्चितम् । अभिभूयेतरं दोषमूरू चेत् प्रतिपद्यते । सक्थ्यस्थिनी प्रपूर्य्यान्तः श्लेष्मणा स्तिमितेन सः । तदा स्कभ्नाति तेनोरू स्तब्धौ शीतावचेतनौ । परकीयाविव गुरू स्याताम् अतिशयव्यथौ । ध्यानाङ्गमर्द्दस्तैमित्यतन्द्राच्छर्द्द्यरुचिज्वरैः । संयुतौ पादसदनकृच्छ्रोद्धरणसुप्तिभिः । तमूरुस्तम्भमित्याहुराढ्यवातमथापरे" "प्राग्रूपं तस्य निद्रा ऽतिध्यानं स्तिमितता ज्वरः । रोमहर्षोऽरुचिश्छर्द्दिर्जङ्घोर्व्वोः सदनं तथा । वातशङ्किभिरज्ञानात्तत्र स्यात् स्नेहनात् पुनः । पादयोः सदनं सुप्तिः कृच्छ्रादुद्धरणं तथा । जङ्घोरुग्लानिरत्यर्थं शश्वद्दाहश्च वेदना । पदं च व्यथते न्यस्तं शीतस्पर्शं न वेत्ति च । संस्थाने पीडने गत्यां चालने चाप्यनीश्वरः । अन्यनेयौ हि सम्भग्नावूरू पादौ च मन्यते । यदा दाहार्त्तितोदाढ्यो वेपनः पुरुषो भवेत् । ऊरुस्तम्भस्तदा च स्यात् साधयेदन्यथा नवम्" अन्यथा दाहाद्युपद्रवरहितं तमपि नवमुत्पन्नमात्रं साधयेत् । सात्त्विकभावेन २ऊर्वोःस्तम्भे च । "करिणीवोरुस्तम्भविह्वला" काद० ।

ऊर्ज्ज बलाधाने जीवने वा अदन्तचु० पक्षे भ्वा०आत्म० तत्करणे सक० सेट् । ऊर्ज्जयत् । "नाभयो वाजिनमूर्ज्जयन्ति" ऋ०८,८९,४, "यो देवानामत्ति स प्राणिति तमूर्ज्जयति" शत०ब्रा०७,५,१,१८, "तां वो देवाः सुमतिमूर्ज्जयन्तीमिषमश्याम" ऋ०५,४१,१८ ।

ऊर्ज्ज् स्त्री ऊर्ज्ज-भावे क्विप् । १बले । करणे क्विप् । २अन्ने न० । ३अन्नतरसाभिधेयेऽस्य आलन्त्राधारभूते रसभेदे स्त्री "विश्वेदेवा वामूर्ज्जं मदन्ति" ऋ०७,४९,४, "याश्च ऊर्ज्जसन्नः सम्भूवुः" अथ०१२,१,१२, इह पृथिव्याः सम्बोधनेन तस्या विकाराद्यस्य शस्यस्योर्ज्जत्वमूर्ज्जामृतम् । "स ऊर्ज्जमुपजीवतीति" वृ० उ० "ऊर्ज्जं दुहितिं सूनृतम्" ऋ० २,२०, "ऊर्ग्यसाङ्गिरस्यूर्ण्णम्रदा ऊर्ज्जं मयि धेहि" यजु०४,४०, "ऊर्क् अन्नरसरूपा" वेददी० ऊर्ज्जं बलं धेहि इत्यर्थः "अन्नमूलं बलं पुंसाम्" इत्युक्तेः अन्नरसस्य बलाधायकत्वम् । "तमःसमूहाकृतिमप्ययेनाद्रूर्ज्जा जयन्तं प्रथितप्रकाशान्" भट्टिः ऊर्ज्जा बलेन "बलमूर्ज्ज स जयति" मनुः अत्र बलोर्जभेदो दैहिकमानसिकत्वाभ्यां शारीरिकं बलमूर्क् इति बोध्यम् । ४जले स्त्री । "ऊर्ज्जो नपातं स हि नायमस्मयुः" यजु०२७,४४, ऊर्क्शब्देनाप उच्यन्ते अद्भ्यो वृक्षा जायन्ते ततोऽग्निः इत्यग्नेरप्पौत्रत्वम् । वेददी० । "ऊर्ज्जांपते पाहि" यजु०२७,४२ ।

ऊर्ज्ज पु० ऊर्ज्जति रसादिकं सोमोऽत्राधारे अच् । १कार्त्तिके मासि तस्य शरदृतोरुत्तरावयवत्वात् तत्र सोमेन रसवीर्य्याधिक्यवर्द्धनेन तथात्वम् । "इषोर्जौ शरत्" इत्युपक्रम्य अयने विभज्य च "तयोर्दक्षिणं वर्षाशरद्धेमन्ताः तेषु भगवानाप्यायते सोमोऽम्ललवणमधुररसा बलवन्तो भवन्त्युत्तरोत्तरं च सर्व्वप्राणिनां बलमभिवर्द्धते" सुश्रुते शरदृतोरन्तिमस्य कार्त्तिकस्य उत्तरोत्तरबलाधिक्याभिधानेनास्य तथात्वम् । करणे अच् घञ् वा सेट्कत्वान्न कुत्वम् । २उत्साहे । भावे अच् घञ् वा । ३बले ४जीवने च । करणे अच् घञ् वा । ५जले न० "ऊर्जं वहन्तीरमृतं घृतं पयः कीलालम्" यजु० २,३४ । अन्नस्योर्जाधायकतात् अन्नस्य जलाधीनतयैव सम्पन्नत्वाच्च तथात्वम् "ऊर्ज्जसन ! ऊर्ज्जं धाः" ऋ०६,४,४, "ऊर्ज्जस्य सने ! अन्नस्य दातः !" भा० "ऊर्ज्जाद उत यज्ञियासः" ऋ०१०,५३,४। ऊर्ज्जादः अन्नादाः भा० "अत्र ऊर्ज्जशब्दः अन्नगतं रसमभिधत्ते तेन तदाधायकत्वात् तथात्वम् । "तद्विजितर्पणादेव जमेतोर्ज्जमसंशयम्" सुश्रु० कर्त्तरि अच् । ६बलान्विते त्रि० "कृतजगत्त्रयभूर्ज्जमतङ्गजम्" माघः ।

ऊर्ज्जयोनि पु० ऋषिभेदे "ऊर्ज्जयोनिरुदायेषो नारदोऽपि महानृषिः" भा० अनु०४अ० ।

ऊर्ज्जव्य पु० राजभेदे "सिषेतु न ऊर्ज्जव्यस्य पुष्टेः" ऋ०५,४१,२०, ऊर्ज्जव्यस्य एतन्नामकस्य राज्ञः" भा०

ऊर्ज्जस् न० ऊर्ज्ज-असुन् । १उत्साहातिशयाधायके बले २अन्नरसभेदे च । ततोऽस्त्यर्थे विनि ऊर्ज्जस्विन्, मतुप् ऊ-

र्ज्जस्वल, मतुप् मस्य वः। ऊर्ज्जस्वत्। तद्वति त्रि० तत्र विन्यन्तस्य मतुबन्तस्य च स्त्रियां ङीप्। "ऊर्ज्जस्वन्तं हविषोदत्त भागम्" ऋ०१०,५१,८, "ऊर्ज्जस्वती चासि पयस्वती च" यजु०१,२७, "ऊर्ज्जस्वन्तं मन्यमानम् आत्मानं भगवानजः" भाग०३,२०,४२, "ऊर्ज्जस्वलं हस्तितरक्ष मेतत्" भट्टिः "भोक्तारमूर्ज्जस्वलमात्मदेहम्" रघुः "ऊर्ज्ज-स्विन्य ऊर्ज्जमेधाश्च यज्ञे" भा० अनु०७६ अ०। "यत्तमूर्ज्जस्करं लोके दत्त्वोर्ज्जस्वी भवेन्नरः" भा०अनु० ११२अ० ऊर्जः करोति। ऊर्जस्+कृ—अच् ६त०। बलकारकमानरसाधायके त्रि०। "ऊर्ज्जस्करान् हव्य-वाहान्" भा०व०२२अ०।

ऊर्जा स्त्री भा०ऊर्ज—भावे अ। १बले २उत्साहे ३अन्नरस-विकारे ४वृद्धौ च। ५ऊर्ज्जास्यस्य मतुप् मस्य वः। ऊर्जावत् बलान्विते हविष्मति च त्रि० स्त्रियां ङीप्। "ऊर्जावतीं महापुण्यां मधुमतीं त्रिवर्त्मगाम्" भा०अनु० २६अ०।

ऊर्ज्जित त्रि०ऊर्ज्ज-कर्त्तरि क्त। १बलान्विते २शक्तियुक्ते च। "मातृकं च धनुरूर्ज्जितं दधत्" रघुः। "विनिहत्य बलमूर्ज्जितश्रीः" माघः। भावे क्त। ३बले ४सामर्थ्ये ५उत्साहे च न०। "उपपत्तिमदूर्ज्जिताश्रयम्" किरा० णिच् क्त। ततद्वौ ६वर्द्धिते त्रि०। "हिमकरोमकरोर्ज्जि-तकेतनम्" रघुः।

ऊर्ण न० ऊर्णा अस्त्यस्य कारणत्वेन अर्श०अच्। मेषलोमर-चितवस्त्रादौ "ऊर्णञ्च राङ्कवं चैव कीटजं पट्टजं तथा। कुटीकृतं तथैवात्र कमलानां सहस्रशः। श्लक्ष्णं वस्त्रमकार्पासमाविकं मृदु चाजिनम्" भा०स० ५०अ०। २मेषलोम्नि स्त्री। "मार्गण्योर्णावलयिनि पुरः पावकस्योच्छिखस्य" रघुः "कार्पासकीटजोर्णानां द्विश-फैकशफस्य च" मनुः। ३ललाटस्थचिह्नभेदे ऊर्णायन्ते उदा०। स च चक्रवर्त्तिलक्षणः भ्रूद्वयमध्यगत श्वेतावर्तसूक्ष्मांशुनिभः प्रशस्तावर्तः। नरलक्षणग्रन्थे वक्ष्यते।

ऊर्णनाभ पु०ऊर्णं नाभौ यस्य। (माकडसा) १लूतायाम् "यथोर्ण-नाभ इव तन्तुभिः प्रधानजैः" श्वे०उ०। गोत्रप्रवर्त्तके २ऋषिभेदे ततः अपत्ये शिवा० अण्। और्णनाभ तदपत्ये पुंस्त्री। स्त्रियां ङीप्। तस्य परिषीवितो देशः राजन्या० वुञ्। और्णनाभक तत्सेवितदेशे। समासान्तविधेरनित्य-त्वात् क्वचित् अच् न। "नाधारेण विना सृष्टिरूर्णना-भेरपीष्यते। न च निःसाधनः कर्ता कश्चित् सृजति किञ्चन" ब्रह्मा०पुराणवाक्यम्। "यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति" मुण्डकोप०।

ऊर्णम्रदस् त्रि० ऊर्णमिव ऊर्णानिर्म्मितवस्त्रमिव म्रदीयः अतिशयेन मृदु वेदे म्रदीयस्+णि० ईयसोरीयोलोपः। अर्णसस्यातिमृदौ "ऊर्णम्रदा युवतिर्दक्षिणावतः" ऋ०१०, १८,१०, "ऊर्णम्रदसं त्वा स्तृणामि" यजु०२,२, "ऊर्णम्रा-ऽऽङ्गिरसूर्णम्रदा ऊर्जं मयि धेहि ४,१०। अत्र मृदुत्वे-नोर्णाया उपमानतोक्तेः काश्मीरदेशजस्य (पशम) प्रसि-द्धस्य आविकलोम्न एव ऊर्णत्वं तस्यैवातिमृदुत्वात्।

ऊर्णवाभि पु० ऊर्णनाभिः पृ० पृषोदरा० वा नस्य वः। (माकडसा)। लूतायां "यथोर्णवाभिस्तन्तुनोच्चरेत्" शत० ब्रा० १४,५,१,२२।

ऊर्णामय ऊर्णा+विकारे मयट्। मेषलोमविकारे कृतादौ "ऊर्णामयं कौतुकहस्तसूत्रम्" कुमा०।

ऊर्णायु त्रि० ऊर्णा—अस्त्यर्थे युस् सित्त्वात् भत्वाभावेन न आतो लोपः। १ऊर्णाविशिष्टे "इमामूर्णायुं वरुणस्य नाभिम्" यजु०१३,५० "ऊर्णायुमूर्णावन्तम्" वेददी०। २गन्धर्वभेदे "ऊर्णायुश्चित्रसेनश्च हाहा हूहूश्च भारत! हरिवं० १२८ अ० "बहुभिः सह गन्धर्वैः प्रागास्यत च तुम्बरुः। महाद्युतिश्चित्रशिरा ऊर्णायुतनयस्तथा" भा० २६१ अ०। "सोमदा नाम गन्धर्वी ऊर्णायुदुहिताऽ-भवत्" रामाय०।

ऊर्णावत् त्रि०ऊर्णा अस्त्यर्थे बा०वनच्। ऊर्णायुक्ते। "अ-ग्नेः इममूर्णायुमित्यूर्णावन्तं इत्येतद्वरुणस्य नाभिम्" शत०ब्रा०७,५,२,२५।

ऊर्णास्तुक त्रि० अस्तीति विभक्तिप्रतिरूपकम् अव्ययम् ऊर्णास्त्यत्र बा० अक। ऊर्णायुक्ते "ऊर्णास्तुके लेखप-क्षयोर्वत्से भवतः" आश्व० श्रौ० १,७,१७,

ऊर्णु आच्छादने अदा०उभ०सक० सेट्। ऊर्णौति ऊर्णोति ऊर्णुतः ऊर्णुवन्ति ऊर्णुते। ऊर्णुयात् ऊर्णुवीत। ऊर्णौतु ऊर्णोतु ऊर्णुहि ऊर्णुताम्। और्णौत् और्णोत्। और्णुत। और्णवीत् और्णावीत् और्णुवीत् और्ण(र्णा)(र्णु)विष्ट ऊर्णुनाव ऊर्णुनुवतुः। ऊर्णुनुविरे। ऊर्णु(र्ण)विता। ऊर्णूयात् ऊर्णु(र्णु)विषीष्ट। ऊर्ण(र्णु)विष्यति ते और्णु(र्ण)विष्यत् त। ऊर्णुवन् ऊर्णुवानः ऊर्णुतः। "स द्यामौर्णोदन्तरिक्षम्" अथ०७,१,२, "ऊर्णुनाव दिशः शस्त्रैः" "इहोर्णुवामास ककुभो बलौघान्" भट्टिः "ऊर्णुना-

द्विजन्मनः" यथा प्रयागजं काष्ठमध्ये सर्व्वकर्मसु । द्विजस्तु तप्तमुद्रादिचिह्नाङ्किततनुस्तथा । संभाष्य रौरवं याति यावदिन्द्राश्चतुर्द्दश" इत्याद्या० । "शिवकेशवयोरङ्कान् शूलचक्रादिकान् द्विजः । न धारयेत मतिमान् वैदिके वर्त्मनि स्थितः" तत्र त्रिपुण्ड्रादिधारणविधायकवाक्यं वैदिकेतरद्विजविषयम् शूद्रविषयञ्च । यदपि ब्राह्मणस्य तद्धारणविधानम् "अग्निहोत्रं यथा नित्यं वेदस्याध्ययनं यथा । ब्राह्मणस्य तथैवेह तप्तमुद्रादिधारणम्" पद्मपु० । "ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा यदि वेतरः । शङ्खचक्राङ्किततनुस्तुलसीमञ्जरीधरः । गोपीचन्दनलिप्ताङ्गो दृष्टश्चेत्तदघं कुतः" काशी० । तदपि वैदिकेतरविप्रपरम् सर्व्वसामञ्जस्यात् एवं शास्त्रार्थे स्थितेऽपि कुलाचारात् तस्य सर्व्वैः कर्त्तव्यता । तथैव भारतटीकायां नीलकण्ठेन निर्णीतम् यथा

"श्रोणामेक उदकं गामवाजति मांसमेकः पिंशति सूनया भृताम् आ निम्रुचः शकृदेको अपाभरत् किं स्वित् पुत्रेभ्यः पितरावुपावतुः" श्रुतिः । "अस्यार्थः हे ऋभवः! भवतां मध्ये एकः श्रोणां लक्ष्मणां गां मृदं गोपीचन्दनादिरूपां तीर्थनिकटस्थां तत्त्वकर्मभूतां प्रति उदकं जलं गौणकर्म अवाजति अवगमयति अन्तर्भावितण्यर्थोऽजतिः । श्रोणां गाम् उदकेन मिश्रयतीत्यर्थः श्रोणां गां रक्तचन्दनादिरूपां वा तथा । एकः सूनया हिंसया तत्कर्त्रा आभृतं आहृतं मांसं गोरोचनाख्यं पिंशति पिनष्टि उदकेन सह इति शेषः निम्रुचः नितरामस्तं गच्छतो दग्धेन्धनस्याग्नेः सम्बन्धि शकृत् गोमयं शुष्कगोमयोत्थं भस्मेति यावत् अपाभरत् अपाहृतवान् जलाप्युदकेन सहेति शेषः व्यवहिताश्चेति छन्दसि व्यवहितेनाप्युपसर्गेण क्रियायाः सम्बन्धः । हृग्रहो र्भश्छन्दसीति हस्य भः । एतानि मन्त्रपदानि असंपूर्णार्थत्वात् साकाङ्क्षाभाय ब्राह्मणमपेक्षन्ते इषे त्वोर्जे त्वेत्यादिमन्त्रवत् तत्र यथा "इषे त्वेति शाखां छिनत्ति ऊर्जे त्वेत्यनुमार्ष्टीति" ब्राह्मणानुसारात् हे शाखे त्वा त्वाम् इषे अन्नाय छिनद्मीति ऊर्जे पशुभ्यः अनुमार्ज्मीति व्याख्यातम् एवमिहापि वासुदेवोपनिषद्ब्राह्मणतन्त्रपुराणोपबृंहणानुसारात् ऊर्द्ध्वपुण्ड्रार्थं लक्ष्मणां मृदं उदकेन मिश्रयेदिति व्याख्येयं तथा कालाग्निरुद्रजाबालाद्युपनिषद्ब्राह्मणतन्त्रपुराणोपबृंहणानुसारात् त्रिपुण्ड्रकर्त्तुः निम्रुचः शकृदपाभरदिति च व्याख्येयम् एवमितरस्यापि पदस्य ब्राह्मणमन्त्रलिङ्गाद्युपबृंहणे स्मृतिभ्यश्चाष्टकाप्रपा विधिवदनुमेयं तथाच श्रोणामिति पदस्य रक्तामिति व्याख्याने गौरमाल्यगणेशानां रक्तमेव पार्थिवं द्रव्यं पुण्ड्रार्थं तत्तन्त्रे विधीयते वैष्णवानां पीतं शैवानां भस्मेति अनेन तत्तत्पुण्ड्रविशेषोपलक्षिततत्तद्देवताभजनेनापि देवताभावं प्राप्नुवन्तीति विधीयते । केवलवैदिकानां तु श्रोणां लक्ष्मणामिति व्याख्यानेन लिङ्गस्यापि सत्त्वञ्च "स्नात्वा पुण्ड्रं मृदा कुर्य्यात् हुत्वा चैव तु भस्मना । देवान् पितॄन् समभ्यर्च्य चन्दनेन समाचरेदिति" स्मृतिश्च अत्र गोरोचनाद्युदयं चन्दनाद्यष्टगन्धोपलक्षणार्थम् एतेषां विकल्पसमुच्चयपक्षाणां पितृपैतामहपरंपराक्रमेण व्यवस्थामाह किं स्वित् पुत्रेभ्यः पितरावुपावतुरिति पुत्रहितार्थं यत्किञ्चिद्व्रतं पितरौ मातापितरौ पितृपितामहौ वा उपेत्य स्वीकृत्य अवतुः रक्षं सम्यक् परिपालयामासतुः तदेव तस्य श्रेयः साधनमित्यर्थः एवं सति तीर्थानि यज्ञादयस्तन्त्रमार्गेण सूर्य्याद्यन्यतमोपास्तिः केवलवैदिकता चेति देवताभावप्राप्तिसाधनानि" इत्यन्तेन ।

श्राद्धकर्म्मणि तु त्रिपुण्ड्रादौ विधिनिषेधयोर्व्यवस्था नि० सि० उक्ता यथा ।

"जपे होमे तथा दाने स्वाध्याये पितृकर्म्मणि । तत्सर्व्वं नश्यति क्षिप्रमूर्द्ध्वपुण्ड्रविनाकृतमिति" हेमाद्र्युक्तेः । "यज्ञो दानं जपो होमः स्वाध्यायः पितृकर्म च । वृथा भवति विप्रेन्द्रा ! ऊर्द्ध्वपुण्ड्रविनाकृतमिति" इत्याचारश्रीवात् "ऊर्द्ध्वञ्च तिलकं कुर्य्याद्दैवे पित्र्ये च कर्म्मणीति" ब्रह्मपराशरोक्तेश्च ऊर्द्ध्वपुण्ड्रधारणं पैत्र्ये विहितम् । अन्ये तु "ऊर्द्ध्वपुण्ड्रो द्विजातीनामग्निहोत्रसमो विधिः । श्राद्धकाले च संप्राप्ते कर्त्ता भोक्ता च वर्जयेदिति" वामनोक्ते च ये दर्भीस्थले रक्तविलिप्तया । ललाटे तिलकं दृष्ट्वा निराशाः पितरो गताः" इति संग्रहोक्तेः "ऊर्द्ध्वपुण्ड्रं त्रिपुण्ड्रं वा चन्द्राकारमथापि वा । श्राद्धकर्त्ता न कुर्व्वीत यावत् पिण्डान्न निर्वपेत्" इति विष्णुप्रकाशे वचनाच्च न श्राद्धमित्याहुः । अत्र कुलाचारादेव व्यवस्था । अत एव शङ्कराचार्य्यैः "ऊर्द्ध्वपुण्ड्रञ्च तत्पर्श्वे श्राद्धे नेच्छन्ति गौतम" इत्यत्र केचनेत्युक्तम् ऊर्द्ध्वपुण्ड्रविधिः श्राद्धभोक्तृपरः, निषेधः कर्त्तृपरः इति पृथ्वीचन्द्रः । यत्तु हेमाद्रौ स्कान्दे "ललाटे पुण्ड्रकं दृष्ट्वा स्कन्धे माल्यं तथैव च । निराशाः पितरो यान्ति दृष्ट्वा च वृषलीपतिमिति" । तद्भस्मत्रिपुण्ड्रविषयम् । "प्राक्पिण्डदानात् गन्धाद्यैर्नालङ्कुर्य्यात्स्वशिरःपदम्" इत्याश्वलायनोक्तेः

पुण्ड्रं वर्त्तुलमितरपरार्द्धे मदनरत्ने च । पृथ्वीचन्द्रस्तु “पुण्ड्रं त्रिपुण्ड्रम् ऊर्द्ध्वं वा तिलकं कुर्य्यान्न कुर्य्याद्‌ त्रिपुण्ड्रकम् । निराशाः पितरो यान्ति दृष्ट्वा चैव त्रिपुण्ड्रकमिति” ब्रह्मपराशरोक्तेः । भोक्तुस्तिर्य्यक्‌पुण्ड्रो भवत्येव । “वर्जयेत्तिलकं श्राद्धे श्राद्धकाले च सर्वदा । ऊर्द्ध्वपुण्ड्रं त्रिपुण्ड्रं वा धारयेत्तु प्रयत्नतः” इति व्यासोक्तेरित्याह” । पृथ्वीचन्द्रोदये श्राद्धे “सकृद्दर्भेण दृष्टेन यः कुर्य्यात्तिलकं बुधः । श्राद्धस्य स विशुध्येत दर्भत्यागेन चैव हि” ।

ऊर्द्ध्वपृश्नि पु० ऊर्द्ध्वाः पृश्नयोविन्दवोऽस्य । पशुभेदे । अश्वमेधे तृतीययूपे बन्धनीयमारुतपशुकीर्त्तने “पृश्निस्तिरश्चीनपृश्निरूर्द्ध्वपृश्निस्ते मारुताः” यजु० २४,४,

ऊर्द्ध्ववर्हिस् पु० ऊर्द्ध्वं प्रागग्रं वर्हिर्येषाम् । सोमपाख्ये पितृभेदे “स्वाहा पितृभ्य ऊर्द्ध्ववर्हिभ्यो घर्म्मपावभ्यः”यजु० २,१५, “ऊर्द्ध्ववर्हिर्भ्यः सोमपाभ्यः” वेददी०

ऊर्द्ध्वबाहु पु० ऊर्द्ध्व उत्तोलितो बाहुः कर्म्म० । १ऊर्द्ध्वोत्तोलिते बाहौ “तद्यदेनमूर्द्ध्वबाहुमभिमिह्नति” शत०५,४,१,१०,। बहु०। २प्रसारितबाहुके त्रि० ऊर्द्ध्वबाहुः प्राह प्रत्यक्षात्मूर्द्ध्न अ मू ध इति” कात्या० १६,२,८, ऊर्द्ध्वबाहुः प्रसारिबाहुः” कर्कः “पञ्चमोरैवतो नाम मनुस्तामससोदरः” इत्युपक्रम्य “हिरण्यरेतावेदशिरा ऊर्द्ध्वबाह्वादयो द्विजाः” इति” भाग०८,५,२,स्त्रोकोक्ते ३रैवतमन्वन्तरीयसप्तर्षिभेदे ते च“वेदबाहुर्यदुध्रश्च मुनिर्वेदशिरास्तथा । हिरण्यरोमा पर्ज्जन्य ऊर्द्ध्वबाहुश्च सोमजः । सत्यनेत्रस्तथाऽत्रेय एते सप्तर्षयोमताः” हरिवं० ७अ० विशेषत उक्ताः । ऊर्द्ध्वस्तृत्विप्रो बाहुर्येन । ४तपस्यार्थमूर्द्ध्वीकृतविप्रबाहौ तपस्विभेदे ।

ऊर्द्ध्वबुध्न पु० ऊर्द्ध्वं बुध्नं शिरोऽस्य । ऊर्द्ध्वशिरस्के चमसे “अर्वाग्विलश्चमस ऊर्द्ध्वबुध्नस्तस्मिन् यशोनिहितं विश्वरूपम् । तस्यासत ऋषयः सप्त तीरे वागष्टमी ब्रह्मणा संविदानेति” “अर्वाग्विलश्चमस ऊर्द्ध्वबुध्न इति तच्छिरः एष ह्यर्वाग्विलश्चमस ऊर्द्ध्वबुध्नस्तस्मिन् यशोनिहितं विश्वरूपमिति प्राणा वै यशोनिहितं विश्वरूपं प्राणानेतदाह तस्यासत ऋषयः सप्त तीरे इति प्राणा वा ऋषयः प्राणानेतदाह” बृ०उ०। “देहस्य चमसरूपेण रूपकमिदम् अर्वाग्विलश्चमस ऊर्द्ध्वबुध्नः इद तच्छिरः चमसाकारं हि तत् कथम् ? एष ह्यर्वाग्विलः मुखस्य विलरूपत्वात्, शिरसोबुध्नाकारत्वात् ऊर्द्ध्वबुध्नः तस्मिन् यशोनिहितं विश्वरूपमिति यथा सोमश्चमसे एव तस्मिन् शिरसि विश्वरूपं नानारूपं निहितं भवति, किं पुनस्तद्यशः ? प्राणा वै यशोविश्वरूपम् । प्राणाः श्रोत्रादयः सप्त ऋषयः धीराः(श्रोत्रे द्वे नासिके द्वे नेत्रे द्वे रसना चैकेति सप्त) तेषां परिस्पन्दात्मकशब्दादिज्ञानहेतुत्वात्”। ऋषिधातोर्गत्यर्थतया परिस्पन्दात्मकवृत्तिमत्त्वम् ज्ञानहेतुत्वेन धीरत्वमिति बोध्यम् ।

ऊर्द्ध्वभाग पु० ऊर्द्ध्वः उपरिस्थोभाग एकदेशः कर्म्म० । उपरितनदेशे “तात्वादिषु सभागेषु ऊर्द्ध्वभागे निष्पन्नोऽनुदात्तः” सि०कौ० ।

ऊर्द्ध्वभाज् त्रि०ऊर्द्ध्वं भजते भज—ण्वि । १उपरिभागस्थे २ऊर्द्ध्वदेशस्थे वह्निभेदे पु० । “ऊर्द्ध्वभागूर्द्ध्वभाङ् नाम कविः प्राणाश्रितस्तु यः” भा० व०२१८अ० अग्निनामतत्कर्म्मभेदकथने ।

ऊर्द्ध्वम् अव्य० उद्‌-ह्वेञ् डम् आदेरूरादेशश्च । ऊर्द्ध्वशब्दार्थे । “ऊर्द्ध्वं प्राणाह्युत्क्रामन्ति यूनःस्थविर आयति” “तिष्ठन्नूर्द्ध्वं रजः) पिबेत्” मनुः “अधश्चोर्द्ध्वञ्च प्रसृतास्तस्य शाखाः” गीता ।

ऊर्द्ध्व(र्द्ध्व)मन्थिन् पु० ऊर्द्ध्वं ब्रह्मचर्य्यादुत्तराश्रमं गार्हस्थ्यादि मथ्नाति मन्थ—णिनि इत० । नैष्ठिकब्रह्मचारिणि स हि ब्रह्मचर्य्योत्तरगार्हस्थ्याद्याश्रमं त्यजतीति तस्य तथात्वम् । “धर्म्मान् प्रदर्शयितुकामोवातरशनानां श्रमणानामृषीणामूर्द्ध्वमन्थिनां शुक्लया तन्वाऽवततार” भाग०५,३,२१,

ऊर्द्ध्व(र्द्ध्व)मान न० ऊर्द्ध्वमारोप्य मीयते येन मा-करणे ल्युट् । पञ्चकर्षादिमिते पाषाणादौ(बाटखारा)। तेन हि तुलादावारोपितेन स्वर्णादेर्गुरुत्वमुन्मीयते । भावे ल्युट् । २उच्चतापरिच्छेदकपरिमाणे च “ऊर्द्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः । आयामस्तु प्रमाणं स्यात् संख्या बाह्या तु सर्वतः” व्या० भा०। अयमर्थः । तुलादावारोपितस्य स्वर्णादेर्गुरुत्वमितिःतुलापरकोटिदेशे आरोपाद्यदुन्मीयते तदुन्मानम् । प्रस्थादिना स्वगताभ्यामारोहपरिणाहाभ्यां व्रीह्यादेः सर्वतोमानात् परिमाणम् । आयामोदैर्घ्यं वस्त्रादेर्जलादेश्च मितिर्हस्तदण्डादिना यत् मीयते तत् प्रमाणम् । सर्वतः उक्तप्रकारमानत्रयाद्बाह्या बहिर्भूता संख्या द्वित्वादिरित्यर्थः । “प्रमाणे द्वयसज्दघ्नञ्मात्रचः” पा० विहितौ द्वयसज्दघ्नञौ प्रत्ययौ ऊर्द्ध्वमानादेव. “प्रथमश्च द्वितीयश्च ऊर्द्ध्वमाने मतौ मम” वार्त्तिकोक्तेः ।

ऊर्द्ध्वमुख त्रि० ऊर्द्ध्वं मुखमस्य । १ऊर्द्ध्वगतप्रथमप्रसरे “प्र-

ऊषाम् बभूव आस चकार । ऊषितः ऊष्टः ऊषणः ।

**ऊष** पु० ऊष—रुजायां क । १क्षारे, २कर्णरन्ध्रे, ३चन्द्रमाद्रौ च । "कौषेयाविकयोरूषैः" मनुः । "सोषैरुदकगोमूत्रैः शुध्यत्याविककौषिकम्" या० । तत्र चन्द्रमाद्रेः विरहितापकत्वात् कर्णच्छिद्रस्य मलजलादिप्रवेशेन उद्वेगहेतुत्वात् क्षारमृत्तिकाया मलापहारकत्वात् तथात्वम् इति भेदः । ऊषति अन्धकारं भेदकं वा । ४प्रभाते ५रेतसि न० । तस्य च क्षारवत्तीव्रत्वात् उष्णत्वाच्च तथात्वम् । यथा च रेतस ऊषत्वम् तथाह "रेतो वा ऊषाः प्रजननं तदेनं प्रजनन आभजत्येतस्य वै पितरः प्रजननस्याभक्ता भवन्ति यदेषां प्रजाभवति" शत० ब्रा० ११,८,१,१४ । ५क्षारमृत्तिकायां स्त्री [ शब्दच० ।

**ऊषक** न० ऊषति अन्धकारं भेदकं वा ऊष—ण्वुल् । प्रत्यूषे

**ऊषण** न० ऊष—ल्यु । १मरिचे, २पिप्पलीमूले, ३शुण्ठ्यां च । (चिता) ४चित्रके पु० । ५पिप्पल्यां चव्ये च(चइ) स्त्री । मरीच्यादीनां कटुत्वेन जिह्वोद्वेजकतया तथात्वम् । त्र्यूषणं त्रिकटु शुण्ठी पिप्पली मरिचं च यथाह "विश्वोपकुल्या मरिचं त्र्यूषं त्रिकटु कथ्यते । कटुत्रिकं त्रिकटुकं त्र्यूषणं व्योषमुच्यते । त्र्यूषणं दीपनं हन्ति श्वासकासत्वगामयान् । गुल्ममेहं च कफस्थौल्यं मेदःश्लीपदपीनसान्" भावप्र० । त्र्यूषणं सकणामूलं कथितं चतुरूषणम् । व्योषस्येव गुणाः प्रोक्ता अधिकं चतुरूषणे" भा० प्र० । षडूषणम् । "पिप्पली पिप्पलीमूलम् चव्या चित्रकनागरैः । पञ्चभिः कोलमात्रस्य पञ्चकोलम् तदुच्यते । पञ्चकोलं समरिचं षडूषणमिहेष्यते" भावप्रकाशः ।

**ऊषर** त्रि० ऊष+मत्वर्थीयो रः, ऊषं क्षारमृत्तिकां राति ददाति कः वा । क्षारमृत्तिकायुक्ते देशे यत्रोप्तं बीजं न प्ररोहति । "अनूषरमविवदिष्णु भूम" आश्व०गृ० २,७,२ । आधानाङ्गोषरमृद्ग्रहणम् शत०ब्रा० २,१,१,६ । उक्तम् यथा "ऊषोषान् सम्भरति ।"असौ ह वै द्यौरस्यै पृथिव्या एतान् पशून् प्रददौ तस्मात् पशव्यमूषरमित्याहुः" । "वर्षुकस्य किमपः कृतोन्नतेरम्बुदस्य परिहार्य्यमूषरम्" माघः । "तत्र विद्या न वप्तव्या शुभं बीजमिवोषरे" मनुः "नचोषरां न निर्दग्धां महीं दद्यात् कदाचन" भा० अनु० ११४ ।

**ऊषरज** न० ऊषराज्जायते जन—ड । (पाङ्गा) लवणभेदे । तद्गुणादि सुश्रु० "ऊषसूतं वालुकैलं शैलं मूत्राकरोद्भवम्" लवणं विभज्य "लवणं कटुकं छेदि विहितं पटु चोच्यते" सुश्रु०

**ऊषवत्** त्रि० ऊष—मतुप् मस्य वः । ऊषरस्थाने । स्त्रियां ङीप्

**ऊषा** स्त्री बाणराजसुतायाम् उषाशब्दे तत्कथोक्ता ।

**ऊष्म** पु० ऊष—मक् । १शीतविरोधिनि स्पर्शे । अर्श—अच् । २तद्वति त्रि० । ३निदाघकाले अमरः ।

**ऊष्मण** त्रि० पामादि० अस्त्यर्थे न । ऊष्मयुक्ते मतुप् मस्य वः ऊष्मवत् तदर्थे त्रि० स्त्रियां ङीप् ।

**ऊष्मण्य** त्रि० ऊष्मा निवारणीयत्वेनास्त्यस्य यत् । ऊष्मनिवारणार्हे "ऊष्मण्यापिधाना चरूणामङ्काः" ऋ० १,१६२,१३ । "ऊष्मण्य ऊष्मनिवारणार्हाणि पात्राणि" भा० ।

**ऊष्मन्** पु० ऊष—मनिन् । १ग्रीष्मे २तेजोद्रव्यस्य सूक्ष्मावयवे (भाप) "भुवा सहोष्माणममुञ्चदूर्ध्वम्" कुमा० "यथाग्नेर्धूम उदयते एवमेषामूष्मोदयते" शत०ब्रा० १, ६,२,१,५ । ३वर्णोच्चारणोक्तेषु शोष्मवायुनोच्चार्य्यमाणेषु शषसहरूपेषु वर्णेषु । "स्वराणामूष्मणाञ्चैव विवृतं करणं मतम्" शिक्षा । "शषसहा ऊष्माणः" सि० कौ० । "सर्वे स्वरा घोषवन्तो बलवन्तो वक्तव्याः इन्द्रे बलं ददानीति । सर्व्व ऊष्माणोऽग्रस्ता अनिरस्ता विवृता वक्तव्याः प्रजापतेरात्मानं परिददानीति" छा० उ० । "सर्व्वे ऊष्माणोऽग्रस्ता अन्तरप्रवेशिता अनिरस्ता अबहिःप्रक्षिप्ता विवृता विवृतप्रयत्नोच्चारिताः प्रजापतेरात्मानं परिददानि प्रयच्छामि" शा०भा० । "अथ यद्येनमूष्मसूपालभेत प्रजापतेः शरणोऽभूवं स त्वा प्रतिपेक्ष्यतीत्येनं ब्रूयात्" छा०उ० । "स्पर्शस्तस्याभवज्जीवः स्वरो देह उदाहृतः । ऊष्माणमिन्द्रियाण्याहुरन्तस्था बलमात्मनः । स्वराः सप्त विहारेण भवन्ति स्म प्रजापतेः" भाग० ३,१२,२०, ऊष्माणं शषसह इति चतुष्टयम् अन्तःस्था यरलवाः सप्त स्वराः षड्जादयः विहारेण क्रीडया" श्रीधरः । "ते वाणि वायौ निश्वासं सोजःसूष्माणमात्मवान् । यस्य त्वक्शेषप्रकाशिनिशो शेषं यथोद्भवम्" भाग० ७,१२,२४, । अत्र तेज ऊष्माणमिति स्वकारणे लयाभिधानात् तस्य तेजःकार्य्यता गम्यते । श्रुतौ च तस्य तेजःकार्य्यत्वमुक्तं तच्च उष्णशब्दे दर्शितम् । देहस्थोष्मा च ब्रह्माभिन्न कौक्षेयानलोपाधिकजीवसंयोगेनैव भवति यथोक्तं छा०उ०भाष्ययोः । "अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेषु अनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिस्तस्यैषा दृष्टिः विजानाति" उप० । "इदं वावेदमेव तद्यदिदमस्मिन् पुरुषेऽन्तर्मध्ये ज्योतिः चक्षुःश्रोत्रग्राह्येण लिङ्गेनोष्णिम्ना शब्देन वाऽवगम्यते । यत्त्वचा स्पर्शरूपेण गृह्यते तच्चक्षुषैव । दृढप्रतीतिकरत्वात्त्वचोऽविनाभूतत्वाच्च रूप-

स्पर्शयोः। कथं पुनस्तस्य ज्योतिषो लिङ्गं त्वग्दृष्टिगोचरत्वमापद्यते? इत्याह यत्र यस्मिन् काले एतदिति क्रियाविशेषणं अस्मिन् शरीरे हस्तेनालभ्य संस्पर्शेनोष्णिमानं रूपसहभाविनमुष्णस्पर्शभावं विजानाति स ह्युष्णिमा नामरूपव्याकरणाय देहमनुप्रविष्टस्य चैतन्यात्मज्योतिषो लिङ्गमव्यभिचारात्। न हि जीवन्तमात्मानमूष्णिमा व्यभिचरति।"उष्ण एव जीविष्यन् शीतो मरिष्यन्निति" हि विज्ञायते। मरणकाले च "तेजः परस्यां देवतायामिति" परेणाविभागत्वोपगमादतोऽसाधारणं लिङ्गमौष्ण्यमग्नेरिव धूमः। अतस्तस्य परस्यैषा दृष्टिः साक्षादिव दर्शनं दर्शनोपाय इत्यर्थः"।

एतद्वाक्यञ्च कौक्षेयाग्न्युपाधिकजीवाभिन्नब्रह्मपरं तस्यैव ज्योतिःशब्दाभिधेयत्वेन तत्सम्पर्कादेव देहस्यौष्ण्यसम्भवः तदेतत् शा०सू०भाष्ययोः समर्थितं यथा"ज्योतिश्चरणाभिधानात्"शा०सू०"इदमामनन्ति अथ यदतः परोदिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिरिति"तत्र संशयः किमिह ज्योतिःशब्देनादित्यादिकं ज्योतिरभिधीयते? किं वा परमात्मेति?। अर्थान्तरविषयस्यापि शब्दस्य तल्लिङ्गाद्ब्रह्मविषयत्वमुक्तम् इह तल्लिङ्गमेवास्ति नास्ति वेति विचार्यते किन्तावत् प्राप्तं आदित्यादिकमेव ज्योतिःशब्देन परिगृह्यते इति। कुत? प्रसिद्धेः तमो ज्योतिरिति ह्येतौ शब्दौ परस्परप्रतिद्वन्द्विविषयौ प्रसिद्धौ। चक्षुर्वृत्तेर्निरोधकं शार्वरादिकन्तम उच्यते। तस्याएवानुग्राहकमादित्यादिकं ज्योतिः। तथा दीप्यते इतीयमपि श्रुतिरादित्यादिविषया प्रसिद्धा न हि रूपादिहीनं ब्रह्म दीप्यत इति मुख्यां श्रुतिमर्हति। किञ्च द्युमर्यादत्वश्रुतेश्च। न हि चराचरवीजस्य ब्रह्मणः सर्वात्मकस्य द्यौर्मर्यादा युक्ता कार्यस्य तु ज्योतिषः परिच्छिन्नस्य द्यौर्मर्यादा स्यात् 'परोदिवो ज्योतिरिति"च ब्राह्मणम् ननु कार्यस्यापि ज्योतिषः सर्वत्र गम्यमानत्वात् मर्यादावत्त्वमसमञ्जसं अस्तु तर्ह्यत्रिवृत्कृतन्तेजः प्रथमजम्। न अत्रिवृत्कृतस्य तेजसः प्रयोजनाभावादिति। इदमेव प्रयोजनं यदुपास्यत्वमिति चेन्न प्रयोजनान्तरप्रयुक्तस्यैवादित्यादेरुपास्यत्वदर्शनात्। "तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति" चाविशेषश्रुतेः। नचात्रिवृत्कृतस्यापि तेजसो द्युमर्यादत्वं प्रसिद्धम्। अस्तु तर्हि त्रिवृत्कृतमेव तेजो ज्योतिःशब्दम्। नन्वक्तमर्वागपि दिवो गम्यतेऽग्न्यादिकं ज्योतिरिति, नैष दोषः सर्वत्रापि गम्यमानस्य ज्योतिषः परोदिव इत्युपासनार्थः प्रदेशविशेषपरिग्रहो न विरुध्यते न तु निःप्रदेशस्य ब्रह्मणः प्रदेशविशेषकल्पना भागिनी। सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विति चाधारबहुत्वश्रुतिः कार्ये ज्योतिष्युपपद्यतेतराम्। "इदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिरिति"च कौक्षेये ज्योतिषि परं ज्योतिरध्यस्यमानं दृश्यते सारूप्यनिमित्ताश्चाध्यासा भवन्ति यथा"तस्य भूरिति शिरः एकं शिर एकमेतदक्षरमिति" कौक्षेयस्य तु ज्योतिषः प्रसिद्धमब्रह्मत्वं तस्यैषा दृष्टिस्तस्यैषा श्रुतिरिति चौष्ण्यघोषविशिष्टत्वश्रवणात्"तदेतद्दृष्टञ्च श्रुतञ्चेत्युपासीतेति"च श्रुतेः।"चक्षुष्यः श्रुतो भवतीति य एवं वेदेति" चाल्पफलश्रवणादब्रह्मत्वं महते हि फलाय ब्रह्मोपासनमिष्यते। नचान्यदपि किञ्चित् स्ववाक्ये प्राणाकाशवत् ज्योतिषोऽस्ति ब्रह्मलिङ्गम्। न च पूर्वस्मिन्नपि वाक्ये ब्रह्म निर्दिष्टमस्ति। "गायत्री वा इदं सर्वं भूतमिति" छन्दोनिर्देशात्। अथापि कथञ्चित् पूर्वस्मिन् वाक्ये ब्रह्म निर्दिष्टं स्यात् एवमपि न तस्येह प्रत्यभिज्ञानमस्ति। तत्र हि त्रिपादस्यामृतं दिवीति द्यौरधिकरणत्वेन श्रूयते। अत्र पुनः परोदिवो ज्योतिरिति द्यौर्मर्यादात्वेन। तस्मात् प्राकृतं ज्योतिरिह ग्राह्यमित्येवं प्राप्ते ब्रूमः। ज्योतिरिह ब्रह्म ग्राह्यं कुतः? चरणाभिधानात् पादाभिधानादित्यर्थः। पूर्वस्मिन् हि वाक्ये चतुष्पाद् ब्रह्म निर्दिष्टं "तावानस्य महिमा ततोज्यायांश्च पुरुषः पादोऽस्य सर्वाभूतानि त्रिपादस्यामृतं दिवि" इत्यनेन मन्त्रेण। तत्र यत् चतुष्पदो ब्रह्मणः त्रिपादमृतं द्युसम्बन्धिरूपं निर्दिष्टं तदेवेह द्युसम्बन्धान्निर्दिष्टमिति प्रत्यभिज्ञायते तत् परित्यज्य प्राकृतं ज्योतिः कल्पयतः प्रकृतहानाप्रकृतप्रक्रिये प्रसज्येयाताम्। न केवलं ज्योतिर्वाक्य एव ब्रह्मानुवृत्तिः परस्यामपि हि शाण्डिल्यविद्यायामनुवर्त्तिष्यते ब्रह्म। तस्मादिह ज्योतिरिति ब्रह्म प्रतिपत्तव्यम्। यत्तूक्तं ज्योतिर्दीप्यते इति चैतौ शब्दौ कार्ये ज्योतिषि प्रसिद्धाविति, नायन्दोषः प्रकरणाद्ब्रह्मावगमे सत्यनयोः शब्दयोरविशेषकत्वात् दीप्यमानकार्यज्योतिरुपलक्षिते ब्रह्मण्यपि प्रयोगसम्भवात् "येन सूर्यस्तपति तेजसेद्धः" इति च मन्त्रवर्णात्। यद्वा नायं ज्योतिःशब्दश्चक्षुर्वृत्तेरेवानुग्राहके तेजसि वर्त्तते। अन्यत्रापि प्रयोगदर्शनात् "वाचैवायं ज्योतिषास्ते" मनो ज्योतिर्जुषतामिति" च। तस्माद्यद्यत्कस्यचिदवभासकन्तत्तत्

ज्योतिःशब्देनाभिधीयते । तथा सति ब्रह्मणोऽपि चैतन्यस्वरूपस्य समस्तजगदवभासहेतुत्वादुपपन्नो ज्योतिःशब्दः "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति"। "तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्" इत्यादिश्रुतिभ्यश्च । यदप्युक्तं द्युमर्यादत्वं सर्वगतस्य ब्रह्मणो नोपपद्यते इति । अत्रोच्यते सर्वगतस्यापि ब्रह्मण उपासनार्थः प्रदेशविशेषपरिग्रहो न विरुध्यते । ननूक्तं निःप्रदेशस्य ब्रह्मणः प्रदेशविशेषकल्पना नोपपद्यत इति । नायं दोषः निष्प्रदेशस्यापि ब्रह्मण उपाधिविशेषसम्बन्धात् प्रदेशविशेषकल्पनोपपत्तेः । तथा हि आदित्ये चक्षुषि हृदय इति प्रदेशविशेषसम्बन्धीनि ब्रह्मण उपासनानि श्रूयन्ते । एतेन "विश्वतः पृष्ठेषु" इत्याधारबहुत्वमुपपादितम् । यदप्येतदुक्तं औष्ण्यघोषाभ्यामनुमिते कौक्षेये कार्ये ज्योतिष्यध्यस्यमानत्वात् परमपि दिवः कार्यं ज्योतिरेवेति । तदप्ययुक्तं परस्यापि ब्रह्मणो नामादिप्रतीकत्ववत् कौक्षेयज्योतिःप्रतीकत्वोपपत्तेः । "दृष्टञ्च श्रुतञ्चेत्युपासीतेति" तु प्रतीकद्वारकं दृष्टत्वं श्रुतत्वञ्च भविष्यति । यदप्युक्तमल्पफलश्रवणान्न ब्रह्मेति तदप्यनुपपन्नम् । न हि इयते फलाय ब्रह्माश्रयणीयमियते नेति नियमे हेतुरस्ति । यत्र हि निरस्तसर्वविशेषसम्बन्धं परं ब्रह्मात्मत्वेनोपदिश्यते तत्रैकरूपमेव फलं मोक्ष इत्यवगम्यते यत्र तु गुणविशेषसम्बन्धं प्रतीकविशेषसम्बन्धं वा ब्रह्मोपदिश्यते तत्र संसारगोचराण्येवोच्चावचानि फलानि दृश्यन्ते "अन्नादो वसुदानो विन्दते वसु य एवं वेद" इत्याद्यासु श्रुतिषु । यद्यपि न स्ववाक्ये किञ्चिद् ज्योतिषो ब्रह्मलिङ्गमस्ति तथापि पूर्वस्मिन् वाक्ये दृश्यमानं ग्रहीतव्यं भवति । तदुक्तं सूत्रकारेण ज्योतिश्चरणाभिधानादिति । कथं पुनर्वाक्यान्तरगतेन ब्रह्मसन्निधानेन ज्योतिःश्रुतिः स्वविषयात् प्रच्याव्य शक्या व्यावर्त्तयितुम् । नैष दोषः । "यदतः परो दिवो ज्योतिरिति" प्रथमतरपठितेन यच्छब्देन सर्वनाम्ना द्युसम्बन्धात् प्रत्यभिज्ञायमाने पूर्ववाक्यनिर्दिष्टे ब्रह्मणि स्वसामर्थ्येन परामृष्टे सत्यर्थात् ज्योतिःशब्दस्यापि तद्विषयत्वोपपत्तेः । तस्मादिह ज्योतिरिति ब्रह्म प्रतिपत्तव्यम्" भा० । श्रुत्यन्तरे तु कौक्षेयाग्निसम्बन्धात् देहस्यौष्ण्यमुक्तम् । तत्रापि कौक्षेयाग्नेरपि जीवस्थितिनियतत्वात् जीवाधीनत्वं कल्प्यमित्याकरे प्रपञ्चः

ऊह वितर्के भ्वादि० आत्म० सक० सेट् । ऊहते औहिष्ट । ऊहां बभूव आस चक्रे । ऊहितः ऊहमानः ऊहितुम् ऊहः । "औहिष्ट तान् वीतविशङ्कमुच्चैः" भट्टिः । कर्मणि ऊह्यते औहि णिच् । ऊहयति ते औजिहत् त । "रूपेण तावौजिहतां महिष्ठौ" भट्टिः अस्य ऊहशब्दे वक्ष्यमाणेऽर्थेऽपि वृत्तिः । परस्मैपदित्वमप्यस्य ऊहति, इत्युपेतद्विदैवतं देविकेषु" कात्या० १०१,२,१,१७, आदौ उपसर्गात् परस्यादेश ह्रस्वः । उह्यते

अति—एकदेशस्थितस्य तद्विपरीतदेशप्रेरणे "द्रोणकलशमत्यूह्य" कात्या० ९,२,१६ । "अत्यूह्य प्राञ्चमेव प्रतीच्यां प्रेर्य" कर्कः ।

अधि+अञ्जने । "अग्निमग्नीत् संमृड्ढीति यथाधुरमध्यूहेदेवं तद्यत् पूर्वमाघार आघार यत्यध्यूह्य हि धुरं युञ्जन्ति" शत० ब्रा० १,४,४,१२,

अप+निरसने दूरीकरणे । "अपोह्य बर्हींषि" कात्या० २,२,१७, "एतैर्व्रतैरपोहेत पापं लोभसत्तमं द्विजः" मनुः । "सर्वान् रसानपोहेत कृतान्नञ्च तिलैः सह" मनुः प्रतिकूलतर्केण प्रकृततर्कापनयने अपोहः ।

अप+वि+निवारणे "व्यपोहत शरांस्तस्य सर्वानेव धनञ्जयः" भा० आ० ४७० । [२८ । "अभ्यूहति आच्छादयति" शा० ।

अभि+आच्छादने । "अथाङ्गारैरभ्यूहति" शत० ब्रा० १,२,४,

उत्+उत्कर्षणे । "रशनायाउदुह्य प्राच्याम्" कात्या० १,६,१ । "उद्धृत्य उत्कृष्य" कर्कः निरसने च । "तेन प्राचोऽङ्गारानुदूहति" शत० ब्रा० १,२,१,४ । [१,२,५,१७ ।

प्रति+उद्+प्रक्षेपणे "दक्षिणतः पुरीषं प्रत्युदूहेत" शत० ब्रा०

वि+उद्+अन्ते विवर्द्धने । "चतुरङ्गुलमनुभयतो बाह्यतो व्युदूहति" शत० ब्रा० १०२,१,४ । व्युदूहति अन्ते विवर्द्धयति" भा०

उप+अधस्तात् प्रवेशने । "पशावस्याप्युपोहति" कात्या० २,५,४ । "उपोहति अधस्तात् प्रवेशयति" कर्कः ।

निर्+निष्काश्य ग्रहणे पृथक्करणे च । "गार्हपत्यादुष्णं भस्म निरुह्य" शत० ब्रा० १२,४,२,२ । "शिरः शिरसः निरोहत्" शत० ब्रा० १०,५,४ । "वपान्तेऽनपेक्षमध्वर्युः प्रेष्यति निरूहैतं गर्भमिति" "निरुह्यमाणमभिमन्त्रयीत" कात्या० २५,१०,४,५ । निरुह्यमाणं पृथक्क्रियमाणम् वेददी० निरूहणम्

परि+परितः व्याप्तपूरणे । "अरत्निमात्रे श्रोणिसंस्थे चोपदधाति पर्यूहति च" कात्या० ८,५,२५ । पर्यूहति पांशुभिरन्तरालं परितः पूरयति" कर्कः । पर्यूहणम् ।

प्र+देशान्तरनयने। “प्रोह्य द्रोणकलशम्” कात्या० ९,५,१४। “प्रोह्य प्रेर्य्य” कर्कः। पातने च “कृष्णाजिने प्रोहति” कात्या० २,५,७। प्र+ऊहस्यादेर्वृद्धिः प्रौहः।

प्रति+उपरिस्थापने। “दीक्षितोरौ दक्षिणे प्रत्यूह्य वासः” कात्या० ७,८,२२। “प्रत्यूह्य उपरि स्थापयित्वा” वेददी०। निवारणे च। “प्रत्यौहतमश्विनो मृत्युमस्मात्” यजु० २७, “प्रत्यौहतं न्यवर्त्तयताम्” वेददी०।

वि+विपरीततया प्रेरणे “जुहूपभृतौ व्यूहति” कात्या० २,५,१७। सैन्यानां सन्निवेशविशेषेण स्थापने च। व्यूहः। “प्रहर्षयेद्बलं व्यूह्य तांश्च सम्यक् परीक्षयेत्” मनुः। समवेतभवने। “योनेश्चियते कृतशोऽस्य व्युह्यन्ते” शत० ब्रा० ८,७,१२,११,

प्रति-वि प्रतिरूपव्यूहकरणे। “पार्श्वस्थलविधिं कृत्वा प्रतिव्यूह्य निशाचरम्” भा० द० २८४अ०। विरोधाचरणे च प्रत्यूहः

सम्- समवेतभवने संहनने सम्यक्प्रापणे च। “यद्गव्यन्ता द्वा जना स्वर्यन्ता समूहसि” ऋ० १,१३१,३, समूहसि प्रापयसि भा०। सम्यक्पूरणे “अङ्गारैरभि समूहति” शत० ब्रा० ४,५,२,१८, समूहः

उप+सम् समीपे सङ्कोचने “पश्चादुपसमूहन्ते” शत० ब्रा० १०,२,१,१, “समूहन्ते मध्यभागसमीपे सङ्कोचयन्ति” भा०।

परि-सम्-समन्तात् परिमार्जने “वेदिं परिसमूह्य” कात्या० २,६,१२, “परिसमुह्य सम्मार्ज्य” कर्कः। “अग्निं प्रतिष्ठाप्याधाय परिसमूह्य” आश्व० गृ० १,२,१, “परिसमूहनं नाम चाग्नेः समन्तात् परिमार्जनम्” नारा० वृ०।

समूढव्यूढनिरूढादिकमस्यैव रूपमाहुः केचित्। अस्यानिट्त्वात् ऊहित इत्यादय एव स्युः। अतस्तानि उपसृष्टस्य वहतेरेव रूपाणीत्यन्ये। अस्यैव आङ्पूर्व्वकस्य ओहते इति रूपम्। न तु केवलस्य, दीर्घोपधत्वेन गुणाप्रसक्तेः।

ऊह पु० ऊह-घञ्। १वितर्के आगमाविरोधिना तर्केण आगमार्थस्य संशयपूर्व्वपक्षनिवारणपूर्वकोत्तरपक्षव्यवस्थापनेन निर्णयरूपे २परीक्षणे, ३अनन्वितार्थकविभक्तिलिङ्गत्यागपूर्व्वके अन्वययोग्यविभक्त्यादिकल्पने, यथा पार्वणे सोमाय इति वाक्यमनन्वितमपि एकोद्दिष्टे अनन्वितत्वात् सौम्य इत्येकवचनान्ततया कल्पनम्। ४पदान्तरेणाकाङ्क्षापूरणार्थे अध्याहारे च। “ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः। दानञ्च सिद्धयोऽष्टौ सिद्धेः पूर्व्वोऽङ्कुशस्त्रिविधः” सा० का० उक्ते ताराख्ये ५सिद्धिभेदे “ऊहस्तर्कः आगमाविरोधिन्यायेनागमार्थपरीक्षणम्। संशयपूर्व्वपक्षनिराकरणेनोत्तरपक्षव्यवस्थापनं तदिदं मननमाचक्षते आगमिनः सा तृतीया सिद्धिस्तारमुच्यते” सा० कौ० “रक्षोहागमलघ्वसन्देहाः प्रयोजनम्” का० वार्त्ति०। “ऊहः खल्वपि न सर्व्वैर्लिङ्गैर्न च सर्व्वाभिर्विभक्तिभिर्वेदे मन्त्रा निगदितास्ते चावश्यं यज्ञगतेन पुरुषेण यथायथं विपरिणमयितव्याः तान्नावैयाकरणः शक्नोति विपरिणमयितुम् तस्मादध्येयं व्याकरणम्” महाभा०। “ऊहः खल्वपीति। इह यस्मिन् यागे इतिकर्त्तव्यतोपदिष्टा यागान्तरेणोपजीव्यते सा प्रकृतिः येन चोपजीव्यते सा विकृतिः प्रकृतिवद्विकृतिः कर्त्तव्येति मीमांसकैर्व्यवस्थापिते न्याये प्रकृतिप्रत्ययादीनामूहं वैयाकरणस्सम्यग्विजानाति। तत्र अग्नेर्मन्त्रोऽस्ति “अग्नये त्वा जुष्टं निर्वपामीति” तत्र “सौर्य्यं चरुं निर्वपेत् ब्रह्मवर्चसकाम” इति सौर्य्ये चरौ मन्त्र ऊह्यते सूर्य्याय त्वा जुष्टं निर्वपामीति। विस्तरेण भर्तृहरिणा प्रदर्शित ऊहः” कै०। “ऊहः खल्वपीत्यस्य प्रयोजनमिति शेषः। ननु यत्र प्रकरणे ये मन्त्राः पठितास्तत्र तेषां तथैव प्रयोग इष्ट इति नोहेन प्रयोजनमित्याशङ्क्य प्रकृतावूहाभावेऽपि विकृतावूह इति दर्शयितुम् प्रकृतिशब्दार्थमाह। इहेति। यस्मिन्नाग्नेयादौ। यागान्तरेण सौर्य्यादिना। प्रकृतिविकृत्यवगमश्च द्विदैवत्यत्वैकदेवत्यत्वादिसाम्येन बोध्यः। अन्यत्र पठितमन्त्राणामन्यत्र गमनमत आह प्रकृतिवदिति। यथा सोपकारा प्रकृतिरनुष्ठीयते तथा विकृतिरपीति तदर्थः तदनेनोपकारातिदेशे तत्प्रभावेन पदार्था अप्यतिदिश्यन्ते इतिकर्त्तव्यतायाश्चावगमायाश्चाकाङ्क्षत्वादेतन्मूलकमेव प्रकृतिवदितीति मीमांसकसरणिः। यागान्तर्गताश्च मन्त्राः। तत्र अग्निसम्बन्धिनिर्वापप्रकाशकमन्त्रस्याग्निपदस्य सूर्य्यसम्बन्धिनिर्वापप्रकाशनासमर्थत्वात्तदपहाय तत्स्थाने सूर्य्यायेत्यूह्यमित्याह। तत्राग्नेरिति। मन्त्र ऊह्यत इति। यद्यप्यूहे न मन्त्रत्वं तथाप्येकदेशस्योहेऽपि अनेकपदसमुदाये मन्त्रत्वप्रत्यभिज्ञानात्तद्घटिते समुदाये मन्त्रत्वव्यवहारः, कर्म्मणः साङ्गत्वञ्चेति बोध्यम्। सोऽयम्प्रकृत्यूहः अन्येऽप्यूह्याः। ऊहस्य हि आर्त्विज्यलाभेन द्रव्यप्राप्तिद्वारा ऐहिकस्य सिद्धिः फलमिति बोध्यम्। भाष्ये लिङ्गपदं प्रकृत्यादेरुपलक्षणम्। यथायथमिति। अर्थप्रकाशनसामर्थ्यानतिलङ्घनेनेत्यर्थः” उद्योतः।

तादृशोहभेदस्तु अधिकरणमालादौ दृश्यः। द्रव्यप्रतिनिधौ तु नोहः। “तैलं प्रतिनिधिं कुर्य्यात् घृतार्थे वार्त्तिकोऽर्दि। प्रकृत्यैव तदा होता ब्रूयात् घृतवतीमिति” मीमां॰ कात्यायनसूत्रादौ प्रतिनिधिविषये ऊहाभावोदर्शितो यथा

“अथेदं चिन्त्यते विहितद्रव्यस्याभावे द्रव्यान्तरे प्रतिनिधित्वेनोपात्ते छागाभावे मेषरूपे अनुवाचनप्रैषादौ किमूहं कृत्वा प्रतिनिहितद्रव्यशब्दस्य प्रयोगः कार्य्यः “अग्नीषोमाभ्यां मेषस्य वपाया” इत्येवम् उत विहितद्रव्यशब्दस्यैव अग्नीषोमाभ्यां छागस्येत्येवमेवेति। तत्र मन्त्रेण द्रव्यमभिधेयम् न चानूहितः प्रतिनिहितं द्रव्यं शक्नोत्यभिधातुम् तस्मादूहित्वा प्रतिनिहितद्रव्यवाचिशब्दस्य प्रयोगे प्राप्त आह” “शब्देऽविप्रतिपत्तिः” कात्या॰ १, ४, ८, “प्रतिनिधावुपात्तेऽपि विहितद्रव्यवाचिनि शब्दे अविप्रतिपत्तिरविपरिणामः अनूहो भवति अग्नीषोमाभ्यां छागस्य वपाया इत्यनूहितमेव मेषेऽपि प्रयोक्तव्यम् न तु मेषस्येत्येवं विपरिणतरूपमित्यर्थः कुतः? प्रतिनिधिः श्रुतद्रव्यबुद्ध्या गृह्यते न तु द्रव्यान्तरबुद्ध्या अतश्छाग एवायमिति बुद्ध्या गृहीतत्वाच्छागशब्देनैवाभिधानम्। यद्यत्र मेषश्छागवत् साधनं भवेत्तदा तत्प्रकाशकम् मेषपदं प्रक्षिप्येत न त्वेवम्, किं तर्हि मेषगता ये छागावयवास्त एवात्र साधनम् ते च छागगता इव मेषगता अपि छागशब्देनैव प्रकाशयितुं शक्यन्त इत्यनूहेनैव प्रयोगः। यत्र तु द्रव्यान्तरं वचनेन विधीयते यथा “सारस्वतीं मेषीमिति” “ऐन्द्रं मेषमिति” “ऐन्द्र ऋषभः” इति तत्र द्रव्यान्तरबुद्धिर्भवति तत्र ऊहोऽपि भवति। नचात्रैवंविधं किमपि वचनमस्ति तस्मादूहनाम अवयवानां साम्याच्छ्रुतद्रव्यमेवेदमिति बुद्ध्या मेषादिद्रव्यस्य छागादिप्रतिनिधित्वेनोपादानम्। तेन श्रुतद्रव्यशब्देनैवाभिधानं युक्तमिति साधूक्तम् शब्देऽविप्रतिपत्तिरिति। यत्र तु वचनेन द्रव्यान्तरं विधीयते तत्र ऊहो भवतीत्युक्तम् तेन सोमाभावे पूतीकानभिषुणुयादिति पूतीकानां वाचनिकत्वादूहो भविष्यतीत्याशङ्क्याह” कर्कः “सोमेन जात्यभावात्” का॰ सू॰ १॰ “सोमेनेति तृतीयैकवचनम्। सोमाभावे पूतीकेषूपात्तेषु सोमशब्देनैव पूतीकानामभिधानं कर्त्तव्यम्। “अंशुरंशुष्टे देव! सोम! आप्यायतामित्येवम् न तु पूतीकाशब्देन। अथ वा सोमे इति सप्तम्येकवचनम् नेति निषेधः। सोमप्रतिनिधित्वेनोपात्तेषु अर्जुनश्येनहृतपूतीकादिषु सोमे सोमशब्दे ऊहो न भवति कुतः जात्यभावात् जात्यन्तरवस्त्वभावात्। यद्यत्र वचनेन द्रव्यान्तरं विधीयते किं तर्हि सोमाभावे यागस्यासम्प्रकर्षव्यत्यादनेकेषु दृष्टदोषेषु च प्राप्तेषु पूतीकादेर्नियमः क्रियते तेनैन्द्रमेषइतिवद् वाचनिकजात्यन्तराभावादतोऽप्यूहो न भवति” कर्कः।

“छाग! त्वं वपिरूपेणेत्यादिमन्त्रे च बहुपशुघाते न बहुत्वोहः। तदेतत्” ति॰ त॰ “बहुपशुघातेऽपि मन्त्र एकवचनान्त एव प्रयोज्यः न बहुवचनोहः। “नरं पशुत्वमागतम्” इत्यत्र नार्य्यां स्त्रीत्वोहाभाववत् अतएव सपत्नीकयजमानप्रयोगेऽपि “पत्नीं सन्नह्येति” मन्त्र एकवचनान्त एवेति। ऊहं प्रकृत्य “प्रकृतावपूर्व्वत्वात्” कात्यायनेनोहस्य प्रकृतौ प्रतिषेधात्। विकृतावेवोहः। “ऊहोऽपूर्व्वांसु प्रैषमिति” जै॰ तत्रापवादात् न चाम्ययवाचः वैभक्तिकार्य्यापेक्षया प्राथमिकत्वेन बलवतः प्रातिपदिकार्थस्य समन्वितत्वेनाविरोधात्। एवञ्च प्रकृतौ नररूपबहुपशौ बहुवचनोहाभावात् छागादौ विकृतिभूतेऽपि न बहुवचनोहः किन्तु एकवचनमात्रमिति” वदता रघुनन्दनेन तथा समर्थितम्। संकल्पादिवाक्ये तु ऊह इति भेदः। ऋत्विगादिप्रयोगे च अस्मदादिपदघटिते “दातारोनोऽभिवर्द्धन्तामित्यादि” मन्त्रेऽपि नोहः तैस्तथा प्रयोगेऽपि यजमानगतानामेव तत्तत्फलानामवगम इत्याकरे प्रपञ्चः। तथाचासमवेतार्थस्य समन्वयाय मन्त्रे समवेतार्थकरणरूपमपूर्व्वं स्तोतृमेतावनूहः। ५आरोपे ६समूहने च। “इमे मनुष्या दृश्यन्ते ऊहापोहविशारदाः” भा॰ अनु॰ १४५ अ॰ “ऊहापोहाभ्यां तत्त्वावधारणम्” पातञ्ज॰ भा॰।

**ऊहगान** न॰ सामगानप्रभेदे ऊहगीतिरप्यत्र स्त्री।

**ऊहा** स्त्री ऊह अ स्त्रीत्वात् टाप्। १अध्याहारे २ऊहशब्दार्थे

**ऊहिनी** स्त्री ऊह-णिनि। समवेतायाम् “अतात् परस्य तस्यादेर्दृशिः अक्षौहिणी सेना।

**ऊह्य** त्रि॰ ऊह-ण्यत्। १तर्कणीये २उद्भावनीये ३अध्याहार्य्ये ४मीमांसकोक्तोहविषये च। अगोचर्। ऊहनीय तदर्थे त्रि॰

**ऊह्यगान** न॰ सामगानप्रभेदे।

इति वाचस्पत्ये ऊकारादिशब्दार्थसङ्कलनम्।



वृत्तस्य च यः संपातः मीनान्तादग्रतो यावद्भिरंशैस्तावन्त स्तस्य भिंशास्तु ध्रुवांशा ज्ञेयाः । अथ वेधवलये तस्यैव संपातस्य योगताराया यावतोऽन्तरेऽंशास्तावन्तस्तस्य शरांशा उत्तरा दक्षिणा वा वेदितव्याः । अथ ये ध्रुवभागाः पठितास्ते कृतदृक्कर्मका एव । ये तु शरांशाः पठितास्ते स्फुटा एव । यतो ध्रुवद्वयकीलयोः प्रोतं वेधवलयम् । तस्मिन् वेधवलये यो ज्ञातः शरः स ध्रुवाभिमुखः । ध्रुवाभिमुखः शरः स स्फुटः । अस्फुटस्तु कदम्बाभिमुखः । अत एव पूर्वं भगणोत्पत्तिकथने षड्वेधवलयं कदम्बकीलयोः प्रोतं कर्त्तव्यमित्युक्तम् । अत एव कारणात् कृतदृक्कर्मका एव भध्रुवाः । यतो ध्रुवादुपरिष्टोपरि नीयमानं सूत्रं यत्र क्रान्तिवृत्ते लगति तत्र कृतायनदृक्कर्मको ग्रह इति दृक्कर्मवासनायां पूर्वं कथितमेव । अथागस्त्यलुब्धकयोराह" प्रमि० । "अगस्त्यध्रुवः सप्तभागास्तु भागास्तुरङ्गादवकस्य याम्याः शरांशाः । षडष्टौ तथा लुब्धकस्य ध्रुवोऽयं नभोऽम्भोधिभागाः शरस्तस्य याम्यः" सि०शि० । अस्य "अस्योपपत्तिः पूर्ववत् । अथेष्टघटिका आह" प्रमि० । "अगस्त्यस्य नाड्युदयं प्रोक्तमिष्टं षडङ्गाननाड्युदयं लुब्धकस्य । त्रिभागाधिकं स्थूलभानामणूनां ततश्चाधिकं तारतम्येन कल्प्यम्" सि०शि०स्पष्टार्थम् । "अस्योपपत्तिः अगस्त्यस्य नाड्युदयं यदिष्टं तत् तस्य द्वादशकालांशा उपपद्यन्ते । षड्भागनाड्युदयं लुब्धकस्येति । तत्र त्रयोदश १३ कालांशाः त्रिभागाधिकं स्थूलमानानामिति । यानि स्थूलानि नक्षत्राणि तेषां चतुर्दश कालांशाः । अणूनां ततश्चाधिकमिति केषाञ्चित् पञ्चदश केषाञ्चित् षोडशेति कल्प्यते । अत्र पक्षाणां भानां ये ते कालांशास्ते स्थूलसूक्ष्मत्वतारतम्यपर्यालोचनया । याः स्थूलास्तारास्ता अर्कोदयादल्पेन कालेनान्तरिता दृश्या भवन्ति । याः सूक्ष्मास्ता अधिकेनेत्युपपन्नम्" प्रमि०

सू०सि०रङ्गनाथव्याख्यात्तु तदुदयज्ञानार्थमन्यप्रकार उक्तो यथा "प्रोच्यन्ते लिप्तिका भानां स्वभोगोऽथ दशाहतः । भवन्त्यतीतधिष्ण्यानां भोगलिप्तायुता ध्रुवाः" सू०सि० । "भानामश्विन्यादिनक्षत्राणामुत्तराषाढाभिजिच्छ्रवणधनिष्ठावर्जितानां लिप्तिका योगताराध्रुवाः कलाः प्रोच्यन्ते समनन्तरमेव कथ्यन्ते । अथानन्तरं स्वभोगः स्वाभीष्टनक्षत्रभोगः कलात्मको दशभागो दशभिर्गुणितः कार्यः । तत्र स्वाभीष्टनक्षत्रगतनक्षत्राणामश्विन्यादीनां भोगलिप्ताः । "भभोगोऽष्टशती लिप्ताः" इत्युक्ताष्टशतकलाः । प्रत्येकं युताः । अश्विन्याद्यतीतनक्षत्रसङ्ख्यागुणिताष्टशतयुतमित्यर्थः । ध्रुवा नक्षत्राणां भवन्ति" । रङ्ग० । अथ प्रतिज्ञाता नक्षत्रभोगलिप्ता उत्तराषाढ़ाभिजिच्छ्रवणधनिष्ठाव्यतिरिक्तानां तेषां ध्रुवकाश्चत्वारः श्लोकैराह । "अष्टार्णवाः शून्यकृताः पञ्चषष्टिर्नगेषवः । अष्टार्था अब्धयोऽष्टागा अङ्गागा मनवस्तथा । कृतेषवो युगरसाः शून्यबाणा वियद्रसाः । खवेदाः सागरनगा गजागाः सागरर्त्तवः । मनवोऽथ रसा वेदा वैश्वमाप्यार्धभोगगम् । आप्यस्यैवाभिजित्प्रान्ते वैश्वान्ते श्रवणस्थितिः । त्रिचतुःपादयोः सन्धौ श्रविष्ठा श्रवणस्य तु । स्वभोगतो वियुक्तांशाः षट्कृतिर्यमलाश्विनः । रन्ध्रादय क्रमाद्या विक्षेपाः स्वादपक्रमात् । दिङ्मासविषयाः सौम्ये याम्ये पञ्च दिशो नव । सौम्ये रसाः खं याम्ये गाः सौम्ये खार्कत्रयोदश । दक्षिणे रुद्रयमलाः सप्तत्रिंशदथोत्तरे । याम्येऽध्यर्धत्रिककृता नवसार्धशरेषवः । उत्तरस्यां तथा षट्त्रिंशत् षट्त्रिंशदेव हि । दक्षिणे त्वर्धभागस्तु चतुर्विंशतिरुत्तरे । भागाः षड्विंशतिः खं च दस्रादीनां यथाक्रमम्" सू० "अश्विन्यादिनक्षत्राणां क्रमाद्भोगा एते । तत्राश्विन्या अष्टचत्वारिंशत् कलाः । भरण्याश्चत्वारिंशत् कृत्तिकायाः कलाः पञ्चषष्टिः । रोहिण्याः सप्तपञ्चाशत् कलाः । मृगशिरसोऽष्टपञ्चाशत् । आर्द्रायाश्चत्वारः । अत्राब्धय इत्यत्र गोऽब्धयो गोऽन्नय इति वा पाठस्त्वयुक्तः । शाकल्यसंहिताविरोधात् । एतेन "सौरोक्तरुद्रभक्षांशास्त्वाद्रयोऽगाब्धयः कलाः" इति मार्मदोक्तम् "दशकक्षोनपञ्चदशभागा मिथुने" सर्वजनाभिमतध्रुवको दशकलायुतत्रयोदशभागाः पर्वताभिमतध्रुवकश्च निरस्तः । पुनर्वसोरष्टसप्ततिः । पुष्यस्य षट्सप्ततिः । अश्लेषायाश्चतुर्दश । तथेति छन्दःपूरणार्थम् । मघायाश्चतुःपञ्चाशत् । पूर्वफाल्गुन्याश्चतुःषष्टिः । उत्तरफाल्गुन्याः पञ्चाशत् । हस्तस्य षष्टिः । चित्रायाश्चत्वारिंशत् । स्वात्याश्चतुःसप्ततिः । विशाखाया अष्टसप्ततिः । अनुराधायाश्चतुःषष्टिः । ज्येष्ठायाश्चतुर्दश । अनन्तरं मूलस्य षट् । पूर्वाषाढायाश्चत्वारः । उत्तराषाढाया ध्रुवकमाह । वैश्वमिति । उत्तराषाढायोगतारानक्षत्रम् । आप्यार्धभोगगम् । आप्यस्य पूर्वाषाढानक्षत्रस्यार्धभोगः । धनूराशेर्विंशतिभागस्तत्र स्थितं ज्ञेयम् । अष्टौ राशयो विंशतिभागा उत्तराषाढ़ाया ध्रुव इत्यर्थः । एतेन पूर्वाषाढायोगतारायाः सकाशादुत्तराषाढायोगतारा

विंशतिकलोनसप्तभागान्तरिता । तेन पूर्व्वाषाढ़ाध्रुवको-
ऽष्टराशयश्चतुर्द्दश भागा विंशतिकलोनसप्तभागैर्युत उत्त-
राषाढाया ध्रुवश्चत्वारिंशत्कलाधिकोऽष्टम एव इति पर्य-
वसन्नमपास्तम् ग्रहयुत्यन्तविरोधात् । अभिजिद्ध्रुव-
माह । चाप्यस्येति । पूर्व्वाषाढाया अवसाने धनूराशे-
र्विंशतिकलोनसप्तविंशतिभागेऽभिजिद्योगतारा ज्ञेया ।
चत्वारिंशत्कलाधिकषड्विंशतिभागाधिका अष्टौ राशयो-
ऽभिजितो ध्रुव इत्यर्थः । एवकारोऽन्ययोगव्यवच्छेदार्थः ।
तेन संहितासम्मतं श्रवणपञ्चदशांशस्थानं विंशतिविकला-
युतत्रयोदशकलायुतचतुर्द्दशभागाधिकनवराशयो निरस्तम् ।
श्रवणस्य ध्रुवकमाह । वैश्वान्त इति । उत्तराषाढ़ाया
अवसाने श्रवणयोगतारायाः स्थानं ज्ञेयम् । नव राशयो
दश भागाः श्रवणध्रुवक इत्यर्थः । धनिष्ठाया ध्रुवकमाह ।
त्रिचतुःपादयोरिति । श्रवणस्य तृतीयचतुर्थचरणयोः
क्रमेणान्तादिसन्धौ मकरराशेर्विंशतिभागे श्रविष्ठा धनिष्ठा
ज्ञेया । नव राशयो विंशतिभागा धनिष्ठाध्रुव इत्यर्थः ।
तुकारात् क्षेत्रान्तर्गतधनिष्ठास्थानं कुम्भस्य विंशतिकलो-
नसप्तभागा निरस्तम् । शततारायाः भोगमाह । स्वभो-
गत इति । धनिष्ठाभोगात् कुम्भस्य विंशतिकलोनसप्त-
भागावधेरित्यर्थः । शततारायाः अशीतिर्भोगः । अतः
प्रान्त्यदृग्ध्रुवा इति ज्ञापनार्थं स्वभोगत इत्युक्तम् । शत-
तारायाः स्थानं शततारकाध्रुव इति पर्यवसन्नम् । अव-
शिष्टनक्षत्राणां भोगानाह । षट्कृतिरिति । पूर्व्वभाद्र-
पदायाः षट्त्रिंशत् कला भोगः । उत्तरभाद्रपदाया
द्वाविंशतिः । रेवत्या एकोनाशीतिः । अथ ध्रुवकानयनं
यथा । अश्विन्या भोगः । ४८ । दशगुणितः ४८० ।
अतीतनक्षत्राभावात्तद्भोगयोजनाभावः । अतोऽश्विन्याः
कलात्मको ध्रुवः । ४८० । राश्याद्यस्तु । ०८ । भरण्या
भोगः । ४० । दशाहतः । ४०० । अतीतनक्षत्रस्यैक-
त्वादष्टशतयुतो भरण्याः परिभाषया राश्याद्यो ध्रुवः ।
० । २० । एवमार्द्राभोगः । ४ दशाहतः ४० । अतीत-
नक्षत्राणां पञ्चतया पञ्चगुणिताष्टशतेन ४००० चतुः-
सहस्रात्मकेन युतः कलाद्यो ध्रुवः ४०४० राश्याद्यस्तु २ ।
७ । २० । एवं पूर्व्वाषाढाया दशगुणितो भोगः । ४० ।
एकोनविंशतिगुणिताष्टशतेन । १५२०० युतः परि-
भाषया राश्याद्यो ध्रुवः । ८ । १४ । शततारायाः दश-
गुणितो भोगः । ८०० । त्रयोविंशतिगुणिताष्टशतेन ।
१८४०० । युतश्चतुर्विंशतिगुणिताष्टशतरूपो । १९२०० ।
जातो ध्रुवो राश्याद्यः । १० । २० । पूर्व्वभाद्रपदाया
दशगुणितो भोगः २६० । चतुर्विंशतिगुणिताष्ट-
शतेन । १९२०० युतः । १९५६० जातो
ध्रुवो राश्याद्यः । १० । २६ । उत्तराषाढाभिजि-
च्छ्रवणधनिष्ठानां स्वभोगस्थानात् पश्चात् स्थितत्वेनोक्त-
रीत्यसम्भवाद्विदरीत्या ध्रुवका उक्ताः स्वादिस्थानाद्योग-
तारा यदन्तरकलाभिः स्थितास्ता वा पश्चाद्यापवर्त्तिता
भोगसञ्ज्ञा उक्ताः । तथा च ब्रह्मसिद्धान्ते । "अष्टौ
विंशतिरष्टैव गजाग्निर्व्योमवेदवः । त्रितर्काः सप्तिभागा-
द्रिरसाभ्यासाश्च षट्शतम् । नवाशा नवसूर्याश्च वेदेन्द्राः
शरशाम्भूः । अत्यष्टिः सप्ततिर्गोऽतिधृतिर्विंशाश्विन-
काशा । वेदाकृतिर्गोऽद्रिकृताः कश्चिकृता युगार्णदक्(?) ।
धोत्कृतिस्त्र्यंशहीनाश्च रुद्रकृताः षड्रसिदक्(?) । अगो-
ऽश्विनः षड्नाः षड्गाः षैवगुणान्वयः । मेषाद्यश्या-
दिभध्रांशाः षडंशोनाः षषड्गुणाः" इति । अथ नक्ष-
त्राणां विक्षेपभागानाह । यास्त्रिति । अन्यध्रुवक-
सन्धिनामश्विन्यादिनक्षत्राणां यथाक्रमं क्रमादित्यर्थः ।
स्वात् स्वकीयापक्रमात् क्रान्त्यपात् क्रान्तिवृत्तस्थध्रुवक-
स्थानादित्यर्थः । विक्षेपा विक्षेपभागा दक्षिणा उत्तरा वा
भवन्ति । तत्रोत्तरदिक्षु अश्विन्यादित्रयाणां दिक्श्राव-
विषयाः क्रमेण दश द्वादश पञ्चेत्यर्थः । दक्षिणदिशि
रोहिण्यादित्रयाणां पञ्च दश नव । उत्तरस्यां पुनर्वसोः
षड्भागाः । पुष्यस्य खं विक्षेपाभावः । अत्र पञ्चमाक्ष-
रस्य गुरुत्वेन छन्दोभङ्ग आर्षत्वान्न दोषः । दक्षिणस्या-
मश्लेषायाः सप्त । उत्तरस्यां मघादित्रयाणां शून्यं
द्वादश त्रयोदश । दक्षिणस्यां हस्तचित्रयोरेकादश द्वौ ।
अनन्तरं स्वात्या उत्तरदिशि सप्तत्रिंशत् । दक्षिणस्यां
विशाखादीनां चतुर्णां सार्द्धैकं त्रयं चत्वारः नव सार्द्धपञ्च
पञ्च क्रमेण उत्तरदिशि तथा विक्षेपभागाः । अभिजितः
षष्टिः । श्रवणस्य त्रिंशत् । धनिष्ठायाः षट्त्रिंशत् ।
एवकारो न्यूनाधिकव्यवच्छेदार्थः । चकारः पूरणार्थः ।
दक्षिणस्यां तुकारस्तथा । अर्द्धभागः शततारायाः । तुका-
रस्तथा । उत्तरस्यां पूर्व्वभाद्रपदायाश्चतुर्विंशतिः । तस्या-
मेव दिशि भागा विक्षेपभागा उत्तरभाद्रपदायाः षड्-
विंशतिः । रेवत्या विक्षेपाभावः । चकारः पूरणार्थः ।
अथागस्त्यलुब्धकवह्निब्रह्महृदयताराणां ध्रुवकविक्षेपांशाद्युप-
पत्तिं श्लोकत्रयेणाह" इत्यादि । "अशीतिभागैर्याम्यायामगस्त्यो
मिथुनान्तगः । विंशे च मिथुनस्यांशे मृगव्याधो व्यव-

स्थितः । विक्षेपो दक्षिणे भागैः स्वार्द्धैः स्वादपक्रमात् । हुतभुग्ब्रह्महृदयौ वृषे द्वाविंशभागगौ । अष्टाभिस्त्रिंशता चैव विक्षिप्तावुत्तरेण तौ । गोलं बद्ध्वा परीक्षेत विक्षेपं ध्रुवकं स्फुटम्" सू० "स्वकीयात् क्रान्तिविभागस्थानाद्दक्षि- णस्थानमीलांशैस्ताराप्रसिद्धोऽगस्त्यो मिथुनान्तः कर्कादिभागे स्थितः । अगस्त्यनक्षत्रस्य राशित्रयं ध्रुवकः । दक्षिण- विक्षेपोऽशीतिरित्यर्थः । मृगव्याधो लुब्धको मिथुनराशेः विंशतिभागे स्थितः । चकारः समुच्चये । लुब्धकनक्षत्रस्य राशिद्वयं विंशतिभागा ध्रुवक इत्यर्थः । दक्षिणस्यां चत्वारिंशता भागैः परिमितस्तस्य च क्रान्तिवृत्तस्थाना- द्विक्षेपः । वृषराशौ वह्निब्रह्महृदयौ द्वाविंशभागस्थितौ वह्निब्रह्महृदयनक्षत्रयोर्द्वाविंशतिभागाधिकैकराशिध्रुवकः। तौ वह्निब्रह्महृदयौ । अष्टाभिस्त्रिंशता । चकारः स- मार्थे । एवकारो न्यूनाधिकव्यवच्छेदार्थः । उत्तरेणो- त्तरस्यामित्यर्थः । विक्षिप्तौ विक्षेपवन्तौ । वह्नेर्विक्षेपो- ऽष्टभागः उत्तरः । ब्रह्महृदयस्योत्तरे विक्षेपस्त्रिंशदि- त्यर्थः । नन्वेते ध्रुवा विक्षेपाश्च कालक्रमेण नियता अनियता वेत्यत आह । गोलमिति । गोलं वक्ष्य- माणं बद्ध्वा वंशशलाकादिभिर्निबद्ध्य स्फुटं विक्षेपं क्रा- न्तिसंस्कारयोग्यं ध्रुवाभिधं ध्रुवकं स्फुटमायनदृक्कर्म- संस्कृतं परीक्षेत । तत्तत्काले दृग्गोचरविमलीकुरुत । तथा च क्रान्तिसंस्कारयोग्यविक्षेपायनसंस्कृतध्रुवकयोरयनां- शवशादस्थिरत्वादपि वेधेदानीन्तनसमयानुरोधेन साव- धार्य्यमायनदृक्कर्मसंस्कृता ध्रुवाः क्रान्तिसंस्कारयोग्यविक्षे- पाश्च नियता उक्ताः । कालान्तरे गोलयन्त्रेण वेधसिद्धा ज्ञेयाः । नैत इति भावः । गोलयन्त्रेण वेधस्तु गोल- बन्धोक्तविधिना गोलबन्धं कार्य्यम् । तत्र खगोलस्योपरि भगोलम्, आधारवृत्तस्योपरि विषुवद्वृत्तम् । तत्र यथो- क्तं क्रान्तिवृत्तं भगणांशाङ्कितं च बद्ध्वा ध्रुवयष्टिकीलयोः प्रोतमध्यत्रयं भवेधवलयम् । तत्र भगणांशाङ्कितं का- र्य्यम् । ततस्तद्गोलयन्त्रं सम्यग्ध्रुवाभिमुखयष्टिकं जल- समक्षितिजवलयं च यथा भवति तथा स्थिरं कृत्वा रात्रौ गोलमध्यच्छिद्रगतया दृष्ट्या रेवतीतारां विलोक्य क्रान्तिवृत्ते मीनान्ताद्भगणान्तरितपश्चाद्भागं रेवतीतारा- यां निवेश्य मध्यगतयैव दृष्ट्याश्विन्यादेर्नक्षत्रस्य योगतारां विलोक्य तस्या उपरि तद्वेधवलयं निवेश्यम् । एवं कृते सति वेधवलयस्य क्रान्तिवृत्तस्य च यः सम्पातः स मीना- न्ताद्यतो यावद्भिरंशैस्तावन्तस्तस्य नक्षत्रस्य ध्रुवांशा ज्ञेयाः । वेधवलये तस्यैव सम्पातस्य योगताराया याव- न्तोऽन्तरेऽंशास्तावन्तस्तस्य विक्षेपांशा दक्षिणा उत्तरा वा ज्ञेयाः । अत्र कदम्बप्रोतवेधवलयेन वेधे तु यदा स्थिरा ध्रुवका आयनदृक्कर्मसंस्कृताः परन्तु कदम्बतारयोरभावाद- सम्भवमिति यथोक्तवेधेनैवायनदृक्कर्मसंस्कृता ध्रुवाः शराश्च ध्रुवाभिमुखाः स्फुटाः सिद्धा भवन्तीति दिक् । अथ रोहि- णीशकटभेदमाह" रङ्ग० । "वृषे सप्तदशे भागे यस्य याम्योंऽ- शकद्वयात् । विक्षेपोऽभ्यधिको भिन्द्याद्रोहिण्याः शकटं तु सः" सू० । "वृषराशौ सप्तदशेंऽशे यस्य ग्रहस्य भागद्वया- दधिको विक्षेपो दक्षिणः स ग्रहो रोहिण्याः शकटं शक- टाकारसन्निवेशं भिन्द्यात् । तन्मध्यगतो भवेदित्यर्थः । तुकाराद्ग्रहविक्षेपो रोहिणीविक्षेपादल्प इति विशेषा- र्थकः । विक्षेपस्य दक्षिणस्य रोहिणीविक्षेपादधिकत्वे शकटाद्बहिर्दक्षिणभागे ग्रहस्य स्थितत्वेन तद्भेदनाभा- वात् । अत्र शकटाग्निनक्षत्रस्य ध्रुव एकराशिः सप्त- दशांशाः दक्षिणः शरो भागद्वयमिति वेधसिद्धा स्पष्टा युक्तिः । अथ ग्रहयोगसाधनार्थं ग्रहयोगसाधनरीत्यतिदेश- माह" रङ्ग० । "ग्रहवद्द्युनिशे भानां कुर्य्याद्दृक्कर्म पूर्ववत् । ग्रहमेलकवच्छेषं ग्रहभुक्त्या दिनानि च" सू० । "ग्रहवद्द्यु- निशे ग्रहाणां यथा दिनरात्रिमाने आक्षदृक्कर्मार्थं कृते तथा दिनमानरात्रिमाने भानां नक्षत्रध्रुवकाणामाक्षदृक्क- र्मार्थं गणकः कुर्य्यात् । तदनन्तरं पूर्ववन्नक्षत्रनित्योदया- स्तौ साधयित्वाभीष्टकाले दिनगतशेषाभ्यां नतं कृत्वा विषु- वच्छायया भ्यस्तादित्यादिनेत्यर्थः । दृक्कर्म कुर्य्यात् । अत्र नक्षत्रध्रुवके पर्वतेनायनदृक्कर्माप्युदाहरणे कृतं तदयुक्तम् । तस्य ध्रुवके स्वतः सिद्धत्वात् । तदनन्तरं शेषं नक्षत्र- ग्रहयुतिसाधनं ग्रहध्रुवतुल्यतारूपं ग्रहमेलकवद्ग्रहयो- गसाधनरीत्या ग्रहान्तरकला इत्यादिना कार्य्यम् । ननु तत्र ग्रहान्तरकलाः स्वस्वभुक्तिविश्लेषभाजिताः । भुक्त्यन्तरेण विभजेदित्युक्तेर्नक्षत्रस्य का गतिर्ग्राह्येत्यत आह । ग्रहभु- क्त्येति । केवलया ग्रहगत्या ग्रहस्य फलं ग्रहध्रुवान्तर- रूपफले संस्कार्यं ध्रुवकसमो ग्रहो भवति । नक्षत्रस्य पूर्व- गत्यभावाद्ध्रुवो यथास्थित इत्यर्थः । ननु तथापि ग्रहन- क्षत्रयुतिकालसाधनं भुक्त्यन्तराभावात् कथं कार्य्यमिति म- न्दाशङ्क्यत आह । दिनानीति । अभीष्टसमयाद्विवरमित्या- दिना केवलया ग्रहगत्या ग्रहनक्षत्रयुतिदिनानि साध्यानि । चः समुच्चये । नक्षत्राणां गत्यभावात् । अथाभीष्टकालाद्ग्रह- नक्षत्रयुतिकालस्य गतैष्यत्वमसम्भूमार्थं पुनराह" रङ्ग० ।

"एष्यो हीने ग्रहे योगो ध्रुवकादधिके गतः । विपर्ययाद्वक्रगते ग्रहे ज्ञेयः समागमः" सू०।"नक्षत्रध्रुवाद्ग्रहध्रुवे आयनदृक्कर्मसंस्कृतग्रहे याम्यदृक्कर्मसंस्कृतनक्षत्रध्रुवकात् दृक्कर्मद्वयसंस्कृतोग्रहे इति विवेकार्थः । न्यूने सति योगो नक्षत्रग्रहयोगः साभीष्टसमयाद्भावी । अधिके सति पूर्वं जातः । वक्रगते ग्रहे विपर्ययादुक्तवैपरीत्यात् समागमो नक्षत्रग्रहयोगो ज्ञेयः । हीने ग्रहे गतोऽधिके ग्रहे एष्यो योगः । अत्रोपपत्तिर्नक्षत्रस्य गत्यभावेन सदा स्थिरत्वाद्ग्रहगमनेनैव योगसम्भवादिति सुगमतरा । अश्विन्यादिनक्षत्रस्य बहुतारात्मकत्वात् कस्यास्तारायाः एते ध्रुवका इत्यस्य योगतारायाः ध्रुवकत्वमित्युत्तरं मनसि धृत्वाश्विन्यादिनक्षत्राणां योगतारां विवक्षुः प्रथममेषां नक्षत्राणां योगतारामाह" रङ्ग० ।

'फाल्गुन्योर्भाद्रपदयोस्तथैवाषाढयोर्द्वयोः । विशाखाश्विनिसौम्यानां योगतारोत्तरा स्मृता" सू०।'एषामुक्तनक्षत्राणां प्रत्येकं स्वतारासु योत्तरदिक्स्था तारा सा योगतारा ज्ञेयात्पष्टैवोक्ता । अथान्ययोरनयोराह"रङ्ग०। "पश्चिमोत्तरतारायाः द्वितीया पश्चिमे स्थिता । हस्तस्य योगतारा सा श्रविष्ठायाश्च पश्चिमा" सू०।

"हस्तनक्षत्रं पञ्चतारात्मकं हस्ताङ्गुलिसन्निवेशाकारम् । तत्र नैर्ऋत्यदिगाश्रितपश्चिमावस्थिततारायाः उत्तरदिग्गतस्थिततारायाः द्वितीया पूर्वोक्तातिरिक्ता पश्चिमे वायव्याश्रिते वा स्थिता सा हस्तस्य योगतारा ज्ञेया । उत्तरतारासक्ता पश्चिमाश्रिता तारा हस्तस्य योगतारेति फलितार्थः । धनिष्ठाया योगतारामाह । श्रविष्ठाया इति । धनिष्ठायास्तारासु या पश्चिमदिक्स्था सा तस्या योगतारा । चः समुच्चये । अथान्य यासेषामाह" रङ्ग०। "ज्येष्ठाश्रवणमैत्राणां बार्हस्पत्यस्य मध्यमा । भरण्याग्नेयपित्र्याणां रेवत्याश्चैव दक्षिणा"सू० ।

"ज्येष्ठाश्रवणानुराधानां पुष्यस्य च प्रत्येकं तारात्रयात्मकत्वात् मध्यमतारा योगतारा स्यात् । भरणीकृत्तिकामघानां रेवत्याः । चः समुच्चये । प्रत्येकं स्वतारासु या दक्षिणदिक्स्था सा योगतारा । अथान्येषामवशिष्टानां चाह ।" रङ्ग० 'रोहिण्यादित्यमूलानां प्राची सार्पस्य चैव हि । तथा प्रत्यवशेषाणां स्थूला स्याद्योगतारका" सू०'रोहिणीपुनर्वसुमूलानामश्लेषायाश्च प्रत्येकं स्वतारासु या पूर्वदिक्स्था सैव योगतारेत्यन्वयोऽर्थः । प्रत्यवशेषाणामवशिष्टनक्षत्राणामार्द्राचित्रास्वात्यभिजिच्छततारादीनां स्वतारासु यात्यन्तं स्थूला महती सा योगतारा स्यात् । अथ ब्रह्मप्रजापत्यक्षत्रावस्थानमाह" रङ्ग०।'पूर्वस्यां ब्रह्महृदयादंशकैः पञ्चभिः स्थितः । प्रजापतिर्वृषान्तेऽसौ सौम्येऽष्टत्रिंशदंशकैः" सू०

"ब्रह्महृदयस्थानात् पूर्वभागे पञ्चभिरंशैः प्रजापतितारात्मको ब्रह्मा क्रान्तिवृत्ते स्थितः । कुत्रेत्यत आह । वृषान्त इति । वृषान्तनिकटे । एकराशिः सप्तविंशत्यंशा नक्षत्रध्रुवक इत्यर्थः । अस्य विक्षेपमाह । सौम्य इति । ब्रह्मा उत्तरस्यामष्टत्रिंशद्भागैः स्थितः । अष्टत्रिंशद्भागा अस्य विक्षेप इत्यर्थः । अथापांवत्सापयोस्तारयोरवस्थानमाह" र०।"अपांवत्सस्तु चित्रायाउत्तरेऽंशैस्तु पञ्चभिः । बृहत् किञ्चिदतो भागैरापः षड्भिस्तथोत्तरे" सू० "चित्रायाः सकाशादपांवत्ससंज्ञकतारात्मकः पञ्चभिर्भागैरुत्तरस्यां स्थितः । प्रथमतकारचित्राध्रुवकस्य ध्रुवकार्थकः । द्वितीयतकारचित्राविक्षेपस्य दक्षिणभागद्वयात्मकत्वादपांवत्सविक्षेप उत्तरस्त्रिभाग इति स्फुटार्थकः । अतोऽपांवत्सात् किञ्चिदल्पान्तरेण बृहत् स्थूलतारात्मक आपसंज्ञः तथाऽपांवत्सात् षड्भिरंशैरुत्तरस्यां स्थितचित्राध्रुवक एवापस्य ध्रुवको विक्षेप उत्तरे नवांश इत्यर्थः" रङ्ग० ।

नक्षत्राणामुदयास्तकालनिरूपणम् उदयशब्दे ११२८ पृष्ठादौ दर्शितम् ।

ऋक्षघटितत्वात् राशीनां तथात्वम् । "राशिनाम भवेत् नाम भर्क्षं व्यहनाम च" ज्यो०। राशयश्च द्वादश "पुनर्द्वादशधात्मानं व्यभजद्राशिसंज्ञकम् । नक्षत्ररूपिणं भूयः सप्तविंशात्मकं वशी" सू० सि० उक्तेः । ते च मेषवृषमिथुनकर्कटसिंहाः कन्या तुला च वृश्चिकम् । धनुरथ मकरः कुम्भोमीन इति च राशयः कथिताः" ज्योति० उक्ताः राशिश्च "विकलानां कला षष्ट्या तत्षष्ट्या भाग उच्यते । तत्त्रिंशता भवेद्राशिर्भगणो द्वादशैव ते" सू० सि० उक्तेः १०८०० विकलात्मकः १८०० कलात्मकः त्रिंशद्भागात्मकः । तैर्द्वादशभिः ३६० अंशैर्भगणो राशिचक्रं स्यात् तत्र सप्तविंशतिनक्षत्रात्मकराशिचक्रे द्वादशधा विभक्ते सपादनक्षत्रद्वयस्यैव प्रत्येकराशिघटकता तेन प्रत्येकनक्षत्रस्य ८०० कलात्मकत्वम् । "अभोगोऽष्टशती लिप्ताः" सू० सि० उक्तेः । राशिभेदे नक्षत्रभेदनिरूपणं तुलाशब्दे १०७१ पृ० दृश्यम् ।

"भास्करादीन् न योधयेत्" "जन्मर्क्षे उपतापिते" ज्यो० ।

'दक्षिणां दिशमृक्षेषु वार्षिकेष्विव भास्करः" रघुः

ऋक्षगन्धा स्त्री ऋक्षान् गन्धयति हिनस्ति गन्ध-अच् ६त० ।

१जाम्बवति, (ऋषिजाम्बवो) २महाश्वेतायां, ३क्षीरविदार्य्याञ्च । (बोरताड़) स्वार्थे कन् तत्रैव

ऋक्षगिरि पुं० कर्म्म० । कुलाचलभेदे ऋक्षनामके पर्व्वते ।

ऋक्षचक्र न० ६त० । भचक्रसमुदाये ऋक्षाणां चक्रमिव गगनस्थे नक्षत्रात्मके चक्राकारे पदार्थभेदे । भचक्रशब्दे तद्विवृतिः । भचक्रस्य प्रवहवायुना प्रत्यहं पश्चाद्गमनेऽपि ग्रहाणां यथा प्राग्गतित्वं भवेत्तथा सू०सि०रङ्गनाथव्याख्ययोः यथा "अथ ग्रहपूर्व्वगत्युपपत्तौ कारणमाह । "पश्चाद्व्रजन्तोऽतिजवान्नक्षत्रैः सततं ग्रहाः । जीयमानास्तु लम्बन्ते तुल्यमेव स्वमार्गगाः" सू०सि० । "पश्चादनन्तरं पुनराहत्य पश्चात् पश्चिमदिगभिमुखं नक्षत्रैस्तारकादिभिः सह ग्रहाः सूर्य्यादयोऽतिजवात् प्रवहवायुसत्वरगतिवशात् सततं निरन्तरं व्रजन्तो गच्छन्तः स्वमार्गगाः स्वकक्षावृत्तस्था जीयमाना नक्षत्रैः पराजिता नक्षत्राणामग्रे गमनात् । अतएव लम्बन्ते पुरःस्थता इति तात्पर्य्यार्थः । तुल्यं समम् । एवकारादधिकन्यूनव्यवच्छेदः । लम्बन्ते स्वस्थानात् पूर्व्वस्मिन् लम्बायमाना भवन्ति । यथा वक्ष्यतः पश्चाद्भवति तथा । तुल्यत्वादधोऽधः कक्षाक्रमानुरोधेन शन्यादिग्रहाणां चन्द्रान्तानां गुरुतापचयः शनिरतिगुरुभूतस्तस्मात् किञ्चिन्न्यूनो गुरुस्तस्मादपि भौम इत्यादि यथोत्तरम् । यस्य कक्षा महती तस्य गुरुत्वाधिक्यं यस्य लघ्वी तस्य तदनुरोधेन गुरुत्वाल्पत्वमिति । एतदुक्तं भवति । ब्रह्मणा प्रवहवायौ नक्षत्राधिष्ठितो मूर्त्तो गोलः स्थापितस्तदन्तर्गताः स्वस्वाकाशगोलस्थाः शन्यादयो नक्षत्राधिष्ठितमूर्त्तगोलस्थक्रान्तिवृत्तस्थरेवतीयोगताराश्रयरूपमेषादिप्रदेशसमसूत्रस्थाः स्थापिताः । क्रान्तिवृत्तं तु मेषतुलास्थाने विषुवद्वृत्तलग्नं तस्मात् त्रिभान्तरितक्रान्तिवृत्तप्रदेशाभ्यां चतुर्व्विंशत्यंशान्तरेण दक्षिणोत्तरौ मकरकर्कादिस्थौ तदेवं द्वादशराश्यात्मकं वृत्तं ग्रहचारभूतम् । विषुवद्वृत्तं तु ध्रुवाभ्यां समं निरक्षदेशोपरिगम् । तत्र प्रवहवायुना आघातेन मूर्त्तो नक्षत्रगोलो नाक्षत्रषष्टिघटीभिः परिवर्त्तते । तदन्तर्गतवायुभिस्तदाघातेन ते ग्रहा भ्रमन्तोऽपि नक्षत्रगोलस्थितक्रान्तिवृत्तीयमेषादिप्रदेशेन समं न गच्छन्ति वायूनां स्वल्पत्वात् तदाघातस्याल्पत्वाद्बिम्बानां गुरुत्वाच्च । अतस्तत्स्थानाद्ग्रहाणां लम्बना दृश्यन्ते । अतएव नक्षत्रोदयकाले तेषां द्वितीयदिने नोदयः किन्तु ग्रहो लम्बितप्रदेशेन वायुना तदनन्तरमूर्द्ध्वमागच्छतीत्यनन्तरमुदयः । लम्बनं तु शन्यादीनां कक्षानुरोधेन प्रवहवायूनां तद्घातानां वा कक्षानुरोधेन बहुल्पत्वात् तुल्यम् । यद्यपि गतेर्ध्रुवानुरोधेन स्वल्पत्वादुपचयलम्बनं विषुवद्वृत्ते भवितुमुचितं न क्रान्तिवृत्ते । तथा च वक्ष्यमाणक्रान्त्यनुपपत्तिः क्रान्तिवृत्तस्थद्वादशराशिभोगेन वक्ष्यमाणानां भगणानामनुपपत्तिश्च । तथापि वायुनाकर्षितो ग्रहो विषुवन्मार्गगोऽपि तद्विषुवप्रदेशासन्नक्रान्तिवृत्तप्रदेशेन ग्रहाकाशगोल एव स्वस्वस्थाने आकृष्यत इति नानुपपत्तिः । अतएव स्वमार्गगा इति क्रान्तिवृत्तानुकृतस्वाकाशगोलस्थकक्षामार्गगता इत्यर्थकमुक्तमिति सङ्क्षेपः" रङ्ग० । "अथात एव ग्रहाणां लोके प्राग्गमनित्वं सिद्धमित्याह । "प्राग्गतित्वमतस्तेषां भगणैः प्रत्यहं गतिः । परिणाहवशाद्भिन्ना तद्वशाद्भानि भुञ्जते" सू०सि० । "अतोऽवलम्बनादेव तेषां ग्रहाणां प्राग्गतित्वं प्राच्यां दिशि गतिर्येषां ते प्राग्गतयस्तद्भावः प्राग्गतित्वं सिद्धम् । लम्बनस्वरूपैव ग्रहाणां पूर्व्वगतिरल्पज्ञा लोकैः कारणानभिज्ञैः प्रत्यक्षावगता तच्छक्तिजनिता कल्पितेत्यर्थः । सा कियतीत्यत आह । भगणैरिति । वक्ष्यमाणभगणैः प्रत्यहं प्रतिदिनं गतिः प्राग्गमनरूपा भगणानां गत्युपचत्वात् भगणसम्बन्धिवक्ष्यमाणदिनैः कल्पसावनैर्ग्रहभगणा लभ्यन्ते तदैकेन दिनेन केत्यनुपाताज्ज्ञेया । ननु ग्रहभगणानां तुल्यत्वाभावात् प्रतिदिनं ग्रहगतिर्भिन्नेति पूर्व्वं लम्बनरूपा ग्रहगतिरयुक्तोक्ता ग्रहलम्बनस्याभिन्नत्वादित्यत आह । परिणाहवशादिति । परिणाहः कक्षापरिधिस्तद्वशात् तदनुरोधादियं ग्रहगतिर्भिन्नाऽतुल्या । अयमभिप्रायः ग्रहाणां लम्बनं तुल्यप्रदेशेन, परन्तु स्वस्वकक्षायां तत्तत्प्रदेशे तुल्यता याः कलात्मा गतिकलास्तास्तु महति कक्षावृत्तेऽल्पा लघुकक्षावृत्ते बह्व्यः सर्व्वकक्षापरिधीनां चक्रकलाङ्कितत्वात् । भगणास्तु गतिवशादेव यस्य कक्षावृत्तं महत् तस्याल्पा यस्य च लघु कक्षावृत्तं तस्य बहवस्तदुत्पन्ना गतिरपि तथेति न विरोधः । नन्वेकरूपगतिं विहाय भिन्नरूपा गतिः कथमुक्तेत्यत आह । तद्वशादिति । भिन्नगतिवशाद्भानि राशीन् नक्षत्राणि भुङ्क्ते ग्रहा भुञ्जन्तीत्यर्थः । तथा च ग्रहराश्यादिभोगज्ञानार्थमियमेव गतिरुपयुक्ता नैकरूपेति भावः" रङ्ग० "अथ भभोगे विशेषं वदन् ग्रहभगणस्वरूपमाह । "शीघ्रगस्तान्यथाल्पेन कालेन महताऽल्पगः । तेषां तु परिवर्त्तेन पौष्णान्ते भगणः स्मृतः" सू०सि० "अथशब्दः पूर्व्वोक्तैर्विशेषसूचकः । शीघ्रगस्तान्ग्रह-

"ऋक्षीकाः पुरुषव्याघ्राः परिमोषिण आव्याधिन्यस्तस्करा अरण्येष्वाजायेरन्" शत० ब्रा० १३,२,४,२,४, २ अश्वाकारपुरुषमेधीयदेवताभेदे स्त्री।"नदीभ्यः पौञ्जिष्ठमृक्षीकाभ्यो नैषादम्" यजु०३०,८। पुरुषमेधे उक्तम्।

**ऋक्षेष्टि** स्त्री नक्षत्रविशेषविहिते इष्टिभेदे।

**ऋक्षोद** पु० ऋक्षं नक्षत्रमिव स्वच्छम् उदकं यत्र उदादेशः। पर्वतभेदे। "ऋक्षोदः पर्वतोऽभिजनो येषाम् अण्। आर्क्षोदा द्विजाः" सि०कौ०।

**ऋक्संहिता** स्त्री ६त०। ऋग्वेदसंहितायाम् ऋग्वेदशब्दे विवृतिः "ऋक्संहितां त्रिरभ्यस्य यजुषां वा समाहितः। साम्नां वा सरहस्यानां सर्वपापैः प्रमुच्यते" मनुः वेदोहि मन्त्रब्राह्मणभेदेन द्विविधः तत्र मन्त्रात्मको भागः संहिता। "अग्निमीळे" इत्यादिकः ऋक्समुदायात्मकः ऋक्संहिता। मन्त्रेतरवेदभागो ब्राह्मणम्। संहितारूपसन्निकर्ष-नियतान्वयतया संहितात्वं ब्राह्मणे पदग्रन्थे च न संहितानियम इति तयोर्न संहितात्वमिति भेदः संहितास्थपदविच्छेदज्ञापकोग्रन्थः पदग्रन्थः। स च शाकल्यादिकृतःपौरुषेय इति बोध्यम्।

**ऋक्सम** न० ऋचा समम्। सामभेदे। "जगत्या ऋक्समम् ऋक्समाच्छुक्रः" यजु० १३,५५, "ऋक्समसंज्ञं यत् साम" वेददी०।

**ऋक्साम** न०द्वि०। ऋक् च साम तदाश्रयगानं च इयोः समाहारः अच् समा०नि०द्वि०। ऋग्रूपमन्त्रभेदतदाश्रयगानयोः समाहारे "ऋक्सामाभ्यां संतरन्तः" यजु०४,१। "ऋक्सामयोः शिल्पे स्थः" ४,९। ऋचश्च सामानि चेति बहुत्वे तु नाच्। ऋक्सामन् इत्येव। "ऋक्सामाभ्यामस्य एतयोनाम" यजु०१८,४२।

**ऋगयन** न० ऋचामयनम्। ऋक्पारायणग्रन्थे पूर्वपदात् णत्वं नेष्ट तज्ञापकात्। ऋगयनस्य व्याख्यानो ग्रन्थः ऋगयनादि० अण्। आर्गयन तद्व्याख्यान ग्रन्थे।

**ऋगयनादि** पु० पाणिन्युक्ते तस्य व्याख्यान इत्यर्थे अण्प्रत्यय निमित्तप्रकृतिभूतशब्दसमुदाये। स च गणः "ऋगयन, पदव्याख्यान, छन्दोमान, छन्दोभाषा, छन्दोविचिति, न्याय, पुनरुक्त, निरुक्त, व्याकरण, निगम, वास्तुविद्या, क्षत्रविद्या, अङ्गविद्या, विद्या, उत्पात, उत्पाद, उद्याव संवत्सर, मुहूर्त, उपनिषद्, निमित्त, शिक्षा, भिक्षा"

**ऋगावान** न० आ+नेज् भावे ल्युट् ऋचामावानं ग्रथनं संहिताकार्येण सन्धानम्। वेदपाठकाले अर्द्धर्चादीनां संहितया पूर्वोत्तरयोः सन्धाने "ऋचमृचमनावानमुक्त्वा प्रणुयावस्येत्" आश्व० श्रौ० ४,६,२। "तेनार्द्धर्चाः संहितयैव वक्तव्याः" नारा० वृ०। ऋचामन्ते तु न संहितया ग्रथनमित्यर्थः। "अभिष्टु्याद्गावानम्" ५,६,१। "तस्योक्तमृगावानधर्मेण" ५, १९,२। "तस्याद्यां पच्छ ऋगावानं पच्छः मध्या चेत्" ५,२०,२।

**ऋग्गाथा** स्त्री ऋचामिव गाथा। लौकिकगीतिभेदे। "ऋग्गाथापाणिकादक्षविहिताब्रह्मगीतिकाः" याज्ञ०।

**ऋग्मत्** त्रि० ऋक् स्तुतिः पूजा वा अस्त्यस्य मतुप्। १स्तोतरि २अर्चनीये पूजनीये। "राजानमुपतस्थुरृग्मियम्" ऋ० ६,८,४ स्तुतेर्निरुक्तौ ऋग्मियमृग्मन्तमर्चनीयं पूजनीयम्" निरुक्तकारः। ऋग्मानिव स्वार्थे घ द्वितीयाचः मस्लोपः। ऋग्मियोऽप्यत्र। "नाभिक्षणन्तमृग्मियम्" ऋ०१,९,८।

**ऋग्मिन्** त्रि० ऋच्+अस्त्यर्थे मिनि। स्तोतरि। "गिरा यदि निर्मिजमृग्मिणो ययुः" ऋ० ८,८६,४६। "ऋग्मिणः स्तोतारः" भा०।

**ऋग्विधान** न० ऋचा ऋग्वेदेन कर्मविशेषस्य विधानम्। ऋग्वेदोक्तमन्त्रभेदेन कर्मविशेषविधाने तच्च हेमाद्रौ व्रतखण्डे विस्तरेणोक्तम्। वह्निपुराणोक्तमत्र दर्श्यते

"अग्निरुवाच प्रतिवेदन्तु कर्माणि काम्यानि प्रवदामि ते। प्रथमं ऋग्विधानं वै शृणु त्वं भुक्तिमुक्तिदम्। अन्तर्जले तथा होमे जपतो मनसेप्सितम्। कामं करोति गायत्री प्राणायामाद्विशेषतः। गा .यत्र्यसाहस्रो जपो-नक्ताशनो द्विजः। आश्रमाद्भिः स्नातश्च सर्वकल्मषनाशनः। दशायुतानि जप्त्वाथ हविष्याशी स मुक्तिभाक्। प्रणवोहि परं ब्रह्म तज्जपः स च पापहा। ओङ्कार शतजप्तस्तु नाभिमात्रोदके स्थितः। जलं पिबेत् स सर्वैस्तु पापैर्विप्रः प्रमुच्यते। मात्रात्रयं त्रयोवेदास्त्रयोदेवास्त्रयोऽग्नयः। महाव्याहृतयःसप्त लोकाहोमोमहापहः। अन्तर्जले तथा राम। प्रोक्तचैवाघमर्षणः। अग्निमीळे पुरोहितं सूक्तोऽयं वह्निदैवतः। शिरसा धारयन् वह्निं योजयेत् परिवत्सरम्। होमं त्रिषवणं भैक्षमनग्निव्रतं चरेत्। अतःपरमृचां सप्त आद्याद्या याः प्रकीर्त्तिताः। शोणयन् प्रयतोनित्यमिष्टान् कामान् समश्नुते। मेधाकामोजपेन्नित्यं सदसस्पतिमित्यृचम्। अम्ब यन्ति याः प्रोक्ता नवर्चौ मृत्युनाशनः। शुनःशेपमृषिं बद्धः सन्निरुद्धोऽथ वा जपेत्। मुच्यते सर्वपापेभ्यो गदी चाप्यगदी भवेत्। यइच्छेत् शाश्वतं कामं मित्रं प्राज्ञं

पुरन्दरम् । ऋग्भिः षोडशभिः कुर्य्यादिन्द्रस्येति दिने दिने । हिरण्यस्तु यमिन्द्रोतत् जपन् शत्रून् प्रबाधते । क्षेमी भवति चाध्वाने ये ते पन्था जपन्नरः । रौद्रीति चक्षुरीशानं सूर्य्याहुयौवै दिने दिने । चरुं वा कल्पयेद्रौद्रं तस्य शान्तिः परा भवेत् । उदुत्यमिति चादित्यमुपतिष्ठन् दिने दिने । क्षिपेज्जलाञ्जलीन् सप्त मनोदुःखविनाशनः । द्विषन्तमित्यथर्व्वेदं द्विषन्तं जपन् स्मरेत् । आगस्कृत् सप्तरात्रेण विद्वेषमधिगच्छति । आरोग्यकामो रोगी च प्रस्कण्वस्योत्तमं जपेत् । उत्तमस्तस्य चार्द्धर्चो जपेद्वैरिविनाशने । उदयस्यायुरस्य तेजो मध्यंदिने जपेत् । अस्तं प्रतिगते सूर्य्ये द्विषन्तं प्रतिबाधते । नव चेति सूक्तानि जपन् शत्रून् नियच्छति । एतद्देयं सुवर्णस्य सर्व्वकामान् विनिर्द्दिशेत् । आध्यात्मिकाः क इत्येता जपन्मोक्षमवाप्नुयात् । आ नो भद्रा इत्यनेन दीर्घमायुरवाप्नुयात् । त्वं सोमेति च सूक्तेन नवं पश्येन्निशाकरम् । उपतिष्ठेत् समित्पाणिर्व्वासांस्याप्नोत्यसंशयम् । आयुरायूंषि समिति कौत्ससूक्तं सदा जपेत् । अपानः शोशुचदिति स्तुत्वा मध्ये दिवाकरम् । यथा मुञ्चति चेषीकां तथा पापं प्रमुञ्चति । जातवेदस इत्येतज्जपेत् स्वस्त्ययनं पथि । भयैर्विमुच्यते सर्व्वैः स्वस्तिमानाप्नुयाद् गृहम् । व्युष्टायाञ्च तथा रात्र्यामेतद्दुःस्वप्ननाशनम् । प्रमन्दिनेति सूयन्त्यां जपेद्गर्भविमोचनम् । जपन्निन्द्रमिति स्नातो वैश्वदेवं तु सप्तकम् । हुत्वेथ्यस्तथा जुहुत् सकलं किल्बिषं नरः । इमामिति जपन् शश्वत् कामानाप्नोत्यभीप्सितान् । मा नस्तोक इति द्वाभ्यां त्रिरात्रोपोषितः शुचिः । औदुम्बरीश्च जुहुयात् समिधश्चाज्यसंयुताः । छित्त्वा सर्व्वान् मृत्युपाशान् जीवेद्रोगविवर्ज्जितः । ऊर्द्ध्वबाहुरनेनैव स्तुत्वा शम्भुं तथैव च । मा नस्तोकेति च ऋचा शिखाबन्धे कृते नरः । अधृष्यः सर्व्वभूतानां जायते संशयं विना । चित्रमित्युपतिष्ठेत त्रिसन्ध्यं भास्करं तथा । समित्पाणिर्नरो नित्यमीप्सितं धनमाप्नुयात् । दुःस्वप्नं तुदते कृत्स्नं भोजनं चाप्नुयाच्चिरम् । हतेषणामीति तथा रक्षोघ्नः परिकीर्त्तितः । यदि वाचा इत्यृचेन जपन् कामानवाप्नुयात् । नमो यदद्येति जपन् सुप्रगे तापनः शुचिः । कयान इति च जपन् ज्ञातिश्रैष्ठ्यमवाप्नुयात् । इमन्ते सोममित्येतत् सर्व्वान् कामानवाप्नुयात् । पितुन्नुस्तोषमुपतिष्ठेत नित्यमन्नमुपस्थितम् । अग्ने तत् पति सूक्तेन स्वर्ग्यमाप्नोत्यनुत्तमम् । यो मे राजन्नित्यपास्तु दुःस्वप्नशमनीमृचम् । अध्वनि प्रस्थितो यस्तु पश्येच्छुभमथाशुभम् । अप्रशस्तं प्रशस्तं वा कनिक्रदमिमं जपेत् । द्वाविंशकं जपन् सूक्तमाध्यात्मिकमनुत्तमम् । पूर्व्वं सुप्रयतो नित्यमिष्टान् कामान् समश्नुते । कथुष्वेति जपेन्मन्त्रं जुह्वदाज्यं समाहितः । अरातीनां हरेत् प्राणं रक्षांस्यपि च नाशयेत् । उपतिष्ठेत् स्वयं वह्निं परीत्य च दिने दिने । तं रक्षति स्वयं वह्निर्व्विश्वतो विश्वतोमुखः । हंसः शुचिषदित्येतत् शुचिर्वीक्षेत् दिवाकरम् । कृषिं प्रपद्यमानस्तु स्थालीपाकं यथाविधि । जुहुयात् क्षेत्रमध्ये तु स्थालीपाकांस्तु पञ्चभिः । इन्द्राय मरुत्सूर्य्यपर्ज्जन्याय भगाय च । यथालिङ्गं तु विहरे लाङ्गलन्तु कृषीवलः । प्रोक्तो धान्याय सीतायै शुनासीरमथोत्तरम् । गन्धमाल्यनमस्कारैर्जपेदेताश्च देवताः । प्रवापने प्रलवने खले स्थापनहारयोः । अमोघं कर्म्म भवति वर्द्धते सर्व्वदा कृषिः । समुद्रादिति सूक्तेन कामानाप्नोति पावकात् । वैश्वानर इति द्वाभ्यां य ऋग्भ्यां वह्निमर्हति । स तरत्यापदः सर्व्वा यशः प्राप्नोति चाक्षयम् । विपुलां श्रियमाप्नोति जयं प्राप्नोत्यनुत्तमम् । अग्ने त्वमिति च स्तुत्वा धनमाप्नोति चोच्छ्रितम् । प्रजाकामो जपेन्नित्यमवरुणदेवमित्यृचम् इत्तालेयं जपेत् प्रातः सदा स्वस्त्ययनं महत् । वास्ति पन्था इति प्रोच्य स्वस्तिमान् व्रजतेऽध्वनि । विजिगीषुर्वनस्पते शत्रूणां व्याधिदम्भयेत् । स्त्रिया गर्भप्रसूताया गर्भमोचनमुत्तमम् । आ वहादिति सूक्तञ्च वृष्टिकामः प्रयोजयेत् । निराहारः क्लिन्नवासा नचिरेण प्रवर्षति । मनसः काममित्येतां पशुकामो नरो जपेत् । कर्द्दम इति स्नायात् प्रजाकामः शुचिव्रतः । अश्वपूर्व्वामिति स्नायाद्राज्यकामस्तु मानवः । रोहिते चर्म्मणि स्नायात् ब्राह्मणस्तु यथाविधि । राजा चर्म्मणि वैयाघ्रे छागे वैश्यस्तथैव च । दशसाहस्रिको होमः प्रत्येकं परिकीर्त्तितः । आ गा वेति सूक्तेन गोष्ठे गां लोकमातरम् । उपतिष्ठेज्जपेच्चैव यदीच्छेत्ताः सदाऽक्षयाः । उपैते तिसृभी राजा दुन्दुभिं चाभिमन्त्रयेत् । तेजो बलञ्च प्राप्नोति शत्रूंश्चैव नियच्छति । तृणपाणिर्जपेत् सूक्तं रक्षोघ्नं दस्युभिर्वृतः । ये केचित्त्वृचं जप्त्वा दीर्घमायुरवाप्नुयात् । जीमूतस्येति सूक्तेन शस्त्राण्यभिमन्त्रयेत् । यथा लिङ्गं ततो राजा विनिहन्ति रणे रिपून् । अमीवेतित्रिभिः सूक्तैर्धनमाप्नोति चाक्षयम् । अमीवहेति सूक्तेन भूतानि स्थापयेन्निशि । संबाधे विषमे

दुर्गे बद्धो वा निगडैः क्वचित् । पलायन् वा गृहीतो वा सूक्तमेतत्तदा जपेत् । त्रिरात्रमपि चोपोष्य श्रपयेत् पायसं चरुम् । तेनाहुतिशतं पूर्णं जुहुयात् त्र्यम्बकेत्यृचा । समुद्दिश्य महादेवं जीवेदब्दे शतं सुखम् । तच्चक्षुरित्यृचा स्नात उपतिष्ठेद्दिवाकरम् । उद्यन्तं मध्यमं चैव दीर्घमायुर्जिजीविषुः । सूक्ताभ्यां परभागाभ्यां भूताभ्यां भूतिमाप्नुयात् । इन्द्रा सोमेति सूक्तन्तु कथितं शत्रुनाशनम् । यस्य लुप्तं व्रतं मोहाद्व्रात्यैः संसृजेत वा । उपोष्याज्यं स जुहुयादग्ने व्रतपते इति । आदित्य इत्यथाज्यं जप्त्वा वादे जयी भवेत् । महोतीति चतसृभिर्मुच्यते महतो भयात् । कथं जप्त्वा यदित्येतत् सर्वान् कामानवाप्नुयात् । द्वाचत्वारिंशकं चैन्द्रं जप्त्वा नाशयते रिपून् । रायस्कृधीति जप्त्वा च प्राप्नोत्यारोग्यमेव च । मयोभवेति द्वाभ्यान्तु भुञ्जानं प्रयतः शुचिः । हृदयं पाणिना स्पृष्ट्वा व्याधिभिर्नाभिभूयते । उत्तमेदमिति स्नातो भूत्वा शत्रुं प्रमापयेत् । त्वन्नो अग्नेति सूक्तेन हुतेनान्नमवाप्नुयात् । अग्नावामिति सूक्तेन दिग्दोषात् विप्रमुच्यते । यदद्य कच्चेत्युदिते जप्तुर्वश्यं जगद्भवेत् । यद्वागिति च जप्तेन वाग्मी भवति शाश्वती । वाचोविदमितीत्येता जपन् वाचं समश्नुते । पवित्राणां पवित्रन्तु पावमान्य ऋचो मताः । वैखानसा ऋचस्त्रिंशत् पवित्राः परमा मताः । ऋचोद्विषष्टिः प्रोक्ताश्च वस्वेत्यृषिसत्तम ! । सर्वकल्मषनाशाय परिपावनमृताय च । स्वादिष्ठयेति सूक्तानां सप्तषष्टिरुदाहृता । दशोत्तराण्युपात्तानि पावमानीः शतानि षट् । एतज्जपंश्च जुह्वंश्च घोरं मृत्युभयं जयेत् । आपोहिष्ठेति वारिस्थो जपेत् पापभयार्दने । प्रदेवत्रेति नियते जपेन्मरुधन्वसु । प्राणान्तिके भये प्राप्ते क्षिप्रं प्राणांस्तु विन्दति । प्रयाताहुदिते स्वर्धे चेति जयमाप्नुयात् । आयुषर्मेति मूढश्च पन्थानं पथि विन्दति । जोषे युवति मन्त्रेण यं कञ्चिद्धृदयप्रियम् । यस्ते यमेति सुस्नातस्तस्य मूर्द्धानमालभेत् । महत्सहस्रः पश्चाहं तेनायुर्विन्दते महत् । इदं मेध्येति जुहुयाद्घृतं प्राज्ञः सहस्रशः । पशुकामो गवाङ्गोष्ठे अर्थकामश्चतुष्पथे । वयः सुपर्णा इत्येतां जपन्वा विन्दते प्रियम् । हविष्मन्तीं समभ्यस्य सर्वपापैः प्रमुच्यते । तस्य रोगा विनश्यन्ति कायाग्निर्वर्द्धते सदा । त्यन्नामयः स्वस्त्ययनं सर्वव्याधिविनाशनम् । उरुष्यते अतीत्येतद्दृष्टिकामः प्रयोजयेत् । सर्वं त्वेति परा शान्तिर्जयाप्रतिरथस्तथा । भूतांश्च कश्यपश्चित्यं प्रजाकामस्य कीर्त्तितम् । अहं रुद्रेभिरित्येतद्वाग्मी भवति मानवः । न योनौ जायते विद्वान् जपंस्त्रिषु रात्रिषु । रात्रिसूक्तं जपन् रात्रौ रात्रिं क्षेमां नयेन्नरः । आक्रमयन्तीति जपेन्नित्यं कृत्याविनाशनम् । आयुष्यञ्चैव वर्चस्य सूक्तं दाक्षायणं महत् । उत देवा इति जपेदामयान्तं धृतव्रतः । अपमार्गेऽनु जनिते जपेदग्निभये सति । अरण्यानीत्यरण्येषु जपेत्तद्भयनाशनम् । ब्राह्मीमासाद्य सूक्ते द्वे वरां ब्राह्मीं शतावरीम् । पृथगञ्जिच तेनाथ मेधां लक्ष्मीञ्च विन्दति । नाव इत्यसपत्नघ्नं संग्रामं विजिगीषतः । ब्रह्मणोऽग्निं संविदानं गर्भमृत्युनिवारणम् । अपैहीति जपेत् सूक्तं शुचिर्दुःस्वप्ननाशनम् । येनेदमिति वै जप्त्वा समाधिं विन्दते परम् । मयोभूर्वात इत्येता जपेत् स्वस्त्ययनं परम् । शासदीमिन्द्रजननम् बाधामेतेन वारयेत् । महित्रीणामवोऽस्त्विति इति स्वस्त्ययनं जपेत् । अग्नये द्विषद्वेषं जपेद्रिपुनाशनम् । वास्तोष्पतेति मन्त्रेण जपेद्गृहदेवताः । जपस्यैष विधिः प्रोक्तो हुते चैव विशेषतः । होमान्ते दक्षिणा देया पापशान्तिकृतेन तु । हुतं शमयति पापेन चक्रवोरप्रदानतः । विप्राशिषस्त्वमोघाः स्युर्व्विप्रैः स्नातं च सर्व्वतः । सिद्धार्थका यथा धान्यं प्रयोगव्यवहृतं तथा । क्षीरवृक्षसमेधन्तु होमा वै सर्व्वकामदाः । समित् कण्टकिनश्चैव राजिका रुधिरं विषम् । अभिचारे तथा तैलमशनं शक्तवः पयः । दधि भैक्ष्यं फलं मूलमृग्विधानमुदाहृतम्”।

ऋग्वेद पुं॰ ऋच्यते स्तूयते ऋक् कर्म्म॰। वेदभेदे । स च मन्त्रब्राह्मणोभयात्मकः । तत्र मन्त्रसमूहात्मकः ऋक्सूक्तमण्डलानुवाकवर्गात्मकः संहितारूपो ग्रन्थः । तत्र दश मण्डलानि तत्राद्ये मण्डले २४ अनुवाकाः “अग्निमीळे” इत्यादीनि आग्नेयानि १९१ सूक्तानि तानि शतर्चिभिर्दृष्टानि अध्यायोपाकरणोत्सर्गयोर्विनियुक्तानि ।

द्वितीये शौनकगृत्समदर्षिदृष्टे चत्वारि अनुवाकाः । त्वमग्न इत्यादीनि ४३ सूक्तानि आग्नेयानि उपाकरणोत्सर्गयोर्विनियुक्तानि । शौनकगृत्समदः ऋषिरेतन्मण्डलद्रष्टा स च पूर्व्वमाङ्गिरसकुले शुनहोत्रस्य पुत्रः सन् यज्ञकालेऽसुरैर्गृहीत इन्द्रेण मोचितः । पश्चात्तद्वचनेनैव भृगुकुले शुनकपुत्रो गृत्समदनामाऽभूत् । “य आङ्गिरसः शौनहोत्रो भूत्वा भार्गवः शौनकोऽभवत् स गृत्समदो द्वितीयमण्डलमपश्यत्” सर्व्वानु॰ उक्तेः । “त्वमग्न इति गृत्समदः शौनको भृगुतां गतः । शौनहोत्रः प्रकृत्या तु य

शिशिरावृतू” इत्येषु च वाक्येषु ऋतू इति द्विवचनं मासाभिप्रायम् अन्यथा षडृतव इति श्रूयमाणा षट्संख्या बाध्येत । वस्तुतस्तु शिशिरहेमन्तयोर्वसन्तादेरेकात्मत्वं सौत्रामणीयहौत्रमन्त्रेषु एकवचनेन व्यवहारादवगन्तव्यं “वसन्तेन ऋतुना देवाः, ग्रीष्मेण ऋतुना देवा” इत्यादि हि तत्र पठ्यते तथैवाधानब्राह्मणे श्रूयते “वसन्तो वै ब्राह्मणस्यर्त्तुः, ग्रीष्मो वै राजन्यस्यर्त्तुः, शरद्वैश्यस्यर्त्तुरिति” यद्यप्येते षडृतवो चक्रवत् परिवर्त्तन्ते तथापि संवत्सरोपक्रमरूपत्वेन वसन्तस्य प्राथम्यं द्रष्टव्यम् एतदेवाभिप्रेत्य श्रूयते “मुखं वा एतदृतूनां वसन्त” इति पूर्वोदाहृतेषु मन्त्रब्राह्मणेषु सर्वत्र वसन्तोपक्रमणाच्च वसन्तस्य प्राथम्यं ते च वसन्ताद्यृतवो द्विविधाः चान्द्राः सौराश्च । चैत्रादयश्चान्द्राः तत्रोदाहृतं “मधुश्च माधवश्चेत्यादिना” न च तत्र चैत्रादयो नोक्ता इति शङ्कनीयं मध्वादिशब्दानां चैत्रादिपर्यायत्वात् । अत एवाहुः “चैत्रोमासो मधुःप्रोक्तो वैशाखो माधवो भवेत् । ज्यैष्ठमासस्तु शुक्रः स्यादाषाढः शुचिरुच्यते । नभोमासः श्रावणः स्यान्नभस्यो भाद्र उच्यते । इषश्चाश्वयुजोमासः कार्त्तिकश्चोर्ज संज्ञकः । सहोमासो मार्गशिरः सहस्यः पुष्यनामकः । माघमासस्तपाः प्रोक्तस्तपस्यः फाल्गुनः स्मृतः” इति । एतेषां चैत्राद्यात्मकानां वसन्तादीनां चन्द्रगतिपरिकल्पितत्वाच्चान्द्रत्वम् । अतएव होतृमन्त्रेषु आम्नायते “चन्द्रमाः षड्ढोता स ऋतून् कल्पयति तथा” ऋक्षविशेषे सूर्याचन्द्रमसौ प्रकृत्य आम्नायते “पूर्वापरं चरतो मायैतौ शिशू क्रीडन्तौ परियातो अध्वरम् । विश्वान्यन्योभुवनाभिचष्ट ऋतूनन्योविदधज्जायते पुनरिति” अत्र पुनर्जायत इति लिङ्गादृतुविधाता चन्द्र इति अवगम्यते । नन्वस्त्वेवं मध्वादीनां चान्द्रमासानां वसन्ताद्यृतुत्वं संसर्पाख्यस्य त्रयोदशस्य चान्द्रमासस्य कथमृतुषु निर्वाहः । तन्मासषड्भावचतुष्पञ्चब्राह्मणे मन्त्रानुवादपुरःसरमाम्नायते “उपयामगृहीतोऽसि संसर्पोऽसि अंहस्पत्याय त्वेत्याहास्ति त्रयोदशोमास इत्याहुस्तमेव तत् प्रीणातीति” तथा प्रवर्ग्यब्राह्मणेऽपि “अस्ति त्रयोदशोमास इत्याहुः यत्त्रयोदश परिधिर्भवति तेनैव त्रयोदशं मासमवरुन्धे” इति । तदुत्पत्तिप्रकारोऽस्माभिर्मलमासनिर्णये वक्ष्यते । विद्यतामेवं त्रयोदशोमासस्तस्य का उपपत्तिर्वसन्तादिषु ऋतुषु इति चेत् उच्यते किमयं सप्तम ऋतुः? आहोस्विदुक्तेष्वेव षट्सु अन्तर्भावः? उतर्त्तुद्वयान्तरालवर्त्ती कश्चिदृतुरूपः ? न तावत् प्रथमः “ऋतुर्भ्यऋतू-

नानुद्यमान” इति ऋतूनां नैरन्तर्य्यश्रवणात् । नाद्यश्चिमः । “षड्वा ऋतवः” इति षट्संख्यानियमात् । वसन्तादिमन्त्रब्राह्मणयोर्नामान्तराश्रवणाच्च नापि मध्यमः मध्वादिषु अपाठात् । उच्यते ययोर्मासयोर्मध्ये मलमासो दृश्यते तयोरन्यतरस्मिन् तस्यान्तर्भावः । तथा चायौ षष्टिदिवसात्मकोमलिम्लुचभागद्वयात्मक इति मध्वादिशब्दवाच्यत्वेनोक्तेष्वन्तर्भावाच्च काप्यनुपपत्तिः । सौरेषु ऋतुषु बौधायनेन मीनमेषयोर्मेषवृषयोर्वा वसन्त इत्यभिधानात् मीनादित्वं मेषादित्वं च वैकल्पिकं वसन्तस्याङ्गीकृतम् । तथा च तदनुसारेण उत्तरे ग्रीष्मादयोऽपि यथायथं विकल्प्यन्ते । विनियोगश्चैषां ऋतुविशेषाणां श्रुतिस्मृति पुराणेष्ववगम्यते । तत्र श्रुतिः । “वसन्ते ब्राह्मणोऽग्निमादधीत, ग्रीष्मे राजन्य आदधीत, शरदि वैश्य आदधीतेत्यादि” स्मृतिरपि “वसन्ते ब्राह्मणं उपनयीत, ग्रीष्मे राजन्यं शरदि वैश्यमिति” विष्णुधर्मोत्तरेऽपि परामृश्यते वसन्ताद्यृतुषु पृथक्पूजा विशेषतः कथिताः। तथा तत्रैव वसन्ते स्नानानुलेपादिदानम् ग्रीष्मे व्यजनादिदानमुक्तं देवीपुराणे । वर्षासु तिलदानं तथा शरद्यन्नदानं हेमन्ते वस्त्राग्निदानं शिशिरे वस्त्रदानमित्येतानि विष्णुधर्मोत्तर एवोक्तानि एवमन्यदप्यूह्यताद्यर्थम्” ।

“वसन्तेन ऋतुना देवा वसवस्त्रिवृता स्तुताः” “ग्रीष्मेण ऋतुना देवा रुद्राः पञ्चदशे स्तुताः” “वर्षाभिरृतुनादित्या स्तोमे सप्तदशे स्तुताः” “शारदेन ऋतुना देवा एकविंश ऋभवस्तुताः” “हेमन्तेन ऋतुना देवास्त्रिणवे मरुतस्तुताः” “शैशिरेण ऋतुना देवास्त्रयस्त्रिंशेऽमृतास्तुताः प्रायस्सात्” यजु० २१,२३,२४,२५,२६,२७,२८ । सूर्य्यसिद्धान्ते तु सौरत्वमङ्गीकृतम् । यथा “द्विराशिनाथा ऋतवस्ततोऽपि शिशिरादयः । मेषादयो द्वादशैते मासास्तैरेव वत्सरः” । ऋतुमध्ये च वत्सरारम्भकत्वं वसन्तस्यैव तत्र काल०मा०उक्तम् अतएव गीतायाम् “ऋतूनां कुसुमाकरः” इत्यनेन वसन्तस्य ऋतुषु प्रथमत्वेन भगवद्विभूतित्वमुक्तम्” म०त०ब्रह्मपु०। “चैत्रे मासि जगद् ब्रह्मा ससर्ज्ज प्रथमेऽहनि । शुक्लपक्षे समग्रन्तु तदा सूर्य्योदये सति । प्रवर्त्तयामास तदा कालस्य गणनामपि । ग्रहान्नागानृतून् मासान् वत्सरान् वत्सराधिपान्” । मासस्तु वत्सरादेः व्यक्तं चान्द्रत्वमुक्तम् ब्रह्मसिद्धान्तेऽपि “चैत्रसितादेरुदयाद्भानोर्दिनमासयुगकल्पाः । सृष्ट्यादौ लङ्कायाम् प्रवृत्ता दिनैर्वतः” । चैत्रसितादेः शुक्लप्रतिपदमा-

रत्येयर्थः दिनैस्त्रिभिः" म०त०। ५ मासद्वयमात्रे "मुख्यं श्राद्धं मासि मासि अपर्य्याप्तावृतुं प्रति" स्मृतिः। सुश्रुते ऋतुनिरूपणं तद्गुणलिङ्गादि च दर्शितं यथा "अथात ऋतुचर्य्याध्यायं व्याख्यास्यामः कालो हि नाम भगवान् स्वयम्भूरनादिमध्यनिधनोऽत्र रसव्यापत्सम्पत्ती जीवितमरणे च मनुष्याणामायत्ते स सूक्ष्मामपि कलां न लीयत इति कालः सङ्कलयति कालयति वा भूतानीति कालः। तस्य संवत्सरात्मनो भगवानादित्यो गतिविशेषेणाक्षिनिमेषकाष्ठाकलामुहूर्त्ताहोरात्रपक्षमासर्त्त्वयनसंवत्सरयुगप्रविभागं करोति। तत्र लघ्वक्षरोच्चारणमात्रोऽक्षिनिमेषः। पञ्चदशाक्षिनिमेषाः काष्ठा। त्रिंशत्काष्ठाः कला विंशतिकलो मुहूर्त्तः कलादशभागश्च। त्रिंशन्मुहूर्त्तमहोरात्रम्। पञ्चदशाहोरात्राणि पक्षः। स च द्विविधः शुक्लः कृष्णश्च तौ मासः। तत्र माघादयो द्वादश मासा द्विमासिकमृतुं कृत्वा षडृतवो भवन्ति। ते शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्ताः। तेषां तपस्तपस्यौ शिशिरः। मधुमाधवौ वसन्तः। शुचिशुक्रौ ग्रीष्मः। नभोनभस्यौ वर्षाः। इषोर्जौ शरत्। सहःसहस्यौ हेमन्त इति। त एते शीतोष्णवर्षलक्षणाश्चन्द्रादित्ययोः कालविभागकरत्वादयने द्वे भवतो दक्षिणमुत्तरञ्च। तयोर्दक्षिणं वर्षाशरद्धेमन्तास्तेषु भगवानाप्यायते सोमोऽम्ललवणमधुराश्च रसा बलवन्तो भवन्त्युत्तरोत्तरञ्च सर्वप्राणिनां बलमभिवर्द्धते। उत्तरञ्च शिशिरवसन्तग्रीष्मास्तेषु भगवानाप्यायतेऽर्कस्तिक्तकषायकटुकाश्च रसा बलवन्तोभवन्त्युत्तरोत्तरञ्च सर्वप्राणिनां बलमपहीयते। भवति चात्र। शीतांशुः क्लेदयत्युर्वीं विवस्वान् शोषयत्यपि। तावुभावपि संश्रित्य वायुः पालयति प्रजाः। अथ खल्वयने द्वे युगपत् संवत्सरो भवति। ते तु पञ्च युगमिति संज्ञां लभन्ते। स एष निमेषादिर्युगपर्य्यन्तः कालश्चक्रवत्परिवर्त्तमानः कालचक्रमुच्यत इत्येके। इह तु वर्षाशरद्धेमन्तवसन्तग्रीष्मप्रावृषः षडृतवो भवन्ति दोषोपचयप्रकोपोपशमनिमित्तम्। ते तु भाद्रपदाद्येन द्विमासिकेन व्याख्याताः। तद्यथा भाद्रपदाश्वयुजौ वर्षाः। कार्त्तिकमार्गशीर्षौ शरत्। पौषमाघौ हेमन्तः। फाल्गुनचैत्रौ वसन्तः। वैशाखज्यैष्ठौ ग्रीष्मः। आषाढश्रावणौ प्रावृडिति। तत्र वर्षास्वोषधयस्तरुण्योऽल्पवीर्य्या आपश्चाप्रसन्नाः क्षितिमलप्रायास्ता उपयुज्यमाना नभसि मेघावतते जलप्रक्लिन्नायां भूमौ क्लिन्नदेहानां प्राणिनां शीतवातविष्टब्धाग्नीनां विदह्यन्ते विदाहात् पित्तसञ्चयमापादयन्ति स सञ्चयः शरदि प्रविरलमेघे वियत्युपशुष्यति पङ्केऽर्ककिरणप्रविलायितः पैत्तिकान् व्याधीन् जनयति। ता एवौषधयः कालपरिणामात्परिणतवीर्य्या बलवत्यो हेमन्ते भवन्त्यापश्च प्रसन्नाः स्निग्धा अत्यर्थं गुर्व्यश्च ता उपयुज्यमाना मन्दकिरणत्वाद्भानोः सतुषारपवनोपस्तम्भितदेहानां देहिनामविदग्धाः स्नेहाच्छैत्याद्गौरवादुपलेपाच्च श्लेष्मणः सञ्चयमापादयन्ति स सञ्चयो वसन्तेऽर्करश्मिप्रविलायित ईषत्स्तब्धदेहानां देहिनां श्लैष्मिकान् व्याधीन् जनयति। ता एवौषधयो निदाघे निःसारा रूक्षा अतिमात्रं लघ्व्यो भवन्त्यापश्च ता उपयुज्यमानाः सूर्य्यप्रतापोपशोषितदेहानां देहिनां रौक्ष्याल्लघुत्वाद्वैशद्याच्च वायोः सञ्चयमापादयन्ति स सञ्चयः प्रावृषि चात्यर्थं जलोपक्लिन्नायां भूमौ क्लिन्नदेहानां प्राणिनां शीतवातवर्षेरितो वातिकान् व्याधीन् जनयति। एवमेष दोषाणां सञ्चयप्रकोपहेतुरुक्तः। तत्र वर्षाहेमन्तग्रीष्मेषु सञ्चितानां दोषाणां शरद्वसन्तप्रावृट्सु च प्रकुपितानां निर्हरणं कर्त्तव्यम्। तत्र पैत्तिकानां व्याधीनामुपशमो हेमन्ते, श्लैष्मिकाणां निदाघे, वातिकानां घनात्यये, स्वभावत एव त एते सञ्चयप्रकोपोपशमा व्याख्याताः। तत्र पूर्वाह्णे वसन्तस्य लिङ्गं मध्याह्ने ग्रीष्मस्य, अपराह्णे प्रावृषः, प्रदोषे वार्षिकम्, शारदमर्द्धरात्रे प्रत्यूषसि हैमन्तमुपलक्षयेत्। एवमहोरात्रमपि वर्षमिव शीतोष्णवर्षलक्षणं दोषोपचयप्रकोपोपशमैर्जानीयात्। तत्राव्यापन्नेष्वृतुष्वव्यापन्ना ओषधयो भवन्त्यापश्च ता उपयुज्यमानाः प्राणायुर्बलवीर्य्यौजस्कर्य्यो भवन्ति। तेषां व्यापदोऽदृष्टकारिताः। शीतोष्णवातवर्षाणि खलु विपरीतान्योषधीर्व्यापादयन्त्यपश्च, तासामुपयोगाद्विविधरोगप्रादुर्भावो मरको वा भवेदिति। तत्राव्यापन्नानामोषधीनामपाञ्चोपयोगः कदाचिदव्यापन्नेष्वप्यृतुषु कृत्याभिशापरक्षःक्रोधाधर्मैरुपध्वस्यन्ते जनपदाः। विषौषधीपुष्पगन्धेन वायुनोपनीतेनाक्रम्यते यो देशस्तत्र दोषप्रकृत्यविशेषेण कासश्वासवमथुप्रतिश्यायशिरोरुग्ज्वरैरुपतप्यन्ते ग्रहनक्षत्रचरितैर्वा गृहदारशयनासनयानवाहनमणिरत्नोपकरणगर्हितलक्षणनिमित्तप्रादुर्भावैर्वा। तत्र स्थानपरित्यागशान्तिकर्मप्रायश्चित्तमङ्गलजपहोमोपहारेज्याञ्जलिनमस्कारतपोनियमदयादानदीक्षाभ्युपगमदेवताब्राह्मणगुरुपरैर्भवितव्यमेवं साधु भवति। ऋतूनामत ऊर्द्धमव्यापन्नानां लक्षणान्युपदेक्ष्यामः। वायुर्वात्युत्तरः शीतो रजोधूमाकुला दिशः। छन्नस्तु

पारः सविता हिमानद्धा जलाशयाः । दर्पिता ध्वाङ्क्षखड्गाह्वमहिषोरभ्रकुञ्जराः । रोध्रप्रियङ्गुपुन्नागाः पुष्पिता हिमसाह्वये । शिशिरे शीतमधिकं वातवृष्ट्याकुला दिशः । शेषं हैमन्तवत् सर्वं विज्ञेयं लक्षणं बुधैः । दिशो वसन्ते विमलाः काननैरुपशोभिताः । किंशुकाम्भोजवकुलचूताशोकादिपुष्पितैः । कोकिलाः षट्पदगणैरुपगीता मनोहराः । दक्षिणानिलसंवीताः सुमुखाः पल्लवोज्ज्वलाः । ग्रीष्मे तीक्ष्णांशुरादित्यो मारुतो नैर्ऋतोऽसुखः । भूस्तप्ता सरितस्तन्व्यो दिशः प्रज्वलिता इव । भ्रान्तचक्राह्वयुगलाः पयःपानाकुला मृगाः । ध्वस्तवीरुत्तृणलताविपर्णीकृतपादपाः । प्रावृष्यम्बरमानद्धं पश्चिमानिलकर्षितैः । अम्बुदैर्विद्युदुद्योतप्रस्रुतैस्तुमुलस्वनैः । कोमलश्यामशस्पाढ्या शक्रगोपोज्ज्वला मही । कदम्बनीपकुटजसर्जकेतकिभूषिता । तत्र वर्षासु नद्यम्भःपूरोद्भग्नतटद्रुमाः । वाप्यः प्रोत्फुल्लकुमुदनीलोत्पलविराजिताः । भूरव्यक्तस्थलश्वभ्रा बहुशस्योपशोभिता । नातिगर्जत्स्रवन्मेघनिरुद्धार्कग्रहं नभः । बभ्रुवर्णः शरद्यर्कः श्वेताभ्रविमलं नभः । तथा सरांस्यम्बुरुहैर्भान्ति हंसांसघट्टितैः । पङ्कशुष्कद्रुमाकीर्णा निम्नोन्नतसमेषु भूः । बाणसप्ताह्वबन्धूककाशासनविराजिता । ऋतुष्वेतेषु युक्तेषु विपरीतेषु वा पुनः । विषमेष्वपि वा दोषाः कुप्यन्त्यृतुषु देहिनाम् । हरेद्वसन्ते श्लेष्माणं पित्तं शरदि निर्हरेत् । वर्षासु शमयेद्वायुं प्राग्विकारसमुच्छ्रयात्" ऋतुचर्याध्यायः। भा०त० ऋतुचर्यादि यथा "मासैर्द्विसंख्यैर्माघाद्यैः क्रमात् षडृतवः" स्मृताः । हेमन्ते कुपिताद्वायोः स्वाद्वम्ललवणान् रसान् । गोधूमपिष्टमाषेक्षुक्षीरोत्थविकृतिर्भजेत् । नवमन्नं रसान् तैलं शौचे तप्तोदकं नरः । मार्त्तण्डकिरणान् स्वेदं पादत्राणञ्च सर्वदा । उष्णस्वभावैर्लघुभिः प्रावृतः शयनं भजेत् । अयमेव विधिः कार्यः शिशिरेऽपि विशेषतः । वसन्ते कुपितः श्लेष्मा ह्यग्निमान्द्यं करोत्यतः । तीक्ष्णं वमननस्यादि कवलग्रहमञ्जनम् । व्यायामोद्वर्त्तनं धूमं शौचे तप्तोदकं भजेत् । पुराणयवगोधूमक्षौद्रजाङ्गलमांसभुक् । गुरूष्णस्निग्धमधुरं दिवा स्वप्नञ्च वर्जयेत् । स्वादु शीतं द्रवं स्निग्धमनुपानं सशर्करम् । घृतं पयः सशाल्यन्नं भजन् ग्रीष्मे न सीदति । मध्याह्ने शीतले हर्म्यात् निशि वातहिमांशिते । लवणाम्लकटूष्णानि व्यायामञ्चात्र वर्जयेत् । वर्षास्वग्निबले क्षीणे कुप्यन्ति पवनादयः । अतः संवर्द्धकं द्रव्यं जीर्णधान्यं रसान् पटु । जाङ्गलं पिशितं शृतान् दिव्यं कौपं जलं शुचि । शस्ताम्ललवणं स्निग्धं संयुक्तं क्षौद्रमेव च । नदीजलोदमन्थाहःस्वप्नायासातपांस्त्यजेत् । शरदि कुपिते पित्ते विरेकं रक्तमोक्षणम् । स्वादुतिक्तकषायेक्षुशालिमुद्गसरोजलम् । तुषारक्षारसौहित्यदधितैलवसातपान् । स्नानतीक्ष्णदिवास्वप्नप्राग्वातान् विवर्जयेत् । नित्यं सर्वरसाभ्यासः स्वस्वाधिक्यमृतावृतौ । ऋतूनां शेषसप्ताहे सेवितव्यः परः क्रमः । तत्र नित्यं प्रयुञ्जीत स्वास्थ्यं येन प्रवर्त्तते । अजातानां विकाराणामनुत्पत्तिकरञ्च यत् । व्यायामादपतर्पणादभिघाताद्भयात् क्षयाज्जागरात् वेगानाञ्च विधारणादतिशुचः शैत्यादतित्रासतः । रूक्षक्षोभकषायतिक्तकटुकैरेभिः प्रकोपं व्रजेद्वायुर्वारिधरागमे परिणते चान्नेऽपराह्णेऽपि च । कट्वम्लोष्णविदाहितीक्ष्णलवणक्रोधोपवासातपस्त्रीसम्पर्कतिलातसीदधिसुराशुक्तारनालादिभिः । भुक्ते जीर्यति भोजने च शरदि ग्रीष्मे सति प्राणिनां मध्याह्ने च तथार्द्धरात्रसमये पित्तप्रकोपं व्रजेत् । गुरुमधुररसातिस्निग्धदुग्धेक्षुभक्ष्यद्रवदधिदिननिद्रापूपसर्पिःप्रपूरैः । तुहिनपतनकाले श्लेष्मणः संप्रकोपः प्रभवति दिवसादौ भुक्तमात्रे वसन्ते" । ६कालमात्रे ऋतुधामशब्दे उदा०। ७तदभिमानिदेवे पु०। ऋतव्यशब्दे उदा०। ८विष्णौ पु०। "ऋतुः सुदर्शनः कालः" विष्णुस०। "कालात्मना ऋतुशब्देन लक्ष्यते इति ऋतुः" भा० । "प्रधानपुरुषयोरंशं यत्कालाख्यं रूपं तदृतुशब्देन लक्ष्यते" आनन्दगि० । ऋतुरस्य प्राप्तः अण् । आर्त्तव प्राप्तर्त्तौ त्रि० स्त्रियां ङीप् । छन्दसि घस् सित्त्वान्न गुणः । ऋत्विय तदर्थे त्रि०। ऋतुर्देवताऽस्य यत् । ऋतव्य ऋतुदेवताके इष्टकादौ।

**ऋतुकाल** पु० वसन्तवत् कर्म० राजशिरोवत् ६त० वा । स्त्रीणां पुष्पदर्शनयोग्ये षोडशरात्रात्मके काले । "ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः" मनुः । "ऋतुकालाभिगामी स्यात्" मनुः । पर्वादिवर्ज्जं ऋतुकाले च स्त्रीगमनं नियम्यते । तत्र नियमस्वरूपनिर्वाहकप्रकारादिप्रदर्शनेन ऋत्वभिगमस्य यथा नियमविधित्वं तथा प्रा०त० न्यायवाक्येनोक्तम् यथा "स्वरुच्या क्रियमाणे तु यत्रावश्यं क्रिया क्वचित् । नोद्यते नियमस्तत्र ऋतावभिगमो यथा" मीमांसकवाक्यम् । ऋत्वभिगमनस्य परिसंख्यापरत्वनिराकरणेन नियमपरत्वं समर्थितं मिता० यथा ।

"तस्मिन् युग्मासु संविशेदिति"। "किमयं विधिर्नियमः परिसंख्या वा। "विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति। तत्र चान्यत्र च प्राप्तौ परिसंख्या निगद्यते"। उच्यते। न तावद्विधिः, प्राप्तार्थत्वात्। नापि परिसंख्या, दोषत्रयसमासक्तेः। अतो नियममभ्युपेयिरे न्यायविदः। कः पुनरेषां भेदः। उच्यते। अत्यन्ताप्राप्तप्रापणं विधिः। यथा अग्निहोत्रं जुहुयात् "अष्टकाः कर्त्तव्याः" इति। पक्षे प्राप्तस्याप्राप्तपक्षान्तरप्रापणं नियमः। यथा "समे यजेतेति" "दर्शपूर्णमासाभ्यां यजेतेति" यागः कर्त्तव्यतया विहितः स च देशमन्तरेण कर्त्तुमशक्य इत्यर्थात् देशः प्राप्तः। स च समो विषमश्चेति द्विविधः। यदा यजमानः समे वियतते तदा "समे यजेतेति" वचनमुदास्ते स्वार्थस्य प्राप्तार्थत्वात्। यदा तु विषमे देशे वियतते तदा "समे यजेतेति" स्वार्थं विधत्ते स्वार्थस्य तदानीमप्राप्तत्वात्। विषमदेशनिवृत्तिस्त्वार्थिकी नोदितदेशेनैव यागनिष्पत्तेः। अनोदितदेशोपादानेन यथाशास्त्रं यागोऽनानुष्ठितः स्यादिति। तथा "प्राङ्मुखोऽन्नानि भुञ्जीतेति"। इदमपि स्मार्त्तमुदाहरणं पूर्वेण व्याख्यातम्। एकस्यानेकत्र प्राप्तस्यान्यतो निवृत्त्यर्थमेकत्र पुनर्वचनं परिसंख्या। तद्यथा। "इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते" इत्ययं मन्त्रः सामर्थ्यादश्वाभिधान्या गर्दभाभिधान्याश्च रशनाया ग्रहणे विनियुक्तः। पुनरश्वाभिधानीमादत्त इति वचनेनाश्वाभिधान्यां विनियुज्यमानो गर्दभाभिधान्या विनिवर्त्तते। तथा "पञ्च पञ्चनखा भक्ष्याः" इत्यत्र यदृच्छया शशादिषु श्वादिषु च भक्षणं प्राप्तम्। पुनः शशादिषु श्रूयमाणं श्वादिभ्यो निवर्त्तत इति। किं पुनरत्र युक्तं परिसंख्येत्याह। तथाहि कृतदारसंग्रहस्य स्वेच्छयैव ऋतौ गमनं प्राप्तमिति न विधेरयं विषयः। नापि नियमस्य, स्मृत्यन्तरविरोधात्। एवं हि स्मरन्ति स्मृतिकाराः "दारसंग्रहानन्तरं त्रिरात्रं द्वादशरात्रं संवत्सरं वा ब्रह्मचारी स्यादिति"। तत्र द्वादशरात्रात् संवत्सराद् वा पूर्वमेवर्त्तुसम्भवे ऋतौ गच्छेदेवेति नियमात् ब्रह्मचर्य्यस्मरणं बाध्येत। अपि च प्राप्ते भावार्थे वचनं विशेषणपरं युक्तम्। प्राप्तश्चर्त्तौ भार्य्यागमनमिच्छयैव ततो यदि गच्छेदृतावेवेति वचनव्यक्तिर्युक्ता। किन्तु नैयमिकात् पुत्रोत्पत्तिविधेरेवर्त्तौ नित्यं गमनं प्राप्तमेवेति ऋतौ गच्छेदेवेति नियमोऽनर्थकः स्यात्। नियमे चादृष्टं कल्पनीयम्। किञ्च ऋतौ गन्तव्यमेवेति नियमेऽसन्निहितस्य व्याध्यादिनाऽसमर्थस्यानिच्छोर्वाबलयोरर्थे उपदिष्टः स्यात्। विध्यनुवादविरोधश्च नियमे। तथा हि एकः शब्दः सकृदुच्चरितस्तमेवार्थं पक्षेऽनुवदति पक्षे विधत्ते चेति। तस्मादृतावेव गच्छेन्नान्यत्र इति परिसंख्यैव युक्ता। तदिदमाचार्यविश्वरूपादयो नानुमन्यन्ते। यतो नियम एव युक्तः पक्षे स्वार्थविधिसम्भवात्। अगमने दोषश्रवणाच्च यथाह पराशरः "ऋतुस्नातान्तु यो भार्य्यां सन्निधौ नोपगच्छति। घोरायां भ्रूणहत्यायां युज्यते नात्र संशय इति" न च विध्यनुवादविरोधोऽनुवादाभावात् विध्यर्थत्वाद्वचनस्य। तत्र हि विध्यनुवादविरोधो यत्र विधेयावधिततया तदेवानुवदितव्यमप्राप्ततयाऽन्योद्देशेन विधातव्यञ्चेति। यथा वाजपेयाधिकरणे पूर्वपक्षे "वाजपेयेन स्वाराज्यकामो यजेतेति" वाजपेयलक्षणगुणविधानावधित्वेन यागोऽनुवदितव्यः स एव स्वाराज्यलक्षणफलोद्देशेन विधातव्यश्चेति। न चानुवादेनेह कृत्यमस्ति। यत्तु नियमेऽदृष्टं कल्पनीयमित्युक्तं तत्परिसंख्यायामपि समानम्। अनृतौ गच्छतो दोषकल्पनात्। यत्तु नैयमिकपुत्रोत्पादनविध्याक्षेपेणैव ऋतौ नित्यगमनप्राप्तेर्न नियम इति। तदसत् स एवायं नैयमिकः पुत्रोत्पादनविधिः। आम्नातम् "एवं गच्छन् स्त्रियं क्षामां लक्षण्यं पुत्रं जनयेदिति" स्त्र्यभिगमनादिकः पुत्रोत्पादनविधिरिति। तत्र गमनकरणिकाया भावनाया एव पुत्रोत्पत्तिकर्मता गम्यते। "एवं गच्छन् लक्षण्यं पुत्रं जनयेदित्यनेन" यथाग्निहोत्रं जुहुयात् स्वर्गं भावयेदिति। न चासन्निहितादेरशक्यार्थे विधिप्रसङ्गः सन्निहितशक्तयोरेवोपदेशात् "ऋतुस्नातां तु यो भार्य्यां सन्निधौ नोपगच्छतीति" "यः स्वदारानृतुस्नातान् स्वस्थः सन्नोपगच्छतीति" विशेषोपादानात्। अनिच्छानिवृत्तिस्तु नियमविधानादेव। न च विशेषणपरता पक्षे भावार्थविधिसम्भवात्। नापि स्मृत्यन्तरविरोधः संवत्सरात् पूर्वमेवर्त्तुदर्शने संविशतो न ब्रह्मचर्य्यस्खलनदोषः। यथा श्राद्धादिषु, तस्मात् स्वार्थहानिपरार्थकल्पनप्राप्तबाधलक्षणदोषत्रयवती परिसंख्या न युक्ता। "पञ्च पञ्चनखा भक्ष्याः" इत्यत्र यद्यपि शशादिषु भक्षणस्य पक्षे प्राप्तौ नियमः, शशादिषु श्वादिषु च प्राप्तौ परिसंख्येति उभयसम्भवस्तथापि नियमपक्षे शशाद्यभक्षणे दोषप्रसङ्गः। श्वादिभक्षणे चादोषप्रसङ्गेन प्रायश्चित्तस्मृतिविरोध इति परिसंख्यैवाश्रिता। एतेन "साय"

मानः प्रेषितो होतरेतद्यजेति ब्रूयात्" १६सू० । "द्वादशे ऋतुग्रहे स्वपते ! यजेत्येवं प्रशास्ता प्रेषितो यजमानः होतरेतद्यजेति एवं ब्रूयात् ततश्च यजमानयाज्यां होता ब्रूयात्" कर्कः । "अध्वर्यू च" १७सू० "एकादशे ऋतुग्रहे प्रशास्ता अध्वर्यू यजतमित्येवं प्रेषितावध्वर्यू होतरेतद्यजेति एवं ब्रूयाताम् ततश्च तद्याज्यामपि होतैव ब्रूयात् । शाखान्तरे तु विकल्पेन होतुः प्रैषणं स्वयं वा याज्यापठनमित्येवमुक्तमस्ति । मानवे "एकादशे प्रैषेऽध्वर्यू यजतमित्युक्ते तयोरन्यतरो मध्यमस्य परिधेः पश्चादुपविश्य ये यजामहेऽश्विनावध्वर्यू आध्वर्यवादृतुना सोमं पिबतां वौषडिति प्रैषेण यजेदथ चेदृषा । ये यजामहेऽश्विना पिबतं मधु दीद्यग्नी शुचिव्रत ऋतुना यज्ञवाहसा वौषडित्यवदानं यजेति होतरेतद्यजेति वा न प्रेष्यत्तमे प्रैषे यजमानस्य याज्यानि प्रैषो नेति" काठके विशेषः "द्वारे हविर्धानस्योपविश्याध्वर्यू यजतमित्युक्तोऽश्विनावध्वर्यू यजतम् आध्वर्यवादृतुना सोमं पिबतमिति होतारं वा प्रेष्येद्धोतरेतद्यजेति यद्यध्वर्युर्यजेतोन्नेता यज्ञेन चरेदिति" कर्कः । "त्रयोदशं गृह्णीयादित्यनुपयामगृहीतोऽस्यंहसस्पतये त्वेति" १८सू० । शत०ब्रा० ४,३,१,१, द्वादशादिपञ्चपञ्चणे ऋतुर्दर्शितो यथा "सदोऽच्छावाको । ऋतुपात्रैश्चरति तद्यत् सदोऽच्छावाक ऋतुपात्रैश्चरति मिथुनं वा अच्छावाक ऐन्द्राग्नो ह्यच्छावाको द्वौ हीन्द्राग्नी द्वन्द्वं हि मिथुनं प्रजननं स एतस्मान्मिथुनात् प्रजननादृतून् संवत्सरं प्रजनयति यद्वेव सदोऽच्छावाक ऋतुपात्रैश्चरति सर्वं वा अन्ततः संवत्सरः सर्वमेवैतत् प्रजनयति तस्मात् सदोऽच्छावाक ऋतुपात्रैश्चरति तान्वै द्वादश गृह्णीयात् । द्वादश वै मासाः संवत्सरस्य तस्माद्द्वादश मासा इति द्वादश त्वेव गृह्णीयाद्रेणैव समस्त् । त्रयोदशत्वाद् गृह्णीयात् प्रजापतिर्वै त्रयोदशः स एतस्मात् प्रजापतेर्ऋतून् संवत्सरं प्रजनयति उभयतोमुखाभ्यां पात्राभ्यां गृह्णाति । कुतस्तयोरन्तो ये उभयतोमुखे तस्मादयमनन्तः संवत्सरः परिप्लवते तं गृहीत्वा न सादयति तस्मादयमसन्नः संवत्सरः नानुवाक्यमन्वाह । ह्वयति वाऽनुवाक्यया गतो ह्येवायमृतुर्यदि दिशा यदि नमं नानुवषट्करोति नेदृतूनपदहानि इति सहैव प्रथमौ ग्रहौ गृह्णीतः सहोत्तमाविदमेवैतत् सर्वं संवत्सरेण परिगृह्णीतस्तदिदं सर्वं संवत्सरेण परिगृहीतम् । नित्येवान्यतरः क्रामति प्रान्यतरः पद्यते तस्मा-

दिमेऽन्यत्रोमासा यन्त्यथ यदुभौ वा सह निष्क्रामेतामुभौ वा सह प्रपद्येयातां पृथगुहैवेमे मासा ईयुस्तस्मान्नित्येवान्यतरः क्रामति प्रान्यतरः पद्यते । तौ वा ऋतुनेति षट् प्रचरतः । तद्देवाऽहरसृजन्तर्तुभिरिति अहस्तद्वातिमसृजन्त स यद्वैतावद्देवाभविष्यन्नातिहैवाभविष्यन्न व्ययत्स्यत् तौ वा ऋतुनेत्युपरिष्टादुहि चरतः । तद्देवाः प्रस्तादहरहरसृजन्तादिदमप्याहुरथ योऽहर्भविता । ऋतुनेति वै देवाः मनुष्यानसृजन्तर्तुभिरिति पशूनसृजन्त तन्मध्ये येन पशूनसृजन्त तस्मादिमे पशव उभयतः परिगृहीता वशमुपेता मनुष्याणाम् । तौ वा ऋतुनेति षट् प्रचर्य इतरथा पात्रे विपर्यस्येते ऋतुभिरिति चतुश्चरित्वेतरथा पात्रे विपर्यस्येते अन्यतरत एव तद्देवा अहरसृजन्तान्यतरतो रात्रिमन्यतरतएव तद्देवा मनुष्यानसृजन्तान्यतरतः पशून् । अथातो गृह्णात्येव उपयामगृहीतोऽसि मधवे त्वेत्येवाध्वर्युर्गृह्णात्युपयामगृहीतोऽसि माधवाय त्वेति प्रतिप्रस्थातैतावेव वासन्तिकौ स यद्वसन्त ओषधयो जायन्ते वनस्पतयः पच्यन्ते तेनो हैतौ मधुश्च माधवश्च । उपयामगृहीतोऽसि शुक्राय त्वेत्येवाध्वर्युर्गृह्णात्युपयामगृहीतोऽसि शुचये त्वेति प्रतिप्रस्थातैतावेव ग्रैष्मौ स यदेतयोर्बलिष्ठं तपति तेन हैतौ शुक्रश्च शुचिश्च । उपयामगृहीतोऽसि नभसे त्वेत्येवाध्वर्युर्गृह्णात्युपयामगृहीतोऽसि नभस्याय त्वेति प्रतिप्रस्थातैतावेव वार्षिकावमुतो वै दिवो वर्षति तेनो हैतौ नभश्च नभस्यश्च । उपयामगृहीतोऽसि इषे त्वेत्येवाध्वर्युर्गृह्णात्युपयामगृहीतोऽस्यूर्जे त्वेति प्रतिप्रस्थातैतावेव शारदौ स यच्छरद्यूर्जं ओषधयः पच्यन्ते तेनो हैताविषश्चोर्जश्च । उपयामगृहीतोऽसि सहसे त्वेत्येवाध्वर्युर्गृह्णात्युपयामगृहीतोऽसि सहस्याय त्वेति प्रतिप्रस्थातैतावेव हैमन्तिकौ स यद्धेमन्त इमाः प्रजाः सहसेव स्वं वशमुपनयते तेनो हैतौ सहश्च सहस्यश्च । उपयामगृहीतोऽसि तपसे त्वेत्येवाध्वर्युर्गृह्णात्युपयामगृहीतोऽसि तपस्याय त्वेति प्रतिप्रस्थातैतावेव शैशिरौ स यदेतयोर्बलिष्ठं श्यायति तेनो हैतौ तपश्च तपस्यश्च । उपयामगृहीतोऽस्यंहसस्पतये त्वेति त्रयोदशं ग्रहं गृह्णाति यदि त्रयोदशं गृह्णीयाद्यदि प्रतिप्रस्थाताध्वर्योः पात्रे संस्रवमवनयत्यध्वर्युर्वा प्रतिप्रस्थातुः पात्रे संस्रवमवनयत्याहरति भक्षम् । अथ प्रतिप्रस्थाता भक्षितेन पात्रेण ऐन्द्राग्नं ग्रहं गृह्णाति तद्यद्भक्षितेन पात्रे-

ग्रीष्मः षष्ठी, ग्रीष्मः सप्तमी, वर्षा अष्टमी, हेमन्तो नवमी, यजमान एवात्र दशमी सएष यजमान एतस्यां विराज्यधिरूढः प्रतिष्ठितः ऋतव्यामध्यात्मीयं परावीरोपदधाति"

**ऋतुमुख** न० ६त०। गौणचान्द्रमासप्रथमदिने प्रतिपद्रूपे तिथिभेदे। "चातुर्मास्येषु चर्तुमुखश्रुतेः" कात्या० १,२,१२। "चातुर्मास्येषु च न याथाकाम्यम् कुतः ऋतुमुखश्रुतेः 'ऋतुमुखे ऋतुमुखे चातुर्मास्यैर्यजेतेति'' बौधायनवचनात् ऋतोर्मुखं प्रथमदिनं प्रतिपत् तत्रेत्यर्थः। अत एव वैश्वदेववरुणप्रघासादीनि चातुर्मास्यपर्वाणि प्रतिपद्येव क्रियन्ते न पौर्णमास्यामित्यवसीयते यतः प्रतिपदेव ऋतुमुखं न पौर्णमासीति तथा च श्रूयते" "एषा ह संवत्सरस्य प्रथमा रात्रिर्यत् फाल्गुनी पौर्णमासी योत्तरैषोत्तमा या पूर्वा मुखतएव तत् संवत्सरमारभते" शत०ब्रा० ६,२,१,१७, कर्कः। "द्वे ह वै पौर्णमास्यौ द्वे अमावस्ये" इति श्रुतेः योत्तरा पौर्णमासी कृष्णप्रतिपदित्यर्थः। तथा च पौर्णमास्यां दीक्षा प्रतिपदि पौर्णमास्येष्टिसमापनम् ऋतुसन्धिशब्दे विवृतिः। एतच्च पौर्णमासेष्टिविषयम् अमावास्येष्टौ दर्शएव दीक्षा शत० ब्रा० ६,२,२,१०,२६, "अमावास्यायां दीक्षते" इत्युपक्रम्य "या प्रथमामावास्या तस्यां दीक्षित एतद्वै संवत्सरस्य प्रथमाण्यहानि तान्यस्य तदारभते" २०इत्युक्तेः।

**ऋतुराज** पु० ऋतूनां राजा ६त० टच् समा०। वसन्ते ऋतौ

**ऋतुलिङ्ग** न० ६त०। वसन्तादिषु जायमाने चूतमञ्जर्यादिरूपे तच्चिह्ने "यथर्त्तु लिङ्गान्यृतवः स्वयमेवर्त्तुपर्यये" मनुः। तच्चिह्नानि च ऋतुशब्दे दर्शितसुश्रुतवाक्यादवगम्यानि।

**ऋतुवृत्ति** पु० ऋतूनां वृत्तिः पर्यायेणावर्त्तना यत्र। १वत्सरे त्रिका०। ६त०। २ऋतुधर्म्मे स्त्री।

**ऋतुशस्** अव्य०कारकार्थे ऋतु+शस्। ऋतौ ऋतौ इत्याद्यर्थे "यज्ञियस्य पोदेवयानम्" ऋ० १,१६२,४। "ऋतुशः ऋतावृतौ काले काले" भा० "ऋतिं होतार ऋतुशो यजन्ति" यजु० २१,५७। ऋतुशः काले काले" वेददी०।

**ऋतुष्ठा(स्था)** त्रि० ऋतौ तिष्ठति स्था—क्विप् वेदे षत्वं लोके तु न। वसन्तादिषु स्थायिनि। "ऋतवःस्थ ऋतावृधः ऋतुष्ठाः स्थ ऋतावृधः" यजु० १७,३,।

**ऋतुसंहार** पु० ऋतूनां संहारः समूहीकरणं यत्र। कालिदासप्रणीते काव्यभेदे।

**ऋतुसन्धि** पु० ऋत्वोः सन्धिः। दर्शान्तशुक्लचान्द्रमासपक्षे १दर्शे, पौर्णमासान्तगौणचान्द्रमासपक्षे २पौर्णमास्याम्। ऋतोर्मासद्वयघटितत्वात् मासस्य च पर्व्वसन्धियुक्तत्वेन पर्व्वसन्धिरेव ऋतुसन्धिः अतः प्रसङ्गात् पर्व्वसन्धिर्निरूप्यते स च कालमा० उक्तः यथा "कुहूव्यतिरिक्तानां लघ्वक्षरोच्चारणपरिमितः कालः सन्धिरित्युच्यते कुहूस्त्वक्षरद्वयपरिमितः कालः तदेतदुक्तं भागवतपुराणे "अनुमत्याश्च राकायाः सिनीवाल्याः कुहूं विना। एतासां द्विलवः कालः कुहूमात्रा कुहूः स्मृतेति" तत्र लवस्वरूपं प्रत्यन्तरे दर्शितम् "लघ्वक्षरचतुर्भागस्त्रुटिरित्यभिधीयते। त्रुटिद्वयं लवः प्रोक्तो निमेषस्तु लवद्वयमिति" एवं च सति त्रुटिशब्दाभिधेयानां भागानां चतुष्टयं लवद्वयरूपं लघ्वक्षरसमं भवति तस्मिन् लघ्वक्षरपरिमिते काले एकः पर्व्वणोभागः, द्वितीयः प्रतिपदः,तदुभयं मिलित्वा सन्धिर्भवति कुहूप्रतिपदोः सन्धिस्तु पूर्व्वस्मात् द्विगुणः अक्षरद्वयपरिमितत्वात् अतएव ब्रह्माण्डपुराणयोः "राका चानुमतिश्चैव सिनीवाली कुहूस्तथा। एतासां द्विलवः कालः कुहूमात्रा कुहूस्तथा। कुहूरिति कोकिलेनोक्ते यावान् कालः समाप्यते। तत्कालसंमिता ह्येषा अमावस्या कुहूः स्मृता। इत्येष पर्व्वसन्धीनां कालोयो द्विविधः स्मृत"इति।

एवं सन्धौ निरूपिते सति योऽयं प्रक्रान्तो विचारस्तत्र सन्धिरेवेष्टिकाल इति तावत् प्राप्तम् "सन्धौ यजेतेति"श्रुतेः नैवं सूक्ष्मत्वात्तत्र यागानुष्ठानानुपपत्तेः।का तर्हि श्रुतेर्गतिः पार्श्वद्वयलक्षणेति ब्रूमः यथा गङ्गायां घोष इत्यत्र गङ्गाशब्दः प्रवाहेऽनुपपन्नस्तत्समीपं तीरं लक्षयति तथा सन्धिशब्दोऽपि पार्श्वद्वयं लक्षयतु। अतएव श्रुत्यन्तरं "सन्धिमभितो यजेतेति" बौधायनोऽपि "सूक्ष्मत्वात् सन्धिकालस्य सन्धेर्विषय उच्यते। सामीप्यं विषयं प्राहुः पूर्व्वेणापरेण चेति" अत्र पूर्व्वापरशब्दाभ्यां सन्धेः प्राचीनं प्रतिपद्दिनं चाभिधीयते। तत्र पूर्व्वस्मिन् पर्व्वदिने प्रयोगप्रारम्भः नोत्तरस्मिन्, प्रतिपद्दिने यागसमाप्तिः अन्वाधानमिध्माबर्हिःसम्पादनमग्निपरिग्रहणरूपकरणं चेत्येवमादि प्रयोगप्रारम्भः स पूर्व्वेद्युरनुष्ठेयः तथा च तैत्तिरीयब्राह्मणे श्रूयते "पूर्व्वेद्युरिध्माबर्हिः करोति यज्ञमेवारभ्य गृहीत्वोपवसतीति" शतपथब्राह्मणेऽपि "पूर्व्वेद्युरग्निं गृह्णाति उत्तरमहर्यजतीति" तत्र प्रकृष्टं नामाध्वर्युणा आहवनीयगार्हपत्यदक्षिणाग्निषु "ममाग्ने वर्च्चः" इत्यादिभिर्मन्त्रैः समिदाधानलक्षणे अन्वाधाने क्रियमाणे पार्श्ववर्त्तिना यजमानेनाग्निं गृह्णामीत्यादीनां मन्त्राणां पठनं तदिदं पर्व्वदिने क्रियते। प्रतिपद्दिने तु "कमग्ने वां देवेभ्य" इ-

स्वादिभिरध्वर्युर्हस्तप्रक्षालनतण्डुलनिर्वापपुरोडाशप्रदानादिकर्मप्रयोगं करोति तदिदं यजनम्। एतदेवाभिप्रेत्य गोभिल आह "पक्षान्ता उपवस्तव्याः पक्षादयोऽपि यष्टव्याः" इति अत्रोपवासशब्देन अन्वाधानपरिस्तरणादिर्विवक्षितः तस्मिन् क्रियमाणे यजमानसमीपे देवतानां निवासात् तदेतत्तैत्तिरीयब्राह्मणे दर्शितम् "उपास्मिन् श्वो यक्ष्यमाणे देवताः वसन्ति य एवं विद्वानग्निमुपस्तृणातीति" उपवासशब्दाभिधेयस्य पर्वदिने कर्त्तव्यस्यान्वाधानादेः पर्वणि चतुरंशवति आद्यास्त्रयोंऽशा विहितः कालः न तु चतुर्थोऽंशः यागशब्दाभिधेयस्य पुरोडाशप्रदानादेः पूर्वोक्तः पर्वचतुर्थोऽंशः प्रतिपदंशास्त्रयश्च विहितः कालः न तु प्रतिपच्चतुर्थोऽंशः। तदेतदाह लौगाक्षिः "सोमं यागोपवसथस्य यागस्य चतुरो विदुः। द्वावंशावुत्सृजेदन्त्यौ यागे च व्रतकर्मणीति" तमेतं यत्कालं यज्ञपार्श्वोऽप्याह "पञ्चदश्याः परः पादः प्रत्यादेः प्रथमांशकः। कालः पार्वणयागे स्यादन्त्ये तु न विद्यत इति" वृद्धशातातपोऽपि "पर्वणो यच्चतुर्थोऽंश आद्याः प्रतिपदस्त्रयः। यागकालः स विज्ञेयः प्रातरुक्तो मनीषिभिरिति" अत्र प्रातरिति विशेषणात् सूर्योदयस्योपरि मुहूर्त्तत्रयं यागकाल इत्युक्तं भवति प्रतिपच्चतुर्थांशं निषेधति कात्यायनः "न यष्टव्यं चतुर्थेऽंशे यागैः प्रतिपदः क्वचित्। रक्षांसि तद्धि लुम्पन्ति श्रुतिरेषा सनातनीति" तदेवं पर्वण्यन्वाधानादिकं प्रतिपदि चेष्टिरिति सन्धिपार्श्वयोरुभयोः प्रारम्भपरिसमाप्ती व्यवस्थिते। यदा पर्वप्रतिपदावुदयमारभ्य सम्पूर्णतिथी भवतः तदा न सन्देहः यदा तु खण्डतिथी तदा निर्णयोऽभिधीयते तत्र गोभिलः "आवर्त्तने यदा सन्धिः पर्वप्रतिपदोर्भवेत्। तदहर्याग इष्येत परतश्चेत् परेऽहनि। पर्वप्रतिपदोः सन्धिरर्वागावर्त्तनाद् यदि। तस्मिन्नहनि यष्टव्यं पूर्वेद्युस्तदुपक्रमः। आवर्त्तनात् परः सन्धिर्यदि तस्मिन्नुपक्रमः। परेद्युरिष्टिरित्येष पर्वद्वयविनिश्चयः" इति आवर्त्तनमह्नोमध्यभागः। लौगाक्षिरपि "पूर्वाह्ने वाऽथ मध्याह्ने यदि पर्व समाप्यते। उपोष्य तत्र पूर्वेद्युस्तदहर्याग इष्यते। अपराह्णेऽथवा रात्रौ यदि पर्व समाप्यते। उपोष्य तस्मिन्नहनि श्वो भूते याग इष्यत" इति एषु वचनेषु मध्याह्नादिशब्दा यौगिकाः न तु पञ्चधा विभागमाश्रित्य प्रवृत्तास्तथा सत्यह्नोमध्यो मध्याह्न इति व्युत्पत्तेरावर्त्तनं मध्याह्नशब्देनाभिधीयते अतएव गोभिलेनावर्त्तनशब्दः प्रयुक्तः शातातपेनापि मध्यमशब्दः प्रयुक्तः "पूर्वाह्ने मध्यमे वापि यदि पर्व समाप्यते। तदोपवासः पूर्वेद्युस्तदहर्याग इष्यते" इति अह्नोऽपरोभागोऽपराह्णः अतस्ताभ्यां शब्दाभ्यामावर्त्तनात् पूर्वोत्तरभागावभिधीयेते। वाजसनेयिनान्तु विशेषमाह भाष्यार्थसंग्रहकारः "मध्यन्दिनात् स्यादहनीह यस्मिन् प्राक् पर्वणः सन्धिरियं तृतीया। सा कर्विका वाजसनेयिमत्ता तस्यामुपोष्याथ परेद्युरिष्टिरिति" आवर्त्तनादूर्द्ध्वमस्तमयादर्वाक् यदा सन्धिर्भवति तदाहःसन्धिमती तिथिः प्रथमा, रात्रौ सन्धिश्चेत् सा तिथिर्द्वितीया उभे अपेक्ष्य पूर्वाह्णे सन्धिमती पर्वतिथिस्तृतीया भवति तस्यां तृतीयतिथौ पर्वकालस्याल्पत्वात् कार्विकेत्युच्यते। शाखान्तराध्यायिनामीदृशे विषये पूर्वेद्युरन्वाधानादिकं सन्धितिथाविष्टिर्वाजसनेयिनान्तूत्तरतिथाविष्टिः एवं सति वाजसनेयिनां न क्वापि सन्धिदिनात्पूर्वेद्युरन्वाधानादिकमस्ति सोऽयं विशेषः आवर्त्तनात् पुरा वा यदा सन्धिर्भवति तदा वाजसनेयिव्यतिरिक्तानां पर्वचतुर्थांशे इष्टिः प्राप्नोति तत्र विशेषमाह गार्ग्यः "प्रतिपद्यप्रविष्टायां यदि चेष्टिः समाप्यते। पुनः प्रणीय कर्त्तव्या यागवित्तमैरिति" पर्वचतुर्थांशः प्रतिपदस्त्रयोंऽशाश्च यागकालत्वेन विहिताः। अत्र पर्वचतुर्थांशस्य विषय उदाहृतः प्रतिपदंशानां विषय उदाह्रियते। उषःकाले सन्धौ प्रतिपदः प्रथमांशो यागकालः निशीथे सन्धौ द्वितीयांशः रात्रिप्रारम्भे सन्धौ तृतीयांशः अनेन न्यायेनापराह्णे सन्धौ प्रतिपच्चतुर्थांशस्य यागकालत्वं प्राप्नोति तच्च प्रतिषिद्धं "न यष्टव्यं चतुर्थेऽंशे" इति स्मृतेः अतस्तादृशे विषये याग एव लुप्येतेति चेत् नैवं वृद्धशातातपेन प्रतिप्रसवाभिधानात् "सन्धिर्यद्यपराह्णे स्याद्यागं प्रातः परेऽहनि। कुर्वीत प्रतिपद्यागे चतुर्थेऽपि न दुष्यतीति" एवं तर्हि प्रतिषेधो निर्विषयः स्यादिति चेन्नैवं सद्यस्कालविषये चरितार्थत्वात् तं च विषयं दर्शयति कात्यायनः "सन्धिश्चेत् सङ्गवादूर्द्ध्वं प्रागावर्त्तनाद्रवेः। सा पौर्णमासी विज्ञेया सद्यस्कालविधौ तिथिरिति" भाष्यार्थसंग्रहकारोऽपि "अन्वाहितिस्तरणोपवासः पूर्वेद्युरेतेषु पौर्णमास्याम्। आवर्त्तनात् प्राग्यदि पर्वसन्धिस्तदैव यागः क्रियते समस्तः" इति। आपस्तम्बोऽपि "पौर्णमास्यामन्वाधानपरिस्तरणोपवासाः सद्यो वा सद्यस्कालायां सर्वं क्रियते" इति सङ्गवावर्त्तनयोर्मध्ये पौर्णमासीप्रतिपदोः सन्धौ सति पूर्वोदाहृतैर्वचनैः सन्धिदिनात् पूर्वेद्युरन्वाधानादिकं प्राप्तं तत्र

चतुर्दश्यादिवाक्यैः सन्धिदिन उत्कृष्यते । सन्नीहये विषये सन्धिदिनात् परदिने याग उत्कृष्यतां तथा सत्यपराह्णादिसन्धिविचाराभावान्नयोर्दिनभेदो भविष्यति । अस्ति च दृष्टान्तः वाजसनेयिनामीहये विषये, अन्वाधानोत्कर्षे सति यागस्याप्युत्कृष्टत्वात् नैवम् अन्वयव्यतिरेकरूपाभ्यां विधिनिषेधाभ्यामस्याः प्रज्ञायानिवारितत्वात् तत्र चतुर्दश्यादिविषयोऽन्वयरूपः, प्रतिपच्चतुर्थांशे प्रतिषेधश्च व्यतिरेकरूपः एवं च सति प्रतिषेधवाक्यं सावकाशं भवति । अमावास्यायां विशेषमाह वृद्धशातातपः "द्वितीया त्रिमुहूर्त्ता चेत् प्रतिपच्चापराह्णिकी । अन्वाधानं चतुर्दश्यां परतः सोमदर्शनादिति" सोऽयं विशेषो नाश्वलायनापस्तम्बविषयः किन्तु बौधायनमतानुसारिविषयः अतएव बौधायनः "द्वितीया त्रिमुहूर्त्ता चेत् प्रतिपच्चापराह्णिकी । अन्वाधानं चतुर्दश्यां परतः सोमदर्शनात् । चतुर्दशी चतुर्यामा अमावास्या न दृश्यते । क्षीभूते प्रतिपद्येत् स्यात् पूर्वां तत्रैव कारयेत् । चतुर्दशी च संपूर्णा द्वितीया च समासिका । प्रातरिष्टिरमावास्या क्षयभूते कल्यादिका क्रियेति" एतेषां वचनानामयमर्थः अस्मि चतुर्दशी संपूर्णा अस्तमयादर्वागमावास्या समाप्ता तत एवापराह्णव्याप्त्यभावाच्छ्राद्धायान्वाधानाय वा पूर्वोक्तरीत्या यद्यपि निमित्तभावं न भजते तथापि प्रतिपदि द्वितीयायां सत्यां चन्द्रस्य दृश्यमानत्वात्तद्दर्शने चेष्टेर्निषिद्धत्वात् प्रतिपद्युतायाममावास्यायामिष्टिः सत्यामावास्योपेतायां चतुर्दश्यां श्राद्धान्वाधानादिकं कर्त्तव्यमिति । एतदेवाभिप्रेत्य स्मृत्यन्तरे "आदित्येऽस्तमिते चन्द्रः प्रतीच्यामुदियाद् यदा । प्रतिपद्यतिपत्तिः स्यात् पञ्चदश्यां यजेत्सदेति" इज्यविधोऽपि "ऐन्द्रे निरुप्ते पयसि पुरस्तादुदिते विधौ । यद्दुष्यं कृतं तस्मिन् पश्चादपि हि तद्भवेदिति" अस्यायमर्थः यदा अपूर्णचतुर्दश्यामविचारेणामावास्याबुद्धिं कृत्वा अन्वाधानादिकं कृत्वा हविर्निर्वापे कृते तस्मिन् उषःकाले पूर्वस्यां दिशि चन्द्रमा उदेति । तदा न दर्शकर्म भवितुमर्हति दर्शकालस्याप्राप्तत्वात् किन्तु कालापराधनिमित्तोऽत्र दर्शदेवता अपनीय दात्रादिगुणविशिष्टाग्न्यादिदेवतान्तराण्युद्दिश्य हविःप्रक्षेपो विहितः तदेतत् तैत्तिरीयब्राह्मणे श्रूयते "यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान् विभजेत् ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात् ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुम् ये क्षोदिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुमिति" सोऽयं दृष्टान्तोऽह-

विषि निरुप्ते सति तदूर्द्ध्वं पूर्वस्यां दिशीन्दावुदिते सति दर्शकर्मविधेर्वैगुण्यमुक्तरीत्यावस्थितं तदेव वैगुण्यं सोमदिने पश्चिमदिशि चन्द्रोदये भवतीति । एतदेव बौधायनमतमुपोद्बलयति श्रुतिः "यस्मिन्नहनि पुरस्तात्पश्चात् सोमो न दृश्यते तदहर्यजेतेति" अयमर्थः सिनीवाल्यां पुरस्ताच्चन्द्रदर्शनं भवति द्वितीयायुक्तायां प्रतिपदि पश्चाच्चन्द्रो दृश्यते तयोरुभयोर्मध्यवर्त्तिन्यां कुह्वां द्विविधमपि चन्द्रदर्शनं नास्ति अतस्तस्मिन् दिने यष्टव्यमिति चन्द्रदर्शनोपेतायां शुक्लप्रतिपदि यागानुष्ठाने प्रायश्चित्तमाह कात्यायनः "यजनीयेऽह्नि सोमश्चेद्वारुण्यां दिशि दृश्यते । तत्र व्याहृतिभिर्हुत्वा दण्डं दद्याद्द्विजातये" इति चन्द्रदर्शनराहित्यमेवाभिप्रेत्य बौधायनकारिकासु पठ्यते "दृष्टे रवेः प्रातिपदादि नाड्यः सप्ताष्ट वा यत्र भवन्ति तत् स्यात् । षोडशासु नाडीषु दिनस्य पूर्वः कल्पोऽथ दृष्टौ च भवेद्द्वितीयः" इति अयमर्थः अमावास्यातिथेः [illegible] नाडीषु षोडशासु सतीषु तस्मिन् दिने अस्तमयात् पूर्वं प्रतिपत्सम्बन्धिन्यो नाड्यः सप्ताष्ट वा यदि भवन्ति तदा तद्दिनमिष्टेरेव योग्यं सोऽयमेकः पक्षः । अमावास्याप्रतिपदौ यदा वर्द्धेते तदा द्वितीयः कल्पो भवेत् । अमायामग्निमाधाय सोमदर्शनरहिते प्रतिपद्दिने यागः कर्त्तव्य इति । स्मृत्यन्तरेऽपि "अर्वागस्तमयात् यत्र द्वितीया तु प्रदृश्यते । तत्र यागं न कुर्वीत सुर्देवास्तु पराङ्मुखाः" इति बौधायनमतानुसारिणामन्वाधानवच्छ्राद्धमपि सत्यामावास्योपेतायां चतुर्दश्यां कर्त्तव्यं तथा च बौधायनेनोक्तम् "यदा चतुर्दशी यामं तुरीयमनुपूरयेत् । अमावास्या क्षीयमाणा तदैव श्राद्धमाचरेत् । चतुर्दश्यां चतुर्यामे अमा यत्र न दृश्यते । क्षीभूते प्रतिपद्यत्र भूते कल्यादिका क्रियेति" चतुर्थे यामे अमावास्या सम्पूर्णा न दृश्यते किन्त्ववसाने सत्ता सा चेत् परदिने क्षीयते तदामी चतुर्दश्यां श्राद्धमाचरेत् । ननु चन्द्रदर्शनोपेतायां प्रतिपदीष्टिः समाम्नाता तथा च शतपथब्राह्मणम् "यदहः पश्चाच्चन्द्रमा अभ्युदेति तदहर्यजनियमाहुँ कालमभ्युदेतीति" । तैत्तिरीयब्राह्मणमपि "एतां वै सुमना नामेष्टिर्यमद्येजानं पश्चाच्चन्द्रमा अभ्युदेत्यस्मिन्नेवास्मै लोके समर्द्धुकं भवतीति" अयमर्थः येयमिष्टिश्चन्द्रदर्शनोपेते दिने क्रियते सेयमिष्टिः सुमनःशब्दवाच्या तादृशीमिष्टिं कृतवन्तं यजमानमभिलक्ष्य तस्मिन् दिने पश्चाच्चन्द्रमा उदेति तस्मै यजमानायास्मिन्नेव लोके समर्द्धिर्भवतीति बाढं तदेतच्छ्रुतिद्वयं बौधायनमतानुसारिव्यति-

रिक्तविषयम् एतदेवाभिप्रेत्य प्रतिपच्चतुर्थांशे याग उदाहृतः । ननु बौधायनव्यतिरिक्तानामपि चन्द्रदर्शनयोग्यद्वितीयायुतं प्रतिपद्दिनमिष्टौ निषिद्धं तथा च स्मृतिः "पर्व्वणोऽंशे चतुर्थे तु कार्य्या चेष्टिर्द्विजोत्तमैः । द्वितीयासहितं यस्मात् पश्यन्त्याश्वलायनाः" इति तदेतदावर्त्तनात्पूर्व्वकालयोः सन्धौ सति द्रष्टव्यं अपराह्णादिसन्धिषु चतुर्थांशस्याप्राप्तत्वात् । तदेवं प्रकृतिरूपाया इष्टेः कालो निरूपितः विकृतेस्तु कालो निरूप्यते तत्र कात्यायनः "आवर्त्तनात् प्राग्यदि पर्व्वसन्धिः कृत्वा तु तस्मिन् दिवसे प्रकृत्याः । तत्रैव यागः परतो यदि स्यात्तस्मिन् विकृत्याः प्रकृतेः परेद्युरिति" आवर्त्तनेतः पुरा वा पर्व्वसन्धौ तस्मिन् सन्धिदिने प्रकृतियागं कृत्वा पश्चाद्विकृतिसम्बन्धी यागः कर्त्तव्यः । यद्यावर्त्तनात्परतः सन्धिस्तदा केवलं विकृतियागः सन्धिदिने कर्त्तव्यः प्रकृतियागस्तु सन्धिदिनात्परेद्युरनुष्ठेय इत्यर्थः । आवर्त्तनतः पूर्व्वकाले ततः परकाले वा सन्धिरित्येतेषु त्रिष्वपि पक्षेषु सन्धिदिन एव विकृतेरनुष्ठानं प्रकृतेस्तु पूर्व्वोक्तरीत्या सन्धिदिने परेद्युर्व्वानुष्ठानं व्यवतिष्ठते

इष्टीनां सर्व्वासां प्रकृतिर्दर्शपूर्णमासौ "ऐन्द्राग्नमेकादशकपालं निर्व्वपेत् प्रजाकाम" इत्यादयः शाखान्तरपठिताः काम्येष्टयो विकृतयः । तत्र "प्रकृतिवद्विकृतिः कर्त्तव्येति" न्यायेन विकृतीनामपि सन्धिदिनात् परेद्युः कदाचिदनुष्ठानं प्राप्तं तदेतदुदाहृतेन वचनेन निवार्य्यते" ।

तेन सन्धेः सूक्ष्मकालत्वेन कर्म्मानर्हत्वात् संक्रान्तिवत्तदुपलक्षितदिनविशेषे तत्तत्कर्म्म कर्त्तव्यमिति फलितम् । अत एव "ऋतुसन्धिषु वापयेत्" इतियतिधर्म्मे स्मृतिः तत्र यदि दर्शान्तविवक्षा स्यात् तदा दर्शस्यैव सन्धित्वात् तत्रैव वपनं कुर्य्युः कुर्व्वन्ति तु पूर्णिमायां तस्मात् दर्शान्तत्वपूर्णिमान्तत्वयोः समो विकल्पः अनुष्ठाने तु तत्र वचनविशेषाच्छिष्टाचाराच्च व्यवस्था" कालमा० । अयञ्च कालः श्रौतस्मार्त्तकर्म्मोक्तम् वैद्यके तु कालविशेषोऽपि परिभाषितः "यथा ऋत्वोरन्त्यादि सप्ताहावृतुसन्धिरिति स्मृतः । तत्र पूर्व्वो विधिस्त्याज्यः सेवनीयः परो विधिः" वाग्भटः । ज्योतिःशास्त्रे तु ऋत्वोः सन्ध्युपलक्षितस्य कालभेदस्य "रवेर्भनेदेकद्वाधिकस्य यदंशकन्दं खलु सायनस्य । तदत्र राशिद्वभागतः खण्डं वसन्तादृतवो भवन्ति । तत्सन्धयोऽगाङ्क ६७घटीसमाः सुधीसंगुणा (१२४ घटीसमाः) चेत् विषुवाङ्कनीयाः । स सन्धिसन्धिः खलु यत्र शेषं न्यून्यं भवेदेव विशेषपुण्यः" केशवार्कोक्त सन्धिसन्धित्वे नापि परिभाषा कृता तत्र शून्यावशेषे स्नानदानादौ विशेषपुण्यफलम् । इतरस्य विवाहे वर्ज्जना । यथाह स एव "सन्धौ गुरुञ्च शुचमेति वन्ध्या मृतप्रजा वा यदि सन्धिसन्धिः" इति ।

**ऋतुसेव्य** त्रि० ऋतुभेदे सेव्यं वैद्यकोक्तगुणयुतमाहारादि । सुश्रुतोक्ते ऋतुभेदे सेवनीये पथ्यरूपे वस्तुभेदे तच्च सुश्रु० दर्शितं यथा । "यस्मिन्नृतौ ये ये दोषाः कुप्यन्ति देहिनाम् । तेषु तेषु प्रदातव्याः रसास्ते ते विजानता ।

प्रक्लिन्नत्वाच्छरीराणां वर्षासु खलु देहिनाम् । मन्देऽग्नौ कोपमायान्ति संहर्षान्मारुतादयः । तस्मात् क्लेदविशुद्ध्यर्थं दोषसंहरणाय च । कषायतिक्तकटुकै रसैर्युक्तमथाद्रवम् । नातिस्निग्धं नातिरूक्षमुष्णं दीपनमेव च । देयमन्नं न्यपतये यज्जलं चोद्धृतमादितः । तप्तावरतमम्भो वा पिबेन्मधुसमायुतम् । अह्नि मेघानिलाविष्टेऽत्यर्थं शीताम्बुसङ्कुले । तरलत्वाहिदाहस्य गच्छन्त्योषधयस्तदा । अतिमांसचिमित्तस्य नैव व्यायाममाचरेत् । अत्यम्बुपानावश्यायपांश्वशीतपांस्तथा । भूवाष्पपरिहारार्थं शयीत च विहायसि । शीते साग्नौ निवाते च गुरुप्रावरणे गृहे । शय्यायामयवश्चिच प्रयत्नागुरुधूपितः । दिवास्वप्नमजीर्णञ्च वर्ज्जयेत्तत्र यत्नतः" । वर्षासेव्यासेव्ये ।

"सेव्याः शरदि यत्नेन कषायस्वादुतिक्तकाः । क्षीरेक्षुविकृतिक्षौद्रशालिमुद्गादिजाङ्गलाः । सलिलञ्च प्रसन्नत्वात् सर्व्वमेव तदा हितम् । सरःस्वान्नावगाहश्च कमलोत्पलशालिषु । प्रदोषे शशिनः पादाश्चन्दनञ्चानुवासनम् । तिक्तस्य सर्पिषः पानैः रक्तस्रावैश्च युक्तितः । वर्षास्वपचितं पित्तं हरेच्चापि विरेचनैः । गोमेयास्तीक्ष्णमत्योष्णं क्षारं सभं दिवाऽऽतपम् । रात्रिजागरणञ्चैव मैथुनञ्चापि वर्ज्जयेत् । स्वादु शीतजलं मद्यं शुचिस्फटिकनिर्म्मलम् । शरच्चन्द्रांशुनिर्धौतमगस्त्योदयनिर्विषम् । प्रसन्नत्वाच्च सलिलं सर्व्वमेव तदा हितम् । चन्दनं वा कर्पूरं वाससामलिनं वपु । भजेच्च शारदं माल्यं सोधोः पानञ्च युक्तितः । पित्तप्रशमनं यच्च तच्च सर्व्वं समाचरेत्" । शरदि सेव्यासेव्ये

"हेमन्तः शीतलो रूक्षो मन्दसूर्य्योऽनिलाकुलः । ततस्तु शीतमासाद्य वायुस्तत्र प्रकुप्यति । कोष्ठस्थः शीतसंस्पर्शादन्तःपिण्डीकृतोऽनलः । रसशुष्कोऽश्यत्याशु तस्मात् स्निग्धं तदा हितम् । हेमन्ते लवणक्षारतिक्ताम्लकटुकोत्कटम् । सर्पिस्तैलमहिमसमं हितमुच्यते । तीक्ष्णान्यपि च पानानि पिबेदगुरुधूपितः । तैलाभ्यक्तः सुखोष्णे च वारिकोष्णेऽवगाहयेत् । प्राकारधाम्ने सहति कौषेयाम्बरधारते । शयीत

शयने वापि हृते गर्भगृहोदरे । स्त्रीः स्निग्धागुरुधूपाढ्याः पीनोरुजघनस्तनीः । प्रकामञ्च निषेवेत मैथुनं तर्पितो नरः । मधुरं तिक्तकटुकमम्लं लवणमेव च । अन्नपानं तिलान् माषान् शाकानि च दधीनि च । तथेक्षुविकृतीः शालीन् सुगन्धांश्च नवानपि । प्रसहानूपमांसानि क्रव्यादबिलशायिनाम् । औदकानां प्लवानाञ्च शादिनाञ्चोपजायते । मद्यानि च प्रसन्नानि यच्च किञ्चिद्बलप्रदम् । कामतस्तन्निषेवेत पुष्टिमिच्छन् हिमागमे” हेमन्तसेव्यादि

“एष एव विधिः कार्यः शिशिरे समुदाहृतः” ।

“हेमन्ते निचितः श्लेष्मा शैत्याच्छीतशरीरिणाम् । ग्रीष्मगाद्वसन्ते कुपितः कुरुते च गदान् बहून् । ततोऽम्लमधुरस्निग्धलवणानि गुरूणि च । वर्जयेद्वमनादीनि कर्म्माण्यपि च कारयेत् । षष्टिकांश्च यवान् शालीन् मुद्गान् नीवारकोद्रवान् । शाकादिभिश्चिरस्थैर्द्ध्याद्यूषैश्च सुस्थितः । पटोलनिम्बवार्त्ताकुतिक्तकैश्च हिमात्यये । सेवेत माधवेऽरिष्टान् सीधु माध्वीकमासवान् । व्यायाममञ्जनं धूमं तीक्ष्णञ्च कवलग्रहम् । सुखाम्बुना च सर्वार्थान् सेवेत कुसुमागमे । तीक्ष्णरूक्षकटुक्षारकषायं कोष्णमद्रवम् । यत्सुस्थमधुप्रायं वसन्ते भोजनं हितम् । व्यायामोऽत्र नियुद्धाध्वशिलानिर्घातजो हितः । उत्सादनं तथा स्नानं वनिताः काननानि च । सेवेत निर्हरेच्चापि हेमन्तोपचितं कफम् । शिरोविरेकवमननिरूहकवलादिभिः । वर्ज्जयेन्मधुरस्निग्धदिवास्वप्नगुरुद्रवान्” वसन्तसे०

“व्यायाममुष्णमायासं मैथुनञ्चातिशोषि च । रसांश्चाग्निगुणोद्रिक्तान् निदाघे परिवर्जयेत् । सरांसि सरितोऽथापि वनानि रुचिराणि च । चन्दनानि पराध्यानि स्रजः सकमलोत्पलाः । तालवृन्तानिलाहारांस्तथा शीतगृहाणि च । घर्मकाले निषेवेत वासांसि सुलघूनि च । शर्कराखण्डदिग्धानि सुगन्धीनि हिमानि च । पानकानि च सेवेत मन्थांश्चापि सशर्करान् । भोजनं च हितं शीतं सघृतं मधुरद्रवम् । शृतेन पयसा रात्रौ शर्करामधुरेण च । प्रत्यग्रकुसुमाकीर्णशयने हर्म्यसंस्थिते । शयीत चन्दनार्द्राङ्गः स्पृश्यमानोऽनिलैः सुखैः” ग्रीष्मसेव्यादि ।

“तापात्यये हिता नित्यं रसा ते गुरवस्तथा । पयोमांसरसाः कोष्णास्तैलानि च घृतानि च । ईदृशञ्चापि यत्किञ्चिदभिष्यन्दि तथैव च । निदाघोपचितश्चैव प्रकुपितं समीरणम् । निहन्यादनिलघ्नेन विधिना विधिकोविदः । नदीजलं रूक्षमुष्णमुदमन्थं तथाऽऽतपम् । व्यायामञ्च दिवास्वप्नं व्यवायञ्चात्र वर्ज्जयेत् । यवषष्टिकगोधूमान् शालींश्चाप्यनयांस्तथा । हर्म्यमध्ये निवाते च भजेच्छय्यां मृदूत्तराम् । सविषप्राणिविण्मूत्रलालानिष्ठीवनादिभिः । समाप्लुतं तदा तोयमान्तरीक्षं विषोपमम् । वायुना विषदुष्टेन प्राहण्येण च दूषितम् । तस्मिं सर्वोपयोगेषु तस्मिन्काले विवर्जयेत् । निरूहैर्वस्तिभिश्चान्यैस्तथान्यैर्मारुतापहैः । कुपितं शमयेद्वायुं वार्षिकं वा चरेद्विधिम् । ऋतावृतौ य एतेन विधिना वर्त्तते नरः । घोरानृतुकृतान् रोगान्नाप्नोति स कदाचन” प्रावृट्से०

**ऋतुस्तोम** पु० एकाहसाध्ये यागभेदे “नाकसद ऋतुस्तोमादिकस्तोमाश्चाभिप्लवाहानि” आश्व० श्रौ० ९,८,२६ । “ऋतुस्तोमनामानश्च षडेकाहाः” नारा० ।

**ऋतुस्थला** स्त्री अप्सरोभेदे “ऋतुस्थला घृताची च विश्वाची पूर्व्वचित्त्यपि” भा० आ० १२३ अ० अप्सरोभेदकथने ।

**ऋतुस्नाता** स्त्री ऋतौ ऋतुकाले विहितदिने (चतुर्थदिवसे) स्नाता । ऋतुकाले चतुर्थदिवसे शुद्ध्यर्थं कृतस्नानायां स्त्रियाम् । “ऋतुस्नातां तु यो भार्य्यां सन्निधौ नोपगच्छति” मिता० स्मृतिः “धर्म्मलोपभयाद्राज्ञीमृतुस्नातामिमां स्मरन्” रघुः । “पूर्व्वं पश्येदृतुस्नाता यादृशं नरमङ्गना । तादृशं जनयेत् पुत्रं भर्त्तारं दर्शयेदतः” सुश्रुत । अधिकमृतुकालशब्दे ऋतुमतीशब्दे च । दारविशेषणत्वे पुंस्त्वम् “यः स्वदारानृतुस्नातान् स्वस्थः सन्नोपगच्छति” मिता० स्मृतिः ।

**ऋतुस्नान** न० ऋतौ शुद्ध्यर्थं स्नानम् । रजस्वलायाश्चतुर्थदिनकर्त्तव्ये स्नाने तस्या आर्त्तायाः स्नानप्रकारश्चार्त्तवशब्दे ८०८पृ० उक्तः ।

**ऋतुहरितकी** स्त्री ऋतुभेदे द्रव्यभेदे न सेव्या हरितकी । वर्षादिषु ऋतुषु क्रमेण सैन्धवशर्कराशुण्ठीजीरकमधुगुडैर्मिश्रणेन सेव्यायां हरीतक्याम् । “सिन्धूत्थशर्कराशुण्ठीकणामधुगुडैः क्रमात् । वर्षादिष्वभया प्राश्या रसायनगुणैषिणा” भावप्र० ।

**ऋते** अव्य० ऋत (घीत:) के । १वर्ज्जने २विनाशे च । “अवेहि मां प्रीतमृते तुरङ्गमात्” रघुः “न शाहते निषिक्तस्य नीललोहितरेतसः” कुमा० । “शक्तोऽन्यः सहितुं वेगमृते देवं पिनाकिनम्” भा० व० २६ अ० । “नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते” मनुः “अभ्यासको हरेत्पर्व्वं दुहितृणां सुतादृते” या० । एतच्छब्दस्य विनाशत्वात्

पुनर्भोजनमैथुने । द्यूतमद्यस्य पानञ्च दशम्यां वैष्णवस्त्य-
जेदिति" विष्णुधर्मोत्तरे "असत्यभाषणात् हि यस्मात् व्रतस्य
तविकारदम् । आमलक्या: फलं वापि पारणे प्राश्य शुध्यति"
"असकृज्जलपानं च दिवास्वापञ्च मैथुनम् । ताम्बूलचर्वणं
मांसं वर्ज्जयेत् व्रतवासरे" इति च । वशिष्ठ: "उपवासे तथा
श्राद्धे न खादेद्दन्तधावनम् । दन्तानां काष्ठसंयोगो हन्ति
सप्त कुलानि चेति" दन्तधावने प्रायश्चित्तं च विष्णुरहस्ये
"आद्योपवासदिवसे खादित्वा दन्तधावनम् । गायत्र्याः
शतसंपूतमम्बु प्राश्य विशुध्यतीति" हारीतः "पतितपाष-
ण्डिनास्तिकसम्भाषणानृतभाषणाश्लीलादिकमुपवासादिषु वर्ज्ज-
येदिति" कूर्म्मपुराणे "वहिर्ग्रामान्त्यजान् सूतिं पतितञ्च
रजस्वलाम् । न स्पृशेन्नाभिभाषेत नेक्षेत व्रतवासरे" इति
विष्णुरहस्ये "शय्यावलोकनगन्धादिसादनं परिकीर्त्तनम् ।
अन्नस्य वर्ज्जयेत् सर्वं ग्रासानाञ्चाभिकाङ्क्षणम् । गात्राभ्यङ्गं
शिरोऽभ्यङ्गं ताम्बूलं चानुलेपनम् । व्रतस्थो वर्ज्जयेत् सर्वं
यच्चान्यत् निराकृतमिति" ब्रह्माण्डपुराणे "कांस्यं मांसं
सुरां क्षौद्रं लोभं वितथभाषणम् । व्यायामञ्च प्रवासञ्च
दिवास्वप्नं तथाञ्जनम् । तिलपिष्टं मसूरांश्च द्वादशै-
तानि वैष्णवः । द्वादश्यां वर्ज्जयेन्नित्यं सर्वपापैः प्र-
मुच्यते" इति ।

एकादश्यां श्राद्धं कृत्वापि न भोक्तव्यं तदाह
कात्यायनः "उपवासो यदा नित्यः श्राद्धं नैमित्तिकं
भवेत् । उपवासं तदा कुर्य्यादाघ्राय पितृसेवितमिति"
तथा "मातापित्रोः क्षये प्राप्ते भवेदेकादशी यदा ।
अभ्यर्च्य पितृदेवांस्तु आजिघ्रेत् पितृसेवितमिति"
यत्तु वचनम् "श्राद्धं कृत्वा तु यो विप्रो न भुङ्क्ते पि-
तृसेवितम् । हविर्देवा न गृह्णन्ति कव्यञ्च पितरस्तथेति"
तदेकादशीव्यतिरिक्तविषयम् आघ्राणेनापि भोजनकार्य्यं सि-
ध्यति तस्य भोजनकार्य्ये विधानात्"

सूतकादौ दानार्च्चनरहितमुपवासमात्रं कुर्य्यात् तदुक्तं
कूर्म्मपुराणे "काम्योपवासे प्रक्रान्ते त्वन्तरा मृतसूतके । तत्र
काम्यं व्रतं कुर्य्याद्दानार्च्चनविवर्ज्जितम्" इति वराहपुराणे
"सूतके च नरः स्नात्वा प्रणम्य मनसा हरिम् । एका-
दश्यां न भुञ्जीत व्रतमेवं न लुप्यते । मृतके न च भुञ्जीत
एकादश्यां सदा नरः । द्वादश्यान्तु समश्नीयात् स्नात्वा वि-
ष्णुं प्रणम्य चेति" । तत्र परित्यक्तं देवार्च्चनं सूतकान्ते
कुर्य्यात् तदुक्तं मत्स्यपुराणे "सूतकान्ते च स्नात्वा पूज-
यित्वा जनार्द्दनम् । दानं दत्त्वा विधानेन व्रतस्य फलम-
श्नुते" इति । स्त्रीणां रजोदर्शनेऽपि न व्रतनाशः किन्तु
देवतार्च्चनादिरहितं सूतकादाविवोपवासमात्रं कार्य्यं
तदाह पुलस्त्यः "एकादश्यां न भुञ्जीत नारी दृष्टे रजस्य-
पि" इति । मत्स्यसूक्ते "संप्रवृत्तेऽपि रजसि न त्याज्यं
द्वादशीव्रतमिति" । सत्यव्रतोऽपि "प्रारब्धदीर्घतपसां नारी-
णां यद्रजो भवेत् । न तत्रापि व्रतस्य स्यादुपरोधः कदा-
चनेति" शुद्ध्यनन्तरं देवतार्च्चनादिकं कुर्य्यात् तथा च
स्मृतिः "स्नाता भर्त्तुश्चतुर्थेऽह्नि शुद्धा स्यात् परिचारणे ।
पञ्चमेऽहनि शुद्धा स्याद्दैवे पित्र्ये च कर्म्मणीति"

नित्योपवासप्रकारो विष्णुरहस्येऽभिहितः "अथ नित्योप-
वासी चेत्ताय प्रातर्भुजिक्रियाम् । वर्ज्जयेत्ततिथावह्नि
विप्रः संप्राप्ते हरिवासरे" इति ब्रह्मवैवर्त्तेऽपि "इति
विज्ञाय कुर्वीत नित्यमेकादशीव्रतम् । विशेषनियमाशक्तो-
ऽहोरात्रं भुक्तिवर्ज्जितः । निगृहीतेन्द्रियः श्रद्धाव-
शान्तोविष्णुतत्परः । उपोष्यैकादशीं पापान्मुच्यते नात्र
संशयः" । शक्तौ सत्यां नियमानाचरेत् तथा च कात्या-
यनः "शक्तिमांस्तु ततः कुर्य्यान्नियमं सविशेषणमिति" ।

यदा द्वादश्यां श्रवणनक्षत्रं भवेत् तदा शुद्धैकादशी-
मपि परित्यज्य द्वादश्यामेवोपवसेत् तथा च नारदीये
"शुक्ला वा यदि वा कृष्णा द्वादशी श्रवणान्विता ।
तयोरेवोपवासश्च त्रयोदश्यां च पारणमिति" तथा
"एकादश्यान्त्वविद्धायां संप्राप्ते श्रवणे तदा । उपोष्या
द्वादशी शुद्धा सर्व्वपापक्षयावहेति" यदा पारणयोग्या
द्वादशी स्यात्तदा तस्यामेव पारणा कार्य्या न तु त्रयोदश्यां
तदुक्तम् "भवेद्यत्र त्रयोदश्यां द्वादश्यास्तु कलाद्वयम् ।
द्वादश द्वादशीर्हन्ति त्रयोदश्यां तु पारणम् । कलार्द्धं
त्वथ वापि द्वादशीं न त्वतिक्रमेत् । पारणे मरणे नृणां ति-
थिस्तात्कालिकी स्मृतेति" ननु द्वादश्यतिक्रमेऽपि नास्ति
दोषः "या तिथिः सकला ज्ञेयेति" वचने साकल्यविधा-
नादिति चेत् नैवं साकल्यस्य स्नानादिविषयत्वात्
वाक्यशेषे "स्नानदानजपादिषु" इत्यभिधानात् । पारणे तु
साकल्यवचनं न प्रवर्त्तते "तिथिस्तात्कालिकी ज्ञेयेत्युक्तेः"

अल्पद्वादशीकाले यदा पारणन्तदा सर्व्वैः प्रागेव-
सर्व्वाः क्रियाः कर्त्तव्याः तदुक्तं नारदीये "अल्पायामथ
विप्रेन्द्र ! द्वादश्यामरुणोदये । स्नानार्च्चनक्रियाः कार्य्या
दानहोमादिसंयुताः । एतत्कालात्कारणाद्विप्र ! प्रत्यूषे-
स्नानमाचरेत् । पितृतर्पणसंयुक्तं सर्व्वां एषा च द्वा-
दशीम् । महाहानिकरी ह्येषा द्वादशी लङ्घिता न

णाम् । करोति धर्म्महरणमस्नातेव नरस्त्वसौति” गरुड़-पुराणेऽपि “यदा स्वल्पा द्वादशी स्यादपकर्षो भुजिर्भवेत् । प्रातर्माध्याह्निकस्यापि तत्र स्यादपकर्षणमिति” । स्कान्दपुराणेऽपि “यदा भवेदतीवाल्पा द्वादशी पारणादिने । उषःकाले द्वयं कुर्य्यात् प्रातर्माध्याह्निकञ्च यदिति”। तत्र पारणासम्भवे अद्भिः पारणं कुर्य्यात् तदाह कात्यायनः “सन्ध्यादिकमवेक्षेत पारणन्तु निमित्ततः । अद्भिस्तु पारयित्वाथ नैत्यिकान्ते भुजिर्भवेदिति” देवलोऽपि “सङ्कटे विषमे प्राप्ते द्वादश्यां पारयेत्कथम् ? । अद्भिस्तु पारणं कुर्य्यात् पुनर्भुक्तं न दोषकृदिति”। यदा कलयापि द्वादशी नास्ति तदा त्रयोदश्यामपि पारणं कुर्य्यात् तदुक्तं नारदीये “त्रयोदश्यां तु शुद्धायां पारणं पृथिवीफलम् । शतयज्ञाधिकं वापि नरः प्राप्नोत्यसंशयमिति” । पारणञ्च नैवेद्यमिश्रितं कुर्य्यात् तदुक्तं स्कान्दपुराणे “कृत्वा चैवोपवासन्तु योऽश्नाति द्वादशीदिने । नैवेद्यं तुलसीमिश्रं हत्याकोटिविनाशनमिति” ।

अथ तस्यामेकादश्यां यान्युपवासप्रतिनिधिरूपाणि एकभक्तनक्तायाचितदानानि तेषां प्रतिपद्युक्तन्यायेनोपवासतिथावेवानुष्ठानं, यानि तु स्वतन्त्राण्येकभक्तनक्तादीनि तेषां पूर्व्वोक्तन्यायेन मध्याह्नादिव्यापितिथिग्रहणप्राप्तौ दशमीविद्धा प्रतिषिध्यते द्वादशीकल्पे “पूर्व्वविद्धां दिनार्द्धेन नन्दां पूर्णामपि त्यजेत् । यदीच्छेदात्मनः स्थानं नियमेषु चतुर्ष्वपि । नोपोषितं न नक्तञ्च नैकभक्तमयाचितम् । नन्दायां पूर्व्वविद्धायां कुर्य्याद्दैवव्यमोहितः । एकादशी द्रुता यस्मात् द्वादश्या समुपोषणे । नक्ते यावाचिते नित्यमेकभक्ते तथाऽनघ ! । नक्तञ्चायाचितं तात ! नैकभक्तमथाहरेत् । दशमीवर्ज्जिते दानमनर्थं हरिवासरे” इति दिनार्द्धेन सार्द्धप्रहरद्वयं नत्त्वर्द्धेनेत्यर्थः। एतदेवाभिप्रेत्य “द्विप्रहरनिश्चयेति” उदाहृतम् । तथा “सार्द्धप्रहरसत्त्वे तु वेधोऽयं बाधते व्रतमिति” एतद्वृन्नवेधे तु तिथ्यन्तरव्याप्त्यादिव्याप्तिर्ग्रहीतव्या” ।

अत्राधिकारिनिर्णय हरि०भ०कान्डे “गृहस्थो ब्रह्मचारी वा आहिताग्निर्यतिस्तथा । एकादश्यां न भुञ्जीत पक्षयो रुभयोरपि”। वाराहोत्तरखण्डे “वर्णानामाश्रमाणाञ्च स्त्रीणाञ्च वरवर्णिनि !, एकादश्युपवासस्तु कर्त्तव्यो नात्र संशयः” । “एतस्मात् कारणाद्विप्र ! एकादश्यां तपोधनम् । कुर्य्याद्वरोवा नारी वा पक्षयोरुभयोरपि” विष्णुधर्म्मोत्तरीयम् “वैष्णवो वाथ शैवो वा कुर्य्यादेकादशीव्रतम्”। सौरपुराणम् “वैष्णवो वाथ शैवो वा सौरोऽप्येतत् समाचरेत्”। स्कान्दम् । “न शैवो न च सौरो वा नान्वयो तीर्थसेवकः । यो भुङ्क्ते वासरे विष्णोः श्वपचादधिको हि सः । विभिन्न तेन वै गोत्रं । कृतं दुष्टेन पापिना । बहुभक्षितमथास्य येन भुक्तं हरेर्दिने” । “विधवा या भवेन्नारी भुञ्जीतैकादशीदिने । तस्यास्तु सुकृतं नश्येत् भ्रूणहत्या दिनेदिने” कात्या० । एकादशीं विना एका नतिस्थ समहातमाः । पच्यते ह्यन्धतामिस्रे यावदाहूतसंप्लवम्” नारदीयम् । “सधवायास्तु पत्यनुमत्या तत्र चाधिकारः । “पत्युरथ समाज्ञे च स्वजनैर्भक्तिसंयुतः । एकादश्यामुपवसेत् पक्षयोरुभयोरपि” विष्णु ध० । तदनुमत्या सधवाया अधिकारिता व्यवभा० दर्शिता ।

“वैष्णवस्योभयपक्षयोर्नित्याधिकारः यथाह तत्त्वसागरे । “यथा शुक्ला तथा कृष्णा यथा कृष्णा तथेतरा । तुल्ये ते मनुते यस्तु स वै वैष्णव उच्यते” एवमेव ए०त०रघु० । “व्याधिभिः परिभूतानां पित्ताधिकशरीरिणाम् । त्रिंशद्वर्षाधिकानाञ्च नक्तादिपरिकल्पनम्” मार्क० पु० । प्रागुक्तकालमाधवमतानुसारिण्येकादशीव्रतकालादिव्यवस्था सर्व्वदेशवासिभिः प्रायेणाद्रियते । गौड़निवासिभिस्तु रघुनन्दनोक्ता व्यवस्थाद्रियते । तन्मतसिद्धव्यवस्था तु एकादशीत०प्रभवपनजातादनुसन्धेया तत्र संक्षेपतस्तु दर्शितो यथा “तत्र संक्षेपः पारणादिने द्वादशीलाभे सर्व्व एव पूर्व्वां त्यक्त्वा परामुपवसेत् तदलाभे स्मार्त्तो पूर्व्वां तदन्यः परां विधवापि । यदा तु पूर्व्वदिने दशम्या उत्तरदिने द्वादश्या युक्तैकादशी तदोत्तरामुपोष्य द्वादश्यां पारणं कुर्य्यात् । परदिने द्वादश्यानिर्गमे त्रयोदश्यामपीति । यदा तु सूर्य्योदयानन्तरं दशमीयुतैकादशी अद्य च परदिने न निःसरति तदा तां विहाय द्वादशीमुपवसेत् । (अत्र माधवमते भेदः) यदा तु सूर्य्योदयात् प्राक् कालीनदशमीविद्धैकादशी परदिने न निःसरति तदा तामुपवसेत् । यदा तु तथाविधा सती परदिनेऽपि निःसरति तत्परदिने च द्वादशी तदा तां विहाय परामुपोष्य द्वादश्यां पारयेत् । यदा तु पूर्व्वदिने शुद्धैकादशी परदिने च द्वादशी तदा षष्टिदण्डात्मिकां विहायानुपोष्य परदिने द्वादश्याः प्रथमपादमतीत्य पारयेत् । वैष्णवस्तु तत्रापि शुक्लपक्षे परामुपोष्य त्रयोदश्यां पारयेदिति ।

सर्व्वासां कृष्णैकादश्यां वैष्णवानां सपुत्त्राणां गृहस्थानामप्युपवासो नित्यः। ब्राह्मणस्य तु विशेषतो नित्यः। वैष्णवेतरेषान्तु तादृशानां हरिशयनमध्यवर्त्तिनीषु कृष्णैकादशीषूपवासो नित्यः। अपुत्त्रवतां गृहिणान्तु सर्व्वास्वेव नित्याधिकारः। काम्योपवासे तु अविशेषेणैव सर्व्वेषामधिकारः। नित्योपवासे तु रविसंक्रमादिदोषोनास्ति अष्टाब्दादधिकोमर्त्योह्यपूर्णाशीतिवत्सरोनित्याधिकारी विधवायास्तु सर्व्वास्वेव नित्याधिकारः।

अत्र मलमासादिदोषोनास्ति। यथा ज्योतिः पराशरः "अनादिदेवताद्यासु कालदोषोन विद्यते। नित्यस्वाध्याययोगे च तथैवैकादशीव्रते" एका॰ त॰ रघु॰।

अत्र विशेषोहेमाद्रौ स्कान्दे। "एकादशी कला यत्र द्वादशी च क्षयं गता। नक्तं तत्र प्रकुर्व्वीत नोपवासं त्र्यहस्पृशी"। अत्रोपवासविधायकसामान्यशास्त्रस्य नक्तविधायकविशेषशास्त्रेण बाधः। "एकादशी कलार्धेका द्वादशी यत्र लुप्यते। तत्रोपवासं कुर्व्वीत निष्कामोविष्णुतत्परः" तत्रैव स्कान्दम्। "तत्र पूर्व्वापरवचनपर्य्यालोचनया नक्तविधानं कामिनः काम्योपवासव्रतविषयं, निष्कामस्य, नित्योपवासार्थिनो विष्णुपरायणस्य त्र्यहस्पृश्यप्युपवासः" स॰ त॰ रघु॰। वाचस्पतिमते "निष्कामस्तु गृही कुर्य्यादुत्तरैकादशीं तथा। सकामस्तु तदा पूर्व्वां कुर्य्याद्बौधायनोऽब्रवीत्" विष्णुरहस्यात् सकामेन तत्र दशमीविद्धा कार्य्या निष्कामेण द्वादशीयुक्तोपोष्येतिभेदः।

वेधविषये हेमाद्रौ तु सार्द्धघटिकात्रयोक्तिरष्टाविंशतिमात्ररात्रिविषया महत्तरास्तु रात्रीरपेक्ष्य चत्वारोघटिकाप्राह्णा "निशःप्रान्ते तु यामार्द्धे देवादिलयादने। सारस्वताध्ययने चारुणोदय उच्यते इति" स्मृतेरित्युक्तम्। हेमाद्रिमतानुसारेण निर्ण॰ सि॰ एकादशीभेदा अष्टादशेत्युक्त्वा तद्व्यवस्था तत्रोक्ता यथा

"शुद्धा विद्धा द्वयी भूयस्त्रेधा न्यूनसमाधिकैः। षट्प्रकाराः पुनस्त्रेधा द्वादश्यूनसमाधिकाः" इत्यष्टादशैकादशीभेदाः तत्र शुद्धाधिकन्यूनद्वादशिका शुद्धाधिकसमद्वादशिका च सकामैः पूर्व्वा निःकामैरुत्तरा कार्य्या "प्रथमेऽहनि संपूर्णेति" पूर्व्वोक्तस्कान्दात् "अनद्वादशिकायां तु विष्णुप्रीतिकामैरुपवासद्वयं कार्य्यम्" "संपूर्णैकादशी यत्र प्रभाते पुनरेव सा। लुप्यते द्वादशी तस्मिन्नुपवासः कथं भवेत्?। उपोष्ये द्वे तिथी तत्र विष्णुप्रीणनतत्परैरिति" इत्यवधिदोक्तेः। "शुद्धन्यूना शुद्धाधिका शुद्धसमा विद्धन्यूना विद्धसमाधिकद्वादशिका च सर्व्वेषां परैवेति" हेमाद्रिः मदनरत्ने तु शुद्धाधिका परा। "संपूर्णैकादशी यत्रेति" पूर्व्वोक्तेः। "शुद्धा यदा समा हीना समा चोवाधिकोत्तरा। एकादशी उपवसेत् शुद्धां वैष्णवोऽपीति" स्कान्दात् अत्र शुद्धा एकादशी, उत्तरा द्वादशी "नचेदेकादशी विष्णाविति" नारदोक्तेश्च। यत्तु "अविद्धापि च विद्धा स्यादिति" पाद्मं तत्तु द्वाधिकापरम्। यत्तु "संपूर्णैकादशी त्याज्या परतो द्वादशी यदि। उपोष्या द्वादशी शुद्धा द्वादश्यामेव पारणम्" इत्यादि तद्वैष्णवपरम्। स्मार्त्तानां तु पूर्व्वैवेत्युक्तम्। विद्धन्यूना समद्वादशिका तु शुद्धन्यूना शुद्धसमा च परा अन्येषां तु पूर्व्वा। शुद्धसमाऽपि पूर्व्वेति मदनरत्ने। विद्धसमा समद्वादशिकोनद्वादशिका च हलभृद्भिः पराऽन्यैः पूर्व्वा कार्य्या। "दशमी मिश्रिता पूर्व्वा द्वादशी यदि लुप्यते। शुद्धैव द्वादशी राजनुपोष्या मोक्षकाङ्क्षिभिरिति" व्यासोक्तेः मोक्षकाङ्क्षिपक्षादन्येषां पूर्व्वैव। "पारणाहे न लभ्येत द्वादशी कलयापि चेत्। तदानीं दशमीविद्धाप्युपोष्यैकादशी तिथिरिति" स्मृत्यन्तरोक्तेश्च। विद्धाधिका समद्वादशिका च सर्व्वेषां परैव गृहस्थमते त्वत्र गृहिणः पूर्व्वा यतेरुत्तरा "सर्व्वैकादशी कार्य्या द्वादशीमिश्रिता नरैः। प्रातर्भवतु वा मा वा यतो नित्यमुपोषणमिति" पाद्मोक्तेः। विद्धाधिका न्यूनद्वादशिका मोक्षपरैः विष्णुप्रीतिकामैः परा कार्य्या गृहस्थेन तु नक्तं कार्य्यम् "एकादशी द्वादशी च रात्रिशेषे त्रयोदशी। उपवासं न कुर्व्वीत पुत्रपौत्रसमन्वित" इति कौर्म्मे गृहस्थे उपवासनिषेधात्। "दशम्यैकादशी विद्धा द्वादशी च क्षयं गता। क्षीणा सा द्वादशी ज्ञेया नक्तं तु गृहिणः स्मृतमिति" हयशीर्षोक्तेश्च गृहिणः पूर्व्वत्रोपवासः। एकादश्याः शुद्धन्यूनत्वे शुद्धसमत्वे वा द्वादश्या न्यूनत्वे त्रयोरेकादश्यामुपवासः। यानि तु "दशम्यनुगता हन्ति द्वादशद्वादशीफलम्। धर्म्मापत्यधनायूंषि त्रयोदश्यां तु पारणमिति" कौर्म्मादीनि दशमीवेधत्रयोदशीपारणयोर्निषेधकानि तानि विहितभिन्नपराणि, अत्र मूलवचनानि तद्व्यवस्था चाकरे ज्ञेया। यत्तु कालहेमाद्रौ "बहुवाक्यविरोधेन सन्देहो जायते यदा। द्वादशी तु तदा ग्राह्या त्रयोदश्यां तु पारणमिति" मार्कण्डेयोक्तेः "सन्दिग्धेषु च वाक्येषु द्वादशीं समुपोषयेत्। विवादेषु च सर्व्वेषु द्वादश्यां समुपोषणम्। पारणं च त्रयोदश्यामाज्ञेयं पा-

षष्ठी शुभे !" इति पाद्मोक्तेश्च वेधसन्देहे ज्योतिर्विदां विप्रतिपत्तौ वा परा कार्य्येत्युक्तम् । तदवैष्णवविषयम्"

"अथात्रोपयुक्तं किञ्चिदुच्यते । तत्र दशम्यामेकादशीयोगे दशमीमध्य एव भोजनम् । "एकादश्यां न भुञ्जीतेति" तस्या एव निमित्तत्वात्, "निषेधस्तु निवृत्त्यात्मा कालमात्रमपेक्षते" इति देवलोक्तेश्च । केचित्तु एकादशीव्रताङ्गत्वेन पूर्व्वद्युरेकभक्तविधानाद्विधिस्पृष्टे च विषये निषेधानवकाशेन काम्यव्रताङ्गे न भोजननिषेधः प्रवर्त्तते तेनैकादशीमध्येऽपि पूर्व्वदिने भोजनमित्याहुः" निर्ण०सि०। तत्रैकादशीदिवसे श्राद्धप्राप्तौ विशेषः नि०सि० उक्तः

माधवीये "उपवासो यदा नित्यः" इत्यादि प्रागुक्तकात्यायनवाक्यमाश्रित्य उपवासदिनेऽन्यं कृत्वा श्राद्धशेषमाघ्रेयं कार्य्यमिति व्यवस्थाप्योक्तम् । "हेमाद्र्यादिसर्व्वनिबन्धेष्वयम् । एतेनैकादशीनिमित्तकं श्राद्धं द्वादश्यां कार्य्यमिति" वदन्तः परास्ताः किन्तु, महाभारते । "स पक्षः सकलः पूज्यः श्राद्धषोडशकं प्रतीति, श्रुतं षोडशत्वम् । पौर्णमास्यां च मघादिश्राद्धं, छायापरित्यागे च एकादश्यां विहितं श्राद्धं बाधितमेव स्यात् । यदपि स्मृतिचन्द्रिकायां पठन्ति । "अतोऽस्त्रितानि पापानि नन्नोक्तो दोषतरेव वा । मज्जन्ति पितरस्तस्य नरके शाश्वतीः समा" इति । तस्यापि रागप्राप्तभुजिगोचरस्य वैधं श्राद्धगोचरयतां यदस्थापकमित्युक्तम् । योऽपि "अकृतश्राद्धनिचया जन्मपिण्डविनाशकाः" इति बृहन्नारदीये एकादश्यां श्राद्धादिनिषेधः स मातापितृभिन्नविषयः पूर्व्ववाक्ये तदुपक्रमात्"

हरिभक्तिविलासानुसारिणस्तु वैष्णवदीक्षावतां तद्दिने श्राद्धनिषेधः द्वादश्यां तत् करणीयमिति वदन्ति यथा "अथोपवासदिने श्राद्धनिषेधः । पाद्मे पुष्करखण्डे "एकादश्यां यदा राम ! श्राद्धं नैमित्तिकं भवेत् । तद्दिनं तु परित्यज्य द्वादश्यां श्राद्धमाचरेत्" । तत्रैवोत्तरखण्डे "एकादश्यान्तु प्राप्तायां मातापित्रोर्मृताहनि । द्वादश्यां तत् प्रदातव्यं नोपवासदिने क्वचित् । गर्हितान्नं नचाश्नन्ति पितरश्च दिवौकसः" । स्कान्दे "एकादशी यदा नित्या श्राद्धं नैमित्तिकं भवेत् । उपवासं तदा कुर्य्यात् द्वादश्यां श्राद्धमाचरेत्" । ब्रह्मवैवर्त्ते । "ये कुर्व्वन्ति महीपाल ! श्राद्धं त्वेकादशीदिने । त्रयस्ते नरकं यान्ति दाता भोक्ता परेतकः" । हरिभक्ति० धृतवाक्यानि ।

"एकादश्यां यदा रामेत्यादिना उपवासदिने श्राद्धं निषिद्धम् । यत्र स्कान्दादौ "श्राद्धदिनं समासाद्य उपवासो यदा भवेत् । तदा कृत्वा तु वै श्राद्धं भुक्तशेषन्तु वर्ज्जयेत् । तत् सर्व्वं दक्षिणे पाणौ गृहीत्वाघ्राय शिखिध्वज ! । आघ्रातमेव तेनास्य भवेत् श्राद्धं शिखिध्वज ! । पितॄणां तृप्तिदं तात ! व्रतभङ्गो न विद्यते" इत्यादि । तत्र वैष्णवेतरविषयं मन्तव्यम् वैष्णवपितॄणामपि श्रीविष्णुदिने श्राद्धभक्षणायोगादिति" तट्टीका ।

अत्रेदं बोध्यं स्मृतिचन्द्रिकास्थवचनेन हरिभक्तिविलासधृतवचनचतुष्टयेन च उपवासदिने श्राद्धनिषेधात् प्रागुक्तकात्यायनस्कान्दादिवचनेन श्राद्धशेषभोजनाघ्राणेऽपि आघ्राणमात्राङ्गतया श्राद्धविधानात् परस्परं विरोधवयोर्व्विरोधपरिहाराय कर्म्मभेदविषयकत्वमवश्यं कल्पनीयं तद्विना तदपरिहारात् तत्र वैष्णवेतरविषयतया आघ्राणाङ्गश्राद्धस्य, वैष्णवविषयकतया च श्राद्धनिषेधस्य कल्पनं युक्तं न च विनिगमनाविरहेण वैपरीत्यं शङ्कनीयं वैष्णवस्य सत्त्वगुणाधिकविष्णोः प्रियकत्वेन सात्त्विकपुराणोक्तविधेरेव पाल्यतया सात्त्विकपुराणेषु च पाद्मस्य कीर्त्तनात् वैष्णवैः पाद्मोक्तविधेरेव पाल्यतौचित्येन स्कान्दस्य तामसत्वेन तदुक्तविधेस्तदितरैर्पाल्यतौचित्येन च विनिगमकासद्भावात् "पाद्मस्कान्दयोर्यथा सात्त्विकतामसत्वं तथोक्तम्" मात्स्यं कौर्म्मं तथा लैङ्गं शैवं स्कान्दं तथैव च । आग्नेयञ्च षडेतानि तामसानि निबोधत । वैष्णवं नारदीयञ्च तथा भागवतं शुभम् । गारुडञ्च तथा पाद्मं वाराहं शुभदर्शने । सात्त्विकानि पुराणानि विज्ञेयानि शुभानि षट्" पद्मपु० । एवञ्च सति पाद्मवाक्यस्य वैष्णवविषयकत्वनिश्चये स्कान्दकात्यायनादिवाक्यस्य तदितरविषयत्वं निर्णीयते । निर्णयसिन्धुकृता श्राद्धनिषेधवाक्यस्य मातापितृश्राद्धव्यतिरिक्तविषयकत्वं यत्कल्पितं तन्न मनोरमं पाद्मोक्तवाक्ये गर्हितान्नं न गृह्णन्ति पितर इति पितृमात्रस्यापकर्षोक्तेः सर्व्वश्राद्धस्यैव निषेधात् मातापित्रोर्मृताहगात्यादिपाद्मोत्तरवचने तयोरपि श्राद्धनिषेधात् । तेन कैमुतिकन्यायेनेतरश्राद्धस्यापि निषेधः सूपपन्न एव । किञ्च शेषभोजननिमित्तकाघ्रयोरुभयोश्चरकृतया वार्त्तानां शेषभोजनरूपाङ्गबाधः वैष्णवानां तु काकबाध इत्युभयोरपि एकतरबाधस्य शास्त्रबोधिततया न दूषकत्वम् । वार्त्तैरपि पक्षोदयादिनिमित्तकोपवासदिने श्राद्धं निषिध्य पश्चात् परेद्युः श्राद्धविधानेन काकरूपाङ्गबाधस्य तत्र स्वीकारात् तद्-

इत्यपि एकादश्युपवासदिनस्य विहिताहरूपकालबाधेनो-त्तरदिने श्राद्धविधानेनावैयर्थ्यम् । तथा च "अस्तोदये यदा चन्द्रे प्रत्यब्दं समुपस्थितम् । तद्दिने चोपवासः स्यात् प्रत्यब्दं तु परेऽहनि" "अस्तावेशास्तमानं तु रवीन्दू प्राप्नुतो यदि । प्रत्यब्दं तु तदा कार्य्यं परेऽहन्येव सर्व्वदा" नि० सि० धृतवचनैः निमित्तकालबाधेनापरेद्युः श्राद्धकालः । एतेन एकादशीव्रतदिवसे श्राद्धनिषेधे विप्रपतितश्राद्धस्य कृष्णैकादश्यां विधानम् अश्वयुक्कृष्णपक्षनिमित्तकषोडश-श्राद्धविधानञ्च निर्विषयं स्यादित्यापत्तिरपास्ता विषयभेदेन व्यवस्थासम्भवात् । तथाहि विप्रपतितश्राद्धे श्रा-द्धकालव्याप्त्यैकादशीतिथिमात्रस्य निमित्तता तस्य व्रत-दिवसात् पूर्व्वेद्युरपि कदाचित् सम्भवेन तद्रूपविषय-लाभेन निर्विषयत्वाभावात् क्वचिदेकदिने तत्प्रसक्तावपि सामान्यशास्त्रेण प्रवृत्तशास्त्रस्य उपवासदिनव्यतिरिक्ततिथि-खण्डविषयकत्वकल्पनेनाविरोधः । किञ्चात्र कर्त्तृभेदेन-व्यवस्थाप्युपपद्यते वैष्णवेतरसपुत्रगृहस्थस्य कृष्णैकाद-श्युपवासस्य नित्यत्वाभावेन तत्परं श्राद्धविधानं, वैष्णव-विषयः श्राद्धनिषेध इति कर्त्तृभेदसम्भवात् । अश्वयु-क्कृष्णपक्षनिमित्तकषोडशश्राद्धविधानमपि न निर्विषयं तिथिह्रासादिवशादेकस्यावनदिवसे तत्रविहितश्राद्धद्वय-वत् वैष्णवैः द्वादश्यां श्राद्धद्वयकरणेन षोडशसंख्या-पूर्त्तिसम्भवात् । पौर्णमास्याद्युपमन्वादिनिमित्तकश्राद्ध-स्यापि नैमित्तिकतया मन्वादिकृत्यत्वेन पूर्व्वाह्णे विहि-तत्वेन उपवासदिन एव तत्कालस्यैव लाभसम्भवेन पूर्व्व-दिवसे च तदसम्भवेन विरोधप्रसङ्गेऽपि वैष्णवानां द्वाद-श्यामेव कृताहश्राद्धस्येव तस्य कर्त्तव्यता वैष्णवेतरगृहस्थस्य तद्दिने कर्त्तव्यतेति कर्त्तृभेदात् व्यवस्थाया नानुपपत्तिः ।

पाद्मे नैमित्तिकमित्युक्तेः सम्यगेवम् परेतक इत्युक्तेश्च आद्यश्राद्धमपि एकादश्युपवासदिवसे वैष्णवैर्न कर्त्तव्यमेव । "एकोद्दिष्टं तु यत् श्राद्धं तन्नैमित्तिकमु-च्यते । तदप्यदैवविकं कार्य्यमयुग्मानाशयेद् द्विजान्" इति भविष्य पु० एकोद्दिष्टस्य नैमित्तिकत्वेन परिभाषितत्वात् प्रेतोद्देशकश्राद्धस्य च एकोद्दिष्टत्वात् तस्यापि तद्दिने निषेध एव प्रेतश्राद्धस्य यथैकोद्दिष्टत्वं तथैकोद्दिष्टशब्दे वक्ष्यते इत्थं स्मार्त्तवैष्णवकर्त्तृभेदात् व्यवस्थाभेदः ।

**एकादशगुरु** पु० एकदशमिता गुरवः । "आचार्य्यश्च पिता ज्येष्ठो भ्राता चैव महीपतिः । मातुलः श्वशुरस्त्राता मातामहपितामहौ । वर्णज्येष्ठः पितृव्यश्च पुंस्येते गुरवो मताः" इति देवलोक्तेषु आचार्य्यादिषु । त्राता त्राणकर्त्ता । वर्णज्येष्ठः क्षत्रियादीनां ब्राह्मणादिः । "अनेनैकादश गुरवःसङ्केतिताः । कथमनेकेषामेकगुरुशब्द वाच्यत्वमेकस्य प्रवृत्तिनिमित्तस्याभावात् इति चेन्न "गुरुरनुगन्तव्यः" इत्यादि श्रुत्या सदापरितोषणीयत्वादि धर्म्मात्मकस्योपाधित्वात् यद्यप्याचार्य्यस्यैव परितोषणी-यता श्रूयते तथापि तदन्येष्वतिदिश्यते अतोऽतिदिष्टध-र्म्मोऽप्येकपदप्रवृत्तावुपाधिर्भवति इष्टिशब्दप्रवृत्ताविव तद्धर्म्मसंबन्धः शास्त्रीयगुरुपदप्रवृत्तिविषयत्वं सोपाधिर्भव तु विशेषापशादशादिशब्दवदनेकार्थतैव कोदोषः" प्रा० वि० । अयञ्च शब्द एकादशिन्शब्दात् पूर्व्वं बोध्यः प्रमादात्तत्र न लिखितोऽतोऽत्र लिखितः ।

**एकादशराशिक** न० एकादश राशीनधिकृत्य प्रवृत्तं गणनम् कन् । लीलावत्युक्ते गणनप्रकारभेदे तत्प्रकारश्च तत्रैव यथा "पञ्चसप्तनवराशिकादिकेऽन्योन्यपक्षनयनं फल-च्छिदाम् । संविधाय बहुराशिजे वधे स्वल्पराशिवध-भाजिते फलम्" इत्युक्तदिशा फलानयनम् । तत्रोदा० "विस्तृते ऽर्कमिताङ्गुलाः किल चतुर्व्वर्गाङ्गुला विस्तृतौ

वि० १२ ८ पट्टा दीर्घतया चतुर्द्दश कराखिंशन्मिताः"

वि० १६ १२ "एता विस्तृतिदैर्घ्यपिण्डमितयो येषां

दी० १४ १० चतुर्व्वर्जिताः" इति नवराशिके उक्ता ।

मि० २० १४

"पट्टाव प्रथमोदितप्रमितयोगव्यूतिमाप्ता मतास्तेषा-

वि० १२ ८ मानयनाय चेच्छकटिनां द्रम्माष्टकं भाट-

वि० १६ १२ कम् । अन्ये ये तदनन्तरं निगदितामाने

दी० १४ १० चतुर्व्वर्जितास्तेषां का भवतीति भाटक-

मि० २० १४ मितिर्गव्यूतिषट्के वद" । अत्र फलस्येतर-

ग० १ ६ पक्षनयने तस्य बहुराशिकत्वं तद्रहितपक्षस्य

भा० ८ ० स्वल्पराशिता तेन समानाङ्केनोभयपक्षयो-

रपवर्त्तने फलसहितबहुराशिपक्षस्याङ्कस्य परस्परगुणने जाताः ४८ अङ्काः फलरहितपक्षाङ्कानां परस्परघातनिष्पन्नेन ६ षडङ्केन भाजिते लब्धाः ८ अष्टौ अङ्कास्तेन अष्ट द्रम्मा-स्तत्र भाटकमितिरिति तत्र निश्चयः । अत्रेदमवधेयम् फल-च्छिदामित्युक्तावपि फलच्छेदभिन्नराशिच्छेदस्यैव अन्योन्य-पक्षनयनम् न तु फलच्छेदस्येति । अयञ्च शब्दः एकादशद्वार-शब्दात् परं बोध्यः प्रमादात्तत्र न लिखितोऽतोऽत्रोक्तः ।

**एकादि** त्रि० एक आदिर्यस्य । १एकत्वसंख्यान्वितमारभ्य परार्द्धान्तसंख्यायुक्ते । २तत्स्थारके रेखासन्निवेशविशेषरूपे-

मोदादीन् गणाधिपान् । लोकानूर्मीन् रसान् शक्तीर्डाकिन्याद्याः षडध्वनः । षट्कं षड्गुणितं शक्तेः षडाधारानजीजनत् । षड्विधं यच्चान्यच्चापि सर्वन्तु परमेश्वरी६ । सप्तधा गुणिता नित्या सप्तर्षीन् शरीरिणी । सप्तार्णं त्रिपुरामन्त्रं सप्तवर्णं विनायकम् । सप्तकं व्याहृतीनां सा सप्तवर्षं सुदर्शनम् । लोकानद्रीन् स्वरान् धातून् मुनीन् द्वीपान् ग्रहानपि । समिधः सप्त संख्याताः सप्तजिह्वा हविर्भुजः । अन्यत् सप्तविधं यद्यत्तदस्याः समजायत७ । अष्टधा गुणिता शक्तिः शैवमष्टाक्षरद्वयम् । गन्धाष्टकं शुभं देवीदेवानां हृदयक्रमम् । ब्राह्म्याद्या भैरवान् सर्वान् मूर्त्तीरीशोर्वसूनपि । अष्टपीठं महादेव्या अष्टाष्टकसमन्वितम् । अष्टौ सा शक्तीर्विप्रान् वक्रतुण्डादिकान् क्रमात् । अणिमादिगुणाख्यानान् चक्रे मूर्त्तीर्वसादिकान् । अष्टात्मकं जगत्सर्वं विततुते सदा ८ । गुणिता नवधा नित्या सूते सर्वं नवात्मकम् । नवकं शक्तितत्त्वानां तत्त्वरूपा महेश्वरी । नवकं पीठशक्तीनां मह्वारादीन् रसानपि । माणिक्यादीनि रत्नानि नववर्णयुतानि सा । नवकं प्राकृतीनां नवकं नवकं शुभम् । यद्यन्नवात्मकं लोके सर्वमस्मादभूत ९ । दशधा गुणिता धर्माभिमानिनी भवत्स्वहा । दशकं शक्तितत्त्वानां तत्त्वरूपा महेश्वरी । नाडीनां दशकं विष्णोरवतारान् दश क्रमात् । दशकं लोकपालानां वह्न्यन्तकस्वरूपिणी१० । एकादश क्रमात् सेयं गुणिता सा जगन्मयी । रुद्रैकादशनामाद्या शक्तेरैकादशाक्षरम्११ । सप्ताक्षरेति सर्वात्मा गुणिता द्वादश क्रमात् । राशीन् मासान् हरेर्मूर्त्तीर्मन्त्रं सा द्वादशात्मकम् । अन्यदेतादृशं सर्वं यत् तदस्याव्यजायत" ।

अत्र च यो यः पदार्थः यद्यत्संख्यान्विततया उत्पन्नः स स तत्तत्संख्यात्मकः भवति च निदर्शित पदार्थानां तत्तत्संख्यायुक्ततया लोकशास्त्रप्रसिद्धिः इत्यत तत्तच्छब्दानां तत्तत्संख्याबोधकत्वम् । तथाचैकविधसंख्यागुणितप्रकृतिकार्य्यत्वेन तत्तत्संख्याबोधकत्वम् । अन्येऽपि केचित् संख्याविशेषसूचकाः भा० व० १३४ अ० दर्शिता यथा । "बन्दुवाच । एक एवाग्निर्बहुधा समिध्यते एकः सूर्यः सर्वमिदं विभाति । एको वीरो देवराजोऽरिहन्ता यमः पितॄणामीश्वरश्चैक एव१ । अष्टावक्र उवाच । द्वाविन्द्राग्नी चरतो वै सखायौ द्वौ देवर्षी नारदपर्वतौ च । द्वावश्विनौ द्वे रथस्यापि चक्रे भार्यापती द्वौ विहितौ विधात्रा२ । बन्दुवाच । त्रिः सूयते कर्मणा वै प्रजेयं त्रयो युक्ता वाजपेयं वहन्ति । अध्वर्यवस्त्रिसवनानि तन्वते त्रयो लोकास्त्रीणि ज्योतींषि चाहुः३ । अष्टावक्र उवाच । चतुष्टयं ब्राह्मणानां निकेतं चत्वारो वर्णा यज्ञमिमं वहन्ति । दिशश्चतस्रो वर्णचतुष्टयञ्च चतुष्पदा गौरपि शश्वदुक्ता४ । बन्दुवाच । पञ्चाग्नयः पञ्चपदा च पङ्क्तिर्यज्ञाः पञ्चैवाप्यथ पञ्चेन्द्रियाणि । दृष्टा वेदे पञ्चचूडाप्सराश्च लोके ख्यातं पञ्चनदञ्च पुण्यम्५ । अष्टावक्र उवाच । षडाधाने दक्षिणामाहुरेके षड् वै चेमे ऋतवः कालचक्रम् । षडिन्द्रियाण्युत षट् कृत्तिकाश्च षट् साद्यस्काः सर्ववेदेषु दृष्टाः६ । बन्दुवाच । सप्त ग्राम्याः पशवः सप्त वन्याः सप्त च्छन्दांसि क्रतुमेकं वहन्ति । सप्तर्षयः सप्त चाप्यर्हणानि सप्ततन्त्री प्रथिता चैव वीणा७ । अष्टावक्र उवाच । अष्टौ शाणाः शतमानं वहन्ति तथाष्टपादः शरभः सिंहघाती । अष्टौ वसून् शुश्रुम देवतासु यूपश्चाष्टाश्रिर्विहितः सर्वयज्ञे८ । बन्दुवाच । नवैवोक्ताः सामिधेन्यः पितॄणां तथा प्राहुर्नवयोगं विसर्गम् । नवाक्षरा बृहती संप्रदिष्टा नवाङ्कयोगो गणनामेति शश्वत्९ । अष्टावक्र उवाच । दिशो दशोक्ताः पुरुषस्य लोके सहस्रमाहुर्दश पूर्णं शतानि । दशैव मासान् बिभ्रति गर्भवत्यो दशेरका दश दाशा दशार्हाः१० । बन्दुवाच । एकादशैकादशिनः पशूनामेकादशैवात्र भवन्ति यूपाः । एकादश प्राणभृतां विकारा एकादशोक्ता दिवि देवेषु रुद्राः ११ । अष्टावक्र उवाच । संवत्सरं द्वादशमासमाहुर्जगत्याः पादो द्वादशैवाक्षराणि । द्वादशाहः प्राकृतयज्ञ उक्तो द्वादशादित्यान् कथयन्तीह धीराः १२ । बन्दुवाच । त्रयोदशी तिथिरुक्ता प्रशस्ता त्रयोदशद्वीपवती मही च । लोमश उवाच । एतावदुक्त्वा विरराम बन्दी श्लोकस्यार्द्धं व्याजहाराष्टवक्रः । अष्टावक्र उवाच । त्रयोदशाहानि ससार केशी त्रयोदशादीन्यतिच्छन्दांसि चाहुः" १३ अस्य नीलकण्ठोक्तदिशा व्याख्या यथा एकोऽग्निः सूर्यो वा इतराप्रकाश्योऽन्यप्रकाशकश्च । एवं देवानामिन्द्रियाणां राजा प्रधानभूतः अरिहन्ता पराभिभूततत्त्वान्तराभिभावकः। यमः सर्वेन्द्रियाणां नियन्ता पितॄणां विषयोपहारद्वारा पालयितॄणामिन्द्रियाणाम् ईश्वरो भोक्ता कर्त्ता प्रधानभूत एक एव १। सखायौ सयोगिनौ जीवेश्वरौ वा । २ पुण्येन देवस्थावरमनुष्यरूपं, पापेन नारकस्थावरतिर्यग्यो-

रत्वे चतुष्टस्य बोधकतेति भेदः । प्रेतराजपरकालशब्द-
स्यापि तथात्वम् । तस्य समयपरत्वे त्रित्वस्य, शिवपरत्वे
आर्द्राधिपत्वञ्च षट्कस्येति भेदः । अत्युक्था द्व्यक्षरपा-
दत्वात्तथा । शकटांशभेदार्थकयुगशब्दस्तथा तस्य शकटादौ
द्वित्वसंख्यकतयैव योजनात् । एवं द्वन्द्वार्थकयुगशब्दोऽपि ।
अयनशब्दोऽपि तथा वर्षे तदर्थयोर्द्वयोरेव घटकत्वात् ।
पर्वसन्धिः चान्द्रमासे तयोर्द्वित्वात् । शब्दः ध्वन्यात्मक-
वर्णात्मकरूपः, अदृष्टम् पुण्यापुण्यरूपम्, शब्दशक्तिः
अभिधालक्षणारूपा, बुद्धिः अनुभवस्मृतिरूपा, गन्धः
सुरभिदुर्गन्धरूपः, ध्वनिधर्म्मः तारत्वमन्द्रत्वात्मकः, स्पर्शः
उष्णानुष्णात्मकः, मृदुत्वकाठिन्यात्मको वा, अभावः, संस-
र्गाभावभेदात्मकश्च द्वित्वस्य बोधकः । सामान्यं व्याप्य-
व्यापकात्मकम्, क्रिया सिद्धसाध्यात्मिका वेदान्तिमते पदा-
र्थः चिज्जडरूपः द्रष्टृदृश्यरूपो वा आर्हतमते जीवाजीव-
रूपो वा न्यायमते भावाभावरूपो वा, परिमाणम्
वेदान्तिमते अणुत्वमहत्त्वरूपं च द्वित्वात्तथा । वैशेषिकमते
तु अणुमहत्त्वह्रस्वदीर्घत्वरूपं चतुष्कात् चतुष्कस्य
तथेति भेदः । पदम् सुबन्ततिङन्तरूपत्वात्, धात्वर्थः
फलव्यापाररूपत्वात् तथा । प्रयोजनं मोक्षसुखरूपत्वा-
त्तथा । न्यायमते व्याप्तिः अन्वयव्यतिरेकरूपत्वात्तथा ।

वेदान्त्यादिमते व्यतिरेकव्याप्तेरभावात् तस्याः एक-
त्वादेकत्वस्येति भेदः । संयोगः कर्म्मजसंयोगजात्मकः,
विभागः कर्म्मजविभागजात्मकश्च द्वित्वात् तथा । नाटक-
प्रस्तावस्तु आधिकारिकप्रासङ्गिकरूपं द्वित्वात् तथा ।
काव्यम् दृश्यश्राव्यरूपं द्वित्वात् तथा मतान्तरभेदपरत्वे
ध्वन्यादिपरत्वात् त्रित्वस्येति भेदः । गुरुत्ववद्द्रव्यम् रस-
वद्द्रव्यञ्च क्षितिजलात्मकत्वात्तथा । नैमित्तिकद्रववद्द्रव्यं
क्षितितेजोरूपत्वात्तथा । समाधिः सविकल्पनिर्विकल्पा-
त्मकः सवीजनिर्वीजात्मकः संप्रज्ञातासंप्रज्ञातात्मको वा
द्वित्वात्तथा । समापत्तिः सविचारनिर्विचारात्मिका
द्वित्वात् तथा । परमुक्तिर्विदेहकैवल्यात्मिका द्वित्वा-
त्तथा । सालोक्यादिपरत्वे चतुष्कस्येति भेदः । समाधि-
प्रज्ञा ज्योतिष्मत्यृतम्भरात्मिका द्वित्वात्तथा । कर्म्मकारकं
मुख्यगौणात्मकं द्वित्वात्तथा । कर्तृकारकं स्वातन्त्र्यप्रयो-
जकरूपं, सम्प्रदानकारकं प्रेरकानुमन्तृरूपञ्च द्वित्वात्तथा ।
प्रत्यक्षं लौकिकालौकिकात्मकतया द्वित्वात् तथा मतान्तरप्र-
त्यक्षपरत्वे षट्त्वस्येति भेदः । ज्ञानं सविकल्पकनिर्वि-
कल्पकात्मकं तथा । अनुमानं स्वार्थपरार्थात्मकं अनु-
मानफलं तत्त्वनिर्णयविजयरूपं तथा । ब्रह्म सगुणनिर्गुण
रूपम्, जीववादः एकानेकविषयात्मकः वेदान्तिमते ज्ञानं
वृत्त्यवच्छिन्नचैतन्यात्मकम् जीवभेदकः अवच्छेद
प्रतिबिम्बरूपश्च द्वित्वात् तथा । कर्म्म शुक्लकृष्णात्म पु-
ण्यापुण्यसाधनम् विहितनिषिद्धरूपं, धर्म्मः प्रवृत्ति
निवृत्तिलक्षणः वेदमेव सिद्धसाध्यरूपं, प्रयागः पश्चि-
मदक्षिणरूपः, वेदान्तिमते अविद्या कार्य्यकारणरूपा
तूलाविद्यामूलाविद्यात्मिका द्वित्वात्तथा । काञ्चिः
विष्णुशिवकाञ्चिरूपत्वात् तथा । आगमरूपप्रमाणशब्दः
दृष्टादृष्टार्थकत्वात्तथा उदाहरणं साधर्म्म्यवैधर्म्म्यकृतम्, शृङ्गारः
विप्रलम्भसंभोगात्मकः, मानश्च प्रणयेर्ष्याजातः द्वित्वात्तथा

२ त्रित्वबोधकाः कवि० कं० उक्ताः । कालः भूत-
भविष्यद्वर्त्तमानरूपत्वात्, अग्निः दक्षिणाग्निगार्हपत्याह-
वनीयरूपत्वात्, लोकः स्वर्गमर्त्यपातालरूपत्वात्, ग-
ङ्गावर्त्म त्रिलोकस्थत्वात्, शिवनेत्रम् सूर्य्येन्दुवह्निरूप-
त्वात्, गुणः सत्त्वरजस्तमोरूपत्वात् तथा । नीतिशास्त्रप्र-
सिद्धगुणपरत्वे षट्कस्य, द्रव्यधर्म्मभेदपरत्वे चतुर्विंशति
त्वस्य बोधकइति भेद । ग्रीवारेखा, कालिदासकृतकाव्यं कुमा-
ररघुवंशमेघदूतरूपत्वात्, त्रिशूलशिखा, देहोदराधःस्थल-
वलितमांसरूपवलिश्च त्रित्वात् तथा । प्रातर्मध्यसायाह्नरूप
सन्ध्यानां, त्रिपुरासुरस्वर्गादिस्थपुराणां, शरतिथिनक्ष-
त्रभेदात्मकज्योतिषोक्तपुष्करदोषाणाम्, परशुरामदाशरथि-
बलभद्रात्मकरामाणां, त्रिलोकव्यापिवामनरूपविष्णुपदानां,
बाल्ययौवनजरारूपवयसाञ्च त्रित्वात् तथा । शा०
ति० उक्ताः । सूर्य्येन्दुवह्निरूपधाम्नाम्, ऋग्यजुःसामरूप-
त्रय्यात्मकवेदानां त्रित्वात् तथात्वम् । अथर्ववेदसहितत्र-
योपरत्वे तु चतुष्टयस्य बोधकतेति भेदः । प्रणववर्णानाम्
अकारोकारमकाररूपाणाम्, उदात्तानुदात्तस्वरितरूपस्व-
राणाञ्च त्रित्वात् तथा । स्वरस्य षड्जादिपरत्वे सप्त-
कस्य अज्वर्णपरत्वे षोडशत्वस्येति भेदः । देवीनां
गायत्रीसावित्रीसरस्वतीरूपाणां, ब्रह्मविष्णुशिवरूपेश्वर-
मूर्त्तीनाञ्च त्रित्वात् तथा । कृषिपाशुपाल्यवाणिज्यरूपा
याजनाध्यापनप्रतिग्रहरूपा वा आजीविकात्मिका वृत्ति-
स्तथा मनोवृत्तिपरत्वे चतुष्कस्य, प्रमाणादिवृत्तिपरत्वे
पञ्चकस्य, शब्दनिष्ठबोधनाशक्तिरूपवृत्तिपरत्वे आल-
ङ्कारिकमते त्रित्वस्य, अन्यमते द्वित्वस्य, वाचक-
शब्दभेदपरत्वे तद्धितादिपञ्चत्वस्येति भेदः । ज्येष्ठारौद्री
वामारूपा, ज्ञानेच्छाक्रियारूपा वा प्रभावोत्साह-

मनादेश, चतुष्टात् तथा । अश्वगजरथपदातिपरत्वे चतुरङ्गबलात्मक इति भेदः । चतुर्भुजविष्णुबाहुशब्दोऽपि तथा । स्वर्गहस्तिनामैरावतादीनां चतुर्दन्तानामुत्तरं दन्तशब्दस्तथा । हस्त्यश्वरथपादातरूपसेनाङ्गम्, उपायः सामदानभेददण्डरूपः, दिनरात्रयोश्चतुर्थांशरूपयामशब्दश्च तथा । युगं सत्यत्रेताद्वापरकलिरूपं तथा शकटांशविशेषपरत्वे हस्तपरत्वे च द्वित्वबोधकमिति । आश्रमः ब्रह्मचर्यगार्हस्थ्यवानप्रस्थसंन्यासरूपस्तथा । शा० ति० उक्ताः । तत्त्वम् आत्मविद्याशिवतत्त्वरूपम् प्रधानादितत्त्वपरत्वे चतुर्विंशतिसंख्याबोधकमिति भेदः । मनोवृत्तिः संशयनिश्चयगर्वाभिमानरूपा तथा । वाग्वृत्तिः परापश्यन्तीमध्यमावैखरीरूपा तथा । अर्थबोधनशक्तिविशेषपरत्वे द्वित्वस्य त्रित्वस्य वा मतभेदेन बोधिकेति भेदः । भावः वेदान्तिमते जाग्रत्स्वप्नसुषुप्तितुरीयरूपस्तथा । सांख्यमते तु धर्माद्यष्टपरत्वेनाष्टत्वबोधकः वैशेषिकमते षट्त्वस्येति भेदः । विष्णुमूर्त्तिः वासुदेवानिरुद्धसंकर्षणप्रद्युम्नरूपा तथा । यन्त्रादिचतुरस्रविन्यासभेदकृता तन्मूर्त्तिस्तु चतुर्विंशतित्वस्य बोधिकेति भेदः । गणेशः "गणाधिपं गणेशानं तृतीयं गणनायकम् । गणक्रीडं पीतगौररक्तनीलवपुः क्रमात्" शा० ति० १४प० उक्तपीतादिवर्णयुक्तगणाधिपादिरूपस्तथा । आत्मादि आत्मान्तरात्मजीवात्मपरात्मरूपस्तथा । पीठशब्दः उड्डियानजालन्धरपूर्णगिरिकामार्थकः तथा । धर्मादि धर्मज्ञानैश्वर्यवैराग्यरूपम् अधर्मादि अधर्माज्ञानानैश्वर्यावैराग्यरूपञ्च तथा सांख्यमते धर्मादि अष्टत्वस्य बोधकमिति भेदः । ऋत्विग्गणः ब्रह्मादिरूपः, दिशः प्राच्यवाचीपश्चिमोत्तररूपा तथा । अवान्तरदिक्परत्वे अष्टत्वस्य दशत्वस्य वा बोधिका इति भेदः । ज्योतिःविश्वप्राज्ञात्मान्तर्यामिरूपम् । एवमन्येऽपि तथा रोहिणी राशिचक्रे तस्याश्चतुर्थत्वात् तद्भेदात् तद्विषयाऽपि तथा । प्रतिष्ठा तस्याश्चतुरक्षरपादकत्वात् तथा । कृतयुगार्थककृतशब्दः "चतुस्त्रिद्व्येकसंगुणा" सू० सि० उक्तेः "कृताद्युगप्रमाणस्य द्वादशांशस्य चतुर्गुणत्वात्तस्य तथात्वम् । सार्थकशब्दः नामाख्यातनिपातोपसर्गात्मकत्वात्, पुरुषार्थश्च धर्मार्थकाममोक्षरूपत्वात् तथा । नायकः धीरोदात्तधीरोद्धतधीरललितधीरप्रशान्तात्मकत्वात् दक्षिणधृष्टानुकूलशठात्मकत्वाद्वा तथा तेषां प्रत्येकमुभयधर्म्मत्वे षोडशभेदत्वात् षोडशत्वस्येति भेदः । काव्यरीतिः वैदर्भीगौडीपाञ्चालीलाटिकात्मिका चतुर्द्धा-

तथा । प्रलयः नित्यनैमित्तिक प्राकृतात्यन्तिकात्मकत्वात् तथा भगवद्भक्तः "चतुर्विधा भजन्ते माम्" इत्युपक्रम्य "आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च पुरुषर्षभ !" इति गीतोक्तेः चतुष्कत्वात् तथा । अभिनयः आङ्गिकवाचिकाहार्य्यसात्त्विकात्मकः चतुष्कत्वात् तथा । नायकादिव्यापारविशेषात्मकरीतिः कौशिकीसात्त्वत्यारभटीभारतीरूपा चतुष्कत्वात्तथा । कौशिक्यङ्गम् 'नर्म च नर्मस्फूर्जो नर्मस्फोटश्च नर्मगर्भश्च" इत्युक्तनर्मादिरूपं तथा । सात्त्वत्यङ्गम् ।"उत्थापकोऽथ संघात्यः संलापः परिवर्त्तकः । विशेषा इति चत्वारः सात्त्वत्याः परिकीर्त्तिताः" इत्युक्तोत्थापकादिरूपस्तथा । आरभट्यङ्गम् "वस्तूत्थापनसंफेटौ संक्षिप्तिरवपातनम् । इति भेदास्तु चत्वार आरभट्याः प्रकीर्त्तिताः" इत्युक्तवस्तूत्थापनादिरूपं तथा । अनेकाश्रितगुणः संयोगविभागद्वित्वादिसंख्याद्वित्वादिपृथक्त्वरूपः चतुर्द्धा तथा । आध्यात्मिकतुष्टिः "आध्यात्मिक्यश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः" सा० का० उक्तप्रकृत्यादिरूपा चतुर्द्धा तथा । चित्तपरिकर्मार्थभावना मैत्रीकरुणामुदितोपेक्षात्मिका चतुर्द्धा तथा । समाधिविघ्नः लयविक्षेपकषायरसास्वादात्मकः चतुष्कत्वात्तथा । संन्यासी कुटीचकबहूदकहंसपरमहंसात्मकस्तथा । अनुबन्धः विषयप्रयोजनसम्बन्धाधिकारिरूपस्तथा । ब्रह्मविविदिषासाधनम् इहामुत्रार्थफलभोगविरागनित्यानित्यवस्तुविवेकशमादि॰षट्कमुमुक्षारूपं तथा । कल्पितकर्मकारकम् । औदासीन्यप्राप्तानीप्सितकथितान्यपूर्वकरूपं तथा । बीजम् एकानेकवर्णसमीकरणमध्यमाहरणभावितात्मकं तथा । सङ्केतविषयः जातिद्रव्यगुणक्रियारूपस्तथा । द्रव्यारम्भकः परमाणुद्रव्यस्य क्षितिजलतेजोवायुरूपत्वात्तथा । अपरमुक्तिः सालोक्यसायुज्यसार्ष्टिसारूप्यात्मिका तथा । कार्योत्पत्तिप्रकारः असतः सदुत्पत्तिः सतोऽसदुत्पत्तिः सतोविवर्त्तः सतः सदुत्पत्तिश्चेति चतूरूपत्वात् तथा । वृद्धिः कायिकाकालिकाकारिताचक्रवृद्धिरूपा तथा । सिद्धान्तः सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थितिरूपः चतुर्द्धा तथा । वर्णोत्पत्तौ आभ्यन्तरप्रयत्नः स्पृष्टेषत्स्पृष्टविवृतसंवृतात्मकचतुष्कत्वात्तथा । विप्रलम्भः पूर्वरागमानप्रवासकरुणात्मकः चतुष्कत्वात्तथा ।

५ पञ्चत्वबोधकाः । कवि०क० युधिष्ठिरभीमार्जुननकुलसहदेवानाम् पाण्डुपुत्राणां, पञ्चाननशिवमुखानां, श्रोत्रत्वङ्नेत्ररसनघ्राणात्मकानां ज्ञानेन्द्रियाणाम्, वाक्पाणि-

पादपायूपस्थरूपाणां कर्मेन्द्रियाणां वा, सन्तानकल्पवृक्षमन्दारपारिजातहरिचन्दनानां देववृक्षाणां, सप्तानाम्नायादिवेदपदपार्थानां श्रमाणाम्, दक्षिणाग्निगार्हपत्याहवनीयान्वाहार्य्यपचनावसथ्यानां वह्नीनां, ब्रह्महत्यासुरापानब्राह्मणस्वामिकसुवर्णहरणगुर्वङ्गनागमनतत्संसर्गजानां पातकानाम्, क्षित्यप्तेजोमरुद्व्योमरूपाणां भूतानां, कुमाररघुवंशमाघकिरातनैषधाख्यानां महाकाव्यानां, होमस्वाध्यायपाठपितृतर्पणातिथिपूजनवैश्वदेवबलिरूपाणां गृहस्थकर्त्तव्यानां स्मार्त्तानाम्, अग्निहोत्रादीनां शो॰ब॰ प्रागदर्शितानां श्रौतानां वा यज्ञानां, सर्गप्रलयमन्वन्तरराजवंशतच्चरितरूपाणां पुराणलक्षणानाम्, प्राणापानसमानोदानव्यानरूपाणां देहस्थवायूनाम्, उत्क्षेपणावक्षेपणाकुञ्चनप्रसारणगमनात्मिकानां क्रियाणां, ज्ञानेन्द्रियविषयाणां शब्दस्पर्शरूपरसगन्धात्मकानां, कर्मेन्द्रियविषयाणां वचनादानगमनविसर्गानन्दात्मकानां वा पञ्चत्वात् तथा। शा॰ति॰ उक्ताः। नीलकहीरकपद्मरागप्रवालमौक्तिकरूपाणां स्थाप्यघटे देयानां रत्नानां पञ्चत्वस्य बोधकता वास्तुभूमावारोप्यरत्नानां कालिदासादिकवीनाञ्च नवत्वात् तत्परत्वे नवत्वस्य बोधकताप्ये वक्ष्यते। श्वेतगौररक्तहरितश्यामरूपाणां वर्णविशेषाणाम् पञ्चत्वात् तथा पाटलादिवर्णानां मिश्रणेनैव जातत्वात् न पृथग्वर्णता, वर्णशब्दस्य ब्राह्मणादिजातिपरत्वे चतुष्कस्य, अक्षरपरत्वे तन्त्रमते पञ्चाशल्लिपिभिर्विभक्तेत्याद्युक्तेः पञ्चाशत्त्वस्य, शिक्षामते "त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शम्भुमते मताः" इत्युक्तसंख्याबोधकत्वमिति भेदः। तत्पुरुषाघोरसद्योजातवामदेवेशानरूपाणां शिवमूर्त्तीनाम्, "सम्मोहनस्तापनश्च शोषणः स्तम्भनस्तथा। उन्मादनश्च कामस्य बाणाः पञ्च प्रकीर्त्तिताः" इत्युक्तानां कामबाणानाम् "निवृत्तिः सुप्रतिष्ठा स्यात् विद्या शान्तिस्ततः परम्। शान्त्यतीता कलाः पञ्च विज्ञेयाः" इति उक्तानां कलाविशेषाणाम्, ईशानमनोभवतत्पुरुषमकरध्वजाघोरकुमारतेजोवामदेवकन्दर्पसद्योजातकामदेवात्मकानाम् तन्त्रे उक्तानां कामदेवभेदानां च पञ्चत्वात्तथा। तत्पुरुषादिमन्त्ररूपाणां ब्रह्मणाञ्च पञ्चत्वात् तथा। भा॰व॰उक्ताः। प्रमाणविपर्य्ययविकल्पस्मृतिनिद्रारूपाणां वृत्तीनाम्, इन्द्रियवृत्तिरूपाणां स्रोतसाम्, "किरणा धूतपापा च पुण्यतोया सरस्वती। गङ्गा च यमुना चैव पञ्च नद्यः प्रकीर्त्तिताः" काशी॰ उक्तानां नदीनां वा पञ्चत्वात्तथा। पङ्क्तिः अक्षरपङ्क्तिसमपञ्चैकदेशसमाद्यन्तधातुरूपा, पल्लवः "आम्राश्वत्थवटप्लक्षयज्ञोडुम्बरपल्लवाः। पञ्चपल्लवमित्युक्तम्" इत्युक्तानां पल्लवानां पञ्चत्वात्तथा। मूलम् "बिल्वश्योनाकगाम्भारीपाटलागणिकारिका। पञ्चमूलमिति ख्यातम्" इत्युक्तबिल्वादिमूलानां पञ्चत्वात्तथा। कषायः "जम्बुशाल्मलिवाट्यालं कम्बुकं बदरं तथा। कषायाः पञ्च विज्ञेयाः" इत्युक्तजम्ब्वादीनां कषायाणां पञ्चत्वात् तथा। कोषः वेदान्तोक्तानामन्नप्राणमनोविज्ञानानन्दमयानां कोषाणां पञ्चत्वात्तथा। देहत्वक्परत्वे षट्कबोधकताप्ये वक्ष्यते। गव्यम् "पञ्चगव्यं दधि क्षीरं घृतगोमूत्रगोमयैः" इत्युक्तानां दध्यादीनां, पञ्चत्वात्तथा। तत्त्वम् "मद्यं मांसं तथा मत्स्यो मुद्रा मैथुनमेव च। पञ्चतत्त्वमिदं प्रोक्तम्" इत्युक्तमद्यादीनां पञ्चत्वात् तथा। वल्कलम् "न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलम्। पञ्चवल्कलमित्युक्तम्" इति न्यग्रोधादिवल्कलानां पञ्चत्वात् तथा। शस्यम् "धान्यं मुद्गास्तिला माषा यवाः शिम्बिकोऽपि वा। पञ्चशस्यमिति प्रोक्तम्" इत्युक्तानां धान्यादीनां पञ्चत्वात्तथा। सुगन्धिः कर्पूरकक्कोललवङ्गपुष्पगुवाकजातिफलरूपाणां सुगन्धिकानां पञ्चत्वात् तथा। सूना "पञ्च सूना गृहस्थस्य चुल्ली पेषण्युपस्करः। कण्डनी चोदकुम्भश्च" इत्युक्तचुल्ल्यादिरूपवध्यस्थानानां पञ्चत्वात् तथा। एकवृक्षाङ्गम् "त्वक् पत्रं कुसुमं मूलं फलञ्चैकस्य शाखिनः। एकवृक्षस्य तु पञ्चाङ्गम्" इत्युक्तानां एकस्य वृक्षस्य त्वगादीनां पञ्चत्वात् तथा। पुरश्चरणाङ्गम् "जपहोमौ तर्पणञ्चाभिषेको विप्रभोजनम्। पञ्चाङ्गोपासनं शास्त्रे पुरश्चरणमिष्यते" इत्युक्तानां जपादीनां पञ्चत्वात्तथा। अमृतम् "दुग्धं च शर्करा चैव घृतं दधि तथा मधु। पञ्चामृतमिदं प्रोक्तम्" इत्युक्तानां दुग्धादिरूपाणाममृततुल्यस्वादूनां पञ्चत्वात्तथा। नाट्योक्तिः-स्वगतप्रकाशापवारितजनान्तिकाकाशगतात्मिका पञ्चत्वात् तथा। अनुप्रासः छेकवृत्तिश्रुत्यन्त्यलाटानुप्रासात्मकः पञ्चत्वात् तथा। पञ्चलौहकम् "सुवर्णं रजतं ताम्रं रङ्गं नागं तथैव च। पञ्चलोहमिति प्रोक्तम्" इत्युक्तसुवर्णादिलौहानां पञ्चत्वात्तथा। लग्नपरा तस्याः राशिचक्रे पञ्चमत्वात्तथात्वम्। अभेदोपचारात्तद्विपञ्चन्द्रोऽपि तथा। सुप्रतिष्ठा तस्याः पञ्चाक्षरपादत्वात्तथा। तर्कः आत्माश्रयान्योन्याश्रयचक्रकानवस्थाप्रमाणबाधितार्थकप्रसङ्गरूपतया पञ्चत्वात्तथा। कार्य्यावस्था

षट्पिण्डक्रियां कृत्वा कुर्य्यादभ्युदयन्ततः" इति वृद्धहारीतोक्तेः न्यायानुपपत्तेः। भ्राता चेति चशब्दात् पूर्वेषां दौहित्रादीनां तदपेक्षया प्रधानाधिकारिणां समुच्चयः। अत एव सपिण्डत्वेनैव भ्रातृतत्पुत्रयोरधिकारसिद्धौ पृथगुपादानं प्राधान्यख्यापनार्थम्। पुत्रत्वातिदेशफलन्तु पुन्नामनरकनिस्तारः। अतस्तत्पक्षे क्षेत्रजाद्यकरणञ्च। तथाहि "पुन्नाम्नोनरकाद्यस्मात्त्रायते पितरं सुतः। सुखसन्दर्शनेनापि तदुत्पत्तौ यतेत सः" इति मनुवचने पुन्नामनरकत्राणाय पुत्रोत्पादनं विहितम्। तच्च फलं यद्यतिदिष्टपुत्राभ्यां भ्रातृसपत्नीजाभ्यां निष्पन्नं तदा किं इच्छाविरहात् तदुपायान्तरपुत्रप्रतिनिधीभूतक्षेत्रजादेर्नोपादानम्। पुत्रोत्पादनन्तु तथापि कार्य्यं पुत्रपक्षेऽपि पुत्रान्तरेच्छाविधानेन तत्कर्त्तव्यताप्रतीतेः यथा मत्स्यपुराणम्। "एष्टव्या बहवः पुत्रा यद्यप्येकोगयां व्रजेत्। यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत्"। एवमेव कल्पतरुपारिजातस्मृतिसारमहामहोपाध्यायरत्नाकरवाचस्पतिमिश्रादयः। स्त्रीणामपि पुत्रात् पुन्नामनरकनिस्तारणमाह रत्नाकरे यज्ञवल्क्यो "आत्मा पुत्र इति प्रोक्तः पितुर्मातुरनुग्रहात्। पुन्नाम्नस्त्रायते पुत्रस्तेनापि पुत्रसंज्ञितः"। पूर्वोक्तवृद्धहारीतवचने पुत्रेणेति तत्पक्षमात्रं विवक्षितम्। "सपिण्डीकरणान्तानाम् पुत्राभावे न विद्यते" इति मार्कण्डेयपुराणैकवाक्यत्वात्। "यानि पञ्चदशाद्यानि अपुत्रस्येतराणि च। एकस्यैव तु दातव्यमपुत्रायाश्च योषितः" इति छन्दोगपरिशिष्टेनापुत्राया एकाद्यपञ्चदशश्राद्धैः प्रेतत्वपरिहारोक्तत्वाच्च। एतत् पत्युरभावे द्रष्टव्यम्। "अपुत्रायां मृतायान्तु पतिः कुर्य्यात् सपिण्डनम्। श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणं भवेत्" इति पैठीनसिवचनात्। ततश्च यथा स्त्रियो पुत्रेऽन्येनापि सपिण्ड्यते। एवं पतिपक्षेऽपि। अतएव मैथिलैरविवरायाः सपिण्डनं नास्तीत्युक्तम् तदभावे पतिः। "भार्य्यापिण्डं पतिर्दद्यात्" इति यज्ञवचनात्। "न जायायाः पतिः कुर्य्यादपुत्राया अपि क्वचित्" इति छन्दोगपरिशिष्टवचनम् सपत्नीपुत्रपर्य्यन्तसद्भावविषयम्। पत्यभावे स्नुषा "श्वश्र्वादेश्च स्नुषा चैव" इति यमवचनात्। तदभावे सान्निध्यक्रमेण सपिण्डाः। यज्ञवचने "तदभावे सपिण्डकाः इति मैथिलपाठात्"। "तदभावे सपिण्डाः" इति पूर्वोक्तगोतमवचने सामान्यतः श्रुतेश्च। तदभावे समानोदकाः। "सपिण्डसन्ततिर्वाप्यविशेषस्मृतेः। तदभावे सगोत्राः। समानोदकसन्ततिरिति वक्ष्यमाणात्। श्राद्धविवेकोऽप्येवम्। एषामभावे पिता। "दत्तानामप्यदत्तानां कन्यानां कुरुते पिता" इत्युक्तत्वात्। तदभावे भ्राता। "प्रमीभ्राता पिता वापि" इत्यविशेषस्मृतेः। तदभावे यथाक्रमं दायभागोक्तोपकारतारतम्येन। "मातुलोभागिनेयस्य स्वस्रीयोमातुलस्य च। श्वशुरस्य गुरोश्चैव सख्युर्मातामहस्य च। एतेषाञ्चैव भार्य्याभ्यः स्वसुर्मातुः पितुस्तथा। पिण्डदानन्तु कर्त्तव्यमिति वेदविदां स्थितिः" इति शातातपवचनात् भगिनीपुत्रभर्त्तृभागिनेयभ्रातृपुत्रजामातृभर्त्तृमातुलभर्त्तृशिष्याः प्रत्यपेक्षया पौत्रादिवत् पिण्डदानतारतम्येन क्रमेणाधिकारिणः। तथाहि तत्पिण्डतत्पुत्रदेयतत्पित्रादिपिण्डत्रयदातृत्वात् भगिनीपुत्रः। तदभावे भर्त्तृभागिनेयः। पुत्राद्भर्त्तुर्दुर्बलत्वेन तत्स्थानपातिनोऽपि तथैव दुर्बलस्य न्याय्यत्वेन तद्भर्त्तृदेयपुरुषत्रयपिण्डतद्भर्त्तृपिण्डदत्वात्। तदभावे भ्रातृपुत्रः। तत्पिण्डतत्पुत्रदेयतत्पित्रादिपिण्डद्वयदत्वात्। तदभावे जामाता। "मातृष्वसा मातुलानी पितृव्यस्त्री पितृष्वसा। श्वश्रूः पूर्व्वजपत्नी च मातृतुल्या प्रकीर्त्तिता" इति बृहस्पतिवचनेन मातृष्वस्रादीनां मातृतुल्यत्वाभिधानात्। स्वस्रीयाद्यैः सह जामातुः पुत्रतुल्यत्वप्रतीतेः। अतएव तेषां धनभागित्वमाह बृहस्पतिः। "यदासामौरसोन स्यात् सुतोदौहित्रएव वा। तत्सुतोवा धनं तासां स्वस्रीयाद्याः समाप्नुयुः"। धनभाक्त्वेनापि पिण्डदातृत्वमाह मनुः। "गोत्ररिक्थानुगः पिण्डः" इति। तदभावे भर्त्तृमातुलभर्त्तृशिष्याः क्रमेणाधिकारिणः शातातपीयपाठक्रमानुरोधात्। प्रातिस्विकानामभावे पितृवंश्यमातृवंश्यौ। "पितृमातृसपिण्डैश्च समानसलिलैर्नृप!" इति ब्रह्मपुराणेऽविशेषश्रुतेः। तयोरभावेऽसम्बन्धी द्विजोत्तमः पूर्व्वोक्तयज्ञवचने द्विजोत्तम इति गौडीयपाठात् संघातान्तर्गतैर्वापीति अविशेषश्रुतेः।

पिण्डक्रियाकर्त्तृनाह विष्णुपुराणम् "पुत्रः पौत्रः प्रपौत्रोवा तद्वद्वा भ्रातृसन्ततिः। सपिण्डसन्ततिर्वापि क्रियार्हो नृप! जायते। एषामभावे सर्वेषां समानोदकसन्ततिः। मातृपक्षस्य पिण्डेन सम्बद्धा ये जलेन वा। कुलद्वयेऽपि चोत्पन्ने स्त्रीभिः कार्य्या क्रिया नृप। संघातान्तर्गतैर्वापि कार्य्या प्रेतस्य सत्क्रिया।

उत्पन्नदन्योर्व्व्युत्सादा कारयेत्समीपतः । पूर्व्वाः क्रिया मध्यमाश्च तथा चैवोत्तराः क्रियाः । त्रिप्रकाराः क्रियाह्येतास्तासां भेदान् शृणुष्व मे । आदाह-वाद्यायुधादिस्पर्शाद्यन्ताश्च याः क्रियाः । ताः पूर्व्वा मध्य-मा मासि मासि त्वेकोद्दिष्टसंज्ञिताः । प्रेते पितृत्वमापन्ने स-पिण्डीकरणादनु । क्रियन्ते याः क्रियाः पित्र्याः प्रो-च्यन्ते ता नृपोत्तराः । पितृमातृसपिण्डैस्तु समानसलिलै-र्व्व ! । सङ्घातान्तर्गतैर्वापि राज्ञा वा धनहारिणा । पू-र्व्वक्रियास्तु कर्त्तव्याः पुत्राद्यैरेव चोत्तराः । दौहित्रैर्वा नरश्रेष्ठ ! तार्य्यास्तत्तनयैस्तथा । मृताहनि तु कर्त्तव्याः स्त्रीणामप्युत्तराः क्रियाः । प्रतिसंवत्सरं राजन् ! एको-द्दिष्टं विधानतः" । आदाहेति दाहावधेरशौचान्तविहि-तवाद्यायुधादिस्पर्शाद्यन्ताः याः पूर्व्वाः । मासि मासीत्येकादशा-हादिसपिण्डनान्तप्रेतक्रियोपलक्षणम् । सपिण्डनोत्तराः पार्व्वणादिक्रिया उत्तराः । अत्र पुत्रादिसपिण्डादयः पूर्व्वाः क्रिया अवश्यं कुर्य्युः । मध्यमक्रियायामनियमः । उत्तरक्रियायां पुत्रादयो भ्रातृसन्ततिपर्य्यन्ता नियताः । श्राद्धविवेकेऽप्येवम् । दौहित्रैर्वेति वाशब्दः समुच्चयार्थः तेन दौहित्रोऽप्युत्तरक्रियायां नियताधिकारी । दौ-हित्रतनयैरिति पुत्रिकापुत्रविषयमिति कल्पतरुः । कर्त्तृ-प्रकरणात् स्त्रीणामिति "वा कर्त्तरि कृत्ये" इति कर्त्तरि षष्ठी । उत्तरक्रियायां प्रतिसंवत्सरमेकोद्दिष्टविधाननिय-मात् । न पार्व्वणदर्शश्राद्धादौ स्त्रीणामधिकारः । मार्कण्डेयपुराणम् "सर्व्वाभावे स्त्रियः कुर्य्युः स्वभर्त्तृ-णाममन्त्रकम् । तदभावे च नृपतिः कारयेत् स्वकुटुम्ब-वत् । स्त्रीणामप्येवमेवं तदेकोद्दिष्टमुदाहृतम् । मृता-हनि यथान्यायं नृणां यद्वदिहोदितम्" । स्त्रियोऽत्रा-सवर्णोढाऽपरिणीता वेति श्राद्धविवेकः । सवर्णोढायाः पुत्रपौत्रपर्य्यन्ताभाव एव विधानात् । स्त्रीणामिति तु संप्रदानपरम् । एवमेवामन्त्रकमिति श्राद्धविवेकः । अत्र स्त्रियश्चासवर्णोढाऽपरिणीतापरत्वव्याख्यानात् स्त्रीणां मन्त्रनिषेधोऽपि तत्संप्रदानकश्राद्ध एवावगम्यते । ननु स्त्री-मात्रसंप्रदानके । एतच्च विप्रेतरपरं तस्य हीनवर्णश्रा-द्धनिषेधात् । कल्पतरौ तु स्त्रीणामप्येवमिति वचनेन स्त्रीणामेतत् कर्त्तव्यमिति एतद्व्याख्याने स्त्रीसम्प्रदानक-श्राद्धे उत्तरा मन्त्राः पाठ्याः । याज्ञवल्क्येनापि समन्त्रक-मेकोद्दिष्टं सपिण्डीनस्त्रोक्ता । एतत् सपिण्डकरणमेकोद्दिष्टं स्त्रियाश्चापि दशमेन स्त्रियाश्चापि तथैवेत्युक्तम् । "स्त्रियाः सपिण्डीकरणं पितामह्या सहोदितम् । यथोक्तेनैव क-ल्पेन पुत्रिकाया न चेत् सुतः" इति छन्दोगपरिशि-ष्टेनापि यथोक्तेनैव कल्पेनेत्यनेन समन्त्रकत्वमतिदिष्टम् । व्यवहारोऽपि तथेति ।

तदयं संक्षेपः । ज्येष्ठपुत्रकनिष्ठपुत्रपौत्रप्रपौत्रापुत्रपत्नी-कन्यासमर्थपुत्रयुक्तपत्नीकन्यावाग्दत्तादत्तकन्यादौहित्रकनि-ष्ठसहोदरज्येष्ठसहोदरकनिष्ठवैमात्रेयज्येष्ठवैमात्रेयकनिष्ठस-होदरपुत्रज्येष्ठसहोदरपुत्रकनिष्ठवैमात्रेयपुत्रज्येष्ठवैमात्रेयस-पुत्रपितृमातृपुत्रवधूपौत्रीपौत्रवधूप्रपौत्रीप्रपौत्रवधूपिता-महपितामहीपितृव्यादिसपिण्डसमानोदकसगोत्रमातामह-मातुलभागिनेयमातृपक्षसपिण्डतत्समानोदकासवर्णभार्य्या-ऽपरिणीतस्त्रीश्वशुरजामातृपितामहीभ्रातृशिष्यर्त्विगाचार्य्यमित्रपितृमित्रैकग्रामवास्यस्वजातीयेतरसजातीयाः षट्-चत्वारिंशत्प्रकाराः क्रमेणाधिकारिणः ।

स्त्रियास्तु ज्येष्ठपुत्रकनिष्ठपुत्रपौत्रप्रपौत्रकन्यावाग्दत्ता-दत्तादौहित्रसपत्नीपुत्रपतिस्नुषासपिण्डसमानोदकसगोत्रपि-तृभ्रातृभगिनीपुत्रभर्त्तृभागिनेयभ्रातृपुत्रजामातृभर्त्तृमातुल-भर्त्तृशिष्यपितृसमानोदकपितृवंश्यमातृसमानोदकमातृ-वंश्यद्विजोत्तमाश्चतुर्विंशतिप्रकाराः" इति ।

अथाब्दिकश्राद्धरूपैकोद्दिष्टे विशेषः श्रा॰त॰निर्णीतः यथा गोभिलः । "अत ऊर्द्ध्वं संवत्सरे संवत्सरे प्रेतायान्नं दद्यात् यस्मिन्नहनि प्रेतः स्यादिति" । अत ऊर्द्ध्वं सपिण्डीक-रणान्मासनिमित्ताद्याद्यसंवत्सरादूर्द्ध्वं संवत्सरे संवत्सरे प्रतिवर्षं यस्मिन्नहनि मृतस्तस्मिन्नहनि मृताय दद्यात् । व्यासः । "प्रतिसंवत्सरञ्चैवमेकोद्दिष्टं मृताहनि" । एतेन सपिण्डीकरणापकर्षे आद्यसंवत्सरेऽपि मृताहे श्राद्धान्तरं कर्त्तव्यमिति मैथिलोक्तं हेयम् । व्यक्तमाह हेमाद्रिधृत-वचनम् । "पूर्णे संवत्सरे श्राद्धं षोडशं परिकीर्त्तितम् । तेनैव च सपिण्डत्वं तेनैवाब्दिकमिष्यते" । अत्र पूर्णसंव-त्सरक्रियमाणश्राद्धद्वयोभयनिर्व्वाहस्तथापकर्षसपिण्डी-करणश्राद्धद्व्युभयनिर्व्वाहो न पूर्णसंवत्सरे आब्दि-कान्तरम् एवं मलद्वयश्राद्धेऽप्येवम् । मत्स्यपुराणम् "ततःप्रभृति संक्रान्तावुपरागादिपर्व्वसु । त्रिपिण्डमा-चरेत् श्राद्धमेकोद्दिष्टं मृताहनि" । ततः प्रेतत्वपरीहा-रात् त्रिपिण्डं त्रैपुरुषम् । निरुपपदमृताहशब्दः मृतसम्ब-न्धिमासपक्षतिथिविशेषपरः । उपपदात्तु कचित्तिथिविशेष-मात्रपरः । यथा मृताहे प्रतिमासम् पुर्व्वोदिश्राद्धे । यत्तु "सपिण्डीकरणादूर्द्ध्वं यत्र यत्र प्रदीयते । तत्र तत्र त्रयम्

कुर्य्यात् वर्जयित्वा मृताहनि । अमावस्याम् क्षयो यस्य प्रेतपक्षेऽथवा पुनः । सपिण्डीकरणादूर्द्ध्वं तस्योक्तः पार्व्वणो विधिः" । त्रयं सम्प्रदानानां त्रयं कुर्य्यात् त्रिभ्यो दद्यादित्यर्थः । मृताहपर्य्युदस्तत्रिदैवतस्य प्रतिप्रसवमाह अमावस्यामिति प्रेतपक्षोऽत्र पितृपक्षः अन्वयुक्कृष्णपक्ष इति यावत् न तु कृष्णपक्षमात्रं कृष्णपक्षमात्रपरत्वेऽमावास्यापदवैयर्थ्यापत्तेः। पितृपक्षं विशेषयति हेमाद्रिमाधवाचार्य्यधृतं नागरखण्डम् 'नभोवाथ नभस्योवा मलमासो यदा भवेत् । सप्तमः पितृपक्षः स्यादन्यत्रैव तु पञ्चमः" । अत्र श्रावणभाद्रयोरन्यतरस्य मलमासत्वे आषाढ्यपेक्षया सप्तमपक्षस्य पितृपक्षत्वम् । अत्र मृतस्यैव प्रेतपक्षमृतत्वं न तु मलमासभाद्रकृष्णपक्षमृतस्य । ततश्च तत्र मृतस्य वर्षान्तरेऽन्वयुक्कृष्णपक्षेऽपि तच्छ्राद्धकरणे न पार्व्वणं किन्त्वेकोद्दिष्टमिति । अत्र पार्व्वणोविधिः पार्व्वणेतिकर्त्तव्यताकैकोद्दिष्टविधिरिति नव्यवर्द्धमानप्रभृतयः । तन्न पूर्व्ववचनोक्तत्रैपुरुषिकस्य मृताहे पर्य्युदस्तस्य पार्व्वणो विधिरित्यनेन प्रतिप्रसवात् तस्मात् यदैवैकोद्दिष्टं त्रैपुरुषिकं नतु षाट्पौरुषिकं 'वर्षे समन्वितं सश्राद्धं तु नाद्यं श्राद्धषोड़शम् । प्रत्याब्दिकन्तु शेषेषु पिण्डाः स्युः षड़िति स्थितिः" इति छन्दोगपरिशिष्टवचनेन प्रत्याब्दिकव्यतिरेकेण षट्संख्यानियमात् । एवममावास्यादिमरणनिमित्तेन सामगैरपि प्रत्याब्दिकं पार्व्वणविधिनैव 'अपुत्रा ये मृताः केचित् स्त्रियोवा पुरुषाश्च ये । तेषामपि च देयं स्यादेकोद्दिष्टं न पार्व्वणम्" इति आपस्तम्बवचने अपुत्रा इति विशेषणोपादानात् सपुत्राणां पार्व्वणाभ्यनुज्ञानात् । एतच्च मात्रादित्रितयदैवतं कार्य्यम् । "मात्रे पितामह्यै प्रपितामह्यै च पूर्व्ववत् ब्राह्मणान् भोजयित्वा" इत्यन्वष्टकायां तथादर्शनात् अवसानदिननिमित्तत्वेन पार्व्वणविधिना छन्दोगैरपि मात्रादित्रिकाणां श्राद्धं कर्त्तव्यं "न योषिद्भ्यः पृथग्दद्यादवसानदिनादृते" इति छन्दोगपरिशिष्टवचने विशेषतः प्रतिप्रसवात् । एवं सपिण्डीकरणेऽपि । एतच्च मृताहपार्व्वणं मातापित्रोरेव । तथाच हेमाद्रिधृतं कात्यायनवचनम् । "सपिण्डीकरणादूर्द्ध्वं पित्रोरेव हि पार्व्वणम् । पितृव्यभ्रातृमातॄणामेकोद्दिष्टं सदैव तु" । मातृपदं सपत्नीमातृपरम् । सपत्नीमात्रियत्र मातृपदस्य राजदन्तादित्वात् परनिपातः । ततश्च वाक्ये मातृसपत्नीति न प्रयोज्यं किन्तु सपत्नीमातरित्यादिकम् । एवं साग्निकौरसक्षेत्रजाभ्यां मृताहे पार्व्वणं कर्त्तव्यम् । 'औरसक्षेत्रजौ पुत्रौ विधिना पार्व्वणेन तु । प्रत्यःइमितरे कुर्य्युरेकोद्दिष्टं सुता दश" इति जाबालिवचनस्य "यत्र यत्र प्रदातव्यं सपिण्डीकरणात् परम् । पार्व्वणेन विधानेन देयमग्निमता सदा" इति मत्स्यपुराणवचनस्य चैकवाक्यत्वात् । उशना च 'प्रत्यब्दं दर्शवच्छ्राद्धं साग्निः कुर्व्वीत वै द्विजः । एकोद्दिष्टं सदा कुर्य्यान्निरग्निः श्राद्धदः सुतः" । अत्र प्रागुक्तयुक्त्या प्रेतश्राद्धस्य एकोद्दिष्टत्वाभिधानात् सांवत्सरिकश्राद्धे तदेकोद्दिष्टपदमुक्तं तत् प्रेतश्राद्धधर्म्मप्राप्त्यर्थम् । ततएव योग्यत्वादेकार्घ्यादिलाभः न च यथा प्रेतश्राद्धे पितृशब्दस्थाने प्रेतपदोहः तथात्रापीति वाच्यं सांवत्सरिके प्रेतत्वाभावात्तथाविधानानुपपत्तेः । एवं प्रतिसांवत्सरिकश्राद्धे सम्बन्धार्थकपदं आशीःप्रार्थनं शेषभोजनञ्च कर्त्तव्यम् ।

रजस्वलायां विशेषयति गोतमः 'अपुत्रा तु यदा भार्य्या सम्प्राप्ते भर्त्तुराब्दिके । रजस्वला भवेत् सा तु कुर्य्यात्तत्पञ्चमे दिने' । कुर्य्याच्छ्राद्धमिति शेषः । यत्तु श्राद्धचिन्तामणौ "एकोद्दिष्टं तैर्थिकेन विधानेन कर्त्तव्यम् । "एकोद्दिष्टन्तु कर्त्तव्यं पाकेनैव सदा स्वयम् । अभावे पाकपात्राणां तदहः समुपोषणम्" इति कपुठारीवचनात् पाकपात्राभावः पाकसामग्र्यभावोपलक्षणं तदापि नामश्राद्धं किन्तूपोषणमेव श्राद्धस्थानीयमित्यर्थः । स्वयमित्यभिधानादपाटवादिनापि नान्यद्वारा कारयितव्यम् अतएव उपवासेनैव श्राद्धस्थानीयेन तदकरणप्रायश्चित्तेन वा कृतकृत्यतया श्राद्धविघ्नेत्यादिवचनादपि नैकादश्यामनुष्ठानमिति" तन्न पितृत्वप्रेरजातत्वेनैकादश्यां तदनुष्ठानस्य युक्तत्वात् । अन्यथा षोड़शश्राद्धाधिकारिणः कदाचित्तथात्वे 'यस्यैतानि न दीयन्ते प्रेतश्राद्धानि षोड़श । पिशाचत्वं ध्रुवं तस्य दत्तैः श्राद्धशतैरपि" इति वचनेन षोड़शश्राद्धाभावे प्रेतत्वपरिहारो न स्यात् । तस्मादुपवासेन श्राद्धार्थः किन्तु तदाकालाकरणप्रायश्चित्तार्थः यथा स्वकालाकृतसंस्कारे प्रायश्चित्तं कृत्वा कालान्तरे तत् करणं तथात्रापि तद्दिने उपवासं कृत्वा एकादश्यां श्राद्धं कर्त्तव्यमिति । एकोद्दिष्टं नान्यद्वारा कार्य्यमित्यत्रापि गोत्रजेतरत्वेन विशेषणीयं 'न कदाचित् सगोत्राय श्राद्धं कार्य्यमगोत्रजैः' इति प्रेतश्राद्धे ब्रह्मपुराणात् । अत्र हि नागोत्रजस्य साक्षात् कर्त्तृत्वं निषिध्यते सगोत्रायेत्यस्य व्यर्थापत्तेः तस्मादगोत्रजैर्द्वारभूतैः सगोत्राय श्राद्धं न

कार्य्यमित्यर्थः। तथाच मर्य्युदासपक्षे गोत्रजद्वारा कारयितव्यमिति सुव्यक्तमेव प्रसज्यपक्षे तु अगोत्रजविशेषणस्वरसात् गोत्रजलाभः। प्रेतश्राद्धधर्म्मप्राहित्वात् सांवत्सरिकमपि तथेति श्राद्धविवेकः। कल्पतरुरत्नाकरयोस्तु सगोत्रायेति पठितं समानोऽयं गोत्रं यस्य स सगोत्रः विद्यमानगोत्रइत्यर्थः। यस्मै श्राद्धं कर्त्तव्यं तस्य सगोत्रजे विद्यमानेऽन्यगोत्रजेन संघातान्तर्गतेन राज्ञा श्राद्धं न कारयितव्यमिति व्याख्यातञ्च। एतन्मतेऽप्यूढ़दुहित्रादीनामसगोत्रत्वेऽपि न निषेधः। वस्तुतस्तु तत्पाठेऽपि कर्म्मधारयापेक्षया बहुव्रीहेर्जघन्यत्वात् समानोऽयञ्च तत् गोत्रञ्चेति तस्मै अन्यगोत्रजद्वारा श्राद्धं न कार्य्यमित्यर्थः। अतोलघुहारीतवचने स्वयंपदं सगोत्रपरम्। अन्यथा ब्रह्मपुराणोक्तागोत्रजपदवैयर्थ्यापत्तेः। एवञ्च भविष्यपुराणप्रभासखण्डयोः “मृताहनि पितुर्यस्तु न कुर्य्यात् श्राद्धमादरात्। मातुश्चैव वरारोहे! वत्सरान्ते मृताहनि। नाहन्तस्य महादेवि! पूजां गृह्णामि नोहरिः” मरीचिः। “पतिताऽन्नानिनोमूर्खाः स्त्रियोऽथ ब्रह्मचारिणः। मृताहं समतिक्रम्य चाण्डालेष्वभिजायते”। इत्याभ्यां कालमाधवीयधृताभ्यां वचनाभ्यां सांवत्सरिकश्राद्धस्य मृताहकर्त्तव्यत्वेनावश्यकत्वात् भविष्यन्मृताहे स्वयं कर्त्तव्यत्वसम्भावनारहितेन मृताहात् पूर्वकालेऽपि प्रतिनिधायते। ‘प्रक्रिय्याग्निं स्वदारेषु परिकल्प्यर्त्विजं तथा। प्रवसेत् कार्य्यवान् विप्रोवृथैव न चिरं क्वचित’ इति छन्दोगपरिशिष्टोक्तवाक्य प्रातर्होमप्रतिनिधिवत्। एवं सति प्रतिनिध्यकरणएव एकादश्यां क्रियते। नच पाकस्याङ्गत्वेन प्रधानतिथिकर्त्तव्यतानियम इति वाच्यम्। ‘व्रतोपवासनियमे घटिकैका यदा भवेत्। सा तिथिः सकला ज्ञेया पित्र्ये चापराह्निकी” इति वचनेन मुहूर्त्तमात्रलाभेऽपि कर्त्तव्यतोपदेशात् तदानीं पाके तदसम्भवात्। ‘एकादश्यामयेनभोजनेऽपि न तन्नियम इति”। एतच्च पुत्रदुहित्रोर्नित्यं प्रागुक्तवचनेभ्यः। अतपित्र्यकपौत्रस्यापि तथा। “कृतमातस्य नः पश्चात्तिथौ प्रतिवत्सरम्। “यावत् चरति पौत्रोऽपि एकमुद्दिश्य दापयेत्” प्रचेतोवाक्यात्

लघुहारीतवाक्ये न द्विजानां विज्ञानं नैवोद्दिष्टकरणविधानात् तत्पाकेधिकारिविशेषोनिरूप्यते। तत्र श्रा०त० देवलः “तथैवामन्त्रितोदाता प्रातः स्नातः सहाम्बरः। आरभेत नवैः पात्रैरन्नारम्भं सबान्धवः”। अत्र सबान्धव इत्युक्तेः सपिण्डानामपि पाकाधिकारः इति गौड़ाचारः। नि० सि० विशेष उक्तः। हेमा० आश्वला० “समानप्रवरैर्मित्रैः सपिण्डैश्च गुणान्वितैः। कृतोपकारिभिश्चैव पित्रकार्य्यं प्रशस्यते”। व्यासः “महिला चैव सुस्नाता पाकं कुर्य्यात् प्रयत्नतः। भिन्नपक्षेषु च पाकेषु पुनः स्नानं समाचरेत्” पृथ्वीचन्द्रोदये ब्राह्मे। “रजस्वलाञ्च पापघ्नां पुंश्चलीं पतितां तथा। त्यजेच्छूद्रां तथा वन्ध्यां विधवाम् चान्यगोत्रजाम्। व्यङ्गकर्णां चतुर्थाहस्नातामपि रजस्वलाम्। वर्ज्जयेच्छ्राद्धपाकार्थमसात्पितृवंशजाम्” स्मृतिसारे “न पाकं कारयेत् पुत्रीमन्यां चाप्यसगोत्रजाम्! मृतवन्ध्यां पुंश्चलीं च गर्भिणीञ्चैव दुर्खलाम्”।

**एकोनचत्वारिंशत्** स्त्री एकेनोना चत्वारिंशत्। (ऊनचत्वारिंश) ३९ संख्यायां २ तत्सङ्ख्यान्विते च एवम् एकोनविंशत्यादयोऽपि एकेनोनतत्संख्यासंख्येययोः स्त्री।

**एकौघ** पु० एकः अविच्छिन्नश्रोषः प्रवाहः। अविच्छिन्नप्रवाहे “एकौघेन स्वर्णपुष्पैर्दिवन्तः” माघः।

**एज** कम्पने भ्वा०आत्म०अक०सेट्। एजते ऐजिष्ट एजाम्बभूव आस चक्रे। एजकः एजितव्यः एजिता। एजितः एजमानः एजनम् णिच्। एजयति जनमेजयः। “कुरुमम्भ्रमत एजयतेऽक्षिणी मे” भाग०५,२,१५। वेदे गणव्यत्ययः। “एजतु दशमास्यो गर्भः” यजु०,२८ “यथायं वायुरेजति” २१,२७ सुप्रका विदथा एजतो गोपाः” २१,२८। “उद्देजति पतति यश्च तिष्ठति” अथ० २०८ ११,१। “तृणेन इव विभ्यरेजति” ऋ० १,१०,२ उदङ्ङेजयन्तरा वा एतदाह्वनीयम्” श०ब्रा० १,५,१,२५ क्वचिल्लोके तथा। “शतान्यशीतिरष्टौ च सहस्राणि च विंशतिः। मर्त्यानां प्रपदा यान्ति हतराष्ट्रोऽन्यमेजति” भा०आ० ८० अ० ‘त्वत्तःपरं नापरमप्यनेजदेजच्च किञ्चिद्व्यतिरिक्तमस्ति” भाग० ७,१,१०। चलोपलित एजत्कः” भाग० ६,८,३२, एजत्कः कम्पमानशीर्षः”

अप+अपगमने एजि परस्मैपदम् अपेजति। क्वचिदन्तर्भूतण्यर्थेऽपि। “अपेजते शूरो अस्तेव शत्रून्” ऋ०६.६४, २ “शत्रून् अपेजते अपगमयति भा०। उद्+ऊर्द्ध्वगतौ उदेजते। “उदेजतु प्रजापति र्वशा सम्प्रेव वाजिना अथ० ४,४,२, “उदेजयान् भूतगणान्न्यवेधीत्” भट्टिः। प्र+प्रकर्षचलने परस्मैपदम् प्रेजति। सम्+सङ्गतौ नियमेन चलने ‘एवेदह्यूनु किरणं समेजात्” ऋ० १०,२७,५। ‘समेजात् नियमेन प्रयाति” भा०।

न्तरे देवी" देवीमा० "एतान् महाराज ! विशेषधर्म्मान्" भु० त० पुरा० । "एषा तेऽभिहिता सांख्ये" "एतत्ते सर्वमाख्यातम्" गीता । अनूक्तौ तु "द्वितीयाटौस्स्वेनः" पा० एनम् एनौ एनान् एनेन एनयोः । "एनोनिवृत्तेन्द्रियवृत्तिरेनम्" रघुः । "महाशनोमहापाप्मा विद्ध्येनमिह वैरिणम्" गीता क्लीवेऽपि अनूक्तौ एनादेशः । इदं कुलं शोभते एनत्पश्य । परिमाणे वतु आदन्तादेशश्च । एतावत् एतत्परिमाणे त्रि० "एतावानेव पुरुषोयज्जायात्मा प्रजेति ह" मनुः "किं नेतावन्मात्रमुपजानीत" शत० ब्रा० १,६,१,३ । "एतावदुक्त्वा विरते मृगेन्द्रे" रघुः "एतावता नन्वनुमेयशोभि" कुमा० स्त्रियां ङीप् । "एतावती महिमा सं बभूव" ऋ० १०,१२५,८ । एतदि दृश–क्विन् कञ् टक् । आदन्तादेशः । एतादृश् एतादृश एतादृक्ष एततुल्यदर्शने त्रि० तत्र क्विनन्तस्य भवि पदान्ते च कुः "एतादृक्कथयता कुतः" सा० द० । टगन्तस्य स्त्रियां ङीप् । "अस्थाने पतताऽतीव महतामेतादृशी स्यादुगतिः" उद्भटः । तस्येदमित्यर्थे छ । एतदीय एतत्सम्बन्धिनि त्रि० । एतदात्मकः मयट् एतन्मय एतदात्मके त्रि० । परिमाणे मात्रच् । एतन्मात्र एतत्परिमाणे त्रि० स्त्रियां ङीप् । दिग्देशकालवृत्तेः अस्मात् प्रथमापञ्चमीसप्तम्यर्थे अस् तसिच । एतत एतद् प्रथमाद्यर्थयुक्ते तच्छब्दार्थदिगादौ अव्य० । अन्वादेशे "एतदोऽश् तत्रोस्तसौ चानुदात्तौ" पा० उक्तेः अशादेशे अत अतः इत्येवेति भेदः । [ गतिस्थान्तथा ।

एतन पु० आ+इण्-तन । निश्वासे हेमच० । निश्वासस्य सन्तत-

एतर्हि अव्य० इदम्+काले र्हिल् "एतेतौ रथोः" पा० एतादेशः । अस्मिन् काले इत्यर्थे "अत्र वा अयमेतर्ह्यग्निः स भीषा निलिल्ये" शत० ब्रा० १,२,३,१ । "एतर्हि खलु वा एतद्यज्ञमुखम्" तैत्ति० ।

एतश पु० इण्-तशन् । १ब्राह्मणे उज्ज्व० २अश्वे निघ० । "येन हृषादेतशो ब्रह्मणस्पतिः" ऋ० १०,५३,९ । "वर्तैतशोऽभिधीयसे" यजु० ४,१२ । "सूरः सूर एतशेन" १२,७४ । एतशेनाश्वेनेति" वेददी० "उभे चक्रं न वर्त्येतशस्" ऋ० ८,६,३८ ।

एतशस् त्रि० इण्-तशन् । १ब्राह्मणे २अश्वे च ।

एदिधिषुःपति पु० इण्-विच् कर्म्म० पृषो० मध्ये सुट् । अग्रेदिधिषुपतौ । "निरृत्यै, परिवित्तं निष्कृत्यार्ब्राह्मणः एदिधिषुःपतिं निर्ऋत्यै" यजु० ३०,९ । पुरुषमेधीयपशुदेवताभेदकीर्त्तने

एध वृद्धौ भ्वादि० आत्म० अक० सेट् । एधते ऐधिष्ट । एधाम्-बभूव-आस-चक्रे । एधितव्यः एधनीयः एध्यः एधिता एधितः एधनम् एधः एधमानः एधित्वा समेध्य एधांसि । "हिरण्यभूमिसंप्राप्त्या पार्थिवो न तथैधते" मनुः । क्वचिदस्य आत्मभावः "यत् मैथुनैरेधिरे प्रजाः" भाग० ३,२१,१ । आर्षत्वात् समाधेयः "तपसा महतैधित" भा० आ० ८८२ । "विवर्द्धे व्यसना इवैधमानाः" ७१,५५ । "लोकयोरुभयोः सम्यं नित्यदा सुखमेधितुम्" रामा० । क्वचित् पर० । "न हि साहसकर्त्तारः सुखमेधन्ति भारत !" भा० व० २९५ अ० । णिचि एधयति-ते ऐदिधत् त । "किं त्वं मामजुगुप्सितानैदिधः सपराक्रमम्" भट्टिः । उपसर्गस्यात्वर्णात् वृद्धिरेव न पररूपं प्रैधते एङादित्वे एव तथा तेन मा प्रैदिधत् इत्यादौ न वृद्धिः ।

एध पु० इध्यतेऽग्निरनेन इन्ध–करणे घञ् नि० नलोपगुणौ । काष्ठे "एधान् हुताशनवतः स मुनिर्ययाचे" रघुः "एधोदकं मूलफलमन्नमभ्युदितं च यत्" मनुः । "सर्वैधः समुत्थेन वह्निना नाशमृच्छति" भा० व० ८४ अ० ।

एधतु पु० एध–कर्त्तरि चतु । १पुरुषे उज्ज्व० । २अग्नौ मे० ३वृद्धियुक्ते त्रि० मस्कर० भावे चतु । ४वृद्धौ स्त्री । "पुत्रं हिशा पुरुभुजेमनेधतुम्" ऋ० ८,८६,२, "एधतुं धनाहितवन्तम्" भा० "ते हैतामेधतुमेधाञ्चक्रिरे" शत० ब्रा० ६,२,१, "एतामेधतुमेधितुम्" भा०

एधस् न० इध्यतेऽग्निरनेन इन्ध–असि नि० नलोपगुणौ । काष्ठे "यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्ज्जुन !" गीता । "अनलायागुरुचन्दनैधसे" रघुः । "फलैधः कुसुमस्तेयमधैर्य्यञ्च मलावहम्" "यथैधस्तेजसा वह्निः" मनुः ।

एधा स्त्री एध–भावे अ । वृद्धौ अमरः

एधित त्रि० एध–कर्त्तरि क्त । १वृद्धे णिच्–कर्म्मणि क्त । २वर्द्धिते त्रि० । "मधुसमृद्धिसमेधितमेधया" माघः ।

एनस् न० एति गच्छति प्रायश्चित्तेन अमापणेन वा आगसि अर्थे इण्–असुन् नुट् च । १अपराधे । ईश्वराज्ञालङ्घनरूपनिषिद्धाचरणापराधजन्यत्वात् २पापे च । "एनोनिवृत्तेन्द्रियवृत्तिरेनम्" । "अकामोपनतेनेव साधोर्हृदयमेनसा" । "एनसां स्थूलसूक्ष्माणां चिकीर्षन्नपनोदनम्" मनुः । पापभेदाश्च प्रा० वि० दर्शिताः यथा "अथ पापोद्देशः । तत्र विष्णुः "अथ पुरुषस्य काम क्रोधलोभाख्यं रिपुत्रयं सुघोरं भवति परिग्रहप्रसङ्गाद्विशेषेण स्त्रीहाश्रमिणस्तेनाक्रान्तोऽतिपातक

महापातकानुपातकोपपातकेषु प्रवर्त्तते। जातिभ्रंशकरेषु सङ्करीकरणेषु अपात्रीकरणेषु मलावहेषु प्रकीर्णेषु च"। अनेन नवविधत्वं पापस्योक्तम्। हारीतस्तु पञ्चविधत्वमाह "पञ्चविधमशुभं भवति प्रासङ्गिकोपपातकपातकमहापातकान्यल्पपातकानि" पूर्व्ववचने पूर्व्वं पूर्व्वं गरीयः अत्र तूत्तरोत्तरम्। प्रासङ्गिकं जातिभ्रंशकरादिपञ्चकम्। पातकपदमनुपातकपर्य्यायः। ननु नवस्वेव पापेषु पातकशब्दो दृश्यते यथा पैठीनसिः "स्त्रीगोहत्यावैश्यक्षत्रियघाती शूद्रसहभोजी कन्यादूषणगारदाही वृषलीपतिः अग्न्युच्छेदी चेति पातकानि" नवविधं पापमभिधायाह विष्णुः। "एवं पातकिनः पापमनुभूय सुदुःखिताः। तिर्य्यग्योनौ प्रपद्यन्ते दुःखानि विविधानि च"। याज्ञवल्क्यः "नीचाभिगमनं गर्भपातनं भर्त्तृहिंसनम्। विशेषपतनीयानि स्त्रीणामेतान्यपि ध्रुवम्"। पतनीयानि पातकानीत्यर्थः। "कृत्यल्युटो बहुलमिति" करणेऽनीयर्। तथा गौतमः "ब्रह्महासुरापगुरुतल्पगमातृपितृयोनिसम्बन्धागस्तेननास्तिकनिन्दितकर्म्माभ्यासिपतितात्याग्यपतितत्यागिनः पतिताः पातकसंयोजकाश्च तैश्चाब्दं समाचरन्"। पातकसंयोजकाः सुरापाणादौ यः परान् प्रयोजयति सः। बाढम्। सामान्यशब्दस्यापि विशेषशक्तिर्भवति स्तनादिपदस्येव, हारीतेन विशेषवचने पाठात्। तथा च्यवनः "अथ पातकोपपातकमहापातकानि व्याख्यास्यामः" इति। तथा च पठन्ति। "महापातकतुल्यानि पापान्युक्तानि यानि तु। तानि पातकसंज्ञानि तदूनमुपपातकमिति"। ततो महापातकतुल्यपापविशेषेष्वस्य शक्तिः। पतनशब्दार्थमाह गौतमः "द्विजातिकर्म्मभ्यो हानिः पतनम् परत्र चासिद्धिस्तमेके नरकम्"। द्विजातिकर्म्म श्रौतमग्निहोत्रादि स्मार्त्तमष्टकादि प्रायश्चित्तदक्षिणादिव्यतिरिक्तम् तेभ्यो हानिरनधिकारः इति। द्विजातिग्रहणं प्राधान्यार्थम् शूद्रस्यापि वाक्यान्तरेण पातित्याभिधानात्। इहलोके तावत् पातित्यलक्षणमनिष्टं परलोके चासिद्धिः पापकर्म्मप्रतिबन्धादुपात्तसुकृतफलानिष्पत्तिः नरकं वा। सूतकादिव्याख्यार्थमिदम्"।

पापलक्षणं पापसत्तायां प्रमाणञ्च प्रा॰ वि॰ दर्शितं यथा "ननु किं पापलक्षणम्" उच्यते "चोदनालक्षणोऽर्थो धर्म्मः!" इत्यस्मिन् सूत्रे वेदैः प्रतिपाद्योऽर्थो धर्म्म इति धर्म्मलक्षणं कुर्व्वता सूत्रकारेण जैमिनिना वेदैकप्रतिपाद्योऽनर्थोऽधर्म्म इत्यधर्म्मलक्षणं सूचितम्। अनर्थश्चानिष्टसाधनं तथाचोक्तं भाष्यकृता "कोऽर्थो योऽभ्युदयाय कोऽनर्थो योऽनभ्युदयायेति"। ननु पापसत्तायां किं प्रमाणं न तावद्वेदः तस्य कार्य्ये कार्य्यान्विते वा प्रामाण्यात् न च दुरितापूर्व्वं कार्य्यं कार्य्यान्वितं वा। न च नित्यकर्म्माकरणस्य निषिद्धाचरणस्य च वेदोक्तप्रत्यवायसाधनत्वानुपपत्त्या कल्प्यम् तस्य तथाविधशब्दाभावेन सिद्धत्वेन चावगन्तुमशक्यत्वात् उच्यते "यो ब्राह्मणायावगुरेत् शतेन यातयेदिति" श्रुतौ विरुद्धद्वयश्रुतेरवगोरणयातनयोः साध्यसाधनभावोऽवगम्यते "हेतुहेतुमतोर्लिङिति" पा॰ लिङः करणादिति यथोक्तं शंय्वधिकरणे, तथाऽत्रापि क्वचित् पञ्चम्या क्वचित् तृतीयया क्वचिच्च विशेषणपदादवगम्यते। यथा याज्ञवल्क्यः "विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्। अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति"। मनुः "शरीरजैः कर्म्मदोषैर्याति स्थावरतां नरः। वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम्। इह दुश्चरितैः केचित् केचित् पूर्व्वकृतैस्तथा। प्राप्नुवन्ति दुरात्मानो नरा रूपविपर्य्ययम्"। तथा विष्णुपुराणम् "नरकं कर्म्मणः पापादेवमाहुर्महर्षयः"। तथा यमः "सुरापो ब्रह्महा गोघ्नः सुवर्णस्तेयतस्करः। पतितैः संप्रयुक्तश्च ब्रह्मघ्नो गुरुतल्पगः। एते पतन्ति सर्व्वेषु नरकेष्वनुपूर्व्वशः"। अत्रैते सुरापादयः पतन्तीति सुरापादीनां पतनकर्त्तृत्वावगतेः कर्त्तृत्वञ्च साधनत्वविशेषः अतः सुरापाणादिविशिष्टस्य पुरुषस्य पतनसम्बन्धे विशेषणस्य सुरापाणादेः सति सम्भवे पतनसाधनत्वमवगम्यते "सप्तदश प्राजापत्यान् पशूनालभेतेति" वत्। एवं "वारिदस्तृप्तिमाप्नोति" इत्यादावपि। नरकसाधनत्वस्य कार्य्यान्वयाभावात् कथं शब्दादवगतिरिति चेत् शंयुवद्विषयविशेषणतया इति ब्रूमः यथा शतयातनासाधनादवगोरणान्निवर्त्तितव्यमिति विधिः, तथा नरकसाधनात् सुरापाणादेर्निवर्त्तेतेति, नित्येऽपि यस्याकरणे प्रत्यवायस्तस्मिन् कर्म्मणि प्रवर्त्तेतेति विध्यङ्गीकारात्। अथवा यद्दुःखसाधनं तदभावस्तत्परीहारसाधनमिति लोकादवगतत्वात् अर्थात् प्रत्यवायपरिहारस्योपस्थितत्वात् तदर्थिनोऽधिकारो नित्यनिषेधेष्वपि। ननु "अहरहः सन्ध्यामुपासीत" इत्यादौ जीवनस्य सन्ध्योपासनव्याप्यत्वगमात् जीवनवतोऽधिकारः। "न कलञ्जं भक्षयेत्" इत्यादौ निषिद्धस्वभावनिरूढा प्रवृत्तिरधिकारिविशेषणं तथाचोक्तं "मनसा तु प्र-

हतस्य भूतचेष्टावतोऽपि वा । यदनागतभावस्य वर्ज्जनं तद्विवर्ज्जनमिति” अतः कथं प्रत्यवायपरीहारार्थिनोऽधिकारः उच्यते प्रत्यवायपरीहारस्याप्युपस्थितत्वात् जातेष्टिवत् संवलिताधिकार एव भविष्यति तथा च जाबालः “आयं कैश्चिदुपात्तस्य दुरितस्य प्रचक्षते । अनुत्पत्तिं तथा चान्ये प्रत्यवायस्य मन्वते । नित्यक्रियान्तर्वान्ये ह्यननुबन्धफलां श्रुतिम्” । अनुत्पत्तिमित्यनेन प्रत्यवायपरीहारः फलमित्युक्तम् । अथवा प्रायश्चित्तविधिषु रात्रिसत्रन्यायेनार्थवादिकपापक्षयार्थिनोऽधिकारात् । एवं च विधयः पापसत्तां बोधयन्ति तथाचाङ्गिराः “उद्यन्नुद्यन् यथादित्यस्तमः सर्व्वं व्यपोहति । तद्वत् कल्याणमातिष्ठन् नरं पापं व्यपोहति” । पापस्येह पुरुषं कृत्वा कल्याणमभिपद्यते । मुच्यते पातकैः सर्व्वैर्महाभ्रैरिव चन्द्रमाः” । कल्याणं प्रायश्चित्तम् । यमः “तपसोऽन्ते विमुच्यन्ति कर्म्मणां चापरिक्षयात् । तस्मात् कर्त्तव्यमेतत्तु प्रायश्चित्तं विशुद्धये” । कर्म्मणां भोगेन परिक्षयादित्यर्थः । अपरं स्थलान्तरे ज्ञेयमिति । ननु किं पापोत्पत्तिकारणम् ? उच्यते विहिताकरणं निषिद्धाचरणञ्च पापकारणं तदाह मनुः । अकुर्व्वन् विहितं कर्म्म निन्दितञ्च समाचरन् । प्रसजंश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः” । प्रायश्चित्तार्हताज्ञापनेन पापसत्तां प्रतिपादयति । तथा च याज्ञवल्क्यः ।“विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् । अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति” ।

पापस्य यथा वेदबोध्यत्वं तथा मीमां०भा०दर्शितम् यथा “उभयमिह चोदनया लक्ष्यते अर्थोऽनर्थश्च इति कोऽर्थः ? यो निःश्रेयसाय ज्योतिष्टोमादिः । कोऽनर्थः ? यः प्रत्यवायाय श्येनो वज्रः इषुरित्येवमादिः तत्र अनर्थोऽर्थ उक्तोमा भूत् इति अर्थग्रहणम् । कथं पुनरनर्थः ? हिंसा हि सा सा च प्रतिषिद्धेति । कथं पुनरनर्थः कर्त्तव्यतयोपदिश्यते ? । उच्यते नैव श्येनादयः कर्त्तव्या विज्ञायन्ते यो हि हिंसितुमिच्छेत् तस्यायमभ्युपायः इति हि तेषामुपदेशः “श्येनेनाभिचरन् यजेत” इति समामनन्ति हि “नाभिचरितव्यम्” । “अतएव मूलकर्म्मकृपाभिचारस्योपपातकसंज्ञा कृता मनुना तेन तस्यानर्थहेतुत्वं व्यक्तमेव । तथा च कलञ्जभक्षणस्येनादेरनिष्टसाधनत्वेऽपि वेदबोध्यत्वं तथा तत्त्व०चि० समर्थितं यथा तत्र “न कलञ्जं भक्षयेत्” इत्यत्र विध्यर्थनिषेधानुपपत्तिः तद्भक्षणस्य इष्टसाधनत्वात् । न चापूर्व्वविद्यावत् पर्य्युदासलक्षणया विरोध्यनिष्टसाधनताबोधनं, नञोऽसमस्तत्वात् क्रियाङ्गत्वेन प्रतिषेधवाचकत्वस्य तपस्ते वेति चेत् न विशेष्यवति विशिष्टनिषेधस्य “सविशेषणे हीति” न्यायेन विशेषणनिषेधपर्य्यवसायितया कलञ्जभक्षणजन्यदुःखोत्पत्तिनान्तरीयकदुःखाधिकदुःखसाधनमिति “न कलञ्जं भक्षयेत्” इत्यनेन बोधनात् । इष्टसाधनतावाचकस्य विधेः सामान्ये निषेधानुपपत्तेर्बलवदनिष्टाननुबन्धीष्टसाधनविशेषे तात्पर्य्यम् तथा चाभक्ष्यविशेषणनिषेधपरत्वं नञ इति कश्चित् तन्न यथायोग्यतया छिद्रं विहाय घटत्वेन तदितरान्वयो न तु छिद्रेतरत्वेन, युगपद्विरुद्धविरोधात् तथेहापि बलवदनिष्टाननुबन्धित्वेन नोपस्थितिरिति कथं निषेधः ? । “श्येनेनाभिचरन् यजेत” इत्यत्र कथं विधिप्रवृत्तिः हिंसाया बलवदनिष्टसाधनत्वादिति चेत् तत्र कृतिसाध्यत्वे सति इष्टसाधनता योग्यतयान्वेति न तु बलवदनिष्टाननुबन्धित्वमपि अयोग्यत्वात् निन्दार्थवादेन प्रायश्चित्तोपदेशेन वा हिंसाया बलवदनिष्टसाधनत्वोपगमात् । अत एव विहितेऽपि श्येने विदुषामास्तिकप्रवृत्तिः । रागद्वेषयोरुत्कटत्वेनानिष्टानुबन्धस्य तिरोधानात् कस्यचित् प्रवृत्तिरित्येके । अन्ये त्वभिचारस्य वैरिवधफलत्वेन श्रुतत्वात् तत्साधनत्वेन श्येनो विधीयते न तु वधसाध्यनरकसाधनत्वेनाश्रुतत्वात् । न च जनकजनकस्य जनकत्वनियमः कुम्भकारपरम्पराया अपि कुम्भकारणत्वापत्तेः विधिनैव श्येनस्य बलवदनिष्टाननुबन्धित्वस्य बोधनाच्च । न च श्येनस्य नरकाहेतुत्वेनापेक्षितवैरिवधहेतुत्वे सत्यविगीतत्वेन प्रवृत्तिः स्यादिति वाच्यम् । श्येनाद्वैरिवधोऽवश्यं नरकमिति प्रतिसन्धानेन निगानात् । ननु श्येनो मरणफलकव्यापारत्वेन हिंसा हिंसा च नरकजनिकेति चेन्न । नहि साक्षात् परम्परासाधारणमरणफलकव्यापारो हिंसा कूपादौ मृते सति तत्कर्त्तुर्हन्तृत्वप्रसङ्गात् वध्यस्यापि हन्तृमन्युत्पादनद्वारा हन्तृत्वप्रसङ्गाच्च । न ह्युत्पादितमन्युः कश्चित् कञ्चित् व्यापादयति । मन्युनिष्पादितमरणफलकव्यापारो हिंसा तदनन्तरं मरणं भवत्येव न च श्येनस्तथा किन्तु खड्गभङ्गादिकमेव । अथ मरणानुकूलो व्यापारो मरणोद्देशेनानुष्ठीयमानो हिंसा श्येनश्च तथा, कूपादौ च न मरणोद्देशेनानुष्ठीयमानत्वमिति चेत् एवं सति गौरवात् मरणोद्देशेन विप्रमारणोद्यते ब्राह्मणे हिंसा न स्यात् ।

हिनस्ति धात्वर्थतावच्छेदकं फलमव्यवहितमेव मरणम् अव्यवहितफलकव्यापारस्यैव धात्वर्थत्वात् अन्यथा परम्परया निकृतिफलकाक्रोशे तदुक्तं कुर्वत्यपि प्रवृत्तीति प्रसङ्गात् अथ खड्गघातानन्तरं यत्र विलम्बेन मरणं व्रणपाकपरम्परया वा, अन्ने विषप्रयोगेण वा तत्र हन्तृत्वं प्रायश्चित्तादि च न स्यादिति चेत् न प्रायश्चित्ततुल्यत्वार्थं हि तत्र हन्तृत्वव्यपदेशो गौणः विनिगमनन्तु वाचनिकम्

वस्तुतस्तु मरणोद्देशेन कृतोऽदृष्टाद्वारकस्तदनुकूलो-व्यापारः हिंसा श्येनस्यादृष्टद्वारा मरणसाधनमतो न हिंसा। यद्यदृष्टद्वारा मरणसाधनं हिंसा स्यात्तदा सम्प्रीतेर्वाख्य-कृत्याऽदृष्टद्वारेण विनाशसाधनत्वात् तत्कर्त्तुः हिंसकत्वा-पत्तिः। अत एव कूपादौ गोमरणेऽपि न गोवधकर्त्तृता तत्-कर्त्तुः, गललग्नान्नमरणेन भक्तुरन्नहन्तृत्वं, परिवेषयितुर्वा ब्राह्मणहन्तृत्वम्। व्रणपाकपरम्परया विलम्बेन विष-प्रयोगेण च हन्तृत्वं मुख्यमेव। नाम्नुनिष्पादितमरणफल-कत्वं, गललग्नान्नमरणे स्वहन्तृत्वापत्तेः। अन्योद्देशेन विप्रेणा-हते ब्राह्मणे ब्राह्मणहन्तृत्वं न स्यादिति चेत् न इष्टापत्तेः। व्यपदेशः प्रयोगो वा लक्षणया समर्थयितुं शक्यते, लक्षणयातिप्रसङ्गो वारयितुं न शक्यत इतीदमेव विनिगमनम्। अन्योद्देशेन कृतेऽपि निषिद्धे प्रायश्चित्तार्द्धमुक्तम्। अपरे तु अनभिसंहितावान्तरव्यापारमद्वारीकृत्य मरणसाधनं हिंसा, खड्गकारस्यानभिसंहितावान्तरव्यापारद्वारा मरणसाधनत्वं तस्य हि अवान्तरव्यापारोनाभिसंहितः। किन्तु धनलाभ इति खड्गकारो न घातकः विषस्यान्न-प्रक्षेपणमवान्तरव्यापारो भोजनमेवाभिसंहितम् अनेनेद भोक्तव्यमिति बुद्ध्वाय विषप्रयोगादिति हिंसैव विषप्रयोग इति तथ गललग्नान्नकवलादुपल मरणं तत्र परिवेषयितु-र्घातकत्वापातात् अनेनेदं भोक्तव्यमित्यभिसन्धायैवान्न-परिवेषणात् भोक्तुःहन्तृत्वापत्ते च अनभिसंहितमवान्तर व्यापारमद्वारीकृत्य मरणानुकूलभक्षणानुष्ठानात्। अत एव अव्यवहितप्राणवियोगफलको व्यापारो हिंसा व्रणपाकपर-म्परयामृते न हन्तृत्वं व्यापारव्यवधायकत्वादिति निरस्तम्"

अनेनादेवेंदबोधितत्वेऽपि यथाऽनर्थहेतुत्वं तथाऽभि-चारशब्दे दर्शितवचनैरुक्तम् अधिकं श्येनशब्दे वक्ष्यते। एनसाकृतम् यत्। एनस्य पापरचिते त्रि॰ "यक्ष्मेमेनस्यम्" अथ॰ ८,७,२। एनोऽस्त्यस्य मतुप् मस्य वः। एनस्वत् त्रि॰। एनस्विन् पापयुक्ते त्रि॰ उभयत्र स्त्रियां ङीप। "मा त एनस्वन्तो यक्षिन् भुजेम" ऋ॰७,८८,६। एनस्वन्तं चिदेनसः सुदानवः ८,१८,१२। "एनस्विभि-रनिर्णिक्तैर्नार्थं किञ्चित् समाचरेत्"। 'अवदार्यमिन्द्र-मित्येतदेनस्वी सप्तकं जपेत्" मनुः। "इष आगसोति" उणा॰ अपराध एव साधुत्वम् पापे तु ईश्वराज्ञालङ्घन-रूपापराधजन्यत्वेनोपचारात् इति बोध्यम्।

एम त्रि॰ इण-कर्म्मणि म। १प्राप्ये। "अर्थेव म एमच" यजु॰ १८,१५, "एमः प्राप्तव्यार्थः" वेददी॰।

एमन् न॰ एत्यनेन मार्गेण इण-करणे मनिन्। १गतिमार्गे "कृष्णं त एम रुशतः" ऋ॰४,७,९। "कृष्णं त एम रुश-दूर्मे १,५८,४। "एमन्शब्देन गमनमार्ग उच्यते" भा॰ एत्यत्र आधारे मनिन्। २अवस्थितिस्थाने। "पृष्ठे स-मुद्रस्येमन्" यजु॰११,२०, "एमन् अवस्थाने" वेददी॰। "अपां त्वेमन्त्सादयामि" १३,५३। सप्तम्या लुकि न नलोपः। भावे मनिन्। ३गमने। "दूरे दृशो ये चितयन्त एमभिः" ऋ॰५,५९,२ एमभिर्गमनैः" भा॰।

एरका स्त्री इण-बा॰ र ततः संज्ञायां कन्। निर्विष-तृणभेदे (गवनाडा) "एरका गुन्द्रमूला च शिम्बी गुन्द्रा शरीति च। एरका शिशिरा हृद्या चक्षुष्या वातकोपिनी। मूत्रकृच्छ्राश्मरीदाहपित्तशोणितना-शिनी" भावप्र॰। 'ददार करजैरुरावेरकां कटकृद्यथा" भाग॰ १,२१९, "एरकाणां तदा मुष्टिं कोपाज्जग्राह केशवः"। भा॰मौष॰२अ॰ "एरकारूपिभिर्वज्रैर्निज-घ्नुरितरेतरम्" भा॰ आ॰ २अ॰। २कौरव्यवंशजे सर्पभेदे 'एरकः कुण्डलोवेणी वेणीस्कन्दः कुमारकः" भा॰आ॰५७अ॰। नागनामकीर्त्तने

एरङ्क पु॰ आ+ईर-अङ्कच्। मत्स्यभेदे, "एरङ्कोमधुरः स्निग्धो विष्टम्भी शीतलो गुरुः" राजनि॰ तद्गुणाः।

एरण्ड पु॰ ईरयति वायुम् मलं वाऽधः ईर-अण्डच् नि॰ गुणश्च। १वृक्षभेदे (एरण्डी)। (भेरण्डा)। "एरण्डयुग्मं मधुर मुष्णं गुरु विनाशयेत्। शूलशोथकटीवस्तिशिरःपीडो-दरज्वरान्। ब्रध्नश्वासकफानाहकासकुष्ठाममारुतानिति" एरण्डयुग्मम् शुक्लरक्तैरण्डौ "एरण्डपत्रं वातघ्नं कफ कृमिविनाशनम्। मूत्रकृच्छ्रहरञ्चापि पित्तरक्तप्रकोप-णम्। वाताग्र्यमदनं गुल्मवस्तिशूलहरं परम्। कफवातकृमीन् हन्ति वृद्धि सप्तविधामपि। एरण्डफल-मत्युष्णं गुल्मशूलानिलापहम्। यकृत्प्लीहोदरार्शोघ्नं क-टुकं दीपनं मतम्। तद्वन्मज्जा च विड्भेदी वातश्लेष्मो-दरापहा। कार्येऽस्य मूलं संग्राह्यमिन्द्राङ्करपरे क्रमाः"

"एरण्डतैलं तीक्ष्णोष्णं दीपनं पिच्छिलं गुरु। वृष्यं त्वच्यं वयःस्थापि मेधाकान्तिबलप्रदम् । कषायानुरसं सूक्ष्मं योनिशुक्रविशोधनम् । विस्रं स्वादुरसं पाके सतिक्तं कटुकं सरम् ( रेचकम् ) विषमज्वरहृद्रोगपृष्ठगुह्यादिशूलनुत् । हन्ति वातोदरानाहगुल्माष्ठीलाकटिग्रहान् ॥ वातशोणितविड्बन्धव्रध्नशोथामविद्रधीन् । आमवातगजेन्द्रस्य शरीरवनचारिणः । एक एव निहन्तायमेरण्डस्नेहकेशरी" भावप्र०। स्वार्थे कन् । तत्रैव । एरण्डस्य फलम् अण् । ऐरण्ड तत्फले । "ऐरण्डं कोमलं ग्राह्यं फलं तक्रेण संहितम् । पाचितं कटुतैलेन हिङ्गुनातिसुवासितम् । कफानिलहरं हृद्यं रूक्षमुष्णञ्च पित्तलम् । अग्निसंजननं रुच्यं गुरु पाकेऽतिपिच्छिलम्" भावप्र० । "फले लुक्" पा० अणो लुग्विधानात् एरण्डमित्येव साधु । २पिप्पल्यां स्त्री शब्दच० । टाप् गौ० ङीष् वा ।

एरण्डपत्रिका स्त्री एरण्डस्य पत्रमिव पत्रमस्याः कप् संज्ञायां वा कन् अत इत्वम् । दन्तीवृक्षे । [वृक्षे । राजनि० ।

एरण्डफला स्त्री एरण्डस्य फलमिव फलमस्याः । लघुदन्ती-

एरु त्रि० आ+ईर-उन् । गन्तरि । "एजाति ग्लहा कन्येव तुन्नैव सन्द्राना भवेव जाया" अथ० ६,२२,२,

एर्वारु पु० आ+ईर-क्विप् एरं वारयति वृ-णिच् उण् । चिर्भिटाम् कर्कटीभेदे (काकुड) 'एर्वारुबीजं तोयेन पिष्टं वा लवणीकृतम्" सुश्रु० । "कटूर्वारौ यथा पक्वे मधुरः सन्नरसोऽपि न" सा० । स्वार्थे कन् तत्रैव ।

एलक पुंस्त्री एडक+पृषो० डस्य लः । मेषे स्त्रियां अजा० टाप् क्षिपा० नातइत्वम् डलयोरेकत्वस्मरणात् ।

एलङ्ग पुस्त्री आ+इल-अङ्गच् । ( राइखड़ा ) मत्स्यभेदे स्त्रियां ङीष् । "एलङ्गोमधुरोष्णः पिच्छाढ्यो कफवातहा । मेधाग्निपुष्टिकारी च शीतलः स्रंसनो गुरुः" राजनि० ।

एल(ला)वालु न० एलेव वलते वल-उण् ङ्यापोरिति संज्ञायां वा ह्रस्वः । ( वालुका ) सुगन्धिद्रव्यभेदे "पुन्नागैलेववालूनि नागपुष्पोत्पलानि च" सुश्रु० । स्वार्थे कन् एल(ला)वालुकमप्यत्र न० ।

एला स्त्री इल-अच् । १स्वनामख्यातलतायाम् । ( एलाची ) तद्भेदगुणादि भावप्र०उक्तम् । "एला स्थूला च बहुला पृथ्वीका त्रिपुटापि च । भद्रैला बृहदेला च चन्द्रबाला च निष्कुटी । स्थूलैला कटुका पाके रसे वाताकफापहा: । रूक्षोष्णा शीतपित्तास्रकफश्वासतृषापहा । हृल्लासविषबस्त्यास्यशिरोरुग्वमिकासनुत् । सूक्ष्मैला कुञ्चिका तुच्छा कोरङ्गी द्राविडी त्रुटिः । एला सूक्ष्मा कफश्वासकासार्शोमूत्रकृच्छ्रहृत् । रसे तु कटुका शीता लघ्वी वातहरी मता" "एलालतालिङ्गितचन्दनासु" रघुः । तस्याः फलम् अण् तस्य लुप् लुपि प्रकृतिलिङ्गत्वेन तत्फलेऽपि स्त्री । "ससञ्चरच्छ्वसुतानामेलानामुत्पतिष्णवः" रघुः । "सजसा नयौ शरदशयतिरियमेला" वृ०र० उक्ते २पञ्चदशाक्षरपादके छन्दोभेदे ।

एला विलासे कण्ड्वा० प० अक० सेट् । एलायति ऐलायीत् । एलायां बभूव आस चकार ।

एलाक पु० एलाय-ण्वुल् । ऋषिभेदे गर्गा० यञ् । ऐलाक्य तदपत्ये पुंस्त्री० । स्त्रियां ङीपि यलोपः । ऐलाकी ।

एलादिगुटिका स्त्री "एलापत्रत्वचोऽर्द्धाक्षाः पिप्पल्यर्द्धपलं तथा । सितामधूकखर्ज्जूरमृद्वीकाश्च पलोन्मिताः । संचूर्ण्य मधुना युक्ता गुटिकाः कारयेद्भिषक्" चक्रद०उक्ते रक्तपित्ताधिकारस्थे गुटिकारूपौषधभेदे ।

एलापत्र पु० एलापत्रमिवाकारोऽस्त्यस्य अच् । नागविशेषे "नागस्तथा पिञ्जरकः एलापत्रोऽथ वामनः" भा० आ० ३५ अ० । नागनामकीर्त्तने । [ (काटा आमरुल) ।

एलापर्णी स्त्री एलायाः पर्णमिव पर्णमस्याः । रास्नायाम्

एलापुर न० नगरभेदे ।

एलीका स्त्री आ+इल-ईकन् । सूक्ष्मैलायाम् ( गुजराटि ) राजनि० । [ च सर्वेषु लवणेषु च" सुश्रु० ।

एलुक न० इल-उक । गन्धद्रव्यभेदे । "भद्रदार्वेलुकाभ्यां

एलवालुक न० एलवालु पृषो० लुडागमः । एलवालुक सुगन्धिद्रव्ये ( वालुका ) राजनि०

एव अव्य० इण्-वन् । १सादृश्ये, २अनियोगे, ३वाक्यभूषणे, ४चारनियोगे, ५विनिग्रहे, ६परिभवे ७ईषदर्थे च । विशेष्यसङ्गतः ८अन्ययोगव्यवच्छेदे । यथा पार्थ एव धनुर्द्धरः इत्यादौ पार्थान्यपदार्थे प्रथमधनुर्द्धरत्वम् व्यवच्छिद्यते । विशेषणसङ्गतः ९अयोगव्यवच्छेदे यथा शङ्खः पाण्डुर एवेत्यादौ शङ्खे पाण्डुरत्वायोगो व्यवच्छिद्यते । क्रियासङ्गतः १०अत्यन्तायोगव्यवच्छेदे यथा नीलं सरोजं भवत्येवेत्यादौ सरोजे नीलत्वात्यन्तायोगो व्यवच्छिद्यते । ११गन्तरि त्रि० । "एवेत्यवधारणानियोगौपम्यनियोगेषु" इत्युक्त्वा शबरस्वामिना यथाक्रममुदाहृतम् । "अहमेव ददामि । पचैव । इन्द्रैव । चोरएव-

मेऽस्तु । अद्यैव गच्छ । अत्रानियोगोऽनवधारणम् । "एवे चानियोगे" वार्त्ति० । तत्र क्वेव भोक्ष्यसे" इत्यत्र पररूपैकादेशः । एतद्योगे च "न च वाहाहैवयुक्ते"पा० न वस्नसाद्यादेशः । "ब्राह्मणस्यैव कर्म्मैतदुपदिष्टं मनोषिभिः" । "स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः" मनुः । १२एवमित्यर्थे च । "एवा न इन्द्रोतिभिः" ऋ० ४,२२,७, एवा एवम् भा० । अत्र वेदे "एवा हि दूर्वे प्रतनु" इत्यादि वत् दीर्घः । तत्र गन्तरि "एवा न देव्यादितिरनर्वा" तैत्ति० २,१,११,५, "एवा गमनशीला" भा० । शीघ्रगन्तृत्वात् १३अश्वे पु० । "शूरोनाम मर्त्यश्चिरेवैः" ऋ० १,१५८,२, "एवैरश्वैः" भा० । करणे भावे वा वन् । १४गमनसाधने १५गमने च । "एवेन सद्यः पर्य्येति पार्थिवम्" ऋ० १,१२८,३, "एवेन गमनसाधनेन गमनेन वा" भा० ।

एव त्रि०एवमस्त्यस्य अच् अव्य०टिलोपः । एवंक्रियमाणप्रकारे "सुदानूनेवया मरुतः" ५,४१,१६, एवया एवंक्रियमाणप्रकारेण" भा० तृतीयास्थाने याच् ।

एवथ पु० अव—भावे अथ पृषो० अतः एत्वम् । गमने "न को राया नैवथा न भन्दना"ऋ०८,२४,१५, एवथा गत्नुपुराणि संग्रामं प्रति गमनेन । तृतीयास्थाने आच् ।

एवम् अव्य० इण—वा०वम् । "एवमिति प्रकृतपरामर्शप्रकारेवार्थोपदेशनिर्देशनिश्चयाङ्गीकारवार्थेषु" गणर० उक्तेषु अर्थेषु । क्रमेण उदा० तत्रैव । १प्रकृतपरामर्शे "एव वादिनि देवर्षौ" कुमा० , २प्रकारे । एवं कुरुते । इवार्थे ३गाढस्ते अग्निरेवं विप्रः । ४उपदेशे एवं पठ । ५निर्द्देशे एव तावत् । ६निश्चये । एवमेतत् कः सन्देहः । ७अङ्गीकारे एवं कुर्म्मः । वार्थे दशकुमारे "अकार्य्यमेवंगगनाभिपतनम्" । "अवेतमनेवम्" शा० सू० । ८समुच्चये १०परकृतौ ११प्रश्ने च मेदि० । तत्र एवम्भूतः एवंकृत इत्यादौ क्रियाविशेषणत्वम् एवंविधः एवंप्रकारइत्यादौ द्रव्यविशेषणत्वमिति भेदः "एवंविधेनाहवचेष्टितेन" रघुः । "एवमादीन् विजनीयात् प्रकाशाल्लोककण्टकान्" "अन्येषाञ्चैवमादीनाम् मद्यानामोदनस्य च" मनुः ।

एवया त्रि० एव एवं अवनं वा याति या—क्विप् पृषो० । रक्षके "द्युम्न एवया उ सप्रथाः" ऋ० १,१५६,१, "एवया रक्षणप्रापयिता" भा०

एवयामरुत् पु० एवया रक्षको मरुद्यस्य । ऋषिभेदे । "प्र वस्वते गिरिजा एवयामरुत् । "एतन्नामकस्य ऋषेः सम्बोधनम्"भा० ।

एवयावन् पु० एवस्य एवंप्रकारस्य याता या—वनिप् । १रक्षके विष्णौ । "विश्वअन्यामप्रयुतामेवयावो मतिं दाः" ऋ०७,१००,२, "एवयावः ! विष्णो !" भा० । वेदे सम्बुद्धेरुत्वम् । एव गन्तरि त्रि० "तान्वो महो मरुत् एवयाव्नः" ऋ० २,२४,११, स्त्रियां ङीप् वनोरश्च । एवयावरी । "या सुम्नैरेवयावरी" ऋ० ६,४८,१२,

एवार पु०एव एवश्च ऋति ऋ—अण् । सोमभेदे । "एवारे वृषभाः सुते"ऋ०८,४५,२८, "एवारोनाम कश्चित सोमः"भा०

एवावद पु० एव एवमावदति आ+वद—अच् । ऋषिभेदे "प्रहि सतस्य सतस्य चितिभिरेवावदस्य यजतस्य सध्रेः" अवत्सारस्य स्पृणवाम्" ऋ० ५,४४,१, "सतस्य सतस्यैवावदस्य यजतस्य सध्रेरवत्सारस्य चैषामृषीणाम्" भा०

एष गतौ भ्वा० आत्म० सक० सेट् । एषते ऐषिष्ट एषाम् बभूव आस चक्रे । एषणीयः एषितव्यः एषितः एषिता । एषितुम् एष्टिः एषणम् एषा एषमाणः । "पराङेत्य एष त्वर्वाचो गौरपैषत" अथ० ६,६७,२, वेदे गणव्याख्यानात् पर० । उपेषत्व एकिपररूपम्"। "स वै यत्र भ्रष्टमतिकर्वैषते स: कर्म्मणां पारमपारकर्म्मणः" भाग० २,१२,४४, धातूनामनेकार्थ्यात् अवलोकयतीत्यर्थः" "तस्माद्धिवा नष्टैष एति" शत०ब्रा०१२,२,४,२, ।

परि+अन्वेषणे पर्य्येषते पर्य्येष्टिः लोकेऽपि क्वचित् गणव्याख्यातः । "अग्न: संविद्य यत्नाः पर्य्येषन्तो विभावसुम्" भा०अनु०८५ ।

एष स्त्री एष—भावे क्विप् । गतौ "तावानेषे रथानामुर्वीम्" ऋ० ५,६६,२, "एषे गन्तुम्" भा० । "राय एषेऽवसे दधीत"५,४१,५, "एषे प्राप्तुम्" भा० । "तेभ्यः स्वैषमेव चकार" शत०ब्रा०२,४,२,४, । इष—क्विप् । २इच्छायाम् । "न चोदोऽदधीतमेषे" ऋ० १,१८०,४, एषे सीमस्यभिच्छते" भा० ।

एषण पु०एषते गत्युद्दयम् ल्यु । १लौहमयशरे इत्यायुधः । इष इच्छायां णिच् भावे-युच् । एषणा २प्रेरणायां ३पुत्रलोकवित्तकामनायाञ्च स्त्री "नैं कश्चिदन्यः संसारचक्रादन्येषणालयात्" वेदा० । "तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्य्यं चरन्ति । या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येते एषणे

भवतः” शत० ब्रा० १४,६,४,१, “पुत्रैषणा पुत्रोत्पत्तिमुद्दिश्य दारसंग्रहेच्छा तत्पत्ता। वित्तं द्विविधं मानुषं गवादि, दैवं विद्यादि, तत्र कर्म्मणां साधनस्य गवादेरुपादानेच्छा इच्छा वित्तैषणाऽनेन कर्म्म कृत्वा पितृलोकं जेष्यामीति विद्यासंयुक्तेन वा देवलोकम्। केवलया वा हिरण्यगर्भविद्यया दैवेन वित्तेन देवलोकं जेष्यामीतीच्छा लोकैषणा। एवमेकत्वेऽपि लोकैषणायाः साधनमन्तरेणासिद्धेः साध्यसाधनाभेदेन द्वैविध्यमाह उभे ह्येते” भा०। “अपहृतसकलैषणामलात्मन्यविरतमेधितभावनोपहूतः” भाग० ४,२१,१८, एष्यते ज्ञायते मानमनया करणे ल्युट् ङीप् एषणी। ४तुलासाधने (निक्ति) भाननयन्त्रभेदे मेदिनिः। स्वार्थे कन्। एषणिकाऽप्यत्र। अमरः। एषते व्रणपारमनया करणे ल्युट् ङीप्। (वेलकार) ५व्रणस्फोटनास्त्रभेदे मेदि०। भावे ल्युट्। सुश्रुतोक्ते ६व्रणविदारणव्यापारभेदे। तत्र हि “यन्त्रकर्म्माणि तु निर्घातनपूरणेत्याद्युपक्रमे “चूषणैषणदारणेत्यादि पठित्वा चतुर्विंशतिरित्युक्तम्। तत्र एषणमभ्यन्तरे शस्त्रप्रवेशनेन पूयादेरपसारणम्। तत्साधनशस्त्रमेषणी यथा च सुश्रुतः “विंशतिः शस्त्राणि तद्यथा मण्डलाग्रकरपत्रेत्याद्युपक्रमे “वडिशदन्तशङ्क्वेषण्यो” इत्युक्त्वा “एषण्येषणे व्यानुलोम्ये च” इति तत्प्रयोजनमुक्तम्। एषणमभ्यन्तरगमनमानुलोम्यं विशालनम् तत्रैव एषणीलक्षणं “एषणी गण्डूपदाकारमुखी” उक्तम्।“एषणे मृषणालाभे तु नाना-कृत्यङ्कुरा हिताः” सुश्रुतः।

**एषणीय** त्रि० इष—एष—वा कर्म्मणि अनीयर्। १आयासे “जायापती लौकिकमेषणीयम्” कुमा०। २गम्ये च।

**एषा** स्त्री एष—अ। इच्छायां जटाधरः।

**एषावीर** पुंस्त्री। एषायां यथेष्टं धनादिप्रतिग्रहेच्छायां वीरः। यतः कुतश्चित् प्रतिग्राहके निन्दितब्राह्मणभेदे। स्त्रियां जातित्वात् ङीप्। “यद्येनमेषावीरा याजयेयुः” शत० ब्रा० ११,२,७,२२, “एषावीरोनाम निन्दितब्राह्मणजातिविशेषः तत्संबन्धिन ऋत्विजः” भा०

**एषिन्** त्रि० इष-णिनि। इच्छौ अभिलाषुके। “यौवने विषयैषिणाम्” “बभूव युद्धं तुमुलं परस्परजयैषिणोः” रघुः। स्त्रियां ङीप्। “तदाश्रिता हि सा श्रेया बुद्धिकाङ्क्षेषिणी भवेत्” भा०व० ८१ अ०।

**एष्टव्य** त्रि० इष् वाञ्छायाम् तव्य। वाञ्छनीये। “एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्” मु० त० मत्स्यपु०

“तद्रोव ब्राह्मणेनैष्टव्यम्” शत० ब्रा० १,८,२,१७।

**एष्टि** स्त्री आ+यज-आ+इष-वा क्तिन्। १अभियजने २अभिकामनायाञ्च।“पितॄणां शश्वदुवभूथ सुहवएष्टौ” ऋ० ६,२१ ८,। “एष्टौ आयजनेऽभिकामने वा” भा०। करणे क्तिन् ३आयासमसाधनेषु ऋक्सामेषु। “प्रजापतिर्वै विश्वकर्म्मा सहीदं सर्वमकरोत् मनोगन्धर्वस्तस्य ऋक्सामान्यप्सरसः इति मनोह गन्धर्वः ऋक्सामैरप्सरोभिर्मिथुनेन सहोक्रामैष्टयोनामेत्यृक्सामानि वा एष्टय ऋक्सामैर्ह्याशासते इति नोऽस्त्विति नोऽस्त्विति” शत० ब्रा० ९,४,१,१२। “प्रजापतिर्विश्वकर्मा मनोगन्धर्वस्तस्य ऋक्सामान्यप्सरस एष्टयोनाम” यजु० १८,४३।

**एष्य** त्रि० इष-कर्म्मणि ण्यत्। १वाञ्छनीये भावे ण्यत् सुश्रुतोक्ते “तत्र शस्त्रकर्माष्टविधं तद्यथा छेद्यं भेद्यं लेख्यं वेध्यमेष्यमाहार्यं विस्राव्यं सीव्यमित्युक्तेषु अष्टसु मध्ये २शस्त्रकर्म्मभेदे न०। “एष्येष्वेषणालाभे” सुश्रु० “क्षुरोपहत काष्ठे वेणुनलनालीशुष्ककाण्डाङ्गुलेष्वेष्यस्य” इत्युक्तेषु तत्कर्म्माचरणम्। कर्मणि ण्यत्। ४एषणकर्मसाध्ये त्रि०। “एष्या नाड्यः शल्यगर्भा उन्मार्गिण्यश्च वै” सुश्रु० एष गतौ ण्यत्। ५गन्तव्ये त्रि०। “गतैष्यदिवसाद्येन गतिर्निघ्नी स्वषड्हृता” लीला०ता०। इष गतौ दि० इष इच्छायां भ्वा० इष आभीक्ष्ण्ये क्र्या० एभ्यः ण्यत्। एष्य तत्तदर्थकर्मणि प्रागुक्तं इत्येव प्रेष्यस्तु ईष गतिहिंसादर्शनेषु इत्यस्य ण्यदन्तस्य रूपम् इति भेदः।

**एह** त्रि० आ+ईह अच्। १सम्यक् चेष्टायुक्ते। एहा एहाः परिपातें इच्छान्” अथ० १२,२,२२। आ ईषदर्थे ईह-घञर्थे करणे क। २क्रोधे निरु०। क्रुद्धस्य सम्यक्कार्य्यानर्हत्वात् ईषच्चेष्टावत्त्वेन तथात्वम्। [ ङीप्। एही।

**एहित** त्रि० आ+ईह-त इन्। सम्यक् चेष्टान्विते स्त्रियां शार्ङ्ग०

**एहीड** न० एहि ईडे इत्युच्यते यस्मिन् कर्मणि मयूर० नि०। एहि ईडे इत्युच्यते यस्मिन् कर्मणि तादृशे कर्मणि एवं एहिकटा एहिवाणिजका एहिद्वितीया एहिस्वागता एहिविधपा इत्यादयोऽपि तत्तत्क्रियायाम् स्त्री एहियवं तु तत्कर्म्मणि न० इति भेदः।

इति वाचस्पत्ये एकारादिशब्दार्थसङ्कलनम्।

## ऐ

ऐकारः स्वरवर्णभेदः एदैतौ कण्ठतालव्याविति सुक्तेः कण्ठतालुस्थानयोरुच्चार्य्यः । स च दीर्घः द्विमात्रत्वात् प्लुतस्तु त्रिमात्र इति भेदः । द्विमात्रस्य उदात्तानुदात्तस्वरितभेदैः प्रत्येकमनुनासिकाननुनासिकभेदाभ्याञ्च षड्विधः एवं प्लुतस्यापीति द्वादशविधः । तन्त्रे तस्य वाचकशब्दा उक्ता यथा ।"ऐर्लज्जा भौतिकः कान्ता वायवी मोहिनी विभुः । दक्षा दामोदरः प्रज्ञो धरो विकृतमुख्यपि । क्षमात्मको जगद्योनिः परः परनिबोधकृत् । ज्ञानामृता कपर्दि श्रीः पीठेशोऽग्निः समात्मकः । त्रिपुरा लोहिता राज्ञी वाग्भवो भौतिकासनम् । महेश्वरी द्वादशी च विमलश्च सरस्वती । कामकोटो वामजानुरंशुमान् विजयो जटा" । "ऐकारः कोटराक्षी च मालिन्युन्मत्तभैरवी"इति च वर्णाभिधा० । मातृकान्यासेऽधरोष्ठे न्यस्यत्वात् तच्छब्दाभिधेयता । तस्य ध्येयरूपं कामधेनुत० उक्तं यथा "ऐकारं परमं दिव्यं महाकुण्डलिनीं स्वयम् । कोटिचन्द्रप्रतीकाशं पञ्चप्राणमयं सदा । ब्रह्मविष्णुमयं वर्णं तथा रुद्रमयं प्रिये ! । सदाशिवमयं वर्णं बिन्दुत्रयसमन्वितम्" । तपरत्वे कारपरत्वे च तत्स्वरूपपरः ।

ऐ अव्य० आ+इण–विच् । १आह्वाने २स्मरणे ३आमन्त्रणे च ४महेश्वरे पु० तस्य सर्वगत्वात्तथात्वम् ।

ऐक त्रि० एक+स्वार्थे अण् । एकशब्दार्थे ततोभवाद्यर्थे गहा० छ । ऐकीय एकसम्बन्धिनि तद्भवादौ च त्रि० ।

ऐकध्यम् अव्य० एकधा+धास्थाने ध्यमुञ् एकधेत्यर्थे "ऐकध्यं च श्रपणम्" कात्या० १४,२,२४ । "एतदैकध्यं संरुह्य" सुश्रु० । ततः स्वार्थे क । ऐकध्य तदर्थे न० "ऐकध्येन श्रपणम्" उक्तकात्या० सूत्रभाष्ये कर्कः ।

ऐकपत्य न० एकपतेर्भावः कर्म वा ष्यञ् । सार्वभौमत्वे "अप्रतिद्वन्द्वतामैकपत्यञ्च सर्वदेहिनाम्" भाग०७,३,२४ । एकपतौ भवः पत्युत्तरपदत्वात् ण्य । एकपतिभवे त्रि० ।

ऐकपदिक त्रि० एकस्मिन् पदे स्थाने विभक्त्यन्ते वा भवः ठञ् । १एकस्थानभवे २एकविभक्त्यन्तपदभवे च । एकपदाय प्रभवति ठञ् । "अतोऽप्यैकपदिका भवन्ति यथा व्रततिर्दमूनाः" इत्यादि निरु० 'एकार्थमनेकशब्दमित्येतदुक्तम् अथ यान्यनेकार्थान्येकपदानि तान्यतोऽनुक्रमिष्यामोऽनवगतसंस्कारांश्च निगमान् तदैकपदिकमित्याचक्षते इति निरु०उक्ते अनेकशब्दे एकार्थपरे समासादिवृत्तिरूपे ३वाक्यभेदे च ।

ऐकपद्य न० एकपदस्य एकार्थस्यैकविभक्त्यन्तस्य भावः ष्यञ् । संहतार्थत्वे अनेकपादानामेकार्थबोधकतासम्पादने समासादिभावे । [भावत्वे ।

ऐकभाव्य न० एको भावो यस्य तस्य भावः ष्यञ् । एकस्व-

ऐकमत्य न० एकं मतं येषां तेषां भावः ष्यञ् । तुल्यसम्मतौ "स्वर्गाभिषक्तस्य तमैकमत्यात्" रघुः । "ऐकमत्यं हि नो राजन् ! सर्वेषामेव लक्षये" भा०व० ७अ० । "ऐकमत्यञ्च सर्वस्य जनस्याथ नृपं प्रति" भा०प० २९८ अ० । "सुहृदमैकमत्यात्" भा०उ० २२ अ० । "ऐकमत्यं महाधियाम्" नीतिः । ऐकमत्यमत्रास्ति अच् । ऐकमत्ययुक्ते त्रि० । "गर्हैतान्योन्यमतयो मन्त्रिणो ब्रुवते सदा । नचैकमत्यः श्रेयोऽस्ति मन्त्रः सोऽधम उच्यते" रामा० ।

ऐकराज्य न० एकराजो भावः ष्यञ् । चक्रवर्त्तित्वे "यत्तु-तपसे येनैकराज्यमजयो हि ना" आश्व०श्रौ०५,१९,४ ।

ऐकलव्य पुंस्त्री एकलुः अपत्यं गर्गा० यञ् । एकलूनामकर्षेर्गोत्रापत्ये स्त्रियां ङीप् यलोपः ऐकलवी । ऐकलव्यस्य छात्राः कण्वा० ततोऽण् यलोपः । ऐकलव तच्छात्रेषु स्त्रियां ङीप् ।

ऐकशतिक त्रि० एकशतमस्यास्ति ठञ् । एकशतपरिमितद्रव्यस्वामिनि । एवमैकसहस्रिकादयोऽपि तत्तत्संख्यद्रव्ययुक्ते त्रि० ।

ऐकश्रुत्य न० एका श्रुतिर्यत्र तस्य भावः ष्यञ् । "उदात्तानुदात्तस्वरितानां परः सन्निकर्ष ऐकश्रुत्यम्" आश्व०श्रौ० १,२९, इत्युक्ते स्वरभेदे । एकश्रुतिशब्दे विवृतिः ऐकस्वर्य्यमप्यत्र न० ।

ऐकागारिक त्रि० एकमसहायमगारं प्रयोजनमस्य ठञ् । चौरे स्त्रियां ङीप् । "ऐकागारिकवद्भूतो दूराज्जन्मु-रदर्शनम्" माघः "केनचिदैकागारिकेण हृतवता" दशकु० ।

ऐकाग्र त्रि० एकाग्र+स्वार्थेऽण् । एकाग्रचित्ते एकतानचित्ते

ऐकाग्र्य न० एकाग्रस्य भावः । अनन्यासक्तचित्तत्वे एकमात्रासक्तचित्तत्वे एकाग्रताशब्दे विवृतिरुदाहरणञ्च ।

ऐकात्म्य न० एक आत्मा स्वरूपं यस्य तस्य भावः ष्यञ् । १ऐक्ये २एकस्वरूपत्वे । "तथैकात्म्यानुभावानां विकल्परहितः स्वयम्" भाग० ६,८,२१ । "एतेषां श्रेयआशासे उतैकात्म्यं महात्मनि" ७,१२,२९ । "एकात्म्यगमनात् सद्यः कलुषाद्विप्रमुच्यते" भा०अनु० १७५ । ३अभेदे च

